श्रीलब्धिसूरीश्वरजैनग्रन्थमालायास्त्रयोदशो मणि· [ १३ ]

जैनरत्न-व्याख्यानवाचस्पति-कविकुलकिरीट-सूरिसार्वभौम-
जैनाचार्य-श्रीमद्विजयलब्धिसूरीश्वरविरचितः—

# तत्त्वन्यायविभाकरः ।



स्वोपज्ञन्यायप्रकाशाख्यया व्याख्यया विभूषितः,
विषमस्थलटिप्पण्या परिष्कृतश्च ।



स च
छाणीस्थश्रीलब्धिसूरीश्वरजैनग्रन्थमालाकार्याधिकारिणा
जमनादासात्मजेन चन्दुलालेन
प्रकाशितः ।



प्रथम संस्करणे ६०० प्रतयः

वीर सवत् २४६९ आत्म स. ४६ विक्रम संवत् १९९९

मूल्यं रूप्यपञ्चकम्

BH LIBR

卐



जैनरत्न व्याख्यानवाचस्पति कविकुलकिरीट सूरिसार्वभौम जैनाचार्य

**श्रीमद्विजयलब्धिसूरीश्वरजी महाराज**

卐

# निवेदन।



जब हमने हमारी श्री लब्धिसूरीश्वर जैन ग्रन्थमाला की शुरुआत की थी तब हमें यह तनिक भी ख्याल न था कि, इतने थोडे ही से समय मे जैन साहित्य के प्रौढ ग्रन्थों के प्रकाशन का सौभाग्य हमें प्राप्त हो सकेगा।

आज हम, हमारे पाठकों की सेवा मे जैन साहित्य के एक महत्त्वपूर्ण ग्रन्थ को दे रहे हैं। अनेकों ग्रन्थों मे विकीर्ण जैन न्याय के विचारों का इस ग्रन्थ मे गुरुदेव श्री विजय-लब्धिसूरीश्वरजी महाराज ने बडी खूबी से सकलन किया है, जो नि सदेह जैन न्याय के अभ्यासियों के लिये बडे ही लाभ का है। अनेकों ग्रन्थों को देखने के सिवाय केवल एक ही ग्रन्थ से जैन दर्शन के अधिकाश तत्त्वों एव विचारों का परिचय उन्हें आसानी से प्राप्त होगा। और यह ग्रन्थ जैन साहित्य के लिये भी गौरव की चीज होगा॥

आज से करीब तीन वर्ष पूर्व हम ने इस मूल मात्र तत्त्वन्यायविभाकर को प्रकाशित किया था जिसको देख के अनेकों विद्वानों, पडितों एव दर्शनशास्त्रियों ने इस ग्रन्थ की उपादेयता की सराहना की थी और टीका, जो कि उस समय बन रही थी शीघ्र ही प्रकाशित करने की इच्छा व्यक्त की थी उनकी इस इच्छानुसार आज यह ग्रन्थ स्वोपज्ञ न्यायप्रकाश नामक टीका के साथ प्रकाशित किया जा रहा है। अनेकों स्थानों पर जहा कि स्पष्टता की आवश्यकता महसूस होती थी टिप्पणीया भी लगायी गई है।

इसके साथ साथ हम उदयप्रभसूरिजी कृत और हेमहसगणी के वार्त्तिक से युक्त आरभ-सिद्धि नामक ज्योतिप के ग्रन्थ को भी प्रकाशित कर रहे हैं, वह भी हमारे लिये गौरव की बात है।

अब हम एक बात स्पष्ट करना चाहते हैं कि पुस्तक के अन्तिम पन्ने में छपे साहाय्य की रकम के ब्यौरे को देख वाचकों को यह सदेह होना सभव है कि, इतनी साहाय्य होने पर भी

यह मूल्य क्यों ? इसके जवाब मे यह कहना हम उचित समझते हैं कि रकमह केवल इस ही ग्रन्थ के प्रकाशन मे नहीं परन्तु ग्रन्थमाला के साहित्यकार्य के लिये प्राप्त हुई है इसमे से हम उत्तरोत्तर जहा तक सभव होगा, साहित्य सेवा किया करेंगे। इस पुस्तक का मूल्य भी जब की लागत भी करीब छ. से अधिक होने जा रहा है, हमने केवल पाच ही रक्खा है जो पुस्तक के महत्त्व को और कलेवर को देखते अधिक नहीं कहा जा सकता। और उसमें भी वर्तमान विश्वयुद्ध ने तो चारों ओर महगाई का ही घोलवाला बना रक्खा है।

अन्त में हम हमारे आर्थिक सहायकों का जिनकी सहाय्य के आधार पर ही इतने विशालकाय ग्रन्थ का प्रकाशन सम्भव हो सका है, आभार मानते हैं और दूसरों के भी, जिन्हों ने हमें विविध रूप से साहाय्य दी है, हम ऋणी है।

—प्रकाशक



# प्रस्तावना ।



सुनिश्चितमेवैतद्विदुषां यदनादिनाऽनन्तेनाऽनेहसा दुरन्तसंसारकान्तारे नानाविधाधिव्याध्युपाधिलक्षणमहादुःखदावानलसन्तप्तैर्निबिडकर्मणा सुदृढं प्रबद्धैर्मृगतृष्णायमानविषयविषपानोन्मत्तैश्चक्रवदनवरतानेकयोनिसमुद्भवपरिश्रान्तैर्जीवैर्नान्तरेण महता पूर्वार्जितपुण्यप्रभावेण सघनकर्मबन्धप्रबन्धसन्धुक्षणदक्षं पीयूषपाथोधिसहोदरानन्तसुखमयनिर्वाणपुरीप्रापणसमर्थं मानुषं जन्म लभ्यते, तल्लाभेऽपि नार्यक्षेत्रसमवायः सुलभः, तत्रापि नवा मिथ्यात्वतिमिरपरिहारेण सम्यक्श्रद्धाया अवाप्तिरिति ॥

सा चेयं श्रद्धा जगत्त्रयविश्रुतार्हदभिहितानवद्यजीवादिपदार्थाभिरुचिलक्षणैव । यत इदमेवार्हतं दर्शनं याथात्म्येन पदार्थतत्त्वावबोधाभिलाषुकाणामादर्शभूतं दुर्गमभवचक्रपरिभ्रमणपरिक्लिन्नानां भवोदधेः परम्पारं जिगमिषूणामनपायं तरणिकल्पञ्च । नात्र दर्शने दर्शनान्तरेष्विव पक्षपाताभिनिवेशेन पदार्थस्वरूपनिरूपणं परस्परविरुद्धतया प्रतिपादितमस्ति, नवा कोऽपि पदार्थश्चरात्मकोऽचरात्मको वा चारुतया न चर्चितः । पारङ्गताश्चास्मिन् दर्शने महान्तस्साधवः प्रतिभावन्तो न कापि कदापि सभासु सह दर्शनान्तरीयैर्विवदमाना अमोघानेकान्तकुञ्चिकाप्रभावेण मुद्रिताः पराजयमुद्रया जगति शासनस्यास्यार्हतस्य विजयवैजयन्तीं प्रसारयाञ्चक्रुः । आरोपयश्च जयलक्ष्मी गले महात्मनां तेषामेव तदा तदा जयमालिकां यदा यदा समजनि दर्शनान्तरीयैर्वादः । येषाञ्च महात्मनां चमत्कारिप्रकाण्डप्रतिभाप्रभावेणाद्ययावद्भुवनोदरस्य प्राणसन्निभमार्हतशासनमविच्छिन्नं चकास्ति । यत्र चापेक्षावादलक्षणं कुलिशं दुर्मतस्तम्बेरमाणामायत्तीकरणाय शोशुभ्यते यस्य निगूढाभिप्रायपरिज्ञानेन हृदि निष्पक्षपाततासाम्राज्यं मिथ्यात्वदावानलप्रशमश्च भविष्यति दूरे समुत्सारितोऽपि भविष्यति संशयवादः, तदेवंविधं दर्शनं तत्त्वज्ञानरत्नरत्नाकरं भ्रान्ताः कुदृष्टिकल्पनाहालाहलल्लाविलासंवीतमानसाः निजार्थमात्रसंसिद्ध्यभिनिवेशिनः सङ्कुचितमतिप्रचारा एव पण्डितंमन्यास्संशयवादोऽयं विरुद्धवादोऽयं चक्रवादोऽयमिति मुधैव कलङ्कयन्ति । ते च नितरां स्याद्वादसिद्धान्तानभिज्ञा एव । विलोकनीयाश्च तैः स्याद्वादप्रभाप्रवाहिणः सुदुर्भेद्ययुक्तिजालजटिला जैनशासनाम्बरमणयो दूरीकृतकुदर्शनान्धकारा अपेक्षाविशेषणाभ्यन्तरीकृतसकलशास्त्रार्था आर्हतविचक्षणगीतार्थोदयाचलसमुज्जृम्भिता ग्रन्थमार्तण्डा निरस्य पक्षपाततिमिरदोषम् । स्याद्वादो हि वस्तुन्येकस्मिन्नविरोधेनावस्थितानामनन्तधर्माणामपेक्षया व्यवस्थापनपरः,

यथाह्येकत्र पुरुषे पितृत्वपुत्रत्वभ्रातृत्वपतित्वपितृव्यत्वभागिनेयत्वादयो धर्मास्सामान्यतो विरुद्धा अपि पुरुषविशेषाद्यपेक्षयाऽविरोधेन वर्त्तन्ते तथैवात्मादयोऽपि निखिलाः पदार्थास्सापेक्षतया नित्यत्वानित्यत्वभेदाभेदैकानेकादिधर्माण एव, नत्वपेक्षामन्तरेण ते नित्या एवानित्या एव वा, परस्परं भिन्ना एवाभिन्ना एव वा, एकरूपा एवानेकरूपा एव वा । केवलमपेक्षापरिज्ञानविधुरा एव केचिदात्मा नित्य एवेति परे क्षणिक एवेति, अन्ये सामान्यरूप एवेति, अपरे विशेषरूप एवेति विवदन्ते अन्यतराङ्गज्ञानेन हस्तिनस्तद्रूपत्वमेवेति विवदमानजात्यन्धा इव । न च पारयन्ति पदार्थयाथात्म्यावधारणाय । तदेवं दर्पणमिव पदार्थस्वरूपप्रकाशकं दुर्वादिभिरप्रकम्प्यं सरलहृदयानां कोविदानां सुविशदमिदमार्हतं दर्शनं महता पूर्वपुण्यप्रभावेणैव प्राणिभिः प्राप्यते । अवाप्य चार्हततत्त्वश्रद्धानरूपं दर्शनं ध्येयसिद्धेः परमनिदानभूताय ज्ञानाय चरणाय च प्रयतेत तयोरेव मोक्षं प्रति असाधारणकारणत्वात् । विहाय हि सन्मार्गं कुमार्गे परिभ्रमतो जीवानुत्पादयित्वा श्रद्धां व्यपोह्य च शङ्कां ज्ञानं तत्र दृढीकरोति प्रोत्साहयति च क्रियायाम् । ज्ञानपूर्विका च क्रिया पुरुषं परमसिद्धिं नयति । तस्माद्विहगस्य पक्षाविवोभे अप्यसाधारणं कारणम् ॥

आत्मा स्वरूपतोऽनन्तज्ञानवान् । तच्च ज्ञानं छद्मस्थानामनादिना कालेनावृतं सत् ज्ञानप्राप्तिसाधनमनुसृत्य तत्क्षयोपशमतारतम्येनाकरोद्धृतमणेः प्रसाधनवैचित्र्येण प्रकाश इव न्यूनाधिकत्वमनुभवति, तत्प्रतिबन्धकावरणस्यात्यन्तं क्षयेण चाविर्भवत्यनन्तं ज्ञानम् । आविर्भूतानन्तज्ञानाः केचित्तीर्थकृतः जगदुपकाराय सदेवमनुजायां पर्षदि देशनां दिशन्ति । तत्प्रभाविताश्च तीर्थकरकल्पगणभृदादिभिस्तदीयं ज्ञानमागमरूपेण निबध्नन्ति यत्प्रभावेणाल्पमेधसः सौकर्येण वस्तुस्वरूपं यथार्थतया अवगच्छन्ति । ते निबन्धाः केचन प्रकरणरूपाः कतिचन सूत्ररूपा अपरे च सङ्ग्रहणीरूपाः । एषामपि सुलभतयाऽवबोधाय टीकाभाष्यचूर्ण्यवचूर्यादिरूपा बह्वयो व्याख्या निबद्धा वर्त्तन्ते, तैस्तैः ग्रन्थैः परमपूज्याः पूर्वजा महापुरुषाः स्वीयमद्भुतं चमत्कृतिकरञ्च ज्ञानं जगति प्रसार्य यशोऽक्षयमर्जयाञ्चक्रुः ॥

यथा यथाऽवसर्पिणीकालः परिवृत्तिमेति तथा तथा तात्कालिकमनुजानां बुद्धेरपि परिवृत्तिर्जायते करालव्यालसन्दष्टपुरुषमतेरिव । कुतर्कविषवायुना प्रणुन्नास्ते प्रबलान् सैद्धान्तिकान्निर्णयानधिक्षिपन्तः सरलहृदयानां चेतसि अश्रद्धालक्षणमामयमुत्पादयन्ति । तानेतान्नवयुगीयकुतर्कसरीसृपसन्दष्टान् जनाननूपतापं प्रतिक्रियेव चिकित्सितुं वर्त्मना नव्येनैव सैद्धान्तिकयुक्तीस्तर्कांश्च सहकारीकृत्यापेक्षया चिरन्तनैर्व्यावर्णितान्यपि तत्त्वानि बहुधाऽवश्यं व्यवस्थापनीयान्येव । अत एव चेतेऽपि ग्रन्था विदुषां मान्याः प्रमाणभूता एव । ते च ग्रन्थास्सम्मतितर्कस्याद्वादरत्नाकरेत्याद्यभिधानाः सम्यग्ज्ञानसमुज्ज्वलकरा बृहद्भिमहा पादलक्षणत्वात्परिकर्मितमतेरेव सुग्राह्या

न त्वार्हततत्त्वजिज्ञासूनामनधीतेतरदर्शनानां बालानाम्। निर्माय चैवं विधाननेकान् ग्रन्थरत्नान् मध्ययुगीया ग्रन्थकर्तार आर्हतविज्ञानं जगति प्रसार्य किरणैस्तपनस्तिमिरमिव कुदृष्टिध्वान्तमुन्मूलयाञ्चक्रुः अवापुश्चानन्तरं परम्परञ्च फलम् ॥

तथापि विनेयहितायान्तरेणापरदर्शनाध्ययनं तत्र तत्र ग्रन्थेषु विवेचितानामतिगहनतया पदार्थानामेकत्र स्फुटतया निरूपणमध्यत्यावश्यकमेवेति मन्वानैरेतद्ग्रन्थकर्तृभिः परमदयालुभिर्ग्रन्थोऽयं सन्दृब्धः। अयं हि प्राधान्येन मोक्षकारणभूतं रत्नत्रयमाश्रित्य भागत्रयेणालङ्कृतः। एकैको भागोऽपि बहुभिः किरणैर्विभूषितः। आर्हताभिमतसिद्धान्तानां समासतो लीलयान्तेवासिनो यथा धारयेयुस्तथा ऋजुमार्गेण सूत्रकल्पं मूलं जीवादितत्त्वानां तद्व्यवस्थापकन्यायानाञ्च निरूपणरूपत्वात्तत्त्वन्यायविभाकराभिधानमादावारचितम्। अभिप्रायगर्भितत्वात्तस्य परिष्करणमन्तरा न किमपि वैशिष्ट्यं भवेदिति यथासम्भवं दत्तप्रयोजनप्रदर्शनपुरस्सरं न्यायवर्त्मना मूलार्थो विशदतया व्यावर्णितो यस्य व्यावर्णनस्य न्यायप्रकाश इति मूलनिलीनन्यायानां प्रकाशकत्वादन्वर्थं नाम। व्याख्यायामस्यां यथासम्भवमतिसारल्येन न्यायपूर्णेन वर्त्मनाऽतिगम्भीरार्था विषयास्तथा व्यावर्णिता यथाऽधीतव्याकरणकाव्यकोशा ऋजुमतयोऽपि दर्शनान्तरीयमुक्तावल्यादिग्रन्थाध्ययननिरपेक्षा एव न्यायाध्वनि प्रविशेयुः। व्याख्यायामस्यां पदार्थनिरूपणमपि पूर्वाचार्यसरणिमनुसृत्यैवारचितं कस्यापि हि ग्रन्थस्य व्याख्याया वा आविष्करणे प्राचीनतामर्वाचीनानाञ्चोक्तेः साक्षात्कारः तेषां सुगूढाभिप्रायपरिज्ञानञ्च सर्वेषामावश्यकमेव, अपरथा तेषां प्रयासः प्रामाणिकैरनादरणीय एव स्यादिति मन्वानैर्ग्रन्थकर्तृभिः। भाषापि सरलाऽतिरमणीया च स्वीकृता। तथा प्रायः प्राचीनानामुक्तयोऽपि अनूदिताः ॥

यद्यपि वर्त्तमानकालापेक्षया ग्रन्थस्यास्य व्याख्या वर्त्तमानदेशभाषामवलम्ब्य कृता चेत्सकलजनोपयोगिनी स्यात्तथापि तत्त्वज्ञानोपयोगिविषयाणां निरूपणं प्रचण्डदुर्वादिसिद्धान्तप्रभञ्जनञ्च तादृशभाषया सुष्ठु कर्त्तुमशक्यमिति ग्रन्थोऽयं विद्वज्जनपर्षदि अनादरणीयो मा भूदिति च विभाव्य यथाशक्यं सुलभयैव गीर्वाणभाषया व्याख्यातः। मूलस्य व्याख्यानं सुमनोहरेण वर्त्मना चमत्कृतिकरेण पदार्थानां निरूपणं न्यूनाधिकभावपरिहारेण सरलशैल्या मतान्तरखण्डनञ्च दुष्परिहरेण युक्तिजालेन कृतमस्ति। अतो दार्शनिकग्रन्थनिकरेष्वयं महारत्न इव साम्प्रतकालीनविद्वज्जनपरिकलितग्रन्थेभ्यः सर्वांशेनातिशायीत्यत्र नैव गुणैकग्राहिणां विदुषां विरोधः। सोऽयं ग्रन्थः आर्हताभिमततत्त्वानां सर्वेषां सम्यक्प्रकाशकत्वादागमपयोनिधिं प्रवेष्टुकामानां तरणिकल्पत्वाच्च महाविद्यालयादौ पाठ्यग्रन्थतया प्रवेशयितुमतीवोपयोगीति तत्तदध्यक्षेभ्यो निवेदयामः ॥

तदेतस्य ग्रन्थस्य टीकायाश्च कर्त्तारो जगतीतलजेगीयमानयशोराशेः प्रकाण्डपाण्डित्यमण्डित-

स्य संयमिवरेण्यस्य न्यायाम्भोनिधेः श्रीमद्विजयानन्दसूरीश्वरस्य प्रशिष्याः तदनन्यपट्टधरस्य शासनसार्वभौमस्य जैनाचार्यश्रीमद्विजयकमलसूरीश्वरस्य विनेयास्तत्पट्टालङ्कारभूताश्च सुविहित-नामधेयाः श्रीमद्विजयलब्धिसूरीश्वराः, ये स्वकीयमनोज्ञकविताचातुर्येण निखिलजनचेतोहारि-निर्वाणसुधामृतरसस्यन्दिरुचिरव्याख्यानसरण्या च कविकुलकिरीटेति व्याख्यानवाचस्पतीति च दवीयसीं पदवीमवापुः। एभिर्विरचिता अन्येऽपि संस्कृतभाषामया अनेके ग्रन्थाः पामरजनम-नमलिनतामपनयन्तो जगति विश्रुता वरीवृतति। एषां प्रकृत्या शान्तस्वभावं निरुपमधर्मानुरागं जगति वर्त्तमानानामपि सर्वथा तद्व्यापारेष्वनासक्ततां सर्वदा शास्त्राध्यापनविरचनसंलीनताञ्चा-वलोकयतः कस्य वा सचेतसस्तेषु गौरवधिषणा न जागृयात्। एषां जीवनचरित्रं विशेषतो बुभुत्सु-भिर्मद्विरचितो भाषामयः कविकुलकिरीटाभिधानो ग्रन्थोऽवश्यं लोचनगोचरो विरचनीयः॥

मानवगणतापापनोदकस्यास्य ग्रन्थस्य संशोधनकर्मणि विहितश्रमो मद्गुरुभ्राता श्रीविक्रम-विजयः मच्छिष्यो भद्रङ्करविजयश्च जनसमाजस्योपकारक इत्यत्र नास्ति संशयलेशः। प्रकाशन-कर्मणि कृतद्रव्यसहाया धनिकवर्गा अपि भगवतः शासनस्य सहायका एवेति। विशेषतस्तु काशीस्थविश्वविद्यालयन्यायाध्यापकानां तार्किकरत्नानां श्रीमच्छ्रीशङ्करभट्टाचार्याणामन्तेवासी लब्ध-न्यायाचार्यप्रतिष्ठोऽस्मद्गुरुवर्य्याणां शिष्यमण्डलस्य विद्यया कृतसंस्कारो नारायणाचार्योऽस्मिन् कर्मणि कदापि न विस्मरणीयो येन महत्साहाय्यं दत्तम्॥

तथा भूयांसमायासमङ्गीकृत्य संशोधकैः परिशीलितेऽप्यस्मिन् ग्रन्थे तेषां दृष्टिदोषात् अक्षरसंयोजकमुद्रकादिदोषाद्वा यत्र कचिदुपलभ्यमाना अशुद्धीरुपेक्ष्य गुणैकग्रहणा विपश्चिदप-श्चिमाः समुत्सार्य मात्सर्यं स्वयमेवास्मिन्नुरीकृतनयनसमर्पणायासा विचारामृततृप्तिं भजन्तस्तेषां परिश्रमं फलेग्रहिं करिष्यन्त्येवेत्यवधारयन् सकलपदार्थतत्त्वज्ञं भगवन्तं जिनेश्वरमाराधयाम्यनेन व्यापारेणेति॥

निवेदकः—

व्या० वा० आचार्यश्रीमद्विजयलब्धिसूरीश्वराणां चरणोपासकः

भुवनविजयोपाध्यायः



LIBRARY

# सटीकस्य तत्त्वन्यायविभाकरस्य-विस्तरतोविषयानुक्रमः



## प्रथमो भागः ।



### प्रथमः किरणः ।

## द्वितीयः किरणः ।

## पञ्चमः किरणः

## अष्टमः किरणः

S N LIBRARY

## द्वितीयो भागः ।



## तृतीयः किरणः



## चतुर्थः किरणः

BH ... LIP

षष्ठः किरणः

## सप्तमः किरणः


BH
LIBRARY.
पृ. पं.

## दशमः किरणः

## तृतीयो भागः ।

### प्रथमः किरणः

## दशमः किरणः

## तृतीयो भागः।

### प्रथमः किरणः

## द्वितीयः किरणः

## तृतीयः किरणः

इति विषयानुक्रमणिका समाप्ता

॥ अर्हम् ॥

जैनाचार्यश्रीमद्विजयलब्धिसूरीश्वरविरचितः

# तत्त्वन्यायविभाकरः ॥

स्वोपज्ञन्यायप्रकाशटीकायुतः ।

ॐ अर्हम्

जैनाचार्यश्रीमद्विजयलब्धिसूरीश्वरविरचितः

# तत्त्वन्यायविभाकरः ॥

## स्वोपज्ञन्यायप्रकाशटीकायुतः



नयानेकवादप्रमाणप्रकाशं,
भुवि ज्ञानचारित्रदत्तावकाशम् ।
इलादुर्गरत्नं जिनं शान्तिनाथं,
नमामि प्रभाभासुरं भावतोऽहम् ॥ १ ॥

प्राचां प्रौढनिगूढभावभरितान् वाचां विलासान् परान्,
शेमुष्या प्रविचार्य चारु गुरुभिर्दिष्टेन सद्वर्त्मना ।
तत्त्वन्यायविभाकरस्य कृतिना मोदाय टीकामिमां,
कुर्वे मञ्जुलयुक्तिजालजटिलां न्यायप्रकाशाभिधाम् ॥ २ ॥

क्व स्याद्वादो महाम्भोधिरल्पशक्तिर्मतिः क्व मे ? ।
बाहुना तं तितीर्षन्तं क्षमन्तां गुणवेदिनः ॥ ३ ॥

इह हि शास्त्रारम्भे क्वचिदभीष्टे प्रवर्तमानाः श्रेयस्काम्यया विशिष्टस्वेष्टदेवतानमस्कारपुरस्कारेणैव प्रवर्तन्ते, स च नमस्कारो यद्यपि शरीरेण मनसा वा क्रियमाणो निखिलप्रबलप्रत्यूहसमूहोन्मूलनपटिष्ठतया प्रारिप्सितशास्त्रपरिसमाप्तये सम्पनीपद्यते, तथाप्यशेषान्तरायनिचयविघातनिमित्तमिष्टदेवतानमस्कारपूर्वकमेवान्तेवासिनः प्रवर्तन्तामिति शिष्यान् शिक्षयितुं द्रव्याद्यपकृष्टमङ्गलानि विहाय नोआगमतो भावमङ्गलं प्रभुनमस्काररूपमादौ निबध्नाति—

भक्त्युद्रेकनमत्सुराधिपशिरःकोटीररत्नप्रभा-
द्योतिस्मेरपदाम्बुजं निरुपमज्ञानप्रभाभासुरम् ।

रागद्वेषतृणालिपावकनिभं वाणीसुधाम्भोनिधिं,
श्रीमद्वीरजिनेश्वरं प्रतिदिनं वन्दे जगद्वल्लभम् ॥ १ ॥

भक्त्युद्रेकेति । भक्तिः—आराध्यत्वेन ज्ञानं, आराधना च गौरवितप्रीतिहेतुः क्रिया । तस्या उद्रेकोऽतिशयेनाविर्भावः, तेन नमन्तो ये सुराधिपा इन्द्रादयः, तेषां शिरसां कोटीरेषु—मुकुटेषु यानि रत्नानि तेषां प्रभाणां द्योतनशीलं स्मेरं—विकसितं पदाम्बुजं यस्य तं, अनेन प्रभोः पूजातिशयः प्रकाशितः । तथा निरुपममतुलमनन्तमिति यावत्, तच्च तज्ज्ञानञ्च, तदेव प्रभा साकल्येनाखिलपदार्थप्रद्योतकत्वात्, तया भासुरं—जाज्वल्यमानं, अनेन ज्ञानातिशयो दर्शितः । तथा रागः—अभिष्वङ्गः, द्वेषः—अप्रीतिः, तावेव तृणालिस्तृणव्रजः, रागद्वेषयोरतितुच्छत्वेन तृणतया रूपणम्, तस्मै पावकनिभः—हुताशनसंकाशस्तं, अनेनापायापगमातिशय उद्भावितः । एवं पञ्चत्रिंशद्गुणालङ्कृता वाण्येव निरन्तरानन्दप्रदत्वात्सुधा तस्या अम्भोनिधिरुत्पत्तिभूमिस्तम्, अनेन वागतिशय उक्तः, चतुस्त्रिंशदतिशयात्मिका भावार्हन्त्यरूपा कृत्स्नकर्मक्षयाविर्भूतानन्तचतुष्कसम्पद्रूपा वा श्रीस्समृद्धिरस्यास्तीति श्रीमान् नित्ययोगे मतुप्, विशेषेणेरयति—क्षिपति कर्माणीति वीरः, तपसा विराजमानत्वात् तपोवीर्येण युक्तत्वाद्वा वीरश्चतुर्विंशतितमतीर्थकृत्, यद्यपि निरुक्तव्युत्पत्त्या वीरपदेन तीर्थकर सामान्योपस्थितिसम्भवः, तथापि योगाद्रूढिर्बलवतीति न्यायाद्व्यक्तिविशेष एव विवक्षितः, निश्चयनयेनैकभक्तौ सकलभक्तिसिद्धेः, आसन्नोपकारित्वेनास्यैव तात्पर्यविषयत्वाच्च, स चासौ जिनेश्वरस्सामान्यकेवलिनामपीश्वरस्तं, स्वस्यापि भक्त्युद्रेकं दर्शयति प्रतिदिनं वन्द इति, वन्दे—स्तौमि, अभिवादये च, केवलानां स्तुतिबोधकानां नमस्कारबोधकानां वा धातूनामनुपादानात् । जगतां वल्लभो जगद्वल्लभस्तं सकलचराचरोपकारित्वादिति भावः ॥

नन्विदं शास्त्रं नारम्भणीयं, अभिधेयशून्यत्वात् काकदन्तपरीक्षावत्, तथा प्रेक्षावतां ग्रन्थोऽयमनादेय एव, छद्मस्थत्वे सति स्वतन्त्रतयाऽभिधीयमानत्वाद्रथ्यापुरुषवाक्यवदित्येवं प्रवदतां सन्दिहानानां वा प्रेक्षावतां प्रवृत्त्यर्थं वाच्योऽभिधेयः परमगुरूपदेशानुसारित्वञ्च सम्बन्धः प्रथमतः । यदाहुः—“श्रुत्वाभिधेयं शास्त्रादौ पुरुषार्थोपकारकम् । श्रवणादौ प्रवर्तन्ते तज्जिज्ञासादिनोदिताः । नाश्रुत्वा विपरीतं वा श्रुत्वाऽऽलोचितकारिणः । काकदन्तपरीक्षादौ प्रवर्तन्ते कदाचने ”ति, तथा ‘प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्त्तते । एवमेव प्रवृत्तश्चेच्चैतन्येनास्य किं भवेदि ’ति न्यायेन प्रयोजनमपि प्रकटनीयम्, अन्यथा प्रयोजनशून्यत्वादत्र नैव प्रवर्तेरन् प्रेक्षावन्तस्तथा वाच्यवाचकादि सम्बन्धवैधुर्येऽपि प्रवृत्त्यनुपपत्त्या सोऽपि वाच्य एवेति तदनभिधानप्रयुक्तमन्यमानाऽऽशङ्कातङ्कमुन्मूल-

नाय, परम्परया विशिष्टादरनिमित्तार्हन्मूलताप्रख्यापनार्थञ्चादौ गुरुपर्वक्रमलक्षणसम्बन्धप्रदर्शनपुरस्सरमभिधेयादिकं स्वकीयग्रन्थनाम चोपनिबध्नाति—

**प्रज्ञावैभवसंमदिष्णुकथकप्रौढोक्तिविद्रावण-**
**प्रख्यं जीवगणोपजीवकदयादृष्टिप्रकर्षोज्ज्वलम् ।**
**नत्वा श्रीकमलाख्यसूरिमसकृद्ध्यात्वा च जैनागमं,**
**तत्त्वन्यायविभाकरं सुललितं ग्रन्थं प्रकुर्वे मुदा ॥**

**प्रज्ञावैभवेति** । प्रज्ञा—विशेषविषयिणी बुद्धिस्तस्याः वैभवेन—नवनवोन्मेषरूपेण सम्यक्समदिष्णूनां कथकानां—वावदूकानां याः प्रौढोक्तयः सामान्यविद्वद्दुर्भेद्यत्वात् तासां विद्रावणे—भञ्जने प्रख्यः—प्रसिद्धस्तं, एतेन गुरोः प्रतिभातिशयः स्वसमयस्थापनसामर्थ्यञ्चाविष्कृतम् । जीवगणस्योपजीविकायां—परिपालननिदानभूतायां दयायां दृष्ट्या—अवहितचेतसा प्रकर्षेणोज्ज्वलं—निर्मलं, अनेन चानेकनृपतीनामहिंसाधर्मप्रबोधनद्वारा दयाधर्मसंस्थापनकौशल्यं सूचितम् । ध्यानलक्षणकर्त्तव्यापेक्षया पूर्वकालभावित्वात्क्त्वाप्रत्ययान्तं पदमाह—नत्वेति नमस्कृतिविषयमारचय्येत्यर्थः । आचारश्रुतशरीरवचनवाचनमतिप्रयोगमतिसंग्रहपरिज्ञालक्षणाष्टविधसम्पदः श्रियस्तासां कमलमिव आश्रयत्वात्कमल इति आख्या सार्थकं नाम यस्य सूरेस्तं, असकृत्—वारंवारं, ध्यात्वा—भक्तिश्रद्धाभ्यां मनोमन्दिरे संस्थाप्य, ग्रन्थरचनापेक्षया पूर्वकालभावित्वात् क्त्वाप्रत्ययः । चः पुनरर्थको न पुनः समुच्चायकः, एकक्षणावच्छेदेन नमनचिन्तनात्मकद्विविधक्रियाऽसम्भवेन पौर्वापर्यनैयत्यात्, गुरुपरम्परयैव जैनागमस्यात्मनो लाभेन तन्नमनस्य ध्यानपूर्वकालभावित्वस्यैवोचितत्वाच्च । अनेन गुरुपर्वक्रमलक्षणसम्बन्धः श्रद्धानुसारिणः प्रति प्रदर्शितः । जयन्तीति जिना रागद्वेषविजेतारस्तैः प्रोक्तमागमं—शास्त्रमनेनागमनमस्कारेण स्वकीयग्रन्थस्य समूलत्वं सूचितं, एतेन छद्मस्थत्वे सति स्वतन्त्रतयाऽभिधीयमानत्वे हेतावसिद्धतोद्भाविता । तथा गुरोरप्युपास्यतया प्रथमं गुरुतमस्यार्हतस्तदागमस्य च गुरुद्वारा प्राप्यमाणत्वात्सूरेस्ततो ग्रन्थस्यास्य मूलभूतस्याऽऽगमस्य प्रणामक्रम इत्यपि विनेयाः शिक्षिताः । तत्त्वानि जीवादीनि, न्यायास्तदधिगमकाः प्रमाणनयरूपास्तेषां विशिष्टा भाः स्वरूपप्रकारप्रमाणानि वस्तुयाथार्थ्यप्रकाशकत्वात्, तासामाकर इवाकरस्ताः करोतीति वा तत्त्वन्यायविभाकरस्तम् । एतेन तत्त्वन्याया अभिधेयास्तज्ज्ञानं प्रयोजनं, तर्कानुसारिणः प्रत्युपायोपेयलक्षणसम्बन्धश्च प्रदर्शितः, अत्रेदम्बोध्यम्, प्रयोजनं ग्रन्थकर्तृगतं श्रोतृगतञ्चेति द्विविधम्, अनन्तरपरम्परभेदतः प्रत्येकमपि पुनर्द्विविधम्, ग्रन्थकर्त्तुरनन्तरं प्रयोजनं सत्त्वानुग्रहः सर्वज्ञोदितपदार्थप्रतिपादनात् । परम्परन्तु मोक्षावाप्तिर्भव्यसत्त्वानुग्रहप्रवृत्तस्य स्वर्ग-

प्राप्त्यादिपरम्परया परमपदस्यावश्यप्राप्तेः । श्रोतॄणाञ्चानन्तरं प्रयोजनं ग्रन्थसारभूतपदार्थयथावत्परिज्ञानं, परम्परन्तु परमपदप्राप्तिरेव, यथावद्विदितपदार्थसार्थानां निःसारसंसारोद्वेगजननात् परमपदप्राप्तयेऽङ्गीकृतप्रयत्नानां निःश्रेयसावाप्तेरिति । सुललितं शब्दतो लालित्यवन्तं, एतेनास्य ग्रन्थस्य बालानामनायासेन बोधजनकत्वमादर्शितम् । ग्रन्थं–वाक्यसन्दर्भरूपं प्रकुर्वे–निबध्नामि । मुदा–आनन्देन नतु क्लेशेनेतिभावः ॥

ग्रन्थेनानेन श्लोकद्वयात्मकेनेष्टदेवतागुर्वागमानां नमस्कारोऽभिधेयाद्यभिधानेन शिष्यप्रवृत्तिप्रतिबन्धकशङ्काशङ्कुसमुद्धरणञ्च कृतम् । अनायासेन बालबोधप्रयोजकत्वोपदर्शकसुललितपदेन तत्त्वन्यायानां महामतिभिः पूर्वसूरिभिर्गम्भीरवाक्यप्रबन्धैर्व्याख्यातत्वेऽपि साम्प्रतकालीनान्तेवासिनां मतिमान्द्यतया तैर्ग्रन्थैर्यथावदर्थावगमो न भवेदिति मन्वानेन मया मन्दमतिनाऽपि मन्दतरमतीनां शिष्याणमार्थावगमनिमित्तं सरलवचनप्रकारेणामुना प्रथ्यन्ते त इत्यपि भाव आविष्कृतः ॥

ननु मङ्ग्यतेऽधिगम्यते येन हितं तन्मङ्गलं, मङ्गं धर्मं लाति–समादत्त इति मङ्गलं, मां भवात्संसाराद्गालयति–अपनयतीति मङ्गलं, माः–सम्यग्दर्शनादिलक्ष्मीर्गलयति प्रापयतीति वा मङ्गलमितिनिरुक्तिभिर्हितप्रापकत्वधर्मप्रापकत्वसंसारापनायकत्वसम्यग्दर्शनादिप्रापकत्वरूपार्थानां शास्त्रमात्रेऽस्मिन् सत्त्वेन तदादौ मङ्गलकरणमनर्थकमितिचेन्न मङ्ग्यतेऽलङ्क्रियते शास्त्रमनेन, मन्यते–ज्ञायते निश्चीयते विघ्नाभावोऽनेन, मोदन्ते–शेरते विघ्नाभावेन निष्प्रकम्पतया सुप्ता इव जायन्तेऽनेन, शास्त्रस्य वा पारं गच्छन्त्यनेन, मा भूद्गलो विघ्नो यस्माच्छास्त्रस्येति वा मङ्गलमिति निरुक्तिलभ्यशास्त्रालङ्कारकत्वविघ्नाभावनिश्चायकत्वशास्त्रपारप्रापकत्वविघ्ननाशकत्वरूपार्थावलम्बनतः प्रभुप्रभृतिनमस्कारप्रतिपादकश्लोकद्वयस्य मङ्गलत्वाभिधानात्, एतेन शास्त्रस्य मङ्गलस्य वाऽमङ्गलत्वसंशीतिर्निरस्ता, व्युत्पत्तिभेदेनोभयत्रैव मङ्गलत्वाक्षतेः । तदिदं मङ्गलं शास्त्रस्यादौ मध्ये पर्यन्ते च क्रियते, तत्रादौ मङ्गलं शास्त्रस्याविघ्नेन पारगमनाय, निर्विघ्नेन परम्परयोपागतस्य शास्त्रस्य स्थिरत्वापादनार्थं मध्ये, प्रान्ते च स्थिरीभूतस्य शिष्यपरम्परायामव्यवच्छेदनिमित्तं बोध्यम् । यद्यपि क्वचिन्मङ्गलाभावे विघ्नाभावद्वारा समाप्तिर्दृश्यते, तथा तत्सत्त्वेऽपि समाप्त्यभावः । तथापि स्वतः सिद्धविघ्नविरहवता कृतस्य ग्रन्थस्य समाप्त्या मङ्गलस्य विघ्नध्वंसद्वारा समाप्तिं प्रत्यहेतुत्वमेव, विघ्नात्यन्ताभावादपि समाप्त्युदयेन मङ्गलस्य वैयर्थ्योपत्तेः, तत्तत्समाप्तिं प्रति हेतुत्वे गौरवाच्चातो विघ्नध्वंसं प्रत्येव तस्य हेतुत्वं, असम्पूर्णमङ्गलघटितग्रन्थेषु च मङ्गलेन विघ्ननाशेऽपि विघ्नप्राचुर्यान्न समाप्तिः, सम्पूर्णमङ्गलरहितग्रन्थेषु [illegible] निर्विघ्नपरिसमाप्तिदर्शनेन वाचिकमङ्गलाभावेऽपि मानसिकादिमङ्गलमनुमेयमेव, कार्यात्कारणानुमानस्य सर्ववादिसिद्धत्वात् । न च तत्र समाप्तिर्विघ्नध्वंसप्रयुक्ता किन्तु

विघ्नात्यन्ताभावप्रयुक्तैवेति चेन्न विनिगमनाविरहात्, न च मङ्गलादर्शनमेव विनिगमकमिति वाच्यम् । पर्वते धूमाद्वह्न्यनुमानानुपपत्तेर्वह्न्यदर्शनात् । न चान्यत्र धूमसत्त्वे वह्नेर्दृष्टत्वादत्र सोऽनुमीयत इति वाच्यम् तुल्यत्वाद् दृश्यते ह्यन्यत्र निर्विघ्नसमाप्तिसत्त्वे मङ्गलमपि । तस्मात्सिद्धं मङ्गलस्य विघ्नध्वंसहेतुत्वमित्यन्यत्र विस्तरः ॥

ननु ग्रन्थेऽस्मिन्निरूप्यन्ते तत्त्वानि न्यायाश्च तत्तत्त्वज्ञानायेति तु युक्तं, परं तज्ज्ञानं किं वैषयिकसुखार्थं निर्वाणप्राप्तिलब्धाऽऽत्मसुखार्थं वेत्याशङ्कायां सर्वेषु पुरुषार्थेषु मोक्षस्यैव प्राधान्यतया तत्र च कृतस्यैव यत्नस्य वस्तुतः फलवत्त्वात् तदेवास्य ग्रन्थस्य तज्ज्ञानद्वारा परमं फलम् । तदुपायोपदेशस्यैव वास्तविकहितोपदेशत्वेनोपदेशरूपेऽस्मिन् ग्रन्थे प्रथमं तदुपाय एव वक्तव्य इति मनसि निधायाऽऽह—

## सम्यक्श्रद्धासंविचरणानि मुक्त्युपायाः ।

सम्यगिति । श्रद्धासंविचरणानां द्वन्द्वानन्तरं सम्यगितिपदेन कर्मधारयः, द्वन्द्वादौ द्वन्द्वान्ते च श्रूयमाणपदस्य प्रत्येकमभिसम्बन्धात्सम्यक्श्रद्धासम्यक्संवित् सम्यक्चरणानां लाभः । मुक्त्युपायाः—मुक्तेरुपाया इति मुक्त्युपायाः नियतपुंलिङ्गोऽयमुपायशब्दः । मोक्षोपायोद्देशेन सम्यक्श्रद्धादीनि विधीयन्ते । ननु पुरुषार्थेषु प्रधानत्वात् मोक्ष एव प्रथमं प्रदर्शनीयस्तत्कृतस्तदुपायः प्रदर्शित इति चेन्न, उपायोपदेशमन्तरेण भूतार्थकल्पस्य मोक्षोपदेशस्य वैयर्थ्यात् । विषयर्द्धिसंयोगसमुत्थस्य सुखस्य दुःखोत्तरत्वेन क्षणिकदुःखप्रतीकारमात्रत्वेन च तदुद्वेगात्तद्धेतून् परिजिहीर्षन्तं परमसुखानन्दनिमित्ताभिलाषुकं प्रति तदुपदेशस्यैव न्याय्यत्वाच्च । अभ्युदयहेतुधर्मार्थकामोपदेशो हि दुःखनिवृत्त्यर्थिनां न तदत्यन्ताभावप्रयोजक इति तस्य वस्तुतो न हितोपदेशत्वम् । ननु मुक्तिप्रसिद्धौ तदुपायोपदेशस्य युक्तियुक्तत्वेन तस्या एव निरूपणमादावुचितमिति चेन्न जिज्ञासुजिज्ञासाप्रमार्जनाशक्यत्वात्, तथा सति हि मुक्त्युपायजिज्ञासोर्जिज्ञासाया निवृत्तिरकृता भवेत् । न च कथं न तेन जिज्ञासिता मुक्तिरिति वाच्यम्, लोकस्य भिन्नरुचित्वात् कस्यापि मुक्तौ विप्रतिपत्त्यभावाच्च । न च तत्रापि भावाभावादिरूपेणास्त्येव विप्रतिपत्तिर्वादिनामिति वाच्यम् । सर्वेषां साक्षात्परम्परया वा कृत्स्नकर्मविप्रमोक्षात्मिकाया मुक्तेरविगानेनाभिप्रेतत्वात्, न च प्राङ्मुक्त्युपायनिर्देशाद्बन्धकारणनिर्देशो न्याय्यो बन्धपूर्वकत्वान्मुक्तेरिति वाच्यम्, संसारकारागारावरुद्धस्य विना मोक्षकारणोपदेशमाश्वासनासम्भवात् । कुतीर्थिकप्रणीतमोक्षकारणनिराकरणार्थत्वाच्चेति दिक् ॥

अत एव सर्वं वाक्यं सावधारणमितिन्यायेन सम्यक्श्रद्धासंविचरणान्येव मुक्त्युपाया इति मूलार्थः । तत्र चोद्देश्यविधेयभावस्य कामचारतया सम्यक्श्रद्धादीनामुद्देश्यत्वे तत्रैव-

कारयोगे सम्यक्श्रद्धादीन्येव मोक्षोपाया नान्य इत्यन्ययोगव्यवच्छेदस्य, विधेयेन सह एवकारस्य च सम्बन्धे सम्यक्श्रद्धादीनि मुक्त्युपाया एवेत्ययोगव्यवच्छेदस्य च लाभः। श्रद्धादौ सम्यक्त्वं यथावदवस्थितार्थपरिच्छेदित्वं, तच्च निसर्गश्रद्धायामधिगमश्रद्धायाञ्च वर्तत एव, आद्यायां निमित्तान्तरनिरपेक्षतया द्वितीयायाञ्च गुर्वाद्युपदेशान्तरसापेक्षतयेति विशेषः। श्रद्धा—आस्थारूपा दृष्टिः, सा चेन्द्रियानिन्द्रियार्थोपलब्धिः सा च सम्यग्रूपाऽव्यभिचारिणी, इदमेव तत्त्वं—परमार्थो न भवतीतर इत्येवंरूपा, नयप्रमाणविकल्पहेतुको जीवादिपदार्थयाथात्म्यावगमः सम्यक्संवित्। अष्टविधकर्मनिर्मुक्तिं प्रत्युद्यतस्य ज्ञानवतस्सामायिकादिसदसत्क्रियाप्रवृत्तिनिवृत्तिलक्षणं मूलोत्तरगुणशाखाप्रशाखं सम्यक्चरणम्। यस्य जीवस्य मिथ्यादर्शनपुद्गलोदयस्तस्य श्रद्धासंविच्चरणानां मुक्तिं प्रत्युपायत्वेन व्यभिचारवारणाय सम्यक्त्वं तेषां विशेषणमुपात्तम्। उत्तरोत्तरस्य सत्त्वे पूर्वपूर्वस्यावश्यम्भावनियमप्रकाशनाय श्रद्धासंविच्चरणानां तथाक्रमविन्यासो विहितः। यत्र च स्वयम्बुद्धादीनां झटिति सम्यक्संविदुदयस्तत्रापि निसर्गसम्यक्श्रद्धास्त्येवेति न तत्त्वरुचिलक्षणसम्यक्छ्रद्धाया व्यभिचारः। ननु पूर्वसत्त्वे उत्तरसत्त्वस्यानियमो यथा सम्यग्दर्शनसत्त्वे स्यान्नवा सम्यक्संविदिति, तदनुचितं, अज्ञानपूर्वकश्रद्धानप्रसङ्गात्, अविज्ञातेषु जीवादिषु श्रद्धानासम्भवेन सम्यक्श्रद्धाया अभावप्रसङ्गात् मिथ्याज्ञाननिवृत्तावुत्पन्नायामपि श्रद्धायां ज्ञानालाभे आत्मनो ज्ञानोपयोगाभावप्रसङ्गाच्चेति चेन्न यावति ज्ञाने ज्ञानमित्येतत्परिसमाप्यते तावत एवानैयत्योक्तेः, उपशमक्षयोपशमक्षयात्मककारणत्रयजन्यसम्यक्श्रद्धातः क्षयक्षयोपशमात्मककारणद्वयजन्यसम्यक्संविदो भेदोऽस्त्येव कारणभेदात्, सम्यक्श्रद्धायास्सर्वद्रव्यपर्यायविषयकत्वात्, श्रुतात्मकसम्यक्संविदश्च सर्वद्रव्यविषयकत्वे सति कतिपयपर्यायविषयकत्वादपि तयोर्भेदः। समुदितानामेषां मुक्त्युपायत्वमिति सूचयितुं द्वन्द्वसमासः कृतः। मोचनमष्टविधकर्मभ्यः पृथग्भावो मुक्तिः—मुच्लृ मोचन इतिधातोर्भावे क्तिप्रत्ययात्। तस्या उपायाः साधनानि, सम्यक्छ्रद्धादिभिस्सामानाधिकरण्यादुपायशब्दाद् व्यक्तिबहुत्वप्रयुक्तं बहुवचनम्। ननु सम्यक्श्रद्धादिभ्य इतरविनिर्मुक्तेभ्यो मुक्तिर्न भवत्येव, यथाहि भेषजे रोगापनयनार्थिनो रोगिणस्तत्र श्रद्धाया रोगापहारकत्वज्ञानस्य तदभ्यवहारक्रियाप्रवृत्तेश्च विरहे नैव भवति रोगापनयस्तत्कथं त्रिष्वेककारणताबोधकमेकवचनं विहायोपायशब्दाद्व्यक्तिबहुत्वप्रयुक्तं बहुवचनमङ्गीकृतं, तथा च सति प्रत्येकं कारणताप्राप्तिप्रसङ्गः स्यादिति चेत्सत्यम्, प्रोक्तमेव तथा पूर्वाचार्यैः 'सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः' इति, अत्र तु समासादेव तत्प्राप्त्या समस्तपदसामानाधिकरण्यानुरोधाद् बहुवचनमादृतम्, अत एवैकस्यैव सम्यग्दर्शनस्योत्पत्तौ निसर्गाधिगमयोर्द्वयोर्हेतुत्वं मा प्रसाङ्क्षीदिति मन्वानैरुमास्वातिवाचकमुख्यैर्निसर्गाधिगमाभ्यामित्यनुक्त्वा 'निसर्गादधिगमाद्वा' इत्युक्तं टीकाकृ-

द्भिरपि समासाकरणस्य प्रयोजनमप्येवमेवोक्तम् । न च तथा सति 'तत्र तत्त्वानि जीवाजीवपुण्यपापाश्रवसंवरनिर्जराबन्धमोक्षा नवेत्यादावपि समुदायस्यैव तत्त्वप्राप्तिर्न पुनः प्रत्येकमिति वाच्यं, प्रत्येकं तत्प्रापकस्य नवशब्दस्य तत्र सत्त्वात् । समुदायसमुदायिनोः कथञ्चिदभेदात् कथञ्चिद्भेदेऽपि वा प्रत्येकावृत्तेस्समुदायावृत्तित्वेन प्रत्येकमपि कारणता मभ्युपेत्य तथोक्तेः, प्रत्येकं स्वरूपयोग्यतारूपकारणतासत्त्वादितरविरहे फलोपधायकत्वलक्षणकारणसत्त्वप्रयुक्तकार्योत्पत्तिप्रसङ्गस्यापादयितुमशक्यत्वात् । फलोपधायकत्वलक्षणकारणत्वाभिप्रायेण मोक्षमार्ग इति त्रित्वावच्छेदेनैककारणत्वबोधकैकवचनस्याप्युक्तत्वेनाविरोधात् । चरणसत्त्वे ज्ञानदर्शनयोरवश्यम्भावित्वेनानन्यथासिद्धनियतपूर्ववृत्तिचरणेनैव कार्यनिर्वाहे श्रद्धासंविदोरन्यथासिद्धिप्रसङ्गपरिहाराय प्रत्येकमपि कारणताबोधकत्वस्यावश्यकत्वात् । सम्पूर्णदर्शनस्यास्य मोक्षासाधारणकारणे रत्नत्रये तात्पर्येण तत्र गुरुत्वाभिमानेन बहुवचनस्योक्तत्वाच्चेति ॥

ननु क्षायिकसम्यक्श्रद्धादीनामेव मुक्तिहेतुत्वं तत्कथं सम्यक्श्रद्धादीनां केवलानां मुक्त्युपायत्वमुच्यते अतएव हि सम्यग्दर्शनज्ञानचारित्राणि मोक्षसाधनमित्यनुक्त्वा मोक्षमार्ग इत्युक्तवातिबाधकमुख्यैः सूत्रितम्, व्याख्यातञ्च भाष्यटीकाकृद्भिस्समस्तप्रत्यपायवियुतः पाटलिपुत्रगामिमार्गवदेष त्रिविधः पन्था इति तन्न युक्तम्, एतानि समस्तानि मोक्षसाधनानीति मोक्षमार्गपदस्य स्वयमेव सूत्रकृद्भिर्व्याख्यातत्वात् । साधनत्वातिरिक्तस्य मार्गपदार्थस्य वक्तुमशक्यत्वाच्च, न च क्षायिकसम्यग्दर्शनाद्यतिरिक्तदर्शनादीनां व्यवहितत्वेनान्यथासिद्धत्वान्न साधनत्वमिति वाच्यम् । व्यवहितस्यापि कारणत्वाक्षतेः, अन्यथा कृत्स्नकर्मक्षयस्यैव कारणत्वप्रसङ्गात् । विशेषेण सामान्यस्यान्यथा सिद्धत्वासम्भवाच्च, नहि नीलदण्डेन दण्डस्यान्यथासिद्धत्वं कस्यापि सम्मतम् । न च कृत्स्नकर्मक्षय एव मोक्षस्तं प्रति क्षायिकसम्यक्त्वादीनामव्यवहितत्वेन कारणत्वं, तदितरेषान्तु व्यवहितत्वेन मार्गत्वमेवेति वाच्यम् । तस्यात्मस्वभावरूपत्वेन स्थानस्वाभावात्सम्यग्दर्शनादीनां तं प्रति मार्गत्वेन रूपणाऽसम्भवात् । अत एव च भाष्यटीकाकृद्भिः कर्मक्षयलक्षणमोक्षपदार्थमुक्त्वाप्यथवेति कल्पान्तरावलम्बनेनेषत्प्राग्भारधरणी मोक्षशब्देनाभिधातुमिष्टेत्युक्तमिति दिक् ॥

ननु सम्यक्श्रद्धासंविच्चरणेषु त्रित्वावच्छेदेन कारणत्वोक्तावपि समुदायिनामज्ञाने समुदायज्ञानाभावेन तत्र कारणताया बोधासम्भवात्तत्प्रतिपत्त्यर्थं यथोद्देशं सम्यक्श्रद्धां लक्षयति—

**तत्त्वेष्वास्था सम्यक्श्रद्धा ॥**

तत्त्वेष्विति । तत्त्वेषु जीवादिषु आस्था—अभिरुचिः सम्यक्श्रद्धेत्यर्थः । आस्था च

पौरुषेयो जीवस्य शक्तिविशेषो यामासाद्यायं सम्यग्दर्शनीत्युच्यते । ननु सम्यक्त्वमोहनीयकर्मपुद्गलद्रव्यं, आत्मपरिणामविशेषस्यैव मोक्षकारणत्वेन विवक्षितत्वात् । तत्रापनीतमिथ्यात्वभावसम्यक्त्वपुञ्जगतपुद्गलवेदनस्वरूपं क्षायोपशमिकं पौद्गलिकं सम्यक्त्वम्, केवलजीवपरिणामरूपं पुञ्जत्रयस्य सर्वथा क्षयादुपशमाच्च जातं क्षायिकमौपशमिकञ्चापौद्गलिकम् ॥

तथा नैश्चयिकव्यावहारिकभेदेन सम्यक्त्वं द्विविधम्, तत्र यद्देशकालसंहननानुरूपं यथाशक्ति यथावत्संयमानुष्ठानरूपमविकलं मुनिवृत्तं तन्नैश्चयिकं सम्यक्त्वम्, व्यावहारिकं तु न केवलं उपशमादिलिङ्गगम्यश्शुभात्मपरिणामः, किन्तु सम्यक्त्वहेतुरपि अर्हच्छासनप्रीत्यादिः । तदपि पारम्पर्येण शुद्धचेतसामपवर्गहेतुर्भवति, एवं त्रिचतुःपञ्चदशविधमपि तद्भवतीति बोध्यम् ॥ न च सम्यग्दर्शनं विहाय सम्यक्श्रद्धा कथमुक्तेति वाच्यम् । तथोक्तावपि श्रद्धाया एवाभिप्रेतत्वात् । न च तत्त्वपदेन न जीवादीनां ग्रहणं भाववाचित्वादिति वाच्यम्, भावस्य तदभिन्नत्वेनाध्यारोपाद् यथा ज्ञानमेवात्मेति । न च तर्ह्यर्थेष्वास्थेत्येवोच्यतामिति वाच्यं तत्त्वग्रहणमन्तरेण मिथ्यावादिप्रणीतेषु सर्वार्थेषु श्रद्धाया सम्यक्श्रद्धात्वापत्तेः । तथा च तत्त्वाव्यभिचारिण्यभिरुचिः सम्यक्श्रद्धेति फलितार्थः । न चाभिरुचिरभिलाषा, सा चात्मनो बहुश्रुतत्वप्रख्यापनार्थमधीतार्हतदर्शनेषु मिथ्यादृष्टिष्वप्यस्तीति वाच्यं, आत्मनः पौरुषेयशक्तिविशेषस्यैवाभिरुचिपदेन विवक्षितत्वात्, अन्यथा लोभात्मिकाया अभिलाषाया क्षीणमोहकेवलिन्यभावेन तत्र सम्यक्त्वाभावप्रसङ्गात्, तस्याश्च शक्तेः यथार्हदागमं रागाद्यनुद्रेकात् संवेगात् विषयानभिष्वङ्गात् सर्वप्राणिषु कृपोदयादास्तिक्यबुद्धेश्चाभिव्यज्यमानत्वात् । इयञ्च शक्तिविशेषलक्षणाभिरुचिरान्तरश्रद्धेत्युच्यते, तदुपकारितया तत्प्ररूपणप्रवणसूत्रशब्दराशिरपि सम्यक्श्रद्धानमुच्यते, तदुत्पादोपकरणतया च कर्मविशेषः सम्यक्त्वाख्यां लभते । इयं सर्वद्रव्यभावविषयाऽभिरुचिरूपा सम्यक्श्रद्धैकरूपापि परोपदेशापरोपदेशरूपबाह्यनिमित्तभेदतो द्वैविध्यमश्नुते, उभयविधाऽपि सत्यां क्षयक्षयोपशमोपशमसास्वादनवेदकरूपनिमित्तभेदतश्च भेद आन्तरोऽवसेयः । तत्र परोपदेश उपलक्षकः, आगमप्रतिमादर्शनशिक्षानिमित्तादीनाम्, तथा च परसहकारेण तत्त्वाव्यभिचारिजीवादिपदार्थाभिरुचिरधिगमसम्यक्श्रद्धा, यथाप्रवृत्त्यपूर्वानिवृत्तिकरणमात्रसहकारेण तत्त्वाव्यभिचारिजीवादिपदार्थाभिरुचिर्निसर्गसम्यक्श्रद्धेति च विज्ञेया ॥

ननु तत्त्वेष्वास्था सम्यक्श्रद्धेत्युक्तं, तत्र कानि तत्त्वानि, येष्वभिरुचिस्सम्यक्छ्रद्धा भवेत् कियन्ति च तानि, यतस्तदियत्ताज्ञानाभावात्सम्यक्श्रद्धाऽपूर्णा भवेदित्याशंकायामाह—

## तत्र तत्त्वानि जीवाजीवपुण्यपापाश्रवसंवरनिर्जराबन्धमोक्षा नव ।

तत्रेति तच्छब्देन तत्त्वेष्वास्था सम्यक्श्रद्धेति वाक्यस्य परामर्शः, त्रॅल्प्रत्ययार्थो घटकत्वम्, तथा च तत्त्वेष्वास्था सम्यक्श्रद्धेति वाक्यघटकानि तत्त्वानि जीवादिभेदेन नवेत्यर्थः। अत्र तत्त्वशब्दस्य जीवादिभावबोधकस्य सामानाधिकरण्यानुरोधेन जीवादिपूपचरितत्त्वेऽपि विना मत्वर्थप्रत्यययोगमजहल्लिङ्गत्वेन नपुंसकत्वं, जीवादिषु वर्तमानत्वादेव बहुवचनान्तत्वञ्च। भाववाचकत्वेऽपि वा धर्मधर्मिणोः कथञ्चिदभेदेन तद्बहुत्वप्रयुक्तं बहुवचनान्तत्वम्। जीवादिमोक्षान्तं यावद्द्वन्द्वः, तत्र कालत्रयेऽपि जीवनाज्जीवः, तद्विपरीतोऽजीवः, पुनाति प्रीणयत्यात्मानमिति पुण्यं पूयतेऽनेनेति वा पुण्यं सद्वेद्यादिकम्, तत्प्रतिद्वन्द्विरूपं पाति–रक्षत्यात्मानं शुभपरिणामादिति पापमसद्वेद्यादिकम्, येन कर्मास्रवति, आस्रवणमात्रं वाऽऽस्रवः, येन संव्रियते संरुध्यते, सरोधनमात्रं वा सवरः, यया निर्जार्यते निरस्यते, निरसनमात्रं वा निर्जरा, येन बध्यतेऽस्वतंत्रीक्रियते, बंधनमात्रं वा बन्धः, येन मोक्ष्यतेऽस्यते मोक्षणमात्रं वा मोक्षः। एतेषां लक्षणप्रभेदादयश्चाग्रे वक्ष्यन्ते। ननु पुण्यादयो न जीवाजीवाभ्यां पृथग्भूताः, यतः पुण्यपापबन्धाश्रवा अजीवरूपाः, सवरो निवृत्तिरूपो जीवपरिणामः, निर्जरा कर्मपार्थक्यापादकजीवपरिणामः शक्तिरूपः। मोक्षोऽपि समस्तकर्मक्षयरूपः, स्थानविशेषप्राप्तिरूपः, स्वस्वरूपावस्थितिरूपो वा जीवपरिणामविशेष एव। नैते जीवाजीवाभ्यामर्थान्तरभूता इति कथं जीवाजीवाभ्यां द्वैविध्यं परिहृत्य नवधा विभाग आदृतः, मैवम्, जीवाजीवयोः परस्परोपश्लेषात्मकसंसारस्य प्रधानहेतूनां तदुपरमस्य वा परिज्ञानाभावे प्राप्यस्य मोक्षस्य परिज्ञानासम्भवेन तत्परिज्ञापनार्थं पृथगुपादानात्। सिद्धसिद्धिभ्यां व्याघातेन पर्यनुयोगानुपपत्तेः। जीवाजीवाभ्यां हि पुण्यादीनुपलभ्यार्थान्तरतया पर्यनुयोगेऽर्थान्तरत्वस्यात एव सिद्धत्वाद् व्याघातः, अनुपलभ्य पर्यनुयोगेऽनुपलम्भादेव पर्यनुयोगे व्याघात इति, पर्यायार्पणं गौणीकृत्य द्रव्यार्पणप्राधान्येन जीवाजीवयोः कथञ्चिदन्तर्भावेऽपि द्रव्यार्पणं गौणीकृत्य पर्यायार्पणप्राधान्ये तत्र तेषामन्तर्भावासम्भवेन तदपेक्षया पृथगुपादानाच्च। नन्वस्तु तेषां पार्थक्यमेवंक्रमेण विन्यसने तु किं निबन्धनमिति चेदुच्यते, मोक्षशास्त्रं हीदम्, तथा क्रियमाणे मोक्षोपदेशे सावधिकमोक्षशब्दश्रवणाच्छ्रोतुराशङ्का स्वभावत एव जागृयात् कस्य कस्मात् कथं मोक्ष इति, तदपनोदनाय जीवस्य बन्धात् सवरनिर्जराभ्यां मोक्ष इति वाच्यम्। तत्र केन कथं बन्ध इति जागृतेऽनुयोगेऽजीवेनाऽऽस्रवद्वारा बन्ध इत्यभिधानीयम्। तत्र कियन्तोऽजीवाः किं सर्वैर्बन्ध इति पृच्छायां, पञ्चधाजीवाः, पुण्यपापात्मकपुद्गलविशेषैरेव बन्ध इति समाहिते सामान्यतो बन्धमोक्षकारणेषु हेयोपादेयत्वबुद्धिः सुलभतया स्यादतो मुख्याश्रयत्वेन प्राधान्याज्जीवस्य

१ हैमशब्दानुशासने तु ( सप्तम्या ७। २। ९४ ) इत्यनेन त्रल्।

ततस्तद्विरुद्धस्याजीवस्य ततो मुक्तिप्रतिद्वन्द्विबन्धकारणत्वेन पुण्यपापाश्रवाणां मुक्तिकारणत्वेन संवरनिर्जरयोस्ततो मुक्तिप्रतिद्वन्द्विनो बन्धस्य ततः परिशेषान्मोक्षस्य निर्देश इति क्रमविन्यासहेतवो बोध्याः । यद्वा जीवसंश्लिष्टकृत्स्नकर्मणां क्षयो हि मोक्षः, सोऽप्यात्मपरिणामविशेष एवेति प्राधान्याज्जीवस्य, कर्मणामजीवविशेषत्वेन तत्सामान्यज्ञानार्थमजीवस्य, पापात्मकस्यैव कर्मणो विनाशे न मोक्षोऽपि तु पुण्यात्मकस्यापीति दर्शयितुमभ्यर्हितं पूर्वमितिन्यायेन च ततः पुण्यपापे, पुण्यपापयोः कथं संश्लेषः कथं वा विनाश इति शंकासमाधानाय तत आस्रवस्तत आगच्छत्कर्मनिरोधपूर्वकागतकर्मपरिशाटनस्य सुकरत्वात् संवरनिर्जरे, ततश्च प्रतियोगितया कर्मसंश्लेषरूपबन्धस्य ततः परिशिष्टस्य मोक्षस्य निर्देश इति क्रमे सम्बन्धो विज्ञेयः । ननु द्वन्द्वोत्तरबहुवचनादेव तद्घटकपदार्थमात्रवृत्तिसंख्याया बोधसम्भवेन नवत्वप्राप्तौ नवग्रहणं न कर्त्तव्यमिति चेद्युक्तमेतत्तथापि प्राधान्येनैकैकस्मिन् तत्त्वस्य प्रख्यापनाय तद्ग्रहणमन्यथा समुदाय एव तत्त्वप्राप्तिशङ्का स्यात्। आनुकूल्यप्रातिकूल्याभ्यामेतानि नवैव तत्त्वानि मोक्षोपयोगीनीति सूचयितुं वा तद्ग्रहणम् ॥ ननु पुण्यपापयोः कर्मलक्षणयोः पुद्गलात्मकतयाऽजीवेऽन्तर्भावसम्भवेन सप्तैव तत्त्वानीति चेन्मैवं, शुद्धपुद्गलानां पुण्यपापरूपत्वाभावात् किन्तु जीवेनाध्यवसायविशेषेण परिगृह्य कर्मत्वेन परिणमय्य चात्मसात्कृतानामेव, यावता न ते जीवेन परिगृह्यन्ते तावन्तं कालं ते पुद्गला एव न कर्मरूपा, अपि तु कर्मप्रायोग्या इति सूचयितुं पृथगुल्लेखात्॥

अथ सम्यक्छ्रद्धाविषयीभूततत्त्वानामवान्तरप्रभेदानां बहुत्वात्तेषां सौलभ्येन बोधार्थं तत्तत्त्वनिरूपणावसरे तद्भेदाननुक्त्वाऽत्रैव सामान्यतोऽवान्तरवस्तुनिर्देशात्मकमुद्देशमारचयति—

**जीवा अनन्ताः ।**

जीवा इति । यद्यपि जीवानां संग्रहप्रकारभेदा अग्रे वक्ष्यन्ते तथापि तेषां संख्याया इयत्ता नास्ति न भवन्त्यसंख्याता अपीत्यभिप्रायेणानन्ता इत्युक्तम् ॥

अथाजीवान् विभजते—

**धर्माधर्माकाशकालपुद्गलाः पञ्चाजीवाः ।**

धर्माधर्मेति । धर्मादयस्स्वप्रवचनप्रसिद्धा रूढसंज्ञा ज्ञेयाः, यद्वा स्वतो गतिक्रियापरिणतानां साचिव्याधानाद्धर्मः । तद्विपरीतोऽधर्मः । यस्मिन्नाकाशन्ते स्वैः स्वैः पर्यायैर्द्रव्याणीत्याकाशं, स्वयं वाऽऽसमन्तात्काशत इत्याकाशं, परेषामवकाशदानाद्वाऽऽकाशं, मूर्त्तानामुपचयानपचयांश्च कलयति प्रकाशयतीति कालः, पूरणगलनक्रियावत्त्वात् पुद्गला इति क्रियानिमित्तास्संज्ञा बोध्याः, एषां द्वन्द्व इतरेतरयोगलक्षणः, न समाहारस्समुदायस्य प्राधान्यापत्तेः ।

प्रशस्ताभिधानाद्धर्मस्यादौ मोक्षपूर्गमनोपकारित्वाद्वा, तत्प्रतिपक्षित्वे सति स्थितिकारणत्वादधर्मस्य तदनन्तरं, ततस्ताभ्यां परिच्छेद्यत्वात् सर्वाधारत्वाच्चाकाशस्य, एभिरमूर्तत्वेन साधर्म्यात्ततः कालस्य, तन्निमित्तकनानापरिणामवत्त्वादमूर्तप्रतिपक्षित्वाच्च ततः पुद्गलस्य ग्रहणं बोध्यम् । न्यूनाधिकसंख्याव्यवच्छेदार्थं प्रत्येकमजीवत्वद्योतनार्थं, धर्मादयो गत्याद्युपग्रहान् प्रति वर्त्तमानास्स्वयमेव तथा परिणमन्ते न परप्रत्ययाधीना तेषां प्रवृत्तिरिति स्वातन्त्र्यं प्रकटयितुं च पञ्चेत्युक्तम् । अजीवा इति । न जीवा अजीवाः, 'नञ्युक्तमिवयुक्तञ्च पदमन्यसदृशाधिकरणे वर्त्तते' इति न्यायेन भावान्तर एवाजीवशब्दो नाभावमात्रे वर्त्तते, यथाऽनश्वशब्दो गर्दभे वर्त्तते । भावान्तरानात्मकस्याभावमात्रस्याप्रसिद्धत्वाच्च ॥

नन्वनश्वशब्दस्य गर्दभे स्थितिर्युक्ता, जीवत्वसदृशोदरकेशशफादिलक्षणसादृश्यसत्त्वाद् ह्रस्वकर्णादितुरगविशेषलक्षणापेक्षया च प्रतिषेधात् । धर्मादौ तु तथाविधसादृश्याभावाज्जीवासाधारणचैतन्यशून्यत्वमात्रेऽजीवशब्दो वर्त्तेत इत्याशङ्कायां साधर्म्यधर्मप्रतिपादनद्वारा सामान्यविशेषात्मकत्वमपि जीवादीनां प्रदर्शयितुमाह—

## जीवेन सहैतान्येव षट् द्रव्याणि ।

जीवेनेति । तथा चैषामस्ति सादृश्यं, जीवेन सह द्रव्यत्वं हि सर्वेषां समानो धर्मः, न चात्र द्रव्यत्वमपि प्रतिषेध्यम्, तथा सति गगनकुसुमायमानत्वं धर्मादीनां स्यात् न चैतदिष्टं, जीवासाधारणधर्मप्रतिषेधस्यैवाभिमतत्वात्, तथा च जीवादीनां द्रव्यमिति सामान्यसंज्ञा, विशेषसंज्ञा च जीवो धर्मोऽधर्म इत्यादिरूपेति भावः । एतानीति, धर्मादय इति भावः, विधेयप्राधान्यात्पुद्गलशब्दस्य त्रिलिङ्गत्वाद्वा नपुंसकनिर्देशः । एवशब्दो भिन्नक्रमो द्रव्येयत्तावोधरूपषट्पदेन सम्बद्ध्यते, तथा चैतानि षडेवेत्यर्थः । एतानि षडेव किमात्मकानीत्यत आह द्रव्याणीति । बाह्याभ्यन्तरनिमित्तकोत्पादविगमैः स्वपर्यायैर्द्रूयन्ते गम्यन्ते तांस्तान् पर्यायान् वा द्रवन्ति गच्छन्तीति द्रव्याणि, बाह्य निमित्तं द्रव्यक्षेत्रकालभावलक्षणं, आभ्यन्तरञ्च स्वपरिणामविशेषः, तावेतौ मिलित्वोत्पादविगमयोर्हेतू भवतः नत्वन्यतरापाये, तथा चैतानि पर्यायद्रवणाद्द्रव्याणि न तु द्रव्यत्वसम्बन्धात्, द्रव्यत्वसम्बन्धात्पूर्वमेषामद्रव्यत्वापत्तेः, न हि दण्डसम्बन्धात् प्राग् देवदत्तो दण्ड्यासीत् । किन्तु यदा दण्डसम्बन्धस्तदैव । न च तथा प्रकृते द्रव्यताऽभिमता प्राग्द्रव्यत्वसम्बन्धात्, अभिमतत्वे वा तत्सम्बन्धाऽऽनर्थक्यमेव । यद्वा जातिः शब्दार्थ इत्यभ्युपगन्तृद्रव्यास्तिकनयाभिप्रायेण द्रव्यत्वनिमित्ता द्रव्यसंज्ञैतेषां भवतु, तच्च द्रव्यत्वं वस्तुतः कथञ्चिद्भिन्नाभिन्नमिति न कोऽपि दोषः । एवशब्दस्य द्रव्याणीत्यनेनापि सम्बन्धः, तथा च जीवादीनि षट् द्रव्याण्येवेत्यपि लाभेन धर्मादिषु द्रव्यत्वा-

योगस्य व्यावृत्तिरिति । एतेन च जीवादीनां द्रव्यत्वं सामान्यविशेषात्मकत्वमुत्पादव्ययध्रौव्यात्मकत्वं गुणपर्यायवत्त्वं तत्त्वञ्च साधर्म्यं लभ्यत इति भावः ॥

ननु षडिति पदेनैवकारं संयोज्य षडेव द्रव्याणीत्युक्तम्, तन्न युक्तं नैयायिकादिभिः पृथिवीजलतेजोवायुदिङ्मनसां द्रव्यतया गुणकर्मसामान्यविशेषसमवायाभावानाञ्च पदार्थतयाऽभ्युपगतानां सत्त्वादित्याशङ्कायामाह—

**दर्शनान्तराभिमतपदार्थानामत्रैवान्तर्भावः ।**

दर्शनान्तराभिमतेति । नैयायिकादीनां दर्शनान्तरेषु तैरभ्युपगतानां पृथिव्यादिपदार्थानां षट्स्वेतेष्वेवान्तर्भाव इत्यर्थः, तथाहि पुद्गला विचित्रशक्तिमन्तस्तथा च शक्तिवैचित्र्येण परिणामवैचित्र्यात्पृथिवीजलतेजोवायुरूपेण परिणमन्त इति सर्वथा तेषां विभिन्नजातीयत्वे मानाभाव एव, तथा दिगपि नास्त्यतिरिक्ता रुचकप्रदेशावधिकविशिष्टाकाशप्रदेशैः सूर्योदयाद्याश्रयेणाकाशप्रदेशैर्वा प्राच्यादिव्यवहारोपपत्तेः । द्रव्यमनसोऽपि चक्षुरादिवत्पुद्गलविशेषात्मकत्वमेव । अथ गुणादीनपि पराभ्युपगतानन्तर्भावयति—

**गुणपर्यायसामान्यविशेषादयप्यषट्स्वेव सङ्गच्छन्ते ।**

गुणेति । गुणो रूपादिः । पर्यायः कर्म क्रमभावित्वात् । आदिना समवायाभावयोर्ग्रहणम् । तथा च गुणकर्मसामान्यानि द्रव्यस्य पर्याया एव । विशेषस्त्वप्रामाणिक एव । समवायस्तु नास्त्येव, कथञ्चित्तादात्म्यलक्षणसम्बन्धेनैव गुणादिविशिष्टबुद्ध्युपपत्तेः । अभावोऽपि नाधिकरणाद्द्रव्यात् सर्वथा भिन्नः, तादृशे प्रमाणाभावात्, एवञ्च षडेव द्रव्याणि नाधिकानि नवा न्यूनानीति भावः ॥

नन्वेवमपि षडेव द्रव्याणीत्यनुपपन्नं तेभ्यो भिन्नानां पुण्यपापादीनां सत्त्वात्, उक्तं हि पूर्वं 'तत्र तत्त्वानि जीवाजीवपुण्यपापास्रवसंवरनिर्जराबन्धमोक्षा नवे'ति इत्याशङ्कायामाह—

**पुण्यादितत्त्वानामप्ययमेव न्यायः ।**

पुण्यादितत्त्वानामपीति । अयमेव न्याय इति, उक्तदिशा षट्सु द्रव्येष्वेवान्तर्भावः वर्णनीय इति भावः, पङ्क्तिरेषा व्याख्यातप्रायैव ।

स्वयं मूलकारोऽन्तर्भावमभिधत्ते—

**तत्र पुण्यपापाश्रवबन्धानां पुद्गलपरिणामत्वात्पुद्गलेषु, संवरनिर्जरामोक्षाणां जीवपरिणामत्वाज्जीवेष्वन्तर्भावः ।**

तत्रेति । आस्रवो हि नैकरूपः किन्तु कर्मप्रापकक्रियाविशेषोऽध्यवसायविशेषो वा स्यात् तत्र मूर्तस्यैवात्मनः क्रियावत्त्वात्क्रियाया मूर्तात्मकपुद्गलरूपत्वं, तत्क्रियाप्रयोजकाध्यवसायविशेषत्वे तु जीवपरिणामात्मकतया जीवात्मकत्वं, बन्धस्योपश्लिष्टकर्मरूपत्वात्पौद्गलिकत्वमिति भावः ॥

अथ कालं विहाय पञ्चानां साधर्म्यमाह—

**कालं विहाय पञ्चास्तिकाया भवन्ति ।**

कालमिति । अनागतस्यानुत्पत्तेरुत्पन्नस्य च नाशात्प्रदेशप्रचयाभावेन कालेऽस्तिकायता नास्तीत्यभिप्रायेणाह कालं विहायेति । कायो हि समुदायः, मनुष्यलोकव्यापी कालस्त्वेकसमयात्मकत्वेनैकोऽतो न तस्य कायरूपत्वमिति भावः । पञ्चेति, जीवधर्माधर्माकाशपुद्गला इत्यर्थः । अस्तिकाया इति, सकलजीवादिद्रव्यध्रौव्यप्रतिपादकोऽव्ययोऽस्तिशब्दः । आपत्तिवाचकः कायशब्दः, आपत्तिर्नामाविर्भावतिरोभावौ, उत्पादविनाशाविति यावत् । एवञ्चोत्पादव्ययध्रौव्यात्मका इत्यर्थः । ननु पुद्गलानामुत्पादव्ययवत्त्वसंभवेऽपि जीवादीनां कथं तदिति चेन्न जीवस्योत्पादविनाशिशरीरसम्बन्धादुत्पादविनाशवत्त्वात् अनित्यज्ञानादिमत्त्वाद्वा, धर्मादीनामपि तत्तद्गत्याद्युपमहव्यापाराणां जिगमिषुचैत्रादिनिमित्तत आविर्भूतानां समुपरतगत्यादिव्यापारे च चैत्रादिके तिरोहितानाञ्च सम्बन्धेनोत्पादविनाशवत्त्वात् । न च मनुष्यलोकान्तर्वर्तिनः कालस्यैकसमयात्मकत्वात्परमसूक्ष्मत्वान्निर्विभागत्वाच्च न कायता, अत एव नोत्पादविनाशित्वं, उत्पादविनाशाविनाभूतञ्च ध्रौव्यं तदभावात् ध्रौव्यमपि न भवेदेवेति समयात्मकः कालो वन्ध्यापुत्रवदसन्नेव स्यादिति वाच्यम्, यत्कायशब्देनोच्यते तदेवोत्पादविनाशवदिति नियमाभावात् । किन्तु स्वरससिद्धयोरेवोत्पादविनाशयोः कायशब्देन प्रकाशनात् । नहि शब्दसामर्थ्यादभूतयोरपि तयोः कल्पना समुचिता, तथा च कायशब्दप्रयोगाभावेऽपि स्वारसिकोत्पादविनाशौ तत्सहचरितं ध्रौव्यञ्च कालेऽप्यस्त्येवेति न दोषः । न चैवमपि कुतो न काले कायशब्दः प्रयुज्यत इति वाच्यम् । प्रदेशानामवयवानां वा बहुत्वाभावात् । अभ्यन्तरीकृतेवार्थो हि कायशब्दः, काया इव काया इति, यथौदारिकादिशरीरनामकर्मोदयवशात्पुद्गलैश्चीयन्ते इति कायाः तथा धर्मादीनामनादिपारिणामिकप्रदेशचयनात् कायत्वम् । तथा च प्रचीयमानाकारत्वं कायशब्दार्थः, स च समुदायरूपः, सोऽपि विभागे सति भवति, विभक्ताश्च धर्मादिद्रव्यप्रदेशाः, एकस्मिन्धर्मादिप्रदेशेऽपरस्य धर्मादिप्रदेशस्याप्रतिष्ठितत्वात् । तथा प्रविभक्तप्रदेशानां परस्पराविच्छेदरूपत्वात्समुदायरूपत्वमेतादृशञ्च प्रचीयमानाकारत्वं काले नास्तीति दिक् । एवञ्च कालातिरिक्तानां प्रदेशावयवबहुत्वं साधर्म्यं फलितं, न चैकस्मिन्

परमाणौ अवयवबहुत्वमव्याप्तमिति वाच्यम् प्रदेशावयवबहुत्वसमानाधिकरणद्रव्यत्वव्याप्यधर्मवत्त्वस्य तदर्थत्वात्, तादृशो धर्मः पुद्गलत्वं परमाणवपीति नाव्याप्तिः, कालेऽतिव्याप्तिवारणाय बहुत्वान्तम् । पर्यायार्थिकनयप्राधान्येनायमर्थ आदृतः, वस्तुतस्तु तस्य द्रव्यावयवैर्निरवयवत्वेऽपि 'एकरसगन्धवर्णो द्विस्पर्शश्चाणुर्भवती'ति स्वशास्त्रप्रसिद्ध्या भावावयवैः रसावयवत्वमक्षतमेव । एवं जीवादीनां पञ्चानां अरूपित्वममूर्तत्वं, धर्मादिचतुर्णामेकद्रव्यत्वं निष्क्रियत्वं जीवादीनां त्रयाणां लोकाकाशस्य चासख्येयप्रदेशत्वं, सख्येयासंख्येयानन्तान्यतमप्रदेशत्वं पुद्गलानां, जीवपुद्गलानान्त्वनेकद्रव्यत्वं क्रियावत्त्वं च साधर्म्यं विज्ञेयमिति दिक् ॥

अथ पुण्यस्य प्रभेदानाह—

**पुण्यस्य तु सातोच्चैर्गोत्रमनुष्यद्विकसुरद्विकपञ्चेन्द्रियजातिपञ्चदेहादिमत्रितनूपाङ्गादिमसंहननसंस्थानप्रशस्तवर्णचतुष्कागुरुलघुपराघातोच्छ्वासातपोद्योतशुभखगतिनिर्माणत्रसदशकसुरनरतिर्यगायुस्तीर्थकरनामकर्मरूपेण द्विचत्वारिंशद्भेदाः ।**

पुण्यस्येति । शारीरमानसानेकविधसुखपरिणामप्रापकं सातं वेदनीयकर्मोत्तरप्रकृतीदम्, लोकपूजितकुलप्रसवनिदानं कर्मोच्चैर्गोत्रं गोत्रकर्मोत्तरभेदः, मनुष्यद्विकं मनुष्यगतिमनुष्यानुपूर्वीरूपमेवमेवसुरद्विकमपि । अयमात्मा पञ्चेन्द्रिय इति व्यवहारनिमित्तं कर्म पञ्चेन्द्रियजातिः । पञ्चदेहा औदारिकवैक्रियाहारकतैजसकार्मणरूपा । आदिमानां तिसृणामौदारिकवैक्रियाहारकाणां तनूनामङ्गोपाङ्गानि शिरःप्रभृतीन्यङ्गुल्यादीनि च तन्निर्वर्तककर्माण्यादिमत्रितनूपाङ्गानि । आदिमसंहननसंस्थाने, अस्थिबन्धनविशेषप्रयोजकं कर्म संहननं, आदिमसंहननं वज्रर्षभनाराचसंज्ञं, शरीराकृतिनिर्वृत्तिप्रयोजककर्म संस्थानं, आदिमसंस्थानं समचतुरस्रनामेत्यर्थः । प्रशस्तवर्णचतुष्कं, शुक्लरक्तपीताः प्रशस्तवर्णाः, प्रशस्तो गन्धस्सुरभिः, कषायाम्लमधुराः प्रशस्तरसाः, मृदुलघुस्निग्धोष्णाः प्रशस्तस्पर्शा एषां लाभप्रयोजकानि कर्माणि चत्वारि प्रशस्तवर्णचतुष्कपदग्राह्याणि । शरीराणामगुरुलघुत्वपरिणामनियामकं कर्मागुरुलघु । परत्रासादिजनकं कर्म पराघातं, उच्छ्वसनप्राप्तिहेतुरुच्छ्वासः । उष्णप्रकाशप्रापकं कर्मातपं, अनुष्णप्रकाशप्रापकं कर्मोद्योतं, शुभान्तरिक्षगमनहेतुः कर्म शुभखगतिः, 'अङ्गोपाङ्गादिप्रतिनियतस्थानवृत्तिताप्रयोजकं कर्म निर्माणं, त्रसबादरपर्याप्तप्रत्येकस्थिरशुभसौभाग्यसुस्वरादेययशःकीर्तिरूपाणि दश कर्माणि त्रसदशकपदग्राह्याणि, सुराश्च नराश्च तिर्यञ्चश्च सुरनरतिर्यञ्चस्तेषामायूंषि, तत्प्रयोजककर्माण्यत्र सुरनरतिर्यगायूंषि । धर्मतीर्थप्रवर्त्तयितृपदप्रापकं कर्म तीर्थकरनाम, एषां द्वन्द्वस्ततः कर्मपदेन कर्मधारयः, तादृशकर्माणि रूपं स्वरूपं यस्य पुण्यस्य तत्तादृ-

रायपञ्चकमन्तरायस्य, दर्शनावरणीयनवक दर्शनावरणीयस्य, मिथ्यात्वकषायपञ्चविंशतिरूपाः षड्विंशतिविधा मोहनीयस्य प्रकृतय । नरकायुरायुषो नीचैर्गोत्रं गोत्रस्यासातं वेदनीयस्य प्रकृतिः । शेषाणि नरकगत्यानुपूर्वीतिर्यग्गत्यानुपूर्व्येकद्वित्रिचतुरिन्द्रियजात्यप्रथमसहननपञ्चकाप्रथमसस्थानपञ्चकाप्रशस्तवर्णचतुष्कोपघातकुखगतिस्थावरदशकानि चतुस्त्रिंशन्नामप्रकृतयो विज्ञेयाः ॥

साम्प्रतमाश्रवं विभजते—

**आश्रवस्तु इन्द्रियपञ्चककषायचतुष्काव्रतपञ्चकयोगत्रिकक्रियापञ्चविंशतिभेदात् द्वाचत्वारिंशद्विधः ।**

आश्रवस्त्विति । कायवाङ्मनसा क्रियाविशेषो योगापरपर्याय आत्मकायाद्याश्रय आश्रव उच्यते, स च यद्यपि सकषायस्याकषायस्य च भवति तथाप्यत्र सकषायस्यैवाश्रव विभजते, स्पर्शनरसनघ्राणचक्षुःश्रोत्ररूपमिन्द्रियपञ्चक, क्रोधमानमायालोभरूपं कषायचतुष्कं, हिंसाऽसत्यस्तेयाब्रह्मपरिग्रहरूपमव्रतपञ्चक, कायवाङ्मनोरूपं योगत्रिकं, कायिक्यधिकरणिकीप्रादोषिकीपारितापनिकीप्राणातिपातिक्यारम्भिकीपारिग्रहिकीमायाप्रत्ययिकीमिथ्यादर्शनप्रत्ययिक्यप्रत्याख्यानिकीदृष्टिकीस्पृष्टिकीप्रातीत्यकीसामन्तोपनिपातिकीनैःशस्त्रिकीस्वाहस्तिक्याज्ञापनिकीविदारणिक्यनाभोगप्रत्ययिक्यनवकाङ्क्षप्रत्ययिकीप्रायोगिकीसामुदायिकीप्रेमप्रत्ययिकीद्वेषप्रत्ययिकीर्यापथिकीरूपाः क्रियापञ्चविंशतिः, एषा द्वन्द्व एता एव भेदो विशेषस्तस्मादित्यर्थः । यद्यपि योगेन्द्रियकषायाव्रताना सकषायसम्बन्धिना क्रियास्वभावानतिवृत्तेः क्रियामात्रमेवाम्रव॰ प्रसक्तस्तथापि तेषा द्रव्याम्रवरूप शुभाशुभाम्रवपरिणामाभिमुखत्वात्, भावाम्रवस्तु कर्मादान, तच्च पञ्चविंशतिक्रियाभिरिति तेषा पृथग्ग्रहण, तत्राव्रतपञ्चक सकलासवजालमूल, तत्प्रवृत्तावेवास्रवेषु प्रवृत्तिस्तन्निवृत्तौ च सर्वास्रवेभ्यो निवृत्ति, अत्र कषायचतुष्कं सहकारि, उभयोरनयो. सत्त्वे इन्द्रियपञ्चकमास्रवेषु प्रवर्त्तते तदनन्तरञ्च पञ्चविंशतिक्रिया आम्रवकारणिका. प्रवर्त्तन्ते, सर्वत्र च कायवाङ्मनोयोगसहकारी भवति । तथा च क्रियापञ्चविंशतिः नैमित्तिकी, इतराणि तु निमित्तानि यथा स्पर्शनेन्द्रिय कारण स्पर्शनक्रिया कार्यं तस्मिन् सति स्पृष्टिकी क्रिया, मूर्च्छा कारण परिग्रहः कार्यं तस्मिन् सति पारिग्रहिकी क्रिया, क्रोधः कारण प्रद्वेषः कार्यं तस्मिन सति प्रादोषिकी क्रिया, मानः कारणमप्रणतिः कार्यं तस्मिन् सति प्रातीत्यकी क्रिया, कारणं माया कार्यं कौटिल्य तस्मिन् सति मायाप्रत्ययिकी क्रिया, प्राणातिपात. कारण कार्यं प्राणातिपातिकी क्रिया इत्येव यथासभव निमित्तनैमित्तिकभावो विज्ञेयः ॥

इदानीं संवरभेदानाह—

## पञ्चसमितित्रिगुप्तिद्वाविंशतिपरीषहदशयतिधर्मद्वादशभावना-पञ्चचारित्रभेदात्संवरस्सप्तपञ्चाशद्विधः ।

पञ्चेति । ईर्याभाषैषणाऽऽदाननिक्षेपोत्सर्गरूपाः पञ्चसमितयः । कायवाङ्मनोनिग्रहात्मिकास्त्रिगुप्तयः । क्षुत्पिपासाशीतोष्णदंशावस्त्रारतिस्त्रीचर्यानैषेधिकशय्याऽऽक्रोशवधयाचनाऽलाभरोगतृणस्पर्शमलसत्कारप्रज्ञाऽज्ञानसम्यक्त्वरूपा द्वाविंशतिपरीषहाः । क्षान्तिमार्दवार्जवनिर्लोभतातपःसंयमसत्यशौचाकिञ्चन्यब्रह्मचर्यरूपा दश यतिधर्माः । अनित्याशरणसंसारैकत्वान्यत्वाशुचित्वाश्रवसंवरनिर्जरालोकस्वभावबोधिदुर्लभधर्मस्वाख्याततारूपा द्वादश भावनाः । सामायिकछेदोपस्थापनापरिहारविशुद्धिसूक्ष्मसंपराययथाख्यातरूपाणि पञ्च चारित्राणि, एषां द्वन्द्व एतान्येव भेदाः प्रकारास्तस्मात् । संवरः पूर्वोदिताऽऽस्रवस्य निरोधः, शुभाशुभकर्मग्रहणहेत्वात्मपरिणामाभाव इति यावत् । अर्थोऽयं संवरणं संवर इति व्युत्पत्त्या निष्ठेयः । संव्रियते कर्मानेनेति व्युत्पत्त्या तु संवरस्समित्यादयः । समित्यादिभिर्हि कर्म संव्रियते, तथा च शुभाशुभकर्मादानाभावे समित्यादयः करणमिति तात्पर्यम् ॥

अधुना निर्जरां विभजते—

## बाह्याभ्यन्तरषड्रूपतपोभेदेन द्वादशप्रकारा निर्जरा ।

बाह्येति । तपो हि द्विविधं बाह्यमाभ्यन्तरञ्चेति, तत्रानशनोनोदरिकावृत्तिसंक्षेपरसत्यागकायक्लेशसंलीनतारूपं षड्विधं बाह्यं तपः । प्रायश्चित्तविनयवैयावृत्त्यस्वाध्यायध्यानोत्सर्गरूपञ्च षड्विधमाभ्यन्तरं मिलित्वा च द्वादशप्रकाराणि तपांसि, एतान्येव च निर्जराशब्दवाच्यानीति तस्या अपि द्वादशविधत्वं, यद्यपि बाह्याभ्यन्तररूपाणि तपांसि कर्मादानाभावात्मकसंवरकरणेष्वन्तर्गतानि, तस्मादेषामेव निर्जरात्वे भवत्येकदेशो निर्जरेति स्यात्तथा च संवरश्चेद् प्रधानं तत्त्वमिति भवत्वव्याघातस्तथापि कर्मसंश्लिष्टेनात्मना कर्माणामभिवृत्तेनैव संश्लिष्टकर्महीनेनापि भवितव्यमेवान्यथा बन्धविनिर्मुक्तिस्तस्य न भवेदेव, ततश्च संश्लिष्टकर्मप्रहाणमप्यावश्यकमात्मनोऽपि तत्त्वमेव, तदेव च निर्जरा तस्याः तपायोऽवश्य विशेषः, स चोपायस्तप एव, तस्य त्यागवत्कर्मनिरोधे संश्लिष्टकर्मप्रहाणे च सामर्थ्यादुभयाङ्गतया कीर्तनमिति न कोऽपि दोषः ॥

साम्प्रतं बन्धं विभजते—

१. अत्र कर्मपुद्गलस्य शुभाशुभ[illegible] पौद्गलिक[illegible] [illegible] । २. प्रथम [illegible] ।

## प्रकृतिस्थितिरसप्रदेशभेदाच्चतुर्विधो बन्धः ।

प्रकृतीति । जीवप्रदेशकर्मपुद्गलानां क्षीरोदकवत्परस्पराश्लेषो बन्धः । बन्धनं बन्धोऽस्वतंत्रीकरणं, तच्चोभयोरपि पुद्गलात्मनोरिति क्रियाक्रियावतोः कथञ्चिदभेदात् ज्ञानदर्शनावरणवेदनीयमोहनीयाऽऽयुष्कनामगोत्रान्तरायात्मकाष्टविधाः प्रकृतयो बन्धपदवाच्या भवन्ति । अथवाऽष्टविधकर्मजन्यास्स्वभावाः प्रकृतयः, यथा ज्ञानावरणीयस्यार्थानवगमो, दर्शनावरणीयस्यार्थानालोचनं, वेदनीयस्य सुखदुःखसंवेदनं, तत्त्वार्थाश्रद्धानासंयमौ मोहनीयस्य, भवधारणमायुषो नाम्नो नारकादिनामकरणं गोत्रस्य सदसत्कुलीनसंशब्दनं दानादिविघ्नकरणमन्तरायस्येति । एतासां ज्ञानावरणीयादिप्रकृतीनामात्मप्रदेशेषु कालविभागेनावस्थानं स्थितिबन्धः, तत्तत्प्रकृतिस्वभावादविच्युतिर्नियतकालमिति वा । नियतकालानां कर्मणां तीव्रमन्दादिभावेन विपाकवत्ता रसबन्धोऽनुभावबन्धापरनामा कर्मपुद्गलगतसामर्थ्यविशेषानुभवो वा । आत्मप्रदेशेषु कर्मपुद्गलद्रव्यपरिमाणनिरूपणं प्रदेशबन्धः, कर्मभावपरिणतपुद्गलस्कन्धानां परमाणुपरिच्छेदेनावधारणं वेति चतुर्विधो बन्ध इति भावः ॥

अथ मोक्षं विभजते—

## मोक्षस्तु सत्पदप्ररूपणाद्रव्यप्रमाणक्षेत्रस्पर्शनाकालान्तरभाग-भावाल्पबहुत्वैर्नवविधः ॥

मोक्षस्त्विति । कृत्स्नकर्मक्षयो मोक्षः, तत्र वस्तुतो यद्यपि तारतम्याभावेन तस्य प्रभेदा न सम्भवन्त्येव, तथापि तद्वता सिद्धानामाश्रयेण व्याख्याप्रकारैस्सत्पदप्ररूपणादिभिर्भेदोऽवसेयः, मोक्षस्यात्मपरिणामतया परिणामपरिणामिनोः कथञ्चिदभेदादिति भावः ॥

इति तपोगच्छनभोमणिश्रीमद्विजयानन्दसूरीश्वरपट्टधरश्रीमद्विजयकमलसूरीश्वरचरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजयलब्धिसूरिणा विनिर्मितस्य तत्त्वन्यायविभाकरस्य स्वोपज्ञायां न्यायप्रकाशव्याख्यायां तत्त्वोद्देशाख्यः प्रथमकिरणः समाप्तः ॥

## अथ द्वितीयकिरणः ॥

ननु सर्वमिदं तदोपपद्यते जीवो नाम कश्चन पदार्थः प्रमाणपदं यद्यवतरेत्, यस्य मुक्तये तत्त्वोपदेशो भवेत्, तत्रैव च मानं न पश्यामः, लोके हि यदत्यन्तमप्रत्यक्षं तन्नास्त्येव यथा गगनारविन्दं, यत्त्वस्ति तत्प्रत्यक्षेण गृह्यत एव यथा घटादिकं, न चायाति जीवः कदाचन

---

१. क्रिया–अस्वतन्त्रीकरणरूपा, क्रियावान् जनकतया दर्शनावरणादि । आश्रयतया चात्मा । यदि प्रकृतिशब्दस्य स्वभाववाचित्वं न ज्ञानावरणादिवाचित्वमित्युच्यते तदा स्वाद्यार्थेति ॥

प्रत्यक्षगोचरतां, ततो नास्त्यात्मा, न चासावनुमानगम्यः, लिङ्गलिङ्गिनोः कश्चिदध्यक्षतोऽविनाभावग्रहेणैवानुमानप्रवृत्तेः, न च लिङ्गिनाऽऽत्मना कस्यापि सिद्धोऽस्ति प्रत्यक्षेणाविनाभावो लिङ्गस्य, तथा सति जीवस्य प्रत्यक्षत एव सिद्धावनुमाननैरर्थक्यं स्यात् । न चादित्यो गतिमान् देशान्तरप्राप्तेर्देवदत्तवदिति सामान्यतोदृष्टानुमानेनादृष्टाया अप्यादित्यस्य गतेरनुमानवदत्रापि जीवस्सिद्ध्यतीति वाच्यम्, दृष्टान्ते देवदत्तादौ सामान्यतो देशान्तरप्राप्तेर्गतिपूर्वकत्वमध्यक्षतोऽवधार्यैव सूर्ये तत्साधनात्, न चात्र तथा क्वचिदपि दृष्टान्ते जीवसत्ताऽविनाभूतं साधनं किमपि प्रत्यक्षेण लक्ष्यते । न चाप्यागमगम्यस्सः, वस्तुतस्तस्यानुमानादभिन्नत्वात्, न च कस्यचित्प्रत्यक्षो जीवो यस्य वचनमागमः स्यात्प्रमाणञ्च भवेत् । तथा च सर्वमिदं निरूपणमरण्यरुदितनिभमित्याशङ्कायां जीवासाधारणधर्मात्मकलक्षणप्रदर्शनद्वाराऽऽत्मानं साधयति—

## तत्र चेतनालक्षणो जीवः ।

तत्रेति । नवसु तत्त्वेषु मध्य इत्यर्थः[1] । चेतना लक्षणमसाधारणो धर्मस्स्वरूपं वा यस्य सः, चेतनया लक्ष्यतेऽसाविति वा चेतनालक्षणः, अत्र जीव इति लक्ष्यं, चेतनालक्षण इति लक्षणम् । चेतना—बुद्धिः—सवेदनं, सैषा जीवस्य पर्यायः, तदेव सामान्यं लक्षणम्, जीवो लक्ष्यः । सर्वजीववर्त्तिनी चेयं चेतना, सूक्ष्मनिगोदापर्याप्तेष्वपि सर्वजघन्या साऽस्त्येव, त्रैलोक्यवर्तिनां सर्वपुद्गलाना कर्मतया परिणतानामपि सर्वात्मना चेतनां समावरीतुं सामर्थ्याभावादतो न काऽप्यव्याप्तिः । न वाऽसम्भवोऽचेतन आत्मेति विरुद्धत्वाद्श्रावणश्शब्द इतिवत् । एवञ्च चेतनैवात्मनि प्रमाणं, सुखदुःखादयो हि यथाऽऽत्मसंवेदनसिद्धास्तथा संशयादिविज्ञानमपि स्वसंवेदनसिद्धमेव, यद्धि प्रत्यक्षं न तत्प्रमाणान्तरेण साध्यं भवति, न च सर्वे प्रत्यया निरालम्बनाः प्रत्ययत्वात् स्वप्नप्रत्ययवदिति शून्यवादिनमनुमातारं प्रति प्रत्यक्षसिद्धमपि सग्रामनगरं विश्वं साध्यत एवेति वाच्यम्, तत्र बाधकप्रमाणस्यैव निराकरणात्, अत्र त्वात्मग्राहके प्रत्यक्षे बाधकप्रमाणाभावात् । ज्ञातवानहं जानेऽहं ज्ञास्याम्यहमित्यादित्रैकालिककार्यव्यपदेशविषयाहम्प्रत्ययत आत्मनः प्रत्यक्षसिद्धत्वाच्च । न चाहम्प्रत्यय आनुमानिकोऽलैङ्गिकत्वात् । नाप्यागमादिप्रमाणसम्भवस्तदनभिज्ञानामपि तस्योत्पादात् । न चास्य देह एव विषयो मृतदेहेऽपि तदुत्पत्तिप्रसङ्गात् । नापि निराश्रयः अहमित्यादिज्ञानस्य गुणत्वेन गुणिनमन्तरेणासम्भवात्, न देहोऽत्र गुणी, मूर्त्तत्वाज्जडत्वाच्च ज्ञानस्य त्वमूर्त्तत्वाद् बोधरूपत्वाच्च । न चाननुरूपाणां गुणगुणिभावो युज्यते, आकाशरूपादीनामपि तद्भावप्रसङ्गात् । तस्माददः-

---

१ कथञ्चिद्भेदापेक्षयेदं, स्वरूपमिति तु कथञ्चिदभेदापेक्षया । तथा च लक्षणशब्दो भेदाभेदयोरुभयोरपि भाव । तथा च जीवचैतन्ययोः चैतन्यमपि जीव एव पर्यायेणाविनाभूतत्वादिति बोध्यम् ॥

ग्प्रत्ययग्राह्यत्वादात्मा प्रत्यक्ष एव । तदपलापेऽश्रावणः शब्द इतिवत्प्रत्यक्षविरुद्ध. पक्षाभासः स्यात् । यथा च रूपादिगुणप्रत्यक्षाद् गुणी घट प्रत्यक्षः तथा सशयस्मृतिजिज्ञासादिज्ञानविशेषाणा स्वसवेदनप्रत्यक्षसिद्धत्वाद्गुणी जीवोऽपि प्रत्यक्षसिद्ध एव । तथेन्द्रियमपि न विज्ञातृ, तदुपरमेऽपि तदुपलब्धार्थानुस्मरणात् । अतः प्रत्यक्षोऽयमात्मा स्वदेहे । परदेहे पुनरिष्टानिष्टप्रवृत्तिनिवृत्तिदर्शनात्मात्मकत्वमनुमेयम् । परशरीर सात्मकं, इष्टानिष्टप्रवृत्तिनिवृत्तिदर्शनात्स्वशरीरवत् । तथाऽस्ति देहस्य विधाता, आदिमत्प्रतिनियताकारत्वात् घटवद्, यत्पुनरकर्तृकं तदादिमत्प्रतिनियताकारमपि न भवति यथाऽभ्र । मेर्वादौ व्यभिचारवारणायादिमदिति विशेषणम् । तथा इन्द्रियं साधिष्ठातृक, करणत्वाद्दण्डादिवत्, देहादयस्सभोक्तृका भोग्यत्वात् वस्त्रादिवदित्यनुमानानि साधकानि बोध्यानि । न च विधात्रादिसाधकहेतूना साध्यविरुद्धसाधकत्व, घटादिकर्तृणा मूर्त्तिमत्त्वात्सघातरूपत्वादनित्यस्वभावत्वाच्च, सिषाधयिषितश्चैतद्विपरीतो जीव इति वाच्यम्, ससारिणो जीवस्यैव साधयितुमिष्टत्वेनादोषत्वात्, स हि अष्टविधकर्मपुद्गलसघातोपगूढत्वात्सशरीरत्वाच्च कथचिन्मूर्त्तत्वादिधर्मैर्युक्त एवेति दिक् ॥ नन्वस्तु जीवः प्रत्यक्षसिद्धस्तथापि चेतनालक्षणो जीव इति लक्षण न सम्भवति, तथा सति हि चेतनास्वरूपं जीव इत्युक्तं स्यात् तच्च न सभवति चेतनाया गुणत्वाज्जीवस्य गुणित्वाच्च स्वरूपभेदात् तयोर्भेदे तु जीवस्यैव चेतना गुणो न घटादेरित्यवधारण न स्यात्, तयोश्चाभेदे य एव जीवस्सैव चेतना, यैव चेतना स एव जीव इति भेदनिबन्धनलक्ष्यलक्षणभावो न भवेदिति चेन्न तयोः कथञ्चिद्भिन्नाभिन्नत्वेनोभयोपपत्तेः। ननु तथापि कथञ्चिद्भेदेन चैतन्याश्रयो जीवो वर्त्तत इति न सङ्गच्छते सर्वभावाना क्षणिकत्वेन नित्यस्य चैतन्याश्रयस्यासिद्धेः । यद्धि सत् तत्क्षणिकं यथा घट सश्च विवादाध्यासित इति, अत्र सत्त्वमर्थक्रियाकारित्वं नहि सश्चार्थो न चार्थक्रियाकारीति सभवति, तथा च ज्ञानान्येव सन्तन्यमानानि क्षणिकानि सन्ति न ततोऽन्यो नित्यस्तदाश्रयो जीवो नाम कश्चिदिति चेन्न घटादीना कालान्तरस्थायित्वेन क्षणिकत्वस्यासिद्ध्या सत्त्वस्य क्षणिकत्वेन व्याप्त्यसिद्धेः, न च घटादौ सामर्थ्यासामर्थ्यलक्षणविरुद्धधर्माध्यासान्न कालान्तरावस्थायित्वं, अन्यथा कालान्तरभाविजलाहरणादिकमिदानीमपि कुर्यान्न करोत्यतोऽसमर्थत्वेन पूर्वोत्तरकालयोर्नैको घट इति क्षणिकत्व सिद्धमेवेति वाच्यम्, सामर्थ्यासामर्थ्यलक्षणविरुद्धधर्माध्यासासिद्धेः । इदानीं जलाहरणं कुर्वतो घटस्य कालान्तरीयजलाहरण प्रत्यपि सामर्थ्यात्। न च सति सामर्थ्ये कार्यमवश्य करणीयमित्यस्ति नियमो सहकारिलाभालाभप्रयुक्तत्वात् करणाकरणयोः । तस्मान्न क्षणिकत्वव्याप्त सत्त्व, किञ्च नित्यात्मानभ्युपगमे क्षणिकत्वेन

---

१ आत्मा न प्रत्यक्ष इत्यनेनेति भाव ॥ २ जीवोऽस्ति तद्गुणप्रत्यक्षत्वाद्घटवदिति प्रयोगोऽपि बोध्य ॥ ३ अत एव च विरुद्धत्वम् । तत्र हेतुमाह घटादीति ॥

ज्ञानानां स्मरणानुपपत्तिः, अन्यदृष्टस्यान्येनास्मरणात्, न च नानात्वेऽपि ज्ञानानां कार्यकारणभावेन स्मरणं युज्यत इति वाच्यम्, उपाध्यायानुभूते शिष्यस्य स्मरणप्रसङ्गात्, तज्ज्ञानानां कार्यकारणभावाविशेषात्, न च शरीरभेदाग्रहोऽपि नियामक इति वाच्यम्, एतज्जन्मनि जातिस्मरणेन प्राग्जन्मानुभूतानां स्मरणासंभवात्, प्राग्भवीयस्वज्ञानानां सर्वज्ञेनाप्रतिसंधानापत्तेश्च । [१]कार्यकारणभावमात्रस्य स्मृतिहेतुत्वासंभवाच्च । [२]कृतहान्यकृताभ्यागमप्रसङ्गाच्च, येन हि ज्ञानेन शुभाशुभं कर्माचरितं न तेन फलमुपभुज्यते येन तु न कृतं तेनोपभुज्यते चेति । शुभाशुभकर्मप्रवृत्त्यप्रवृत्तिप्रसङ्गेन परलोकाद्यनुष्ठानासंभवाच्च, न चैकज्ञानस्य कर्तृत्वभोक्तृत्वाभावेऽपि तत्सन्तानस्य स्थिरैकरूपस्य ते भविष्यत एवेति वाच्यम्, [३]सन्तानस्य विज्ञानानतिरेकात्, व्यतिरिक्तत्वेऽप्यचेतनत्वात्, व्यतिरिक्तचेतनत्वे तु जीवस्यैव नामान्तरेणाभ्युपगमप्रसङ्गात्, न च वासनासहकृतं ज्ञानमेव कर्तृ स्मर्तृ भोक्तृ च भवतीति किं तदतिरिक्तसुखदुःखफलभोक्तृकल्पनयेति वाच्यम्, वासनाया अक्षणिकाया ज्ञानातिरिक्ताया त्वयानभ्युपगमात्, ज्ञानात् सुखदुःखयोरपि कारणस्वरूपफलभेदेनाभेदासम्भवाच्च । न खलु[४]वनितारूपादिविज्ञानोत्पत्तौ या सामग्री वनितादिरूपा सैव सुखदुःखयोरपि, किन्तु रागादिवासनाविशेषोऽपीति कारणभेदः, स्वपरप्रकाशकं ज्ञानं, अनुकूलप्रतिकूलवेदनीये च सुखदुःखे इति स्वरूपभेदः, प्रवृत्तिनिवृत्ती च ज्ञानस्य फलं, तृष्णावैमुख्यादिजननं सुखदुःखयोरिति फलभेदः । तस्माज्ज्ञानभिन्नस्सुखदुःखादिफलभोक्ताऽतिरिक्त आत्मा सिद्ध इति ॥ ननु बुद्धिर्नात्मस्वरूपभूता तद्विरुद्धधर्माधिकरणत्वाद् घटपटादिवत्, न चासिद्धो हेतुर्बुद्धेरुत्पादविनाशधर्मकत्वात्, आत्मनश्चानुत्पादविनाशधर्मकत्वादिति चेन्न, विरुद्धधर्माधिकरणत्वेऽपि सर्वथा भेदासिद्धेः मेचकज्ञानवत्, तद्धि एकं, युगपदनेकपदार्थग्राहिशक्त्यात्मकं चातो विरुद्धधर्माध्यासः । न चानेकत्वधर्माधारा शक्तिरन्या, एकत्वधर्माधारञ्च तज्ज्ञानमन्यदिति वाच्यम्, अनेका शक्तिस्तस्येति व्यपदेशासम्भवात्, ततो भेदादर्थान्तरवत् । न च सम्बन्धाद्भवतीति वक्तुं शक्यं, अनेकया शक्त्या सम्बध्यमानस्यानेकरूपत्वापत्तेः । न चैकयैव शक्त्याऽनेकमर्थं गृह्णातीति वक्तुं शक्यं सर्वार्थग्रहणप्रसङ्गात्, तस्मात्तयोः कथञ्चिद्भिन्नाभिन्नत्वेन चेतनास्वरूपत्वं युक्तम्, सा च प्रतिजीवं तारतम्यदर्शनाच्चेतनात्वेनैकापि पर्यायाद्भिन्ना तत्तश्चात्मापि द्रव्यत एकोऽपि पर्यायभेदाद् भिन्न इति विभावनीयम् । तच्च चैतन्यमेकरूपमपि कर्ममलदिग्धमनेकावस्थान्तरावस्कन्दि भवति, एतेन यद्यात्मा ज्ञानरूपस्तदा सर्वदा विषयदर्शी भवेत्, जानानं हि जीवं ज्ञानस्वरूपमिति

---

१. एकसन्तानिकत्वेन स्मरण सम्भवतीत्याशङ्कायान्त्वाह कार्येति, एकसन्तानिकस्याभ्यापि हेतुत्वादिति भाव । २. अस्तूभयं हेतुरित्याशंकायां दोषान्तरमाह कृतेति, इष्टानिष्टौ बाधकमाह शुभेति ॥ ३. तथा च न स्थिरैकरूपत्वमत एव न व्यतिरिक्तत्वमिति भाव ॥ ४ उक्तेन वक्ष्यमाणेन च कारणेनेत्यर्थ ।

वक्तुं शक्यमन्यथा ज्ञानस्वरूपो न जानीते चेति विरुद्ध वचन स्यात्, तथा विस्मृत्यनवबोधसंशया अपि न भवेयुः स्याचात्मा सर्वदाऽशेषविशेषविज्ञानात्मक इति शङ्कापि परास्ता, प्रदेशाष्टकं विहाय चलत्वेनानवरतमर्थान्तरेषु परिणमनात्, एकार्थेऽनवस्थितोद्भ्रान्तमनस्कत्वेन चिरमुपयोगाभावात्। उपयोगस्थितिकालस्य स्वभावादेवोत्कर्षेणान्तर्मुहूर्त्तपरिमाणत्वात्। आवरणस्वभावज्ञानावरणकर्मसद्भावात्कदाचिद्विज्ञानस्याव्यक्तबोधसशयादीनाञ्चोपपत्तेश्चेति ॥

नन्वस्तु चेतनालक्षणो जीवस्स त्वेक एव निखिलजगच्छरीराण्यभिव्याप्य शश्वद्वर्तते, नतु प्रतिशरीरं पृथगात्मास्तीत्याशकायामाह—

## स द्विविधः।

स इति। अयम्भावो यदि जीवो निखिलशरीराधिष्ठायकतयैको भवेत् तर्हि समस्तशरीरभाविना सुखदुःखादीनामेकस्मिन्नेव शरीरेऽनुभूयेत, अन्यथा निखिलशरीराधिष्ठायकत्वमेव तस्य न भवेत्, दृश्यते हि बाल्यकौमाराद्यवस्थाभेदेऽपि जीवस्यैकत्वेन बाल्याद्यनुभूतस्य स्थविरावस्थाया स्मरणं, न च तथैकेनानुभूतं सर्वैः स्मर्यते तस्मात्सर्वशरीरेषु भिन्न एवात्मा, एवमात्मन एकत्वे सुखदुःखनिमित्तधर्माधर्मयोः सर्वसाधारण्येन कश्चिदेव सुखी न सर्वे, कश्चिदेव दु खी न सर्वे इति प्रत्यक्षसिद्धः प्रतिनियमो न भवेत्, न चैकस्यैवाञ्चलस्य प्रसारितस्य महतो वाय्वादिनिमित्तात् क्वचिदेव भागे कम्पनमनुभूयते तथा तत्तच्छरीरावच्छेदेनैव सुखादिकं भवति न सर्वत्रेति वाच्यम्। परम्परया तत्रापि सूक्ष्मकम्पस्यानुभवात्, योऽहं चैत्रोऽभूवं सुखी, सोऽहं मैत्रो दुःखी सम्प्रति जात इति प्रत्यभिज्ञापत्तेश्च। न च नात्म्यैक्येऽपि तत्तच्छरीरेष्वनुभूतसुखादीना स्मरणापत्तिर्दोष, पूर्वपूर्वशरीरानुभूतानामात्मैक्येऽप्यस्मरणाश्रिति वाच्यम्, पूर्वपूर्वानुभवजनितसस्कारस्य मरणगर्भवासादितीव्रतरदुःखैरभिभूतत्वात्, जातिस्मरणेन केनापि स्मरणाच्च, नहि चैत्रज्ञानादिकं कदापि कथमपि स्मरति मैत्र स्तस्मादात्मा नैकोऽपि तु प्रतिशरीर भिन्नः परन्तु तेषां सुज्ञानाय प्रथमं तस्य द्वैविध्यं भाव्यमिति भाव.।

येन प्रकारेण भेद स्तमाह—

## संसार्यसंसारिभेदात्।

संसारीति। ससारोऽष्टविधं कर्म, तदुपष्टम्भेनैवात्मनस्ससरणाद् यत्वन्मोहो नारकाद्यवस्था वा समारस्तद्योगात्ससारी, न ससारी—अससारी निर्धूताशेषकर्मेत्यर्थः। तत्र ससारिणा

1 तथा च प्रयोग नानारूपा भुवि जीवा परस्पर भेदभाज, लक्षणादिभेदात्-यथा कुम्भादय, एवं। हि गुणद्वु खबन्धमोक्षादयो नोपपद्यन्त इति ॥

विकल्पबाहुल्यात्, असंसारिणां संसारिपूर्वकत्वात् स्वसंवेद्यत्वाच्चादौ ग्रहणं, संसारिणो हि स्वसंवेद्याः, गत्यादिपरिणामानामनुभूतत्वात्, असंसारिणस्त्वत्यन्तपरोक्षास्तदनुभवस्याप्राप्तत्वादिति ।

कथं संसारिणां बहवो विकल्पा इत्याशङ्कायां संसारिजीवानां प्रभेदप्रदर्शनमुखेन तान् दिङ्मात्रमुपदर्शयति—

## अत्र चेतनत्वेन जीव एकविधः ।

अत्रेति । जीवप्रकारनिरूपणप्रसङ्ग इत्यर्थः । जीव इति संसारिजीव इत्यर्थः, असंसार्युपेक्षयाऽयं विभागारम्भः, यद्वा जीवमात्रस्य द्विधैव विभागः सम्भवतीति ग्रन्थोऽयं पूर्वेणान्वितः । तथा चात्र यश्चेतनत्वेनैकविधो जीवः स द्विविध इत्यर्थः । यद्यपि ईदृशाभिप्रायोऽत्रेतिवाक्यस्य जीवलक्षणानन्तरं योजने सुस्पष्टो भवति, तथापि जीवनानात्वसाधनार्थमेवमुपन्यासः कृतः । तस्मिन्नेव प्रकारभेदनिरूपणसम्भवादिति बोध्यम् ।

तदन्तर्गतः संसारी जीवस्तु संसारित्वेनैकोऽपि त्रसस्थावरभेदेन द्विविध इत्यभिप्रायेणाह—

## त्रसस्थावरभेदेन द्विविधः । पुंस्त्रीनपुंसकभेदेन त्रिविधः ।

त्रसेति । त्रसनामकर्मोदयाद्वृत्तिविशेषास्त्रसा द्वीन्द्रियादयो नतूद्वेजनक्रियाविशिष्टाः गर्भाण्डजमूर्छितसुषुप्तादीनां त्रसत्वाभावप्रसङ्गात्, स्थावरनामकर्मोदयजनितविशेषाः स्थावराः पृथिवीजलतेजोवायुवनस्पतयः। न तु स्थानशीला वायुतेजोऽम्भसामस्थावरत्वप्रसङ्गात्, अल्पाच्तरत्वात् निशेषोपयोगसम्भवेनाभ्यर्हितत्वात्पष्ठलिङ्गत्वाच्चादौ त्रसग्रहणम् । द्वैविध्यप्रदर्शनञ्चेदमुपलक्षणं तेन समनस्कामनस्कभेदेनापि द्वैविध्यं बोध्यम्, मनःपर्याप्तिलक्षणकरणनिर्वृत्तिमन्तस्समनस्काः द्रव्यभावमनोयुता इति यावत् । तद्रहिता अमनस्काः केवलं भावमनोयुता इति यावत् । प्रकारान्तरेण संसारिणः त्रिधा विभजते पुमिति । तत्तद्वेदोदया-

१. एवम्भूतनये हि दशविधप्राणधारी जीवोऽभिमतस्स च गणार्थेन, सिद्धस्तु न तथाविध, अमुमान् प्राणीत्यादिव्यपदेशाभावादिति भाव । केवल भावप्राणवत्त्वात्तेऽपि जीवा इत्याशयेनाह यद्वेति ॥ २ उपलक्षकोऽयं विभाग, तेनेन्द्रियानिन्द्रियसकायाकायसयोग्ययोगिसवेदावेदसकषायाकषायसलेश्यालेश्यज्ञान्यज्ञानिसाकारानाकारभेदेन विभागसम्भवेऽपि न क्षतिरिति ॥ ३ एवञ्च प्रथम द्विभेदमुक्त्वा नानात्व प्रसाध्य किं सर्वथा जीवा नाना एवेत्याशङ्कानिवारणाय वस्तूनामेकानेकस्वभावत्वेन तत्प्रदर्शनाय चात्रेतिग्रन्थोक्ति । जीवत्वादिस्वभावे नैकोऽपि संसारित्वादितत्तद्धर्मस्वभावत्वेन तथातथाव्यपदिश्यते, एकान्तैकस्वभावतायां तेषां वैचित्र्यायोगेन तथातथाभिधाने प्राप्तिर्न स्यादेवेति भाव ॥

पादितपुंस्त्वस्त्रीत्वनपुंसकत्वपरिणामवन्तः, लिङ्गं द्विविधं द्रव्यभावभेदात्, यद्द्रव्यलिङ्गं तदिह नाधिकृतं द्रव्यपरिणामत्वात्, आत्मपरिणामप्रकरणाचेह भावलिङ्गमेव ग्राह्यम्, तच्चान्योऽन्याभिलापलक्षणं बोध्यम् । यद्वा शरीरशरीरिणोः कथञ्चिदभेदेन द्रव्यलिङ्गमादायापि भेदोऽवसेयः ॥

चातुर्विध्यमादर्शयति—

**नारकतिर्यङ्मनुष्यदेवभेदेन चतुर्विधः। इन्द्रियभेदेन पञ्चविधः।**

नारकेति । तत्तद्गतिनामकर्मोदयप्रयुक्ततत्तद्भावपरिणाममादायाऽऽत्मनोऽयं विभागः । पञ्चविधत्वं प्रकटयति—इन्द्रियभेदेनेति । जातिनामकर्मोदयापादितैकेन्द्रियादिजातिपरिणामभाक्त्वात्पञ्चविधत्वं जीवानामिति भावः । मनसोऽनिन्द्रियत्वात् बाह्यपञ्चेन्द्रियविधुरस्य समनस्को जीवस्याप्रसिद्धेश्च न मन आदाय षड्विधत्वशङ्का कार्येति ॥

अथ षोढा विभजते—

**पृथिव्यप्तेजोवायुवनस्पतित्रसभेदेन षड्विध इत्येवं विस्तरतस्त्रिषष्ठ्यधिकपञ्चशतविधोऽपि भवतीति विज्ञेयः।**

पृथिवीति। स्थावरान्तर्वर्तिपृथिव्यप्तेजोवायुवनस्पतित्रसनामकर्मोदयजनितपरिणामवन्त एते षड्भेदा वेदितव्याः, तत्र सत्यां पृथिव्यां जलादिकं सुखेन घटादिभिर्ग्रहीतुं शक्यमिति सुखग्रहणहेतुत्वात्, विमानभवनप्रस्तारादिभावपरिणामेन स्थूलमूर्त्तित्वात्प्रतिनियतजलाद्युपकारनिर्वर्त्तकत्वाच्चादौ पृथिव्याः, विरुद्धभूततेजोव्ययधायकतयाऽऽधेयतया च जलस्य, पृथिव्यप्परिपाकहेतुत्वात्तेजसः, तदुपकारकत्वाद्वायोः, पृथिव्यादिनिमित्तकत्वादनन्तगुणत्वाच्च वनस्पतेः, इन्द्रियाधिक्यादुपयोगबाहुल्याच्च त्रसस्य ग्रहणम्। इत्थमेव बहुधा विभागस्सम्भवतीत्याहेत्येवमिति, इत्येवं क्रमेणेत्यर्थः। ननु विभागाना परावधिरस्ति नवेत्याशङ्कायामवधिमाह—विस्तरत इति, सप्तविधनारकाणां चतुर्विंशतिविधतिरश्चामेकोत्तरशतविधगर्भजमनुष्याणां नवाधिकनवतिविधदेवानां प्रत्येकं पर्याप्तापर्याप्तभेदभाजामपर्याप्तैकोत्तरशतविधसम्मूर्च्छिममनुष्याणाञ्च मेलनया त्रिषष्ठ्यधिकपञ्चशतविधोऽपीत्यर्थः, विज्ञेय इति आगमादित्यादिः ॥

अथ प्रथमोक्ते द्वैविध्ये संसारिलक्षणमाह—

**सकर्मा संसारी।**

सकर्मेति । कर्मणा सहितः सकर्मा, कर्मभावयोग्यैः पुद्गलैरविभागेनोपश्लिष्ट इत्यर्थः ।

कर्मोपश्लिष्टत्वं संसारिणां लक्षणं, तच्चैकेन्द्रियादारभ्य आ अयोगिकेवलिनस्सर्वत्रास्तीति न कुत्राप्यव्याप्तिः ॥

तस्य परिमाणमाह—

## देहमात्रपरिमाणः।

देहमात्रेति । देह एव देहमात्रं, तत्परिमाणं यस्य सो देहमात्रपरिमाणः। यस्य जीवस्य यो देहस्स यावत्परिमाणकस्तावदेव जीवस्यापि परिमाणमित्यर्थः । एवञ्च तत्तच्छरीराकारपरिमाणास्तत्तत्संसारिजीवा न सर्वेषामेकं परिमाणं नियतमिति भावः। एतेन विभुपरिमाणत्वमात्मनः प्रतिक्षिप्तं तत्तद्देहावच्छेदेनैव सुखदुःखानुभवात्, सर्वगतत्वेऽदृष्टवत आत्मनस्सर्वत्र सत्त्वेन सर्वत्र तदुपभोगप्रसङ्गात्, एवञ्च यो यद्व्यापित्वेनोपलभ्यमानगुणस्स तत्तुल्यमान इति व्याप्त्या शरीरव्यापित्वमेव, तथा चानुमानं, आत्मा देहपरिमाणः, तद्व्यापित्वेनोपलभ्यमानगुणत्वादिति । न च मूलव्यापित्वेनोपलभ्यमानकपिसंयोगवतो वृक्षस्य मूलसमानमानत्वाभावेन व्यभिचार इति वाच्यम्, कपिसंयोगस्य मूल एव वृत्तेः । न च मूले वृक्षे कपिसंयोग इति प्रतीत्या वृक्षेऽपि तस्य सत्त्वमिति वाच्यम्, स्वाश्रयाश्रितत्वसम्बन्धेनैव वृक्षे वृत्तित्वाभ्युपगमात्, संयोगस्य क्रमभावित्वेन सहभाविपर्यायस्वरूपगुणत्वासम्भवाच्च, न चात्मा विभुर्नित्यमहत्त्वादाकाशवदिति विभुत्वं सिद्ध्यतीति वाच्यम्, अप्रयोजकत्वात्, न च यदपकृष्टं तज्जन्यमिति व्याप्त्याऽऽत्ममहत्परिमाणं यद्यपकृष्टं स्यात्तर्हि जन्यं स्यादित्युपूलस्तर्कोऽस्त्येवेति वाच्यम्, परमाणुपरिमाणस्याप्यपकृष्टत्वान्नित्यत्वाच्च व्यभिचारेण व्याप्त्यसिद्धेः । न च प्रतिशरीरं परिमाणभेदे परिमाणनाशेनात्मनो नाशः स्यादिति वाच्यमिष्टापत्तेर्विशिष्टरूपेण नाशोत्पादयोरभ्युपगमात्, शुद्धस्वरूपेणैव तस्य नित्यत्वात् । न चापकृष्टमहत्त्वेन सावयवत्त्वं तस्माच्च कार्यत्वमात्मनः प्रसज्येतेति वाच्यम्, त्रिकालवर्त्तिन्यात्मनि कार्यत्वस्यासिद्धेः, सर्वथा प्रागसतस्सत्त्वरूपकार्यत्वस्य क्वचिदप्यप्रसिद्धत्वाच्च । न चाकाशे व्यभिचारोऽवगाहनागुणस्य सर्वाधारताया वा लोकावच्छेदेन सत्त्वेऽपि तत्तुल्यमानत्वाभावादिति वाच्यं तत्राप्यवगाहनागुणस्य सत्त्वादवगाह्यपदार्थाभावादेवावगाहनानुपलम्भात्, न च सर्वगतत्वेऽप्यात्मनः स्वादृष्टनिमित्तकदेहाभावादेवान्यत्र न सुखदुःखोपभोग इति वाच्यम् ,अदृष्टस्य स्वकीयत्वासिद्धेः, न च स्वात्मनि तस्य समवायात्स्वकीयत्वमिति वाच्यम्, समवायस्यैकत्वेन सर्वगतत्वेन च परकीयादृष्टानामपि स्वात्मनि समवायात्, समवाये मानाभावाच्चेत्यधिकमन्यग्रन्थेभ्योऽवसेयम् ॥

अथ संसारिणां बहुधा प्रभेदानामुक्तत्वेऽपि माध्यमिकं बोधविशेषागमयञ्च प्रभेदमधुना वक्ति—

**स च सूक्ष्मैकेन्द्रियद्वित्रिचतुरिन्द्रियासंज्ञिसंज्ञिपञ्चेन्द्रियभेदेन सप्तविधोऽपि प्रत्येकं पर्याप्तापर्याप्तभेदतश्चतुर्दशविधः ।**

स चेति । सूक्ष्माश्चैकेन्द्रियाश्च सूक्ष्मैकेन्द्रियाः, द्वे च त्रीणि च चत्वारि च द्वित्रिचत्वारि तानि इन्द्रियाणि येषां ते द्वित्रिचतुरिन्द्रियाः, असंज्ञिनश्च संज्ञिनश्चासंज्ञिसंज्ञिनस्ते च ते पञ्चेन्द्रियाश्चासंज्ञिसंज्ञिपञ्चेन्द्रियाः ततस्सर्वेषां द्वन्द्वः, स एव भेदो विशेषस्तेन जीवत्वेनैकविधोऽपि जीवस्सप्तविधो भवति, प्रकारप्रकारिणोः कथञ्चिद्भेदाभेदत्वादेकवचनं, एवंभूतोऽपि प्रत्येकं पुनः पर्याप्तापर्याप्तभेदमादाय चतुर्दशविधो भवतीति भावः, यद्यपि द्विविधा एकेन्द्रियाः, सूक्ष्मा बादराश्चेति तथाप्यत्र सूक्ष्माणामेकेन्द्रियत्वाव्यभिचारेण सूक्ष्मपदेन शास्त्रप्रसिद्धत्वान्नामैकदेशग्रहणेऽपि नामग्रहणसंभवाच्च सूक्ष्मैकेन्द्रियाणां ग्रहणम्, बादराणान्त्वेकेन्द्रियत्वव्यभिचारित्वं द्वीन्द्रियाणामपि बादरत्वात्, ततो बादरमात्रग्रहणे बादरैकेन्द्रियालाभात् लघुनिर्देशसम्भवे लाघवार्थिना गौरवेण निर्देशकरणानौचित्याच्च बादरैकेन्द्रियेतिगुरुभूतनिर्देशमपहायैकेन्द्रियेत्येवोक्तम् । सूक्ष्मबादरद्वित्रिचतुरिन्द्रियेत्यादिरूपेणोक्तौ तु सूक्ष्ममिन्द्रियं येषां बादरमिन्द्रियं येषामित्येवार्थो लभ्येत द्वे इन्द्रिये येषामित्यादिवत् समासानुरोधान्न चैतदिष्टं तथापि बादरैकेन्द्रियालाभादतस्तथानिर्देशः कृत इति ध्येयम् ॥

ननु सप्तविधानां पर्याप्तापर्याप्तभेदेन चतुर्दशविधत्वमुच्यते तत्र पर्याप्तशब्दार्थो वाच्योऽन्यथा च न सुकरं भेदज्ञानमित्याशंकायां पर्याप्तशब्दप्रवृत्तिनिमित्तमादर्शयति—

**आत्मनः पौद्गलिकक्रियाविशेषपरिसमाप्तिः पर्याप्तिः ।**

आत्मन इति । पौद्गलिको यः क्रियाविशेषस्तस्य परिसमाप्तिर्यया साऽऽत्मनिष्ठा पर्याप्तिशब्दवाच्या शक्तिः-करणविशेषः । पर्यापनं समापनं पर्याप्तिरिति नार्थः किन्तु पर्याप्यते यत इति व्युत्पत्त्या समाप्तिसाधनं ग्राह्यम् । एवं यस्याः शक्तेस्सत्त्वे जीव आहारादिग्रहणाय समर्थो भवति सा, सा च शक्तिर्यैः पुद्गलोपचयैर्निर्वर्त्यते ते पुद्गलोपचया अपि जीवेन गृहीतास्तच्छक्त्युत्पत्तिजननपरिणामाभिमुखाः पर्याप्तिशब्देनोच्यन्ते । एतद्विपरीता-अशक्तिः, तन्निर्वर्त्तकपुद्गलासम्बन्धो वाऽपर्याप्तिः, न च समाप्तिः पर्याप्तिशब्दवाच्या, क्वचिदपि ग्रन्थेऽनुक्तत्वात्, न च क्रियापरिसमाप्तिः पर्याप्तिरिति तत्त्वार्थभाष्ये श्रूयत इति वाच्यम् । अभिप्रायापरिज्ञानात्, क्रियायाः परिसमाप्तिर्यत इति व्युत्पत्तेः । अत एव भाष्यटीकायां "पर्याप्तिः पुद्गलरूपाऽऽत्मनः कर्तुः करणविशेषः । येन करणविशेषेणाऽऽहारादिग्रहणसामर्थ्यमात्मनो निष्पद्यते, तच्च करणं यैः पुद्गलैर्निर्वर्त्यते ते पुद्गला आत्मनाऽऽत्तास्तथाविधपरिणतिभाजः पर्याप्तिशब्दे-

नोच्यन्त" इति दृश्यते। नचैवं न हि भाष्यकाराभिप्राय इति वाच्यम्, आसां युगपदारब्धानामपि क्रमेण समाप्तिरुत्तरोत्तरसूक्ष्मतरत्वादि' ति स्वयमेवोक्तत्वात्, न ह्यासामिति-पदेन समाप्तिरूपा पर्याप्तिर्विवक्षिता समाप्तेरारम्भासम्भवात्, क्रमेण समाप्तेरसंभवाच्च। अत एव सामर्थ्यवाचिपर्याप्तिशब्दस्य कथं नामकर्मरूपत्वमित्याशङ्कायामुक्तं 'पर्याप्तिनिर्वर्त्तकं पर्याप्तिनाम, अपर्याप्तिनिर्वर्तकमपर्याप्तिनामेति शक्तिप्रयोजकपुद्गलोपचयस्य नामकर्मत्वमाविष्कृतमिति सूक्ष्मधिया विचारणीयम्। तथा चात्मसम्बन्धी पुद्गलोपचयजन्यक्रियाविशेषपूर्णताप्रयोजकशक्तिविशेषः, तादृशशक्तिनिमित्तकपुद्गलोपचयो वा पर्याप्तिरिति भावः ॥

अथ पुद्गलरूपायाश्शक्तिरूपाया वा पर्याप्तेः स्वरूपतो भेदाभावाद्विषयभेदनिबन्धन एव तस्या भेद इत्याह—

*आहारशरीरेन्द्रियोच्छ्वासभाषामनोरूपविषयभेदात् पर्याप्तिष्षोढा ।*

आहारेति। तथा चाऽऽहारविषया पर्याप्तिः शरीरविषया पर्याप्तिरित्यादिक्रमेण षाड्विध्यं बोध्यम्। युगपदारब्धाः षडप्येतत्क्रमेणैव सिद्धिं यान्ति न समकालं व्युत्क्रमं वेति सूचयितुमयं क्रमः, उत्तरोत्तरपर्याप्तीनां बहुतरकालत्वात् ॥

अथाऽऽहारपर्याप्तिमाह—

शरीरादिपञ्चयोग्यदलिकद्रव्यादानक्रियापरिसमाप्तिराहारपर्याप्तिः ।

शरीरादीति। आत्मा हि सक्रियः, अन्यथा कायोत्पत्त्यनुकूलो यत्नो न स्यादेव, सा क्रियाऽऽत्मपरिस्पन्दरूपा, तथा चात्मा पूर्वदेहमुत्सृज्योपपातक्षेत्रे समागतः प्रथमक्षण एव कार्मणकाययोगाख्येन स्वपरिस्पन्देनौदारिकादिशरीरयोग्यान् पुद्गलान् गृह्णाति। तैजसकार्मणशरीरेणैव प्रथमसमय एव औदारिकादिशरीरयोग्यपुद्गलाहरणाच्छक्त्युत्पत्तेश्चाऽऽहारपर्याप्तिरेकसामयिकी। वीर्यान्तरायक्षयोपशमेन वीर्यलब्धिर्भवति, तया च यथायोग्यं सूक्ष्मबादरपरिस्पन्दरूपक्रियासहितं सलेश्यवीर्यमुपजायते, इदमेव करणशब्दवाच्यं पर्याप्तिशब्दवाच्यं योगसंज्ञकञ्च, तत्र च क्रियाप्राधान्ये योगशब्दः प्रयुज्यते, वीर्यस्य मुख्यत्वे करणशब्दः पर्याप्तिशब्दश्च प्रयुज्यते, क्रियायाः पौद्गलिकत्वेन पर्याप्तिसम्बन्धिपुद्गलानां नामकर्मत्वं, आहारपर्याप्तिं विहाय शरीरपर्याप्त्यादिक्रियाणां प्रत्येकमन्तर्मुहूर्तेन समापनाक्रियासहितं पर्याप्तिशब्दवा-

१. उक्तञ्चान्यत्र पुद्गलोपचयज पुद्गलग्रहणपरिणमनहेतुश्शक्तिविशेष इति । अन्यत्र च "आहारसरीरिंदिय ऊसासवओमणोऽभिनिव्वत्ती । होइ जओ दलियाओ करणं पइ सा उ पज्जत्ती" इति ॥ २ अमनो तरयोरेव च भाषामन पर्याप्त्योरेकत्वमभ्युपगम्य पञ्चधा पर्याप्तिरुक्ता ॥

त्यं सलेश्यवीर्यमप्यन्तर्मुहूर्तेन समाप्यत इत्युच्यते तथा चौदारिकवैक्रियाऽऽहारकतैजसभाषाप्राणापानमनःकर्मभेदेनाष्टविधेषु पुद्गलेषु शरीरस्येन्द्रियाणामुच्छ्वासस्य भाषाया मनसश्च योग्यानि यानि दलिकद्रव्याणि तेषां या आदानक्रिया–ग्रहणं तस्य परिसमाप्यते यया साऽऽहारपर्याप्तिरित्यर्थः । अत्र पर्याप्तीनामासां स्वरूपाणि तत्त्वार्थभाष्यानुसारेण निरूपितानि । प्रवचनाद्यनुसारेण तु बाह्याहारग्रहणखलरसरूपपरिणमनप्रयोजकात्मशक्तिविशेष आहारपर्याप्तिः ॥

अथ शरीरपर्याप्तिमाह—

गृहीतशरीरवर्गणायोग्यपुद्गलानां शरीराङ्गोपाङ्गतया रचनक्रियासमाप्तिश्शरीरपर्याप्तिः ।

गृहीतेति । सामान्यतो गृहीतानां शरीरवर्गणागतयोग्यपुद्गलानां शरीराङ्गोपाङ्गतया या रचनक्रिया–विरचनात्मिका क्रिया सा परिसमाप्यते यतः, स शक्तिविशेषश्शरीरपर्याप्तिः । लक्षणद्वयमिदं तत्त्वार्थोक्तमौदारिकवैक्रियाऽऽहारकशरीरत्रयेऽपि सङ्गच्छते । तत्राऽऽहारपर्याप्तिरौदारिकशरीरिणामाहारपुद्गलग्रहणखलरसीकरणप्रयोजिका, इतरेषां शरीरयोग्यपुद्गलग्रहणप्रयोजिका, इयञ्च पर्याप्तिस्सर्वेषां समयप्रमाणा, उपपातक्षेत्रे प्रथमसमय एवाहारकत्वात्, औदारिकशरीरिणां शेषाः पर्याप्तयः प्रत्येकमन्तर्मुहूर्तेन कालेन निष्पाद्यन्ते, सर्वासां पर्याप्तीनां च परिसमाप्तिकालोऽप्यन्तर्मुहूर्तप्रमाणः, अन्तर्मुहूर्तानामसङ्ख्यभेदभिन्नत्वात् । वैक्रियाहारकशरीरिणान्तु आहारेन्द्रियोच्छ्वासभाषामनःपर्याप्तयः पञ्चाप्येकेनैव समयेन समाप्यन्ते, शरीरपर्याप्तिः पुनरन्तर्मुहूर्तेनेति भाव्यम् । प्रवचनादिषु तु रसीभूताहारस्य रसासृङ्मांसमेदोऽस्थिमज्जाशुक्रलक्षणसप्तधातुरूपतया परिणमनहेतुः शक्तिविशेषश्शरीरपर्याप्तिः । इद पूर्वोक्तञ्च लक्षणद्वयमौदारिकशरीर एव सङ्गच्छते, इतरशरीरयोरसृङ्मांसमेदसादिमयत्वाभावात् । अत्र च तादृशशक्त्युत्पादनद्वारा शरीराङ्गोपाङ्गादिनामकर्माणि, साक्षात् निर्माणबन्धनसंघातननामकर्माणि केषाञ्चिन्मतेनाऽऽनुपूर्वीनामकर्म च निमित्तानि भवन्ति । एषां सत्तारूपेण वर्त्तमानानामप्युदय एव शरीरादीनां निष्पत्तेः । अङ्गोपाङ्गानां नियतस्थानवृत्तिताप्रयोजकत्वात्, गृहीतानां गृह्यमाणानाञ्च शरीरपुद्गलानामन्योन्यसंश्लेषकारित्वात्, शरीरत्वेन परिणतपुद्गलानामन्योन्यसन्निधानेन व्यवस्थापकत्वाच्च । केषाचिन्मतेनानुपूर्व्या अङ्गोपाङ्गानां निर्माणनिर्मितानां प्रतिनियतस्थानवृत्तिताप्रयोजकत्वोपगमादिति ॥

अथेन्द्रियपर्याप्तिमाह—

त्वगादीन्द्रियनिर्वर्त्तनक्रियापरिसमाप्तिरिन्द्रियपर्याप्तिः ।

त्वगादीति । आदिना रसनघ्राणचक्षुश्श्रोत्राणां ग्रहणम्, तान्यपि द्रव्यरूपाण्येव मा-

द्याणि तेषामेवोत्पादनेऽङ्गोपाङ्गनामकर्मण इन्द्रियपर्याप्तेश्च हेतुत्वात् , भावरूपाणान्तु निर्वर्त्तने इन्द्रियावरणक्षयोपशमस्यैव सामर्थ्यात्, जातिनामकर्मणस्त्वेकेन्द्रियादिशब्दप्रवृत्तिनिमित्तसमानपरिणतिलक्षणसामान्यं प्रति प्रयोजकत्वात्, तथा च त्वगादीन्द्रियाणां तत्तदिन्द्रियस्वरूपेण या निर्वर्त्तनक्रिया सा परिसमाप्यते यस्माच्छक्तिविशेषात्पुद्गलविशेषाद्वा सेन्द्रियपर्याप्तिः सर्वशरीरेन्द्रियव्यापिनी, धातुरूपतया परिणमितादाहारादेकस्य द्वयोस्त्रयाणां चतुर्णां पञ्चानां वेन्द्रियाणां प्रायोग्यानि द्रव्याण्यादायैकद्वित्र्यादीन्द्रियरूपतया परिणामयति यतस्सेन्द्रियपर्याप्तिः प्रवचनाद्यनुसारेणौदारिकशरीरेन्द्रियविषया ॥

अथोच्छ्वासपर्याप्तिमाह—

**श्वासोच्छ्वासयोग्यद्रव्यादानोत्सर्गशक्तिविरचनक्रियासमाप्तिः श्वासोच्छ्वासपर्याप्तिः ॥**

श्वासोच्छ्वासेति । श्वासोच्छ्वासयोग्यानां द्रव्याणां श्वासोच्छ्वासरूपाणामिति यावत्, तेषां यावादानोत्सर्गौ–ग्रहणमोक्षणरूपौ तद्विषयिणी या शक्तिर्लब्धिर्या च श्वासोच्छ्वासनामकर्मसाध्या तदनुकूला या विरचनक्रिया सा समाप्यते यतश्शक्तिविशेषात्पुद्गलोपचयाद्वा सा श्वासोच्छ्वासपर्याप्तिरित्यर्थः । यद्यपि सर्वा लब्धयः क्षायोपशमिका एव न त्वौदयिक्यस्तथापि वैक्रियाहारकादिलब्धय औदयिका अपि सम्भवन्ति, तत्र वीर्यान्तरायक्षयोपशमस्यापि निमित्तत्वेन क्षायोपशमिकत्वव्यपदेश इति बोध्यम् ॥

अथ भाषापर्याप्तिमाह—

**भाषायोग्यद्रव्यपरिग्रहविसर्जनशक्तिनिर्माणक्रियापरिसमाप्तिर्भाषापर्याप्तिः ॥**

भाषायोग्येति । भाषायोग्यानां द्रव्याणां ये परिग्रहविसर्जनेऽवलम्बनविसर्गौ तद्विषयिणी या शक्तिः–सामर्थ्यविशेषः–अवलम्बनपूर्वकोत्सर्जनहेतुसामर्थ्यविशेषः, तस्य या निर्माणक्रिया सा परिसमाप्यते यया सा भाषापर्याप्तिरित्यर्थः । अत्र वीर्यलब्धेस्सकाशादुपजायमानस्सलेश्यवीर्यविशेषः, सूक्ष्मबादरपरिस्पन्दरूपक्रियाविशेषो वाग्योगापरनामाऽपि सहकारिकारणं विज्ञेयम् । पर्याप्त्या हि भाषायोग्यपुद्गलग्रहणपरिणमने भवतः वाग्योगेन च

१ पञ्चानामिन्द्रियाणां प्रायोग्यान् पुद्गलान् गृहीत्वाऽनाभोगनिर्वर्तितेन वीर्येण तद्भावनयनशक्तिरिन्द्रियपर्याप्तिरिति प्रज्ञापनायाम् ॥

परिणतपुद्गलावलम्बनं निसर्गसामर्थ्यविशेषश्च भवति, मन्दशक्तेर्नगरपरिभ्रमणाय यष्ट्यवलम्बनवद् वाग्योगावलम्बनं बोध्यम् ॥

अथ मनःपर्याप्तिमाह—

**मनस्त्वयोग्यद्रव्याहरणविसर्जनशक्तिजननक्रियापरिसमाप्तिर्मनःपर्याप्तिः ॥**

मनस्त्वयोग्येति । मनस्त्वयोग्यानि यानि द्रव्याणि तेषामाहरणविसर्जने—अवलम्बनमोक्षणे तद्विषयिणी या शक्तिः तज्जननक्रियायास्तदनुकूलक्रियायास्समाप्तिर्यत इत्यर्थः । मनःपर्याप्त्या हि मनोयोग्यान् मनोवर्गणास्कन्धानादत्ते परिणमयति च ततश्चिन्तनार्थमवलम्ब्य मुञ्चति च मनोयोगेन । एवं च प्रथममनेकपुद्गलग्रहणं ततः शरीरपर्याप्तिः तदनु इन्द्रियपर्याप्तिस्ततः श्वासोच्छ्वासपर्याप्तिस्ततो भाषापर्याप्तिस्ततो मनःपर्याप्तिरिति क्रमः, परन्तु पर्याप्तिकार्यारम्भ उत्पत्तिप्रथमसमय एव, निष्ठा तु द्वितीयादीनामनुक्रमेण भवति तस्मात्स्वस्वकार्यपूर्णतां यावत्ता अप्यपूर्णा एव कथ्यन्त इति बोध्यम् ॥

एवमवगते पर्याप्तिप्रभेदे पर्याप्तापर्याप्तस्वरूपमाह—

**स्वस्वयोग्यपर्याप्तिपूर्णत्वभाजः पर्याप्ताः । स्वस्वपर्याप्तिपूर्णताविकला अपर्याप्ताः ॥**

स्वस्वेति । यस्य यस्य यावत्यः पर्याप्तयोऽभिमतास्तावत्पर्याप्तिकार्यपूर्णताभाजस्ते ते पर्याप्ता उच्यन्त इत्यर्थः । एतद्विपरीतास्त्वपर्याप्ता इत्याह स्वस्वेति ।

केषां जीवानां कति पर्याप्तयो भवन्तीत्यत्राह—

**तत्रैकेन्द्रियस्याद्याश्चतस्रः । द्वित्रिचतुरिन्द्रियासंज्ञिपञ्चेन्द्रियाणां पञ्च । संज्ञिपञ्चेन्द्रियाणां षट् पर्याप्तयः ॥**

तत्रेति । षट्सु पर्याप्तिषु मध्य इत्यर्थः । आद्याश्चतस्र इति आहारशरीरेन्द्रियोच्छ्वासरूपाश्चतस्र इत्यर्थः, भाषामनसोस्तस्याभावात् । पञ्चेति, तेषां मनसोऽभावेन मनःपर्याप्तिर्नास्तीति भावः । षट्पर्याप्तय इति, मनसोऽपि सत्त्वादिति भावः । एताभिश्च स्वस्वयोग्यपर्याप्तिभिरपर्याप्ता एव ये कालं कुर्वन्ति तेऽप्याद्यपर्याप्तित्रयं समाप्य ततोऽन्तर्मुहूर्तेनायुर्बध्वा तदनन्तरमबाधाकालरूपमन्तर्मुहूर्तं जीवित्वैव च म्रियन्त इत्यप्यवधेयम् ॥

अथ पर्याप्तापर्याप्तभेदभाजस्सूक्ष्मादिसप्तविधान् जीवान् दिङ्मात्रेण निदर्शयति—

**सूक्ष्माश्च निगोदादिवर्तिनः। बादराः स्थूलपृथिवीकायिकादयः। द्वीन्द्रियाः कृम्यादयः। त्रीन्द्रियाः पिपीलिकादयः। चतुरिन्द्रिया भ्रमरादयः॥**

सूक्ष्माश्चेति। सूक्ष्मजीवानां पृथिव्यादिपञ्चकायप्रभेदत्वेऽपि सूक्ष्मतरत्वादेकस्मिन् शरीरेऽप्यनन्तानां सद्भावाच्च निगोदस्य सूक्ष्मपृथ्वीकायिकाद्यपेक्षया प्रथममुपादानं, आदिना च सूक्ष्माणां पृथिवीकायिकादीनां ग्रहणम्। बादरैकेन्द्रियान्निदर्शयति-बादरा इति. पृथिव्येव कायः पृथिवीकायः, स्थूलश्चासौ पृथिवीकायश्च स्थूलपृथिवीकायः, स विद्यत एषान्ते स्थूलपृथिवीकायिकास्त आदिर्येषामिति तद्गुणसंविज्ञानो बहुव्रीहिः। न च स्थूलः पृथिवीकायो येषामिति बहुव्रीहिणैव विवक्षितार्थलाभे ' न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकर ' इति न्यायेन कर्मधारयान्मत्वर्थो न कार्य इति वाच्यम्, असुब्धत इति व्याकरणमहाभाष्यप्रयोगात् कृष्णसर्पवद्वल्मीकमित्यादिलौकिकप्रयोगाच्चोक्तनियमस्य कदाचित्कत्वात्। आदिनाऽप्कायिकतेजस्कायिकवायुकायिकवनस्पतिकायिकानां ग्रहणम्। स्पर्शेन्द्रियमात्रत्वादेषामेकेन्द्रियत्वं बोध्यम्। यद्यपि पृथिवीकायिकादिषु नोपयोगादीनि जीवलक्षणानि व्यक्तानि तथापि हृत्पूरकव्यतिमिश्रमदिरातिपानपित्तोदयाकुलीकृतान्तःकरणस्याव्यक्तचेतनेवात्रापि चेतनाऽव्यक्ताऽभ्युपगन्तव्या। न च तत्राव्यक्तचेतनालिङ्गानि श्वासोच्छ्वासादीनि सन्ति न त्वत्र किमपीति वाच्यम्, अर्शोमांसाङ्कुरवत्समानजातीयलतोद्भेदादीनां चेतनाचिह्नानां सत्त्वात्, कठिनपुद्गलात्मकानामश्मादीनामपि शरीरानुगतास्थिवत्सचेतनत्वं बोध्यम्॥ अत्र पृथिवीकायिकादिजीवेष्विमानि प्रमाणानि विज्ञेयानि, सन्ति पृथिवीकायिका जीवास्तदधिष्ठितशरीरोपलब्धेर्गवाश्वादिवत्। केनचिदभिसन्धिमताऽऽहृतमिदं शरीरं, करुधिराङ्गोपाङ्गादिपरिणतेः, अन्नादिवत्। उत्सृष्टमपि केनचिदभिसन्धिमता, आहृतत्वादन्नमलवत्। आपः सचेतनाः शस्त्रानुपहतत्वे सति द्रवत्वात्, हस्तिशरीरोपादानकललवत्। तत्रैवानुपहतद्रवत्वात्, अण्डकमध्यस्थितकललवत् एवं च्छेद्यत्वाद्भेद्यत्वादुत्क्षेप्यत्वाद्भोज्यत्वाद्घ्रेयत्वाद्रसनीयत्वात्स्पर्शनीयत्वाद्दृश्यत्वादित्यादयो हेतवो बोध्याः। सर्वेषां पुद्गलद्रव्याणां द्रव्यशरीराभ्युपगमाभ्यानैकान्तत्वं हेतूनाम्। तथा सचेतना हिमादयः अप्कायत्वादितरोदकवत्, जीवशरीराण्यङ्गारादयः, छेद्यत्वादिभ्यः। अङ्गारादौ प्रकाशपरिणाम आत्मसंयोगाविर्भूतः शरीरस्थत्वात् खद्योतदेहपरिणामवत्, अङ्गारादीनामूष्मा आत्मसम्प्रयोगपूर्वकः शरीरस्थत्वाज्ज्वरोष्मवत्। सचेतनं तेजः यथायोग्याहारोपादानेन वृद्धिविशेषवत्त्वात् पुरुषाङ्गवत्, वृक्षा जीवशरीराणि, अक्षाद्युपलब्धिभावात्पाण्यादिसंघातवत्, कदाचित् सचित्ता अपि वृक्षा जीव-

शरीरत्वात्पाण्यादिसंघातवत्, मन्दविज्ञानसुखादिमन्तो वृक्षा अव्यक्तचेतनानुगतत्वात्सुप्तादिपुरुषवत् । चेतनावान् वायुः, अपरप्रेरिततिर्यगनियमितगतिमत्त्वाद् गवाश्वादिवदित्यादीनि । द्वीन्द्रियान्निदर्शयति क्रिम्यादय इति । आदिनाऽपादिकनूपुरकगण्डूपदशङ्खशुक्तिकाशम्बूकाजलूकाप्रभृतीनां ग्रहणम्, एषां स्पर्शनरसने इन्द्रिये भवतः । त्रीन्द्रियाणां निदर्शनमाह त्रीन्द्रिया इति । आदिना रोहिणिकोपचिकाकुंथुतुम्बुरुकादीनां ग्रहणम्, एतेषां स्पर्शनरसनघ्राणानीन्द्रियाणि । चतुरिन्द्रियानाह चतुरिन्द्रिया इति । आदिना वटरसारङ्गमक्षिकापुत्तिकादंशादयो ग्राह्याः, स्पर्शनरसनघ्राणचक्षूंष्येषामिन्द्रियाणि ॥

असंज्ञिपञ्चेन्द्रियाणां निदर्शनमाह—

## असंज्ञिपञ्चेन्द्रिया मनोहीना अगर्भजा मीनादयः ।

असंज्ञीति । संज्ञा हिताहितप्राप्तिपरिहारयोर्गुणदोषविचारणात्मिका साऽस्त्येषामिति संज्ञिनः, न त्वाहारभयमैथुनपरिग्रहसंज्ञासम्बन्धात्संज्ञिनः, सर्वेषामेव प्राणिनां दशविधसंज्ञाभ्युपगमात्, अत एव संज्ञा न ज्ञानरूपा विवक्षिता निवर्त्त्याभावात्, सर्वेषां प्राणिनां ज्ञानात्मकत्वात्, यद्वा कालिकीहेतुदृष्टिवादोपदेशाख्यासु तिसृषु संज्ञासु कालिकीसंज्ञा सम्प्रधारणाख्या गृह्यते, येन सुदीर्घमपि कालमनुस्मरति भूतमागामिनञ्चानुचिन्तयति कथं कर्त्तव्यं किमनुष्ठेयमिति सा दीर्घकालिकी सम्प्रधारणेत्युच्यते तद्वन्तस्संज्ञिनः, तथा च सम्प्रधारणसंज्ञा मनोरूपैव । न संज्ञिनोऽसंज्ञिनस्ते च ते पञ्चेन्द्रियाश्चासंज्ञिपञ्चेन्द्रिया इति व्युत्पत्तिः, अमुनाऽभिप्रायेणैव मनोहीना इत्युक्तम् । अत्र मनोहीना इत्यसंज्ञिनः पर्यायकथनमेव न तु लक्षणमभेदात्, अथवा लक्षणं भिन्नमपि भवति यथा वने प्रभूताम्भोजसौरभादिलक्षणेन महान् जलाशयो लक्ष्यते, तथाऽभिन्नमपि भवति यथाऽग्निरुष्णत्वेन लक्ष्यते तथात्र बहिर्विनाऽनुभवसिद्धेन सम्प्रधारणसंज्ञाविरहरूपासंज्ञित्वेन मनोहीनत्वमनुमीयत इति बोध्यम् । ते च निखिलनारकदेवगर्भव्युत्क्रान्तमनुष्यतिर्यग्भिन्नास्सर्वेऽपि विज्ञेयाः, मीनादय इति, आदिना सम्मूर्च्छिममनुष्यपश्वादीनां ग्रहणम् ॥

अथ संज्ञिपञ्चेन्द्रियाणां दृष्टान्तमाह—

## संज्ञिपञ्चेन्द्रिया देवमनुजादयः ॥

संज्ञिपञ्चेन्द्रिया इति । देवमनुजादय इति, मनुजपदेन सम्मूर्च्छिमभिन्ना ग्राह्याः, आदिना नारका गर्भव्युत्क्रान्तिकगोमहिष्यादयो गृह्यन्ते ॥

ननु पृथिव्यप्तेजोवायुप्रभृतीनां कथं जीवत्वं परैरनभ्युपगमादित्याशङ्कायां प्राणवतां जीवत्वस्योभयवादिसिद्धतया तद्दिदर्शयिषुराह—

**एत एव प्राणिनः ।**

**एत एवेति ।** एवशब्दो भिन्नक्रमः तथा चैते—चतुर्दशविधाः प्राणिन एव-प्राणवन्त एवातो जीवत्वमेषामिति भावः, अत्र प्रमाणान्युपदर्शितान्येव पूर्वभागमाश्र " **पुढविकाइया णं भंते ! किं सागारोवओगोवउत्ता अणागारोवओगोवउत्ता गोयमा ! सागारोवओगोवउत्तावि, अणागारोवओगोवउत्तावि** " इत्यादयो द्रष्टव्याः ।

के तत्र प्राणा येन तद्वत्त्वमेषां भवेदित्यत्राह—

**तत्र प्राणा द्रव्यभावभेदेन द्विविधाः । द्रव्यप्राणाः पञ्चेन्द्रियमनोवाक्कायबलोच्छ्वासायूंपि दश । अनन्तज्ञानदर्शनचारित्रवीर्यात्मकाश्चत्वारो भावप्राणाः ॥**

**तत्रेति ।** तत्पदेन प्राणिनः परामर्शः, घटकत्वं सप्तम्यर्थः, तथा च प्राणिघटकीभूता इत्यर्थः । तत्राद्यस्य भेदमाह—द्रव्यप्राणा इति । मनोवाक्कायानां द्वन्द्वान्तरं बलेन तत्पुरुषः, तत्र द्रव्यभावमनसोर्व्यापारविशेषो मनोबलं, गृहीतयोग्यपुद्गलद्रव्याणां भाषात्वेन परिणमनोत्तरं मनोयोगेन विसर्जनशक्तिः, शब्दोच्चारणरूपजीवशक्तिविशेषो वा वाग्बलं, शरीरद्वारा पदार्थग्रहणपरित्यागरूपः जीवव्यापारः, तदनुकूलजीवनिष्ठशक्तिविशेषो वा कायबलं, गृहीतयोग्यपुद्गलानां शरीरयोगेनोच्छ्वासनिश्वासत्वेन परिणमय्यावलम्बनपूर्वकपरित्याग उच्छ्वासात्मकः प्राणः । आयुस्तु द्रव्यकालतो द्विविधम् । कर्मपुद्गलविशेषो द्रव्यायुः । तत्साहाय्येन नियतकालं जीवनं कालायुः, तत्र नैति जीवो मृत्युं द्रव्यायुपस्समाप्तिमन्तरेण । कालायुश्चापवर्त्तनीयानपवर्त्तनीयभेदतो द्विविधम् । आयुर्बन्धावसरे जीवप्रदेशेष्वध्यवसायमान्द्यादतिविरलतयोपात्तानामायुषां शस्त्राद्यभिघातेन नियतकालादर्वागेव यदा समापनं भवति तदपवर्त्तनीयायुरित्युच्यते । मन्दपरिणामप्रयोगोपचितमपवर्त्यं, अध्यवसानादिविशेषात्प्राक्तनजन्मविरचितस्थितेरल्पतापादनमपवर्त्तनेति यावत् । तीव्रतराध्यवसायात्तीव्रपरिणामप्रयोगोपचितानामायुषां भङ्गकप्रसङ्गेऽपि गाढबन्धनत्वान्निकाचितबन्धात्मनियमाद् यदा नियतकालादर्वाग् भङ्गाभावस्तदनपवर्त्तनीयायुः प्रोच्यत इति ॥

अथ केषां कियन्तः प्राणा इत्यत्राह—

१ एतेन यो जीवति स तावन्नियमाज्जीव, अजीवस्यायुकर्माभावेन जीवनाभावादिति व्याप्तिर्दर्शिता, यस्तु जीव स स्याज्जीवति, स्यान्न जीवति, सिद्धस्य केनचित् नयेन जीवनाभावात्, 'सिद्धो पुणरजीवो जीवणपरिणामरहिओत्ति' इति वचनादिति बोध्यम् ।

**स्पर्शकायोच्छ्वासायूंष्येकेन्द्रियाणाम्, रसवाग्भ्यां सह पूर्वोक्ता द्वीन्द्रियाणाम्, घ्राणेन सहैते त्रीन्द्रियाणाम्, चक्षुषा सहैत एव चतुरिन्द्रियाणाम्, श्रोत्रेण सहामी असंज्ञिनाम्, मनसा सहैते संज्ञिपञ्चेन्द्रियाणाम्, अनन्तज्ञानदर्शनचारित्रवीर्याणि चत्वारि सिद्धानां भावप्राणाः ॥**

स्पर्शेति । स्पर्शनेन्द्रियकायबलोच्छ्वासायुर्लक्षणाश्चत्वारः प्राणा एकेन्द्रियाणां पृथिव्यादीनामित्यर्थः। रसेति । स्पर्शनरसनेन्द्रियकायवाग्बलोच्छ्वासायुस्स्वरूपाः षट्प्राणा इत्यर्थः । श्रोत्रेणेति। इन्द्रियपञ्चककायवाग्बलोच्छ्वासायुर्लक्षणाः नव प्राणा असंज्ञिपञ्चेन्द्रियाणामित्यर्थः। मनसेति। पूर्वोक्ता दशविधाः प्राणास्संज्ञिनां भवन्तीत्यर्थः। सिद्धानान्तु निर्धूताखिलकर्मत्वात् कर्मप्रभवद्रव्यप्राणानामभावात्तेषां भावप्राणा एवेत्याह अनन्तेति। द्वन्द्वादौ श्रुतमनन्तपदं ज्ञाने दर्शने चारित्रे वीर्ये चान्वेति, अनन्तं ज्ञानं सकलज्ञेयग्राहि समस्तज्ञानावरणक्षयप्रभवं, अनन्तं दर्शनं अशेषदर्शनावरणीयक्षयसमुज्जृम्भितं, अनन्तं चारित्रं सकलमोहक्षयाविर्भूतं, अनन्तं वीर्यं निखिलवीर्यान्तरायकर्मप्रध्वंसविलसितं । ज्ञानदर्शनचारित्रवीर्याणि जीवमात्रसाधारणानि परन्तु संसारिणामनादितस्तत्तत्कर्मावृतत्वेन यथाक्षयोपशमं न्यूनाधिकानि भवन्ति, मुक्तानान्तु कृत्स्नकर्मक्षयादाविर्भूतानि एतान्येव प्राणभूतानीति भावः ॥

अथासंसारिणं लक्षयति—

**निर्धूताशेषकर्मा असंसारी, स एव सिद्धो जिनाजिनतीर्थादिभेदभिन्नश्चरमशरीरत्रिभागोनाकाशप्रदेशावगाही च ॥ इति जीवनिरूपणम् ॥**

निर्धूतेति। निर्धूतानि निःशेषीकृतान्यशेषाण्यष्टविधानि ज्ञानावरणीयादिकर्माणि येन स निर्धूताशेषकर्मा । निर्धूतयत्किञ्चित्कर्मण्यतिप्रसङ्गवारणायाशेषेति । तत्र यो विशेषस्तमाह-स एवेति । असंसार्येवेत्यर्थः । जिनाजिनेति । एतत्तत्त्वमग्रे वक्ष्यते । चरमशरीरेति । यथा प्रदीपतेजोऽवयवाः स्वल्पेऽवकाशे सङ्कोचं महति च विकासं भजन्ते तथैव लोकाकाशप्रदेशमितस्यात्मनोऽपि प्रकृष्टसङ्कोचप्राप्तिदशायां लोकस्यैकस्मिन्नसङ्ख्येयभागे स्थितिः, उत्कृष्टविकासकाष्ठावलम्बिनः केवलिनस्समुद्घातदशायां सर्वलोकेऽवगाहोऽन्यत्र चानेकविधा मध्यमावस्थेति वस्तुस्थितिः। परन्तु सर्वस्य संसारिणोऽनन्तानन्तपरमाणुजन्यकार्मणशरीरेणानादितस्संसृष्टतया स्वभावतोऽपि वा नैकादिप्रदेशावगाहित्वं किन्त्वसंख्येयप्रदेशावगाहित्वमेव, सिद्धानां योगनिरोधकाले च शरीरसुषिराणां पूरणात् तृतीयभागहीनावगाहत्वं, अतः परमनावरणवीर्यस्यापि भगवतो न संकोचः, स्वभावश्चायमेतावानेव सहार इति न स्वभावे पर्यनुयोगः, कारणाभावात्प्रयत्नाभावेनोपसंहाराभावाच्चेति ॥

प्रकरणरूपत्वादस्य ग्रन्थस्य विस्तरेणाभिधानमनुचितमिति जीवनिरूपणमुपसंहरति इतीति, उक्तदिशेति भावः, समाप्तमिति शेषः ॥

इति तपोगच्छनभोमणिश्रीमद्विजयानन्दसूरीश्वरपट्टधरश्रीमद्विजयकमलसूरीश्वर-चरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजयलब्धिसूरिणा विनिर्मितस्य तत्त्वन्यायविभाकरस्य स्वोपज्ञाया न्यायप्रकाशव्याख्याया जीवनिरूपणाख्यो द्वितीयकिरणस्समाप्त ॥

## अथ तृतीयकिरणः ॥

अथ द्वितीय तत्त्व निरूपयितु तल्लक्षणमाह—

### चेतनाशून्यं द्रव्यमजीवः ॥

चेतनेति। चेतनाशून्यत्वे सति द्रव्यत्वमजीवस्य लक्षणं, जीवेऽतिप्रसङ्गवारणाय विशेषण, न भावोऽभाव इतिवच्चेतनाभावमात्रस्याजीवत्वप्रसङ्गवारणाय विशेष्यम्, तत्राजीवस्य पञ्चविधस्य पूर्वमुक्तमेव ॥

सम्प्रति प्रथम धर्मं लक्षयति—

### गत्यसाधारणहेतुर्द्रव्य धर्मः ॥

गत्यसाधारणेति। गतिर्गमनक्रिया, क्रिया च बाह्याभ्यन्तरनिमित्तापेक्षत्वे सति देशान्तरप्राप्तिहेतुत्वे सति द्रव्यपर्यायरूपा। तत्राभ्यन्तर निमित्त द्रव्यस्य क्रियापरिणामशक्तिः, बाह्य तु नोदनाभिघातादिः, एतेन च क्रियाया कथञ्चिद्द्रव्यभिन्नत्वमन्यथोपरमाभावप्रसङ्गः, द्रव्यपर्यायत्वाच्च नात्यन्तिकभेद, अन्यथा द्रव्यस्य निश्चलत्वप्रसङ्गः। ज्ञानादीनामपि बाह्याभ्यन्तरनिमित्तापेक्षत्वे सति द्रव्यपर्यायत्वात्तद्वारणाय देशान्तरप्राप्तिहेतुत्वे सतीत्युक्तम्। सा च जीवपुद्गलयोरेव, तयोरेव देशान्तरप्राप्तिदर्शनात्। ता प्रत्यसाधारणहेतुभूतं द्रव्य धर्म इत्यर्थः, तत्र कारणं त्रिविध निर्वर्त्तकनिमित्तपरिणामिभेदात्, यथा घटं प्रति कुलालो निर्वर्त्तक कारण, दण्डादिक निमित्त, मृत्पिण्ड परिणामि, तथा जीवपुद्गलाना गतिं प्रति गतिक्रियाविष्टं तदेव जीवपुद्गलद्रव्य निर्वर्त्तकं तदेव च गतिपरिणामि परिणामिकारणं, धर्मद्रव्यञ्च निमित्तमिति। निमित्तं कारणञ्च प्रायोगिकवैस्रसिकोभयक्रियावद् यथा दण्डादि, तद्वत् केवल वैस्रसिकक्रियावदपि,

१ आत्मपत्रे प्रयोग आत्मा सक्रियो देहपरिस्पन्ददर्शनायत्रपुरुषवदिति न च देहपरिस्पन्ददेतु प्रयत्नो न क्रियेति वाच्यमक्रिये नभसि तदसम्भववदक्रिय आत्मन्यपि तदसम्भवात्, तथाऽऽत्मा सक्रिय कर्तृत्वात् कुलालवदित्यपि प्रयोगो न चासिद्धो हेतु कर्ताऽऽत्मा स्वकर्मफलभोक्तृत्वादित्यनुमानतस्तत्सिद्धेरिति ॥

एतदेव निमित्तकारणमसाधारणकारणमपेक्षाकारणमुच्यते, द्रव्यगतक्रियापरिणाममपेक्ष्य धर्मादीनां जीवादिगत्यादिक्रियापरिणतेः परिपोषणात्, ईदृक्परिपोषणस्यान्यासाधारणत्वात्, धर्माद्यखिलद्रव्येषु वैस्रसिकक्रियायाः सद्भावेन प्रायोगिकक्रियापेक्षया निष्क्रियत्वेन धर्मादिषु दण्डादिवन्निमित्तकारणत्वप्रसङ्गस्य निर्व्यापारत्वेनाकारणत्वप्रसङ्गस्य च नावकाशः । तथा च जीवादावतिप्रसङ्गभङ्गाय हेत्वन्तम् । कस्यचिन्मते जीवविशेषगुणे रूढस्य धर्मस्य व्यावृत्त्यर्थं द्रव्यपदम् । गतिमत्त्वे सति द्रव्यत्वमित्युक्तौ जीवपुद्गलयोरतिव्याप्तिरिति गत्यसाधारणहेतुत्वे सतीत्युक्तम् । गतिहेतुत्वे सति द्रव्यत्वमित्युक्तौ कालादिसमवायानां कार्यमात्रकारणत्वे कालादावतिव्याप्तिवारणायापेक्षाकारणत्वापरपर्यायमसाधारणकारणत्वमुक्तम्, अपेक्षाकारणत्वे सति द्रव्यत्वमित्युक्तावधर्मादावतिव्याप्तिरिति गतीति ॥

ननु निखिलमिदं तदा सङ्गच्छते यदा लक्ष्यभूतं धर्मद्रव्यं प्रमितं स्यात्, न ह्यप्रमितं लक्षयितुं शक्यमतिप्रसङ्गात्, तस्माच्छून्यमिदं जल्पनमित्याशङ्कायां तत्प्रमिणोति—

**तत्र प्रमाणं जीवपुद्गलानां गतिर्बाह्यनिमित्तापेक्षा गतित्वाज्जलस्थमत्स्यादिगतिवदित्यनुमानम् ॥**

तत्रेति । तच्छब्देन लक्ष्यभूतधर्मद्रव्यपरिग्रहः, सप्तम्यर्थो विशेष्यत्वं, तस्य च प्रमाणपदवाच्यप्रमितिकरणत्वैकदेशे प्रमितावन्वयस्तथा च लक्ष्यभूतधर्मद्रव्यविशेष्यकप्रमित्यसाधारणकारणमित्यर्थस्तस्य चामेतनेनानुमानपदेनान्वयः । जीवपुद्गलानामिति । गतिपरिणतानामित्यादिः, अन्यथा धर्मद्रव्यस्य बलात्तत्र गतिजनकत्वापत्तेः, न चेष्टापत्तिः, गतिपरिणतानां गतिं प्रति पोषकत्वाभ्युपगमात्, अनवरतगतिप्रसङ्गाच्च । बाह्यनिमित्तापेक्षेति, आन्तरनिमित्तजीवादिशक्तिमादाय सिद्धसाधनवारणाय बाह्येति । गतौ परिणामिकारणं जीवादिकं निर्वर्त्तककारणञ्चादाय सिद्धसाधनवारणाय कारणपदमुपेक्ष्य निमित्तपदग्रहणं कृतम् । यथा च स्वयमेव सञ्जातजिगमिषस्य मत्स्यस्य गतौ जलमनुपघातकं सन्निमित्ततयोपकारकं तथा स्वभावेन परिणतजीवपुद्गलगतिरप्यनुपघातकं किञ्चन द्रव्यं निमित्ततयोपकारकमपेक्षत एव, गतित्वस्योभयत्र समानत्वात्, न च तादृशं द्रव्यमाकाशं भवितुमर्हति, अवगाहनामात्रगुणत्वात्, नह्यन्यस्य धर्मोऽन्यस्य भवितुमर्हति तथा च सत्यस्तेजो-

१ तदुक्तं 'परिणामी गतेर्धर्मो भवेत्पुद्गलजीवयोः । अपेक्षाकारणाल्लोके मीनस्येव जलं सदा' इति । तथा यद्यच्छुद्धपदवाच्यं तत्तदस्ति, यथा स्तम्भादि, तथा धर्मोऽपि, शुद्धपदवाच्यत्वं च प्रमाणान्तरबाधितविषयत्वाख्यदोषरहितत्वेन, न च खपुष्पादिषु केनापि सङ्केतितैस्तादिशुद्धपदैरनैकान्त्यं, वृद्धपरम्परायातसंकेतविषयाणामेव शुद्धपदानां वाच्यत्वस्येह हेतुत्वेन विवक्षणादिति ॥

*गुणा द्रवदहनादयः पृथिव्या एव प्रसज्येरन् । आकाशस्यैव निमित्तत्वेऽलोकाकाशेऽपि गम*नप्रसङ्गाच्च । न च कारणत्वमन्वयव्यतिरेकगम्य, यथा जलादिसद्भावे मत्स्यादीनां गतिस्तदभावे च तदभाव इति, तथा च धर्मद्रव्यसत्त्वेऽपि जलाभावे मत्स्यादीनां गत्यभावाद्व्यभिचारेण न कारणत्वं गतौ तस्यापि तु जलस्यैवेति वाच्यम्, सत्यपि भूम्यादावधिकरणे गगनस्य सर्वाधारत्वमिव सत्यपि झषादिगतौ जलादीनां कारणत्वे सर्वेषां गतिसामान्यं प्रति निमित्ता*न्तरस्यापेक्षितत्वात् ।* न च देशान्तरप्राप्तिहेतुर्द्रव्यपरिणामविशेषो गतिस्तथा च देश एव गत्यपेक्षाकारणमस्त्विति वाच्यम्, देशविशेषाणां देशत्वेनानुगतरूपेण कारणत्वासम्भवात् तथासति ह्यलोकेऽपि गमनं प्रसज्येत, तत्तद्गतिं प्रति तत्तद्देशत्वेन कारणत्वे त्वनन्तकार्यकारणभावकल्पनाप्रसङ्गः स्यात्, न च धर्मस्यापि न धर्मत्वेन कारणत्वमतिप्रसङ्गात्,[1] अपि तु तत्तत्प्रदेशत्वेनैवेति तथापि गौरवं दुर्वारमेवेति वाच्यम्, लोकालोकविभागान्यथानुपपत्त्यापि धर्मद्रव्यस्यावश्यकत्वे *तस्यैव गतित्वावच्छिन्नकार्यतानिरूपितकारणत्वाभ्युपगमात्* पुद्गलस्कन्धातिरिक्तस्याकाशातिरिक्तस्य वा देशस्याभावेन तयोर्गतिपरिणामिकारणत्वेनावगाहनागुणत्वेन च गत्यपेक्षाकारणत्वासम्भवाच्चेति ॥

अस्यास्तिकायत्वात्प्रदेशेयत्तामाविष्करोति—

असंख्येयप्रदेशात्मको लोकाकाशव्यापी च ॥

असंख्येयेति । शास्त्रसव्यवहारार्थं प्रदिश्यन्त इति प्रदेशाः, द्रव्यपरमाणुमूर्त्त्यवच्छिन्नाः, कदापि ये न वस्तुव्यतिरेकेणोपलभ्यन्ते भागास्ते प्रदेशाः । असंख्येयाः प्रदेशा येषान्ते असंख्येयप्रदेशाः तदात्मको धर्मो न संख्येयप्रदेशात्मको नाप्यनन्तप्रदेशात्मक इति भावः । न च धर्मादीनां निरवयवत्वेन तत्र प्रदेशकल्पना सिंहो माणवक इतिवदौपचारिकीति वाच्यम्, प्रत्ययाभेदात्, मुख्यप्रत्ययासिद्धविशेषाद्ध्यवसानरूपान्माणवके हि सिंह इति गौणप्रत्ययोऽध्यारोपरूपो भिन्न उपलभ्यते, न च तथा पुद्गलेषु धर्मादिषु च प्रदेशप्रत्ययो भिन्नोऽस्ति, उभयत्रावगाहभेदतुल्यत्वात्, न च परमाणुषु मुख्यः प्रदेशप्रत्यय इति वाच्यम्, अनादिरमध्योऽप्रदेशो हि परमाणुरिति वचनात् । ननु धर्मादीन्याकाशवत्किं स्वात्मप्रतिष्ठान्युत जलादिवदाधारान्तरप्रतिष्ठानि, आधारान्तरप्रतिष्ठत्वेऽप्येकदेशेन सर्वात्मना वेत्याशङ्कायामाह—लोकाकाशव्यापी चेति । आकाशप्रतिष्ठानि लोकाकाशमभितो व्याप्य च प्रतिष्ठितानीति भावः । यद्यपि निश्चयनयेन सर्वमेव वस्तु स्वात्मन्येव प्रतिष्ठितं तथापि व्यवहारनया-

[1] न चैवमस्ति अलोकस्यानन्तत्वाल्लोकाकाशस्य आत्पुद्गलमना तत्र प्रदेशानेक द्व्यणुकादिपौद्गलस्कन्ध संख्या तच्छून्यस्य वा प्रसङ्गादिति ॥

भिप्रायेणाकाशप्रतिष्ठं विज्ञेयम् । धर्मादयो यत्र लोक्यन्ते स लोकः, लोकश्चासावाकाशश्च लोकाकाशस्तं व्याप्नोतीति लोकाकाशव्यापी, धर्माधर्मयोर्लोकाकाशेऽवगाहो न त्वलोक इति भावः ॥

अथ यत्र गतिस्तत्रावश्यं स्थितेरपि भावाद्गत्यपेक्षाकारणेनेव स्थितिं प्रत्यप्यपेक्षाकारणेन केनापि भवितव्यमिति मन्वानस्तादृशद्रव्यसाधनार्थं प्रथमं तत्स्वरूपमाह—

**स्थित्यसाधारणहेतुर्द्रव्यमधर्मः । प्रमाणञ्चात्र जीवपुद्गलानां स्थितिर्बाह्यनिमित्तापेक्षा स्थितित्वात्तरुच्छायास्थपान्थवदित्यनुमानम् । असंख्येयप्रदेशात्मको लोकाकाशव्यापी च ॥**

स्थित्यसाधारणेति । अत्रापि पूर्ववत् स्थितित्वावच्छिन्नकार्यतानिरूपितासाधारणकारणत्व लक्षणं पदकृत्यञ्चावसेयम् । स्थितिस्स्वदेशादप्रच्यवनहेतुर्गतिनिवृत्तिरूपा । अधर्मे मानमाविष्करोति प्रमाणञ्चेति, स्थितिपरिणतानामित्यादिः, अन्यथाऽधर्मस्य निर्वर्त्तकैककारणत्वापत्तेः । बाह्यनिमित्तापेक्षेति, निर्वर्त्तकपरिणामिक्रियाद्वयवन्निमित्तकारणत्रयव्यतिरिक्तकारणान्तरसापेक्षेत्यर्थः । दृष्टान्तमाह—तरुच्छायास्थेति तरुच्छायायां पान्थस्थितिवदिति भावः । प्रदेशेयत्तामाह—असंख्येयेति । अस्याप्याधार वृत्तित्वञ्चाह—लोकाकाशेति । अत्र पूर्ववदेव विचारो विभावनीयः ।

अथ तृतीयमाकाशद्रव्य लक्षयति—

**अवगाहनागुणमाकाशम् ॥**

अवगाहनेति । अवगाहनमनुप्रवेशस्स एव गुणो यस्य तदाकाशमिति विग्रहः, अवगाहनागुणत्व आकाशस्य लक्षणम् । नन्विदमवगाहन पुद्गलादिद्रव्यसम्बन्धि गगनसम्बन्धि च, संयोगवत्तथा च तत्कथमाकाशस्यैव गुणः, उभयगुणत्वे चातिव्याप्त्यापत्त्या तत्कथं लक्षण भवितुमर्हतीति चेन्मैवम् , लक्ष्यं ह्याकाशं प्रधानमवगाह्यत्वात् अवकाशदानेनोपकारकत्वाच्च, पुद्गलादिद्रव्यन्त्ववगाहक, तथा च स्वानुकूलावकाशदातृत्वसम्बन्धेनावगाहनाय-

१ यद्यत्कार्यं तत्तदपेक्षाकारणवद्यथा घटादिकार्यम् । तथा चासौ स्थितिरपि यच्च तदपेक्षाकारण सोऽधर्मास्तिकाय । न च नास्त्यधर्मास्तिकायोऽनुपलभ्यमानत्वाच्छशविषाणवदिति वाच्यम्, दिगादीनामसिद्धयापत्तेर्वादिन । न च दिगादिप्रत्ययलक्षणकार्यदर्शनतस्तेऽनुमीयन्त इति वाच्यम्, तुल्यत्वात्, न च नासौ कदाचिद्दृष्ट इति वाच्य, दिगादिष्वपि तुल्यत्वात् । न चास्य सर्वदा सर्वस्य सन्निहितत्वेन सदा स्थितिस्स्यादिति वाच्यम्, दिगादिष्वपि तुल्यत्वात् । न च निमित्तान्तरापेक्षणाद्दिगादितो न सर्वदा कार्योत्पत्तिप्रसङ्ग इति वाच्यमधर्मास्तिकायेनापि स्वपरगतविश्रसाप्रयोगव्यापारापेक्षणादुक्तदोषासम्भवादिति भाव ॥

त्वमाकाशस्य लक्षणं बोध्यम् । तत्र धर्माधर्मप्रदेशा हि आ लोकान्ताल्लोकाकाशप्रदेशनिर्विभागवर्त्तित्वेनावस्थिताः, तस्मादन्तरवकाशदानेन धर्माधर्मयोरुपकरोति, धर्माधर्मप्रदेशानामाकाशप्रदेशाभ्यन्तरवर्त्तित्वात्, अलोके च तदसम्भवात् । पुद्गलजीवानान्तु संयोगविभागैश्चोपकरोति तेषां क्रियावत्त्वात् । न चालोकाकाशे लक्षणमिदमव्याप्तमिति वाच्यम्, तत्राप्यवगाहानुकूलावकाशदातृत्वस्वभावस्य सत्त्वात्, अवगाहकाभावादेव नावगाहः, नहि हंसस्यावगाहकस्याभावेऽवगाह्यत्वं जलस्य हीयत इति ॥

अथाऽऽकाशे प्रमाणमादर्शयति—

**मानन्तु द्रव्याणां युगपदवगाहोऽसाधारणबाह्यनिमित्तापेक्षो युगपदवगाहत्वादेकसरोवर्त्तिमत्स्यादीनामवगाहवदित्यनुमानम् । लोकालोकभेदेन तद्द्विविधम् ॥**

**मानन्त्विति** । द्रव्याणामिति, अवगाहमानानामित्यादिः । अनेकद्रव्याणामेकदा योऽवगाहस्तस्यैव पक्षत्वसूचनाय युगपदवगाह इत्युक्तं, अन्यथा स्थूलानामेव द्रव्याणां प्रतिघातात् सूक्ष्माणां परस्परावगाहप्रदत्त्वेन तादृशावगाहेऽसाधारणबाह्यपरमाण्वन्तरसापेक्षत्वस्य सिद्धत्वेन सिद्धसाधनत्वापत्तेः । तथा च सर्वेषां युगपदवगाहं प्रत्यसाधारणं निमित्तं गगनातिरिक्तं न किमपि भवतीत्याकाशसिद्धिः । न चावरणाभाव एव तादृशोऽस्त्विति वाच्यम्, सर्वथाऽधिकरणानात्मकस्याभावस्यापसिद्धान्तत्वेन तदधिकरणात्मकस्यैवाकाशत्वात् । न चाकाशस्यापि धर्मादीनामिवावगाहदायि द्रव्यान्तरं स्यादिति वाच्यम् ततोऽधिकव्यापिद्रव्यान्तराभावात् । धर्मिग्राहकप्रमाणेन तस्यावगाह्यत्वेनैव सिद्धेश्च । एवमेव यद्द्रव्यं तत्साधारमिति व्याप्त्याऽस्ति गगनं द्रव्याणां साधारत्वान्यथानुपपत्तेरित्यनुमानादपि सर्वाधारत्वेनाकाशसिद्धिः । न च तस्यापि द्रव्यत्वेन साधारत्वं स्यात्तथा चानवस्थेति वाच्यम्, धर्मिग्राहकमानेनाधारमात्रस्वरूपतयैव सिद्धेः । न चाकाशे द्रव्यत्वसत्त्वेऽपि साधारत्वाभावेन व्यभिचार इति वाच्यम्, धर्मिसिद्धेः पूर्वं व्यभिचारास्फुरणात्, तदुत्तरं तत्स्फूर्त्तेरकिञ्चित्करत्वादिति ॥

१ न च धर्माधर्मावेवाधारौ भविष्यत इत्यतिरिक्तेनाकाशेनेति वाच्यम् । तयोर्गतिस्थितिमात्रहेतुत्वात्, न ह्यन्यसाध्यं कार्यमन्यः प्रसाधयति, अतिप्रसङ्गात् । न च युतसिद्धानामेव कुण्डबदरादीनामाधाराधेयभावदर्शनादयुतसिद्धानां न धर्माधर्माद्याकाशानामाधाराधेयभाव इति वाच्यम्, युतसिद्ध्यभावेऽपि पाणौ रेखेत्यादौ तद्दर्शनात् । न चाकाशस्यावकाशदातृत्वे भित्त्यादिना गवादीनां प्रतिघातो न स्यादिति वाच्यम्, मूर्त्तानां स्थूलानामन्योऽन्यप्रतिघातात्, सूक्ष्माणामन्योन्यप्रवेशशक्तियोगात्, अन्योन्यप्रवेशाभावेनावकाशदातृत्वादाकाशस्य तावता सामर्थ्यहानाभावादिति ॥

धर्मिग्राहकमानेनाकाशस्यैकत्वे सिद्धे तस्योपाधिनिमित्तं भेदमाह—लोकालोकेति, लोकाकाशोऽलोकाकाशश्चेति द्विविधमित्यर्थः, धर्माद्यवच्छिन्नं नभो लोकाकाशस्तद्विपरीतोऽलोकाकाश इति भावः। ननु लोकाकाश एव भवतु किमलोकाकाशेनेति चेन्न लोको विद्यमानविपक्षः, व्युत्पत्तिमच्छुद्धपदाभिधेयत्वादघटविपक्षकघटवदित्यनुमानेन तत्सिद्धेः, न च घटादिरेवालोक इति वाच्यम्, नञा निषेध्यसदृशस्यैव बोधनात्, तस्माद्धर्माद्याधारात्मकलोकाकाशस्य विपक्षोऽलोकाकाशमेव भवितुमर्हतीति बोध्यम् ॥

लोकाकाशमानं वक्तुं परिच्छेदकलोकस्वरूपप्रदर्शनद्वारा परिच्छेद्यमानं स्पष्टयति—

**चतुर्दशरज्जुप्रमाणः पञ्चास्तिकायात्मको लोकस्तद्व्याप्योऽसंख्येयप्रदेशाऽऽत्मको लोकाकाशः। तद्भिन्नोऽलोकाकाशोऽनन्तप्रदेशात्मकः। धर्मादयस्त्रयोऽपि स्कन्धदेशप्रदेशभेदेन त्रिविधाः। पूर्णं द्रव्यं स्कन्धः। माध्यमिकौपाधिकभागा देशाः। केवलप्रज्ञापरिकल्पितसूक्ष्मतमो भागः प्रदेशः॥**

**चतुर्दशेति।** लोको हि भुवनं, स च पञ्चास्तिकायात्मकः, चतुर्दशरज्जुपरिमितश्च, तेन व्याप्य –परिच्छिन्नः, तत्र परिच्छिन्न इत्यनुक्त्वा व्याप्य इति वचनं पञ्चास्तिकायेषु परिच्छेदकतया व्यापकस्य ग्रहणार्थं, तादृशश्च धर्मो वा स्यादधर्मो वा, तथा च तावत्प्रदेशत्वमेवास्यापीत्याशयेनाह–असंख्येयप्रदेशात्मक इति। अलोकाकाशमाह–तद्भिन्न इति। लोकाकाशभिन्न इत्यर्थः। अनन्तप्रदेशात्मक इति, एतदपेक्षया च समस्ताकाशस्यानन्तप्रदेशात्मकत्वमित्यपि बोध्यम्। अथ धर्मादीनां त्रयाणां विशेषमाह–धर्मादय इति। अपिना जीवोऽपि तथैवेति सूचितम्, स्कन्धमाह–पूर्णमिति निखिलस्वस्वप्रदेशपरिपूर्णमसंख्येयप्रदेशात्मकमिति यावत्। माध्यमिकेति, पूर्णसमुदायादेकादिप्रदेशहीना आद्यादिप्रदेशं बुद्धिपरिकल्पिता विभागा देशा उच्यन्त इत्यर्थः। केवलेति। केवलज्ञानेन परिकल्पितः सूक्ष्मतमो निर्विभागो भागः केवलप्रज्ञयापि दुर्भेद्यः प्रदेश इत्यर्थः॥

अथ कालस्य धर्मादिद्रव्यपञ्चकपरिणामत्वेन तदन्तर्भूतत्वे पदार्थान्तरत्वे वा सर्वथा तत्स्वरूपनिर्वचनस्यावश्यकत्वेन तं लक्षयति—

**वर्त्तनालक्षणः कालः॥**

**वर्त्तनालक्षण इति।** तत्र कालस्य पर्यायात्मकत्वे वर्त्तना लक्षणं स्वरूपं यस्य स इति व्युत्पत्त्या वर्त्तनास्वरूपः काल इत्यर्थो बोध्यः। तत्र च वर्त्तना सादिसान्तादिचतुर्भेदभिन्नाया स्थित्या यत्किञ्चित्प्रकारेण द्रव्याणां वर्त्तनं, सैव कालव्यपदेशभाक्। तत्र च परिणामक्रियापरत्वापरत्वानामप्युपलक्षकं वर्त्तनापदं, तेषामपि कालव्यपदेशभाक्त्वात्। एतेषाञ्च द्रव्यप-

र्यायत्वात् कथञ्चिद् द्रव्याभिन्नत्वेन द्रव्याभेदवर्त्तिवर्त्तनादिविवक्षया कालोऽपि जीवाजीवतयोदितः, न तु पृथग्भूतं द्रव्यं, वर्त्तनादिपर्यायाणां द्रव्यत्वेऽनवस्थाप्रसङ्गात्, कालस्यास्तिकायत्वप्रसङ्गाच्च । अयमेव द्रव्यकालः । ईदृशाभिप्रायेणाऽऽगमः " **किमयं भंते ! कालेत्ति पवुच्चई ? गोयमा ! जीवा चेव अजीवा चेव** " इति ॥

यदि सर्वद्रव्यवर्ती वर्तनादिपर्यायः कालनाम्ना पृथग् द्रव्यं माभूत्, परन्तु सूर्यादिचाराभिव्यङ्ग्यो मनुष्यक्षेत्रवर्ती परमाणुवत्कार्यानुमेय शुद्धपदवाच्यत्वात्सत्त्वेनानुमीयमानो लोकप्रसिद्धः कालाभिधानप्पद्रव्यतया कथं न सिद्धयेदिति विभाव्यते तदा वर्त्तनया लक्ष्यतेऽनुमीयते योऽसौ वर्त्तनालक्षणः काल इत्यर्थो वाच्यः । एकस्मिन्नविभागिनि समये धर्मादीनि द्रव्याणि स्वकीयपर्यायैरादिमदनादिमद्भिरुत्पादव्ययध्रौव्यविकल्पैर्वर्तन्त इति तद्विषया वृत्तिर्वर्त्तना । सा च तुल्यजातीयानां भावानां युगपद्भाविन्यत्र विवक्षिता, तस्या एव कालापेक्षत्वात्, माकन्दादिषु मञ्जरिकादिवत् । एतेन मनुष्यक्षेत्रात्परत ऊर्ध्वाधोलोकयोश्च काललिङ्गानां वर्त्तनादीनां सत्त्वेन कुतो न तत्र कालोऽभ्युपगम्यत इति शङ्का परास्ता, तत्र भावानां वर्त्तनायाः कालानपेक्षत्वात्तत्र सतां पदार्थानां स्वयमेवोत्पद्यमानत्वाद्विनश्यमानत्वाद्वर्त्तमानत्वाच्च । सजातीयेषु सर्वेषु युगपत्तदनुद्भवात् । विवक्षितेन नवपुराणादिना तेन तेन रूपेण परमाण्वादिपदार्थानां शश्वद्भवनं सा वा वर्त्तना, तथा च स्वयमेव वर्त्तमानानां पदार्थानां या वर्त्तनशीलता सा बाह्यनिमित्तान्तरसापेक्षा कार्यत्वाद्घटादिवदिति वर्त्तनशीलत्वनिरूपितापेक्षाकारणत्वेन कालसिद्धिर्भवति । न च सा वर्त्तना समयपरिणतिस्वभावा दुरधिगमा चेति कथं तस्य पक्षत्वमिति वाच्यम्, व्यावहारिकस्य पाकस्य तण्डुलविक्लेदनलक्षणस्यौदनपरिणामस्य दर्शनात्, प्रतिसमयं प्रथमसमयादारभ्य सूक्ष्मपाकाभिनिर्वृत्तेरिव सर्वेषामपि द्रव्याणां स्वस्वपर्यायाभिनिवृत्तौ प्रतिसमयं वर्त्तनाया अनुमीयमानत्वादस्ति कालो नवपुराणादिपरिणामान्यथानुपपत्तेरिति ॥ तथा ह्यःश्वोऽद्यादिकालवचनान्यपि बाह्यार्थनिबन्धनानि, असमस्तपदत्वाद्रूपादिशब्दवत्, ह्यआदिकालवचनानि यथार्थानि यथाभ्युपगममाप्तैस्तथाभिधीयमानत्वात्, प्रमाणावगम्यः प्रमेयोऽर्थ इत्येवंविधवचनवदित्याद्यनुमानानि भाव्यानि । न चादित्यगतिनिबन्धना वर्त्तना, रुद्गतावपि वर्त्तनाया दर्शनेनापरहेतुत्वप्रसङ्गात् । तथाऽऽकाशप्रदेशनिमित्ता, तस्याधिकरणत्वात्, तस्मात्कालोऽस्त्येवायमेव चाद्धाकाल उच्यते । एवञ्च यत्र कालस्तत्र वृत्तिर्वर्त्तनाद्याकारेण परिणमते नान्यत्रेति नियमः । न च बाह्यद्वीपेषु भावानां वृत्तिः कालापेक्षा वृत्तिशब्दवाच्यत्वादिहत्यकुसुमवृत्तिवदिति तत्रापि कालसिद्धिरिति वाच्यम्, अलोकस्य वृत्तौ समयवृत्तौ च व्यभिचारात्, तथा चोत्पादव्ययध्रौव्यव्यतिरेकेण सत्त्वस्य गुणपर्यायव्यतिरेकेण च द्रव्यत्वस्यासम्भवात् कालस्यापि सत्त्वं द्रव्यत्वञ्च सिद्धमेव । ननु कालस्याविभागित्वात् परमनिरु-

द्वैकसमयरूपत्वात्समुच्छिन्नपूर्वापरकोटित्वादस्तिकायत्वाभावेन प्रदेशशून्यत्वात्प्रागभावप्रध्वंसाभावावस्थयोरसत्त्वेनोत्पादव्ययध्रौव्ययुक्तत्वं गुणपर्यायवत्त्वञ्च कथमिति चेदुच्यते, जिनवचनस्य प्रधानोपसर्जनीकृतेतररूपद्रव्यपर्यायोभयनयावलम्बित्वादेकस्यापि समयस्य निष्प्रदेशस्य द्रव्यपर्यायावबद्धवृत्तित्वमेव, द्रव्यार्थरूपेण प्रतिपर्यायमुत्पादव्ययधर्मापि स्वरूपानन्यभूतक्रमाक्रमभाव्यनाद्यपर्यवसानानन्तसंख्यापरिणामपर्यायप्रवाहव्यापिनमेकमेवात्मानमातनोति, अतीतानागतवर्त्तमानावस्थास्वपि कालः काल इत्यविशेषश्रुते सर्वदा ध्रौव्याशावलम्बनात्, तथा च श्वोभावेन विनश्यादद्यत्वे प्रादुर्भवति, अद्यत्वेनापि विनश्य ह्यस्त्वेनोत्पद्यते, कालत्वेन तु श्वोऽद्यह्यःपर्यायेषु सभवित्वादन्वयरूपत्वाद् ध्रुव एवेति, पर्यायार्थतया त्वत्यन्तविविक्तरूपत्वात्पर्यायाणा प्रत्युत्पन्नमात्रविषयत्वादतीतानागतयोरभावादेव न वृत्तो नापि वर्त्स्यन्निति तेन प्रकारेणासत्त्व, तथा च स्यात्सत्त्वं स्यान्नास्तित्वमिति व्यवस्थानात् गुणपर्यायवांश्च काल इति ॥

इत्थमवधृते कालस्वरूपे तत्प्रमाणे च तस्यास्तिकायत्वाभावेन स्कन्धदेशप्रदेशा न सन्ति किन्तु एकविध एव स इत्याह—

## स च वर्त्तमानस्वरूप एक एव । सोऽपि निश्चयव्यवहाराभ्यां द्विविधः ॥

स चेति । वर्त्तनया लक्ष्यमाणोऽद्धाकाल इत्यर्थः, न तु वर्त्तनास्वरूपात्मा कालः, तस्य जीवाजीवरूपत्वात् । एक एवेति वर्त्तमानैकसमयात्मक इत्यर्थ । अस्य द्वैविध्यमादर्शयति—सोऽपीति । वर्त्तमानैकसमयात्माऽद्धाकालविशेषः–प्रमाणकालोऽपीत्यर्थः । नैश्चयिको व्यावहारिकश्चेति द्विविधः कालस्समयरूप इति भावः । अद्धाकालविशेष –प्रमाणकालोऽतीतोऽ[1]नागतो वर्त्तमानश्चेति त्रिविधः । तत्र विद्यमानैकसमयात्मको वर्त्तमानो नैश्चयिकः । तमवधीकृत्य भूतस्समयराशिरतीत॰ । तमेव समयं वर्त्तमानमवधीकृत्य यो भावी समयराशि सोऽनागतः कालः । वर्त्तमानसमयान्यः सर्वोऽपि कालो व्यावहारिक इति भावस्तदुक्त– "अद्धाकालस्यैव भेदः प्रमाणकाल उच्यते । अहोरात्रादिको यद्व्यवहारनिस्तारस्यैभवः ॥ तथा, अत्र प्रमाणकालोऽस्ति प्रकृतस्स प्रतन्यते । अतीतोऽनागतो वर्त्तमानश्चेति त्रिधा स च ॥ अवधीकृत्य समयं वर्त्तमानं विवक्षितम् । भूतस्समयराशिर्यः कालोऽतीतः स उच्यते ॥ अवधीकृत्य

---

१ तत्रानागत कालोऽनादित्वानन्तत्वाभ्या समानोऽपि समयाधिक वर्त्तमानसमयस्य तत्र प्रवेशात्, नचातीते कुतो न तस्य प्रवेश इति वाच्यम् । अतीतस्य विनष्टरूपतयाऽविनश्वररूपस्य तस्य तत्र प्रवेशासम्भवात्, किन्त्वविनश्वरेऽनागत एवेति । अतीत कालश्चानागतकालात्समयेन न्यून । केचित्तु अतीताद्धातोऽनागताद्धाया अनन्तगुणत्व समत्वे चदानीं समयातिक्रमे समयोना स्यात्, अनन्तगुणत्व । नानन्तेनापि कालन गतेनासौ क्षीयत इति वदन्ति ॥

समयं वर्त्तमानं विवक्षितम् । भावी समयराशिर्यः कालस्स स्यादनागतः ॥ वर्तमानः पुनर्वर्तमानैकसमयात्मकः । असौ नैश्चयिकस्सर्वोऽप्यन्यस्तु व्यावहारिकः " ॥ इति जम्बूद्वीपप्रज्ञप्तिवृत्त्याद्यभिप्रायः ॥

तत्र नैश्चयिकं कालमाह—

**वर्त्तनादिपर्यायस्वरूपो नैश्चयिकः । ज्योतिश्चक्रभ्रमणजन्यस्समयावलिकादिलक्षणः कालो व्यावहारिकः ॥**

वर्त्तनादीति । वर्त्तनादिपर्यायैः स्वरूप्यते लक्ष्यते यस्स नैश्चयिक इत्यर्थः, वर्त्तनादिलिङ्गक इति यावत्, आदिना क्रियापरिणामपरत्वापरत्वानां ग्रहणम् । व्यावहारिकं कालमाह—ज्योतिश्चक्रेति, ज्योतिषां विमानविशेषाणां चक्रं समुदायस्तस्य भ्रमणेन जन्यो व्यङ्ग्यः, सूर्यादिचारव्यङ्ग्य इति भावः । समयावलिकादिलक्षण इति, योगिनापि यः कालविशेषो विभक्तुं न शक्यतेऽतिसूक्ष्मत्वात्स कालविशेषः समय उच्यते । असंख्येयसमयसमुदयसमितिसमागमनिष्पन्नाऽऽवलिका । आदिना मुहूर्त्तदिवसाहोरात्रपक्षमाससंवत्सरयुगपल्यसागरोत्सर्पिणीपरावर्त्ता ग्राह्याः । एतेषां विशेषो बोधः प्रवचनादवसेयः । कालस्यायं विभागकलाप उपचारार्थं कल्पितोऽवसेयः, समयस्यैकत्वेन विभागाभावात् समूहस्य चामुख्यत्वेनैव विभागासम्भवाच्च । परन्तु कालस्य समूहबुद्ध्यङ्गीकृतस्य विभागो वेदितव्यः ॥

अथ कालो नास्तिकायपञ्चकव्यतिरिक्तः किन्तु जीवाजीवद्रव्यपर्याय एव वर्त्तनादिक्रियारूपः । स च वर्तितुर्भावादनर्थान्तरं कालस्तत्परिणामत्वात्, कलनं संशब्दनं पर्यायाणामिति व्युत्पत्तेः । तथा च तेन तेन रूपेण सादिसान्तादिरूपेण नवपुराणादिरूपेण वा वर्त्तनैव द्रव्यसम्बन्धित्वाद् द्रव्यकाल उच्यते, जीवाजीवौ वा पर्यायपर्यायिणोरभेदोपचारात् । न खलु वर्त्तनापरिणामादिभ्यो भिन्नं द्रव्यमस्ति, समयावलिकादिरूपोऽपि नृक्षेत्रगः कालो न जीवाजीवेभ्यो व्यतिरिक्तः, सूर्यादिक्रियैव हि परिणामवती कालो नान्यः । पर्यायरूपत्वेन तस्यैकत्वेऽपि किञ्चिन्मात्रविशेषविवक्षया द्रव्यकालोऽद्धाकाल इत्यादिव्यपदेशः । तस्मात्तदुपचरितं द्रव्यमुच्यत इत्याशयेनाह—

**वस्तुतस्तु कालोऽयं न द्रव्यात्मकः । किन्तु सर्वद्रव्येषु वर्त्तनादिपर्यायाणां सर्वदा सद्भावादुपचारेण कालो द्रव्यत्वेनोच्यते । वर्त्तनादिपर्यायाश्च वर्त्तनाक्रियापरिणामपरत्वापरत्वरूपेण चतुर्विधाः । तत्र सादिसा-**

न्तसाद्यनन्तानादिसान्तानाद्यनन्तभेदभिन्नेषु चतुःप्रकारेष्वेकेनापि केनचित्प्रकारेण द्रव्याणां वर्त्तनं वर्त्तनेत्युच्यते । इयं वर्त्तना प्रतिसमयं परिवर्त्तनात्मिका, नातो विवक्षितैकवर्त्तना द्विसमयं यावदपि स्थितिं कुरुते । अतो या वर्त्तनायाः परावृत्तिस्सा पर्यायत्वेनाभिधीयते । भूतकाले भूता भविष्यति भविष्यन्त्यो वर्त्तमानकाले च भवन्त्यो या द्रव्याणां चेष्टास्सः क्रियापर्यायः। प्रयोगविस्रसापरिणामाभ्यां जायमाना नवीनत्वप्राचीनत्वलक्षणा या परिणतिस्स परिणामः ॥

वस्तुतस्त्विति । न द्रव्यात्मक इति, अपि तु पर्यायात्मक इति भावः । तर्हि द्रव्यकाल इति कथमित्यत्राह–किन्त्विति, तथा च पर्यायपर्यायिणोरभेदोपचारादिति भावः । अथ कालस्वरूपानुपकारभूतान् वा वर्त्तनादीन्निदर्शयति वर्त्तनादीति। तत्र द्रव्याणां वर्त्तनं वर्त्तना। देशान्तरप्राप्त्यादिलक्षणा चेष्टा क्रिया। द्रव्यस्य स्वजात्यपरित्यागेन परिस्पन्देतरप्रयोगजपर्यायस्वभावः परिणामः । यदाश्रयतो द्रव्यं परापरव्यपदेश्यं ते परत्वापरत्वे, परत्वं पूर्वभावित्वमपरत्वं पश्चाद्भावित्वमिति । यद्यपि परत्वापरत्वे प्रशंसाकृते क्षेत्रकृतेऽपि भवतः । यथा परो धर्मोऽपरोऽधर्म इति, अत्र परत्वं ज्ञानत्वमपरत्वमज्ञानत्वं । एकदिक्कालावस्थितयोरयं परोऽयमपर इति, अत्र परत्वं विप्रकृष्टत्वं सन्निकृष्टत्वमपरत्वं बोध्यम्, तथापि कालप्रसङ्गेन पूर्वपश्चाद्भावित्वरूपे एवात्र ग्राह्ये । अथ वर्त्तनां स्वरूपयति—तत्रेति चतुर्विधेषु पर्यायेष्वित्यर्थः । द्रव्याणां स्थितिश्चतुर्विधा, सादिसान्ता, साद्यनन्ता, अनादिसान्ता, अनाद्यनन्ता चेति । आसु केनचिद्रूपेण द्रव्यस्य वर्त्तनमित्यर्थः, तत्र द्रव्यं चेतनाचेतनभेदाद्द्विविधम् । सचेतनस्य सुरत्वनारकत्वतिर्यक्त्वमनुष्यत्वपर्यायमधिकृत्य सादिसान्ता स्थितिः । प्रत्येकं सिद्धत्वापेक्षया साद्यनन्ता सिद्धानां । भव्यत्वमाश्रित्य भव्यानामनादिसान्ता, सिद्धत्वप्राप्तौ भव्यत्वनिवृत्तेः । अभव्यत्वमुररीकृत्याभव्यजीवानामनाद्यनन्ता विज्ञेया। अचेतनेषु द्व्यणुकादिस्कन्धानां सादिसान्ता स्थितिः, उत्कृष्टतोऽप्येकेन द्व्यणुकत्वादिपर्यायेण पुद्गलद्रव्यस्यासंख्येयकालमात्रस्थितेः । अनागताद्धाया भविष्यत्कालरूपाया साद्यनन्ता, अतीताद्धाया अतिक्रान्तकालरूपाया अनादिसान्ता, धर्माधर्माकाशादीनां अनाद्यनन्ता बोध्या । प्रोक्तचतुर्विधस्थित्यन्यतमरूपेण स्वयमेव वर्त्तमानानां पदार्थानां समयाश्रया वर्त्तनशीलता वर्त्तनेति भावः । इयमिति, समयाश्रयेत्यर्थः । तस्मादेव कापि वर्त्तना न द्वित्र्यादिसमयवर्त्तिनी अत एव परिवर्त्तनशीला तदेव परिवर्त्तनं पर्याय उच्यत इत्याह–नात इति । क्रियापर्यायमाख्याति–भूतकाले भूता इति । करणं हि क्रिया स द्रव्य-

परिणामविशेषो यथा वर्त्तमानत्वमतीतत्वमनागतत्वञ्चेति, आकाशप्रदेशावल्यामङ्गुली वर्त्तते अतीताऽनागता चेति अङ्गुलीनिष्ठा वर्त्तमानत्वातीतत्वानागतत्वपर्यायाः कालाश्रयाः क्रियारूपा द्रव्यस्य, समयानाश्रयत्वेऽतीत एव वर्त्तमानोऽनागतश्च स्यात्, एवमनागतो वर्त्तमानश्च सङ्कीर्येत, न चैतदिष्टम्, ततश्च समयभेदेन भूतसमयराश्यपेक्षया भूता अङ्गुल्यादीनां क्रियाः, वर्त्तमानसमयापेक्षया भवन्त्यः, अनागतसमयराश्यपेक्षया भविष्यन्त्यः क्रियाः पर्याया उच्यन्ते, सा क्रिया त्रिधा प्रयोगविस्रसामिश्रजन्यभेदात्, तत्र प्रयोगजा जीवक्रियापरिणामसम्प्रयुक्ता शरीराहारवर्णगन्धरसस्पर्शसंस्थानविषया, विस्रसाजन्या प्रयोगमन्तरेण केवलमात्मद्रव्यपरिणामरूपा, परमाण्वभ्रेन्द्रधनुःपरिवेषादिरूपा विचित्रसंस्थाना च, मिश्रजन्या तु प्रयोगविस्रसाभ्यामुभयपरिणामरूपत्वाज्जीवप्रयोगसहचरिता चेतनद्रव्यपरिणामा कुम्भस्तम्भादिविषयेति बोध्या । एवंरूपत्वेऽपि क्रियायाः पदार्थानां भूतत्वभविष्यत्ववर्त्तमानत्वविशिष्टा गतिक्रियारूपाः क्रियापर्यायत्वेन ग्राह्याः, कालानुकूलत्वात् । अथ परिणाममाह-प्रयोगेति । स्पष्टं, तदुक्तं " द्रव्याणां या परिणतिः प्रयोगविस्रसादिजा । नवत्वजीर्णताद्या च परिणामस्स कीर्तित " इति । यद्यपि परिणामः क्रियाविशेष एव तथापि परिणामेन स्थितेरसङ्ग्रहात्क्रियातो भेदेनोत्कीर्तनम् । न च परिणाम एवोच्यतां किं क्रियया, तस्या अपि तन्त्रान्तर्गतत्वादिति वाच्यम् । द्रव्याणां द्वैविध्यप्रकाशनाय तदुपादानात्, द्रव्यं हि द्विविधं परिस्पन्दरूपमपरिस्पन्दरूपमिति, तत्र परिस्पन्दः क्रिया, अपरिस्पन्दः परिणाम इति ॥

अथ परत्वापरत्वपर्यायमाह—

**यदाऽश्रयतो द्रव्येषु पूर्वापरभावित्वव्यपदेशस्सः परत्वापरत्वपर्यायः ॥**

यदेति । कालोपकारप्रकरणात्कालकृते परत्वापरत्वेऽत्र ग्राह्ये न क्षेत्रप्रशंसाकृते, बालवृद्धयोः पुरुषयोः सन्निकृष्टे पर इति विप्रकृष्टेऽपर इति व्यवहारः कालकृतपरत्वापरत्वाभ्यां भवतीति पूर्वापरभावित्वप्रयोजके परत्वापरत्वे पर्यायविशेषौ कालापेक्षे इति भावः ॥

अथ षष्ठं पुद्गलद्रव्यं निरूपयति—

**रूपवन्तः पुद्गलाः ॥**

रूपवन्त इति । रूपमस्त्येषामेषु वेति रूपवन्तः, पुद्गला इति, अत्र बहुवचनं परमाणुभेदात्स्कन्धभेदाच्च तेषां भिन्नत्वप्रतिपादनार्थम् । अत्र रूपशब्दवाच्या मूर्तिः सा रूपादिसंस्थानपरिणामा, रूपरसगन्धस्पर्शैः परिमण्डलत्रिकोणचतुरस्रायतचतुरस्राद्याकृतिभिश्च यः परिणामस्सा मूर्तिः । यदि धर्माधर्मसिद्धानां प्रतिविशिष्टसंस्थानपरिणामवत्त्वेनातिप्रसङ्ग इति

विभाव्यते तर्हि रूप चक्षुर्ग्रहणलक्षण ग्राह्यम् । रूपव्यतिरेकेण पुद्गलानामनुपलब्धेर्द्रव्यार्थादेशतो रूपपरिणामात्पुद्गलद्रव्यमभिन्न, पर्यायार्थादेशाच्च कथञ्चिद्भेद· ततश्च कथञ्चिद्भेदाभेदसम्बन्धेन रूपवत्त्व पुद्गलद्रव्यस्य लक्षण बोध्यम् । मूर्तिमत्त्वस्य रूपवत्त्वस्य च प्रात्यर्थं सर्वससारिजीवग्रहणयोग्यस्पर्शवत्त्वलक्षण विहाय रूपवन्त इत्युक्तं, तेन यद्रूपवद्द्रव्य तन्मूर्त्तिमदिति लभ्यते, यद्यपि स्पर्शरसगन्धा अपि मूर्त्तिं न व्यभिचरन्ति तथापि स्पर्शादिशब्दानभिधेयत्वात्तल्लाभो न भवेदेवेति तल्लाभार्थमेव तथोपादानम् । एतेन सर्वत्र रूपरसगन्धस्पर्शाना सत्त्वेन केषाञ्चिदेव परमाणूना रूपवत्त्वं केषाञ्चिदेव गन्धवत्त्व रसवत्त्व स्पर्शवत्त्वमिति भिन्नजातीयत्व परमाणूना व्युदस्तं, यत्र रूपपरिणामस्तत्र सर्वत्र स्पर्शरसगन्धाना सत्त्वादुत्कटानुत्कटभेदेन च गुणानामुपलब्ध्यनुपलब्ध्युपपत्तेरिति ॥

एवञ्च पुद्गलमात्रस्य रूपरसगन्धस्पर्शवत्त्वाद्रूपवत्त्वमिव रसवत्त्वगन्धवत्त्वस्पर्शवत्त्वरूपाणि व्यभिचारादिविधुराणि लक्षणानि सम्भवन्तीत्यभिप्रायेणाह—

**एते रसगन्धस्पर्शवन्तोऽपि । लोकाकाशव्यापिनः । ते च स्कन्धदेशप्रदेशपरमाणुभेदेन चतुर्विधाः ॥**

एत इति । पुद्गला इत्यर्थः । कथञ्चिद्भेदाभेदादत्रापि मतुप् बोध्यः । अथवा नित्ययोगे मतुप्, रूपादिभिर्नित्यसम्बद्धा इत्यर्थः । तेनेन्द्रियसम्बन्धात्पूर्वमपि पुद्गला रूपाद्याकारभाज एव, न केवलं द्रव्यस्वभावा मूर्त्तिरेव चक्षुरादिग्रहणमासाद्य रूपादिव्यपदेशमश्नुते इति बोध्यम् । नन्वेषा पुद्गलाना क्वावगाहो लोकेऽलोकेऽपि वेत्याशङ्कायामाह–लोकाकाशेति । असख्येयप्रदेशात्मके लोकाकाश एवावगाहो न त्वलोके, धर्मास्तिकायविरहेण लोकाद्बहिर्गमनासम्भवादिति भाव । ननु लोकाकाशेऽपि किं सर्वात्मनाऽवगाहो घटजलाशयवद्वा एकदेशेनोच्यते–परमाणुर्हि स्वयं प्रदेशरूप·, प्रदेशान्तररहितोऽतस्तस्यैकस्मिन्नेव प्रदेशेऽवगाह·, द्व्यणुकस्य परिणामवैचित्र्यादेकस्मिन् द्वयोश्च त्र्यणुकस्यैकस्मिन् द्वयोस्त्रिपु च, एवंक्रमेण चतुरणुकादीना, सख्येयासख्येयानन्तप्रदेशाना स्कन्धानामेकसख्येयासख्येयप्रदेशेष्ववस्थानमिति । अथैषा स्कन्धादिविभागमाह—ते चेति । पुद्गलास्सक्षेपतोऽबद्धा बद्धाश्चेति द्विविधा , अबद्धा· परमाणव एते निरवयवा., बद्धाश्च स्कन्धा सावयवा·, स्कन्धापेक्षया देशप्रदेशभेदौ, तत्र स्कन्धः स्थौल्यभावेन ग्रहणनिक्षेपणादिव्यापाराऽऽस्कन्दनात् स्कन्ध इति परमाणुसघातरूपः ॥

तदाह—

**कृत्स्नतया परिकल्पितपरमाणुसमूहः स्कन्धः ॥**

कृत्स्नतयेति । विशिष्टरचनावान् पूर्ण परमाणुसघातः स्कन्ध इत्यर्थः, यथा घटादिः,

देशप्रदेशवारणाय पूर्ण इति, विशकलितपरमाणुव्रजवारणाय विशिष्टरचनावानिति, एतेनावयविनः परमाणुसङ्घातात् सर्वथा भिन्नत्वं व्युदस्तम्, नन्ववयवावयविनौ भिन्नौ भिन्नप्रतिभासत्वात्सह्यविन्ध्यवत्, न चासिद्धो हेतुस्साध्यधर्मिणि तत्सद्भावनिश्चयात्। न चानेकपुरुषप्रतिभासविषये एकस्मिन्नर्थे भिन्नप्रतिभासत्वसत्त्वेन व्यभिचार इति वाच्यम्, एकपुरुषापेक्षया भिन्नप्रतिभासत्वस्य हेतुत्वात्। न चैकेन पुरुषेण क्रमेण दृष्टे एकस्मिन्नेव घटे हेतोस्सत्त्वेन व्यभिचार इति वाच्यम्, भिन्नलक्षणत्वे सत्येकपुरुषापेक्षया भिन्नप्रतिभासत्वस्य हेत्वर्थत्वात्, अस्ति हि घटकपालादौ विभिन्नलक्षणत्वं भिन्नप्रतिभासत्वञ्च। न च ययोर्न तादात्म्यं न तयोरभिन्नदेशत्वं, यथा सह्यविन्ध्ययोः। अभिन्नदेशत्वञ्चावयवावयविनोरततस्तादात्म्यमेवेति वाच्यम्, अवयवावयविनोरभिन्नदेशत्वासिद्धेः, घटादेर्हि कपालो देशस्तस्य च तदवयव इति देशस्य भिन्नत्वमेवेति। न च कथञ्चित्तादात्म्यस्य प्रत्यक्षतः प्रतीतेस्सर्वथा भेदपक्षो बाधित इति वाच्यम्, भेदस्यैव पूर्वसिद्धत्वात् तादात्म्यस्य पूर्वसिद्धत्वाभावात्, कार्यकारणत्वधर्मधर्मित्वाधिकरणाधेयत्वविभिन्नक्रियात्वादिभिर्भेदस्य सिद्धेस्तस्मादवयवावयविनोर्भेद एवेति चेन्मैवम्, वृत्त्यनुपपत्तेः, सा हि वृत्तिः प्रत्याश्रयमेकदेशेन सर्वात्मना वा स्यात्, तत्र न ह्येकस्य प्रत्याश्रयमेकदेशेन वृत्तित्वं, निरंशत्वात्, नवा सामस्त्येन, अवयविनां बहुत्वापत्ते स्वावयवेषु प्रत्येकं सर्वात्मना वर्त्तमानत्वात्, न चाप्यवयविनः प्रदेशवत्त्वं न्याय्यं, तत्रापि वृत्तिविकल्पेनानवस्थानात्, एकदेशसर्वात्मभिन्नवृत्तिताया अप्रसिद्धत्वात्। न च समवाय एव प्रकारान्तरं वर्त्तत इति वाच्यम्, समवैतीति समवाय इति सम्प्रत्ययात् तत्रापि प्रत्याश्रयमेकदेशेन सर्वात्मना वेति विकल्पस्य निष्प्रत्यूहत्वात्, तत्र च दोषस्योक्तत्वात्। तस्मादवयविनः स्वाश्रयेभ्यो नैकान्तेन भेदस्तत्र वृत्त्युपलब्धेः। यतो यस्यैकान्तभेदस्तत्र तस्य न वृत्त्युपलब्धिर्यथा विन्ध्यस्य हिमवति। स्वाश्रयेषु त्ववयव्यादेर्वृत्त्युपलब्धेर्नैकान्तेनान्यत्वम्। अतस्सर्वथा भेदस्य बाधितत्वेन भिन्नप्रतिभासत्वहेतोः कालात्ययापदिष्टत्वम्। न च घटे ततस्सर्वथा भिन्नस्यापि जलस्य वृत्त्युपलब्ध्या व्यभिचार इति वाच्यम्। तत्र वृत्तेस्संयोगस्य परिणामविशेषस्य संयोगिभ्यां घटजलाभ्यां सर्वथा भेदासिद्धेः। अन्यथा संयोगाभावप्रसङ्गात्। ताभ्यां हि भिन्नस्य संयोगस्योत्पत्तौ जलस्य कथं घटे संयोग इति व्यपदेशो यतस्स तत्रैव वृत्तिर्भवेत्। संयोगस्य ताभ्यां जननात्तथा व्यपदेश इति तु तस्य कालादितोऽपि जननात्तत्रापि तथा व्यपदेशप्रसङ्गतो व्युदसनीयः। तस्मान्न संयोगिभ्यां संयोगोऽर्थान्तरभूत इति नोक्तहेतौ व्यभिचारः, सर्वथाऽर्थान्तरभूतस्य

१ कार्यकारणादिभेदस्य सर्वैः स्वीकृतत्वेन पूर्वसिद्धत्वादित्यर्थः । २ तत्प्रत्यक्षस्य विवादास्पदत्वेन तादात्म्ये साध्ये हेतौ संदिग्धासिद्धतेत्यर्थः । ३ एकस्यावयव्यादेर्भागाभावेन नैकत्रावयवे वृत्तिर्न भवतीति भाव ।

७

क्वचिदपि पृथगनुपलम्भेन विरोधोऽपि । ननु तर्ह्यवयवावयव्यादीनां का वा वृत्तिरिति चेत्कथञ्चित्तादात्म्यमित्युच्यते, न च तथासति तत्रापि वृत्तिविकल्पदोषप्रसक्तिरिति वाच्यम्, पदार्थाना भेदाभेदशबलैकवस्तुस्वरूपत्वेनावयवादिभ्योऽवयव्यादेस्तादात्म्यस्याशक्यविवेचनत्वेन तद्दोषानवकाशात् । एवमेव गुणगुणिनोः क्रियाक्रियावतोस्सामान्यतद्वतोरपि वृत्त्युपपत्तिर्बोध्येति दिक् ॥

अथ देशमाह—

## प्रदेशादर्वाचीनस्कन्धभागा देशाः ॥

प्रदेशादर्वाचीनेति । अयम्भावः, द्व्यणुकादिक्रमेणानन्तानन्तपरमाणुकावसानाः संघातविशेषात्समुत्पन्ना बहवस्स्कन्धा भवन्ति, तत्र स्वेषु स्वेषु स्कन्धेषु प्रदेशात्मकमेकं परमाणुं पूर्णञ्च स्कन्धं विहाय तदपृथग्भूता द्वित्र्यादिपरमाणुसंघाता देशा उच्यन्ते, न तावत्तदपृथग्भूत एकः परमाणुर्देशस्तस्य प्रदेशत्वात्, यथा घटस्य ग्रीवोदरपृष्ठादयो देशाः । तत्पृथग्भूतानान्तु ग्रीवादीना स्कन्धान्तरत्वमेवेति ॥

अथ प्रदेशमाह—

## केवलप्रज्ञागम्यस्कन्धानुवर्त्तिसूक्ष्मतमो भागः प्रदेशः ॥

केवलप्रज्ञेति । योऽस्य भागोऽतितरा सूक्ष्मः स्कन्धादपृथग्भूतः केवलप्रज्ञयैव गम्यस्स प्रदेश इत्यर्थः । यथा घटस्यापृथग्भूतस्सुसूक्ष्म एकः परमाणुभागः । स्कन्धोऽयं भेदात्सङ्घाताद् भेदसङ्घाताभ्याञ्च जायते, तत्र भेद. सहताना बाह्याभ्यन्तरपरिणामकारणसन्निधाने सति विदारणं, यथा पूर्णस्कन्धादेकस्याणोर्भेद एकाणुभेदात्तन्न्यूनस्कन्धो जायते, एवं द्वित्र्यादिपरमाणुभेदक्रमेण यावद्द्विप्रदेशस्कन्धैर्भाव्यम् । पृथग्भूतानामेकीभावः संघातः, यथा द्वयोः परमाण्वोस्संघातात् द्विप्रदेशो द्विप्रदेशस्याणोश्च संघातात्त्रिप्रदेशस्स्कन्ध इत्यादिप्रकारेण जायते, एकसामयिकाभ्या भेदसंघाताभ्याञ्च द्विप्रदेशादयः स्कन्धा उत्पद्यन्ते यथाऽन्यस्य परमाणोस्संघातेनान्यतः स्कन्धाद्भेदेनेति । एव परिप्राप्तबन्धपरिणाम एव स्कन्ध , तत्र च केषाञ्चित्स्कन्धाना बन्धो जीवव्यापारसम्प्रयुक्तो यथौदारिकशरीरजतुकाष्ठादिविषयः । केषाञ्चित्स्कन्धाना प्रयोगनिरपेक्षो वैस्रसिक आदिमदनादिमद्भिन्नः, तत्राद्यो विद्युदुल्कामेघादिविषयः स्निग्धरूक्षगुणनिमित्तः, अपरश्च धर्माधर्माकाशविषयः, केषाञ्चिच्च स्कन्धाना जीवप्रयोगसहचरिताचेतनद्रव्यपरिणतिलक्षणो यथा स्तम्भकुम्भादिविषयः । तथा स्कन्धा अन्त्यस्थौल्या आपेक्षिकसौक्ष्म्यस्थौल्या इत्थमनित्थसंस्थानाश्च, यथा निखिललोकव्यापी महास्कन्धोऽन्त्यस्थूलतावानवयवविकासमपेक्ष्यैव बोध्यम्, प्रवचने त्वस्य सूक्ष्मपरिणामत्वमुक्तम् । बदरादौ चामलकापेक्षया बदरं सूक्ष्म

चणकापेक्षया च स्थूलमिति, वृत्तत्र्यस्रचतुरस्राऽऽयतपरिमण्डलादिरूपमित्थं संस्थानं, ततोऽन्यदनित्थं संस्थानं, वृत्तादिरूपेण निरूपयितुमशक्यत्वादिति ॥

अथ परमाणुमादर्शयति—

**स एव पृथग्भूतश्चेत्परमाणुरिति व्यवह्रियते । अयं परमाणुस्सर्वान्तिमकारणं द्रव्यानारभ्यः कार्यलिङ्गकश्च ॥**

**स एवेति** । प्रदेश एवेत्यर्थः, स्कन्धादिति शेषः । एतेन परमाणोर्भेदादेवोत्पादोनसंघातान्नापि भेदसंघाताभ्यामिति सूचितम् । इदञ्च पर्यायनयाभिप्रायेण कार्यत्वोपवर्णनं विज्ञेयम्, स्नेहरौक्ष्याद्विविगमात्स्थितिक्षयतो द्रव्यान्तरेण भेदात्स्वभावगत्या च द्व्यणुकादिस्कन्धभेदादुपजायमानत्वात् । द्रव्यनयापेक्षयात्वाह—अयमिति । सर्वान्तिमकारणमिति, सर्वेषां द्व्यणुकादिद्रव्याणां कारणं, सर्वमेव हि द्रव्यं विदार्यमाणमसंभवद्भेदपरमाणुपर्यवसानं जायते, न पुनरत्यन्ताभावरूपं निरुपाख्यमिति भावः । द्रव्यानारभ्य इति, स्वतो द्रव्यावयवद्वारेणाभेद्यः, द्रव्यान्तरावयवद्रव्यभिन्नत्वात् । रूपादिभिस्तु स्याद्भेदवान्, न च परमाणुरसन् निष्प्रदेशत्वाद्गगनकुसुमवदिति वाच्यम्, सावयवद्रव्याभावात् सावयवप्रतिक्षेपेण चावश्यमनवयवेन सता वस्तुनैव भवितव्यं स चादिमप्रदेशोऽणुरित्युच्यते, न च परमाणुः सावयवः संस्थानित्वात् कलशादिवदिति वाच्यम्, असिद्धेः, संस्थानस्य द्रव्यावयवप्रयुक्तत्वाद्द्रव्यावयवासिद्धौ तदसिद्धेः, नाप्यसन्परमाणुरसंस्थानित्वादिति वाच्यम्, आकाशादौ व्यभिचारात् । तथा च परमाणुर्द्रव्यात्मना स्यान्निरवयवो भावात्मना च स्यात्सावयवः, रूपाद्यवयववत्त्वात् तथा द्रव्यार्थादेशात्स्यात्कारणं, पर्यायार्थादेशाच्च स्यात्कार्यं स्कन्धभेदादुपजायमानत्वात् एवञ्च स्यान्नित्यमनित्यञ्च । कार्यलिङ्गकश्चेति । अणूनामस्तित्वं कार्यलिङ्गादवसेयं, कार्यलिङ्गं हि कारणं, नासत्सु परमाणुषु शरीरेन्द्रियमहाभूतादिलक्षणस्य कार्यस्य प्रादुर्भावः । ननु सर्वान्तिमकारणत्वेन परमाणोर्निरवयवत्वात्कथमणुकयोः संहतौ द्व्यणुकस्कन्धो जायते, संश्लेषासंभवात्, संश्लेषो हि तयोरेकदेशेन सर्वात्मना वा स्यात्, नाद्यः सावयवत्वापत्तेः, नान्त्यः सकलस्यापि जगत एकपरमाणुमात्रत्वापत्तेरिति चेन्न, अनेकवस्तुविषये निरवशेषाभिधायित्वेन प्रसिद्धस्य सर्वशब्दस्य द्रव्यात्मनैकस्मिन् परमाणौ प्रयोगासम्भवात् । एकदेशशब्दस्यापि नानात्वेन निश्चितस्य पदार्थस्य कस्यचिद्भागाभिधायिनो निर्भागपरमाणुविषये प्रयोगासंभवाच्च । स्वयं ह्यवयवभूतः परमाणुः परमाणुना सह भेदेन योगमायाति, न त्वण्वन्तरमाविशति, तस्य सक्रियत्वेन परमाणुस्याकाश एवाऽऽवेशनात्, न च परमाणावनावेशे योगो न संभवति द्व्यणु-

१ द्रव्यपर्यायार्थादेशत इत्यर्थः ।

लवत् परस्परमनाश्लिष्टत्वादिति वाच्यम्, आवेशतो योग इत्यनुक्तेः किन्तु निरवयवत्वात्, तस्य च द्रव्यप्रदेशान्तरं न संयुक्तमपि तु स्वयमेवेति न कश्चिद्दोषः । अपि च योगस्सम्प्राप्तिलक्षणो न चासौ प्रदेशैरेव क्रियते, निष्प्रदेशस्यापि स्वयं प्राप्तौ विरोधाभावात्। एवं परमाणव एते प्रतिघातिनोऽप्रतिघातिनश्च तत्र प्रतिघातस्त्रिविधो बन्धलक्षण उपकाराभावलक्षणो वेगलक्षणश्चेति । बन्धपरिणामप्रतिघातः स्निग्धरूक्षत्वप्रयुक्तबन्धतः, लोकादन्यत्र जीवाजीवानां गतेः प्रतिघात उपकाराभावात्, आगच्छता वैस्रसिकवेगवता परमाणुना परमाणोः प्रतिघातो वेगात् वेगवतोरेवाण्वोः प्रतिघातात्, एकस्मिन्नेवाकाशप्रदेशेऽनन्तानामपि परमाणूनामवगाढत्वमप्रतिघातपरिणामात्, व्याप्तैकापवरके प्रदीपप्रभयेवान्यप्रदीपप्रभाणां, शीततमश्शब्दपुद्गलानामप्रतिघातित्वदर्शनात् । इत्थञ्च परिणामविशेषात्प्रतिघातित्वमप्रतिघातित्वञ्च सम्भवति पुद्गलेषु, यथा शब्दस्तावत् तिरस्कृतोऽपि कुड्यादिभिरप्रतिहन्यमानः श्रवणपथमभ्युपैति, स एव कदाचिदुह्यमानत्वाद्वायुना प्रतिहन्यते प्रतिवातस्थितेनानुपलभ्यमानत्वात्, अनुवातस्थितेनोपलभ्यमानत्वाच्चेति दिक् ॥

अथ पुद्गलानां न केवलं स्पर्शादय एव धर्मा अपि तु शब्दादयोऽपीत्याह—

**शब्दान्धकारोद्योतप्रभाच्छायाऽऽतपादिपरिणामवान् ॥**

शब्देति । प्रत्यर्थनियतसङ्गतवर्णादिविभागवान् ध्वनिः शब्दः, अनादिवृद्धपरम्परासङ्केतप्रसिद्धिवशात् प्रत्यर्थनियतत्वं, परस्परापेक्षातः स्वाभिधेयैकार्थकारितया शिबिकोद्वाहकवत् सङ्गतत्वं वर्णपदवाक्यानि, अव्यक्तशब्दश्च विभागस्तद्वान् ध्वनिरेव शब्दस्स च पुद्गलपरिणामत्वात्प्रतिविशिष्टपरिणामानुगृहीतः पुद्गलद्रव्यरूप एव, अत एव मूर्त्तत्वं द्रव्यान्तरविक्रियापादनसामर्थ्याच्च । न च शब्दो न पुद्गलपरिणामो निश्छिद्रभवनाभ्यन्तरतो निर्गमनात्, तत्र बाह्यतः प्रवेशात्, व्यवधायकाभेदनादेश्च दर्शनात्, यस्तु पुद्गलस्वभावो न तस्यैवंदर्शनं, यथा लोष्टादेः, तथादर्शनं च शब्दस्य, ततो न पुद्गलस्वभावत्वमिति वाच्यम्, पुद्गलस्वभावत्वेऽपि तदविरोधात् सूक्ष्मस्वभावत्वाद्धि तस्य निश्छिद्रनिर्गमनादयो न विरुद्ध्येरन् स्नेहादिस्पर्शादिवत्, कथमन्यथा पिहितकलशाभ्यन्तरतस्तैलजलादेर्बहिर्नि-

---

१ बन्धपरिणामोऽन्योऽन्याङ्गाङ्गिभावपरिणाम, न तु नैरन्तर्येण परस्पर संयोगमात्रं, तथा सति प्रतिघातो न स्यादेव । अनन्तानामपि परमाणूना संयोगवृत्त्यैकस्मिन्नाकाशप्रदेशेऽप्रतिघातेन वृत्तेरिति भाव । २ एकस्मिन् परमाणौ कथं प्रतिघातित्वाप्रतिघातित्वे विरुद्धे स्त इत्याशङ्कायां सदृष्टान्तमाहेत्थञ्चेति । ३ स्वय विशेषणानाम धर्माद्यनादीति । ४ शब्दस्य मूर्त्तपुद्गलपरिणामत्वादित्यर्थ । शब्दस्य मूर्त्तत्वे हेत्वन्तरमाह द्रव्यान्तरेति, चशब्दो हेत्वन्तरसमुच्चायक, तेन प्रतीघातित्वाद्द्वारानुविधायित्वादित्यादयो हेतवो माह्या ॥

गैमनं स्निग्धतादिविशेषदर्शनादनुमीयेत । कथं वा पिहितनिश्छिद्रमृद्घटादेर्जलाभ्यन्तरनिहितस्यान्तश्शीतस्पर्शोपलम्भात्सलिलप्रवेशोऽनुमीयेत, तदभेदनादिकं वा तस्य निश्छिद्रतया प्रेक्षणात्कथमुत्प्रेक्षेत, तस्मात्स्नेहादिस्पर्शादिभिर्व्यभिचारी हेतुः । न च शब्दो न पुद्गलस्वभावः, अस्पर्शत्वात् सुखादिवदिति बाधकसद्भावान्न पुद्गलस्वभावत्वं शब्दस्येति वाच्यम्, हेतोरसिद्धत्वात्, यतः कर्णशष्कुल्यां कटकटायमानस्य प्रायशः प्रतिघातहेतोः श्रवणाद्युपघातिनः शब्दस्य प्रसिद्धिरस्पर्शत्वकल्पनामस्तङ्गमयति । न च शब्दस्य पुद्गलपर्यायत्वे चाक्षुषत्वप्रसङ्ग इति वाच्यम्, गन्धपरमाणुवददृश्यत्वात्, एतेन शब्दस्याकाशगुणत्वं निरस्तं मूर्त्तत्वात्, नहि रूपादयो व्योमगुणा इति व्यवहारः शोभते तस्मात् पुद्गलानामेव तथाविधः परिणामः शब्दव्यपदेशमश्नुते, तथा च परिणामपरिणामिनोरभेदेन स्याद्द्रव्यं स्याद्गुण इति विज्ञेयम् । अन्धकारस्तावत्पुद्गलपरिणाम एव भित्त्यादिवद् दृष्टिप्रतिरोधकारित्वात्, पटादिवदावारकत्वात्, न तु तेजोऽभावरूपः, व्यवधानक्रियासामर्थ्यात् भित्त्यादिवत्, अभावरूपत्वे हि निष्क्रियत्वेन व्यवधानक्रियाकर्तृत्वं न स्यात्तस्य, न च यत्कार्यं द्रव्यं न तत्तैजसेन प्रकाशेन विरुध्यते, विरुध्यते च तमः, अतो न द्रव्यकार्यं तदिति वाच्यम्, तेजःप्रकाशयोरेकत्वेनाभ्युपगमात्, जलादिद्रव्यस्य च तद्विरोधकत्वेनोक्तहेतोरसिद्धत्वात् । न च तेजःप्रकाशयोरेकत्वं न सम्भवति, धाराधरे निरन्तरधारं वर्षत्यलिन्दकादिप्रतिष्ठापितेन प्रदीपेन बहिरपि प्रद्योतनात्, अन्यथा जलपातेन प्रशान्ततया बहिःप्रकाशो न दृश्येतेति वाच्यं, तथाविधत्वमपरित्यजतां प्रदीपसम्बन्धिनां पुद्गलानां जलबिन्दुसम्पर्केण तथाविधत्वपरित्यागात् तत्समकालमेव प्रदीपशिखया विकीर्णानां कृशानुपुद्गलानामपराणां तदाकाशदेशप्राप्तेः तेषाञ्च परिणामविशेषतो वडवानलावयवानामिव जलपातेन शमयितुमशक्यत्वात्, तथा च परिणामवैचित्र्यात् पुद्गलानां विरोधाविरोधपरिणामभाक्त्वेन नास्माकं कश्चन विरोध इति । एवमुद्योतोऽपि चन्द्रग्रहनक्षत्रादीनां शीतप्रकाशः, स आह्लादकत्वात् प्रकाशकत्वाच्च जलाग्न्योरिव मूर्तद्रव्यपरिणाम एव, पद्मरागादीनां प्रकाशोऽप्युद्योतोऽनुष्णाशीतत्वात्पुद्गलपरिणामः । प्रभा च सूर्याचन्द्रमसोस्तेजस्विपुद्गलानाञ्च प्रकाशरश्मिभ्यो निर्यदुपप्रकाशः सोऽपि विरलप्रकाशरूपत्वात् पुद्गलपरिणाम एव । एवं छायापि द्रव्यं क्रियावत्त्वाद्घटवत् छाया गच्छतीति प्रत्ययात्तस्य क्रियावत्त्वम् । देशाद्देशान्तरप्राप्त्युपलम्भतोऽपि तत्सिद्धेः । न च वारकद्रव्येण तेजसः सान्निध्यनिषेधे वारकद्रव्यगतक्रियायाः तेजोऽभावरूपायां छायायामारोपेण छाया गच्छतीति व्यवहार इति वाच्यम्, मुख्यक्रियाया बाधाभावे आरोपासम्भवात्, तस्या

---

१ दृष्टेर्व्यवधानकरणे सामर्थ्यादित्यर्थः । २ उत्पत्तिस्थानस्थानमेव प्रदीपपुद्गलानां जलेन विरोधो, न ततो बहिर्निस्सृतानामिति, स्याद्विरोधस्स्यादविरोधश्चेति भावः ।

गतिमत्त्वे बाधकाभावात्, एवं शिशिरत्वादाप्यायकत्वाच्च जलवातादिवद् द्रव्यत्वसिद्धेः । एवमातपोऽपि दिवाकरविमानात्स्वभावतः शीतलादपि समुपजायमान उष्णप्रकाशरूपः पुद्गलपरिणाम एव तापजनकत्वात्, स्वेदहेतुत्वादुष्णत्वात्कृशानुवदिति ॥

ननु पृथिव्या गन्धरसरूपस्पर्शवत्त्वाज्जलस्य रसरूपस्पर्शवत्त्वात्तेजसो रूपस्पर्शवत्त्वाद्वायोस्स्पर्शमात्रवत्त्वान्न पुद्गलपरिणामत्वं स्पर्शरसगन्धवर्णवतामेवागमे पुद्गलत्वप्रतिपादनात्, एषां च पृथिव्यादीनां विजातीयपरमाण्वारब्धत्वादित्याशङ्कायामाह—

**परमाणूनां परिणामविशेषा एव पृथिवीजलतेजोवायवः ॥**

इत्यजीवनिरूपणम् ॥

**परमाणूनामिति ।** परिप्राप्तबन्धपरिणामाः परमाणव एव स्कन्धरूपाः पृथिव्यादयः, एवं पृथिव्यादयः परमाणुपरिणामविशेषाः स्पर्शादिमत्त्वात्, ये न तत्पर्याया न ते स्पर्शवन्तो यथाऽऽकाशादयः, स्पर्शादिमन्तश्च पृथिव्यादयस्तस्मात्परमाणुपर्याया इति तत्परिणामविशेषत्वसिद्धिः, न च स्पर्शादिमत्त्वं पक्षैकदेशासिद्धम्, जलादौ गन्धाद्यभावादिति वाच्यम्, स्पर्शवत्त्वेन गन्धानुमानात्, क्वचिज्जलादौ गन्धाद्युपलब्धेश्च । न च तत्संयोगिनां पार्थिवद्रव्याणां संयोगेन तद्गुणत्वेन गन्धोपलब्धिस्तत्रेति वाच्यम्, साध्यसमत्वात्, तत्र तद्वियोगकालादर्शनात्, क्वचिदनुद्भूतस्वभावत्वेनैवानुपलब्धेः । एवं तेजोऽपि स्पर्शादिस्वभावकं, तद्वत्कार्यत्वाद् घटवत्, स्पर्शादिमतां हि काष्ठादीनां कार्यं तेजः, तत्परिणामाश्च, उपभुक्तस्य ह्याहारस्य स्पर्शादिगुणस्य वातपित्तश्लेष्मविपरिणामः, पित्तं च जठराग्निरुच्यते तस्मात्स्पर्शादिमत्तेजः । तथा वातश्च प्राणादिः, ततो वायुरपि स्पर्शादिमानिति भावः। अथाजीवनिरूपणं निगमयतीतीति।

इति तपोगच्छनभोमणि श्रीमद्विजयानन्दसूरीश्वरपट्टालङ्कार श्रीमद्विजयकमलसूरीश्वरचरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजयलब्धिसूरिणा विनिर्मितस्य तत्त्वन्यायविभाकरस्य स्वोपज्ञायां न्यायप्रकाशव्याख्यायामजीवनिरूपणो नाम तृतीयः किरणः ॥

## अथ चतुर्थः किरणः ॥

तदेवं जीवाजीवौ लक्षणप्रकाराभ्यां समासतोऽभिधाय क्रमायातं पुण्यतत्त्वं निरूपयितुं तल्लक्षणमाह—

**पौद्गलिकसुखोत्पत्तिजनकं कर्म पुण्यम् । पौद्गलिकमेतत् ॥**

**पौद्गलिकेति ।** पौद्गलिकसुखोत्पादहेतुत्वे सति कर्मत्वं लक्षणार्थः, पापेऽतिव्याप्ति-

वारणाय सत्यन्तं कालादिसमवायेऽतिप्रसङ्गभङ्गाय विशेष्यम् । मुक्तिसुखवारणाय पौद्गलिकेति सुखविशेषणम् । यदि मोक्षसुखजनके कर्मत्वाभावादेव नातिव्याप्तिरतः पौद्गलिकेति व्यर्थमित्युच्यते तदा पौद्गलिकसुखपदेनेष्टगतिजातिशरीरेन्द्रियविषयादयो विवक्षितास्तथाच शोभनगतिवर्णाद्यनुगुणं शुभानुभावञ्च पुण्यमिति फलितार्थः। ननु पश्वादयो देवदत्तगुणाकृष्टास्सन्तो देवदत्तमुपसर्पन्ति तम्प्रति नियमेनोपसर्पणाद् ग्रासादिवदिति ग्रासादेराकर्षणं यथा प्रयत्नेनात्मगुणेन भवति तथा पश्वादीनां देवदत्तात्मगुणाभ्यां धर्माधर्माभ्यां भवतीति न्यायादितंत्रान्तरीयैर्धर्माधर्मात्मकपुण्यपापयोरात्मगुणत्वाभ्युपगमादत्रापि किं पुण्यं गुणो वा पुद्गलविशेषो वेति शंकायामाह–पौद्गलिकमेतदिति । एतत्पुण्यं पौद्गलिकं पुद्गलपरिणामत्वात्पौद्गलिकमित्यर्थः । पश्वादेराकर्षणं हि लोके रज्ज्वादिना संयोगेन दृष्टं, अदृष्टेन त्वेषामाकर्षणं कथं वा स्यान्न संयोगेन द्रव्ययोरेव संयोगाभ्युपगमात्, न समवायेन असिद्धेः, नापि स्वाश्रयसयोगेन, अदृष्टाश्रयस्यात्मनो विभुत्वस्याप्रमाणत्वेन पश्वादिना सयोगासम्भवादिति भावः । ननु नास्त्येव पुण्यं पापं वा कर्म, कायाकारेण परिणतेभ्यो भूतेभ्य एव सुखदुःखाद्युत्पादसंभवादिति चेन्न, शरीराकारपरिणतपुद्गलानां साधारण्येन सुखदुःखवैषम्यस्य जीवेषु दृष्टस्यानुपपत्तेः, दृश्यते हि सुखित्वं कस्यचिदेव कदाचिदेव दुःखित्वञ्च तथा, भूतानामेव तन्निबन्धनत्वे वैचित्र्यमिदं न स्यादेव, न चैतद्वैषम्यं निर्निमित्तं, तथात्वे परमाणुवन्नित्यं सत्त्वं गगनकुसुमावन्नित्यमसत्त्वं वा स्यान्न तु कादाचित्कत्वं, न चाकस्मिकत्वमेव कादाचित्कत्वमिति वाच्यम्, कारणनिरपेक्षोत्पत्तिकत्वस्याकस्मिकत्वे निरन्तरोत्पत्तिप्रसङ्गात्, सामग्रीवैकल्यस्य वा प्रतिबन्धकस्य वा कस्यचिदभावात्, कारणोत्पत्तिभ्यां रहितत्वमेव तदिति चेत्तदा तयोर्नित्यत्वं वा, अत्यन्तासत्त्वं वा स्यात्, भवतु नित्यत्वमिति चेन्न तयोरुत्पादविनाशित्वेनानुभवात्, अत एव च नात्यन्तासत्त्वं, अथ नान्यस्मात् कस्मादपि भवनमपि तु स्वस्मादित्याकस्मिकत्वमिति चेदसतः स्वपदार्थत्वे तस्मात्कस्यचिदप्युत्पत्त्यभावात्, यदि स्वं सदेव तर्हि किमुत्पत्त्या, सत्त्वार्थमेवोत्पत्तेर्गवेषणात्, तस्मादवश्यं कारणेन केनापि भवितव्यमेव, भवतु तर्हि भूतातिरिक्तं किञ्चिदेकमेव तत्कारणमविलक्षणादपि कारणात् कार्यवैचित्र्यस्य प्रदीपादौ दर्शनात्, प्रदीपो हि प्रकाशकारी तैलविनाशकारी वर्त्तिविकारकारी चेति, तथापि वैचित्र्यानुपपत्तेः, सर्वे सुखिनो वा स्युर्दुःखिनो वा, दृश्यते च सुखादिवैचित्र्यं, तदवश्यमेव विचित्रस्य कर्मणः फलमभ्युपेयम्। अस्त्येव प्रदीपादावपि वैचित्र्यं, येन रूपेण प्रकाशकारी प्रदीपादिर्न तेन रूपेण वर्त्तिविकारकारी प्रतिक्षणं

१. आरोग्यचिरजीवित्वाद्यस्वाम्यभोगतोषप्रकर्षमोक्षरूपेषु सुखेषु मोक्षमेव सर्वोत्तम सुखम्, परंतु रागद्वेषात्मकत्वात् सुखाभिमानजनकत्वात्, तस्मात् न सुखमेतदेव च पौद्गलिक सुखमिति भाव ॥

पर्यायभेदात्, न च स्रक्चन्दनवनितादयस्सुखस्य हेतवो विषाहिकण्टकादयस्तु दुःखस्येति प्रत्यक्षा एव सुखदुःखहेतवः किमदृष्टेन निमित्तान्तरेणेति वाच्यम्, व्यभिचारात् तादृग्वनितादिपदार्थसत्त्वेऽपि पुत्रादिवियोगव्यथितस्य सुखाभावात् सुखेऽपि दुःखेऽपि तारतम्यदर्शनात्, नैतददृष्टं कमपि हेतुमन्तरेण युज्यते, तदेव पुण्यपापात्मकं बहुविभेदमदृष्टं कर्मेत्युच्यते, ननु काणत्वखञ्जत्वादिशरीरादिवैलक्षण्येन यदि कर्म साध्यते तर्हि कार्यस्य मूर्त्तत्वेन कर्मापि मूर्त्तं स्यादिति चेत्सत्यमस्माभिः प्रयत्नेन साधयितव्यस्य भवतैव साधनात् मूर्त्तमेव हि कर्म, तत्कार्यस्य शरीरादेर्मूर्त्तत्वात्, यस्य यस्य कार्यं मूर्त्तं तत्तत्कार्यस्य कारणमपि मूर्त्तम्, यथा घटस्य परमाणवः, यथामूर्त्तं कार्यं न तस्य कारणं मूर्त्तं यथा ज्ञानस्यात्मा । तथा मूर्त्तं कर्म, तत्सम्बन्धे सुखादिसंवित्तेः, यत्सम्बन्धे सुखादि संवेद्यते तन्मूर्त्तं दृष्टं यथाऽशनाद्याहारः, यथामूर्त्तं न तत्सम्बन्धे सुखादि संविदन्ति, यथाऽऽकाशसम्बन्धे, एवं यत्सम्बन्धे वेदनोद्भवः तन्मूर्तं दृष्टं यथाऽनलः, भवति च वेदनोद्भवः कर्मसम्बन्धे तस्मात्तन्मूर्त्तं, तथा मूर्त्तं कर्म, आत्मनो ज्ञानादीनाञ्च तद्धर्माणां व्यतिरिक्तत्वे सति बाह्येन स्रगादिना बलस्याधीयमानत्वाद् यथा स्नेहाद्याहितबलो घटः, आधीयते च बाह्यैर्मिथ्यात्वादिहेतुभूतैर्वस्तुभिः कर्मण उपचयलक्षणं बलं, तस्मात्तन्मूर्त्तं, एवं मूर्त्तं कर्म, आत्मादिव्यतिरिक्तत्वे सति परिणामित्वात्, क्षीरवत्, न चायं हेतुरसिद्धः, कर्मकार्यस्य शरीरादेः परिणामित्वदर्शनात्, यस्य कार्यं हि परिणामि सोऽपि परिणामी, यथा दध्नस्तक्रादिभावेन परिणामात्पयसोऽपि परिणामित्वमिति । न चाभ्रादिविकाराणां यथा वैस्रसिकी विचित्ररूपतया परिणतिरभ्युपगम्यते तथा परिदृश्यमानं शरीरमेव काणत्वखञ्जत्वसुखित्वदुःखित्वादिभावैर्विचित्रतया परिणमति किमन्तर्गडुना कर्मणेति वाच्यम्, कर्मणोऽपि शरीरत्वात्, तद्धि केवलं श्लक्ष्णतरमभ्यन्तरञ्च जीवसंश्लिष्टत्वात्, यथा च बाह्यतनोरभ्रादिविकारवद्वैचित्र्यमभ्युपगम्यते तथैव कर्मतनोरपि तदभ्युपगमस्य न्याय्यत्वात् । न च बाह्यतनोस्तत्स्वीकार उचितो दृश्यत्वात्, कर्मरूपायास्तु सर्वथाऽप्रत्यक्षत्वाद्वैचित्र्यं कथमिच्छाम इति वाच्यम्, मरणकाले दृश्यमानस्थूलशरीरस्य सर्वथा विप्रमुक्तस्य जन्तोर्भवान्तरगतस्थूलशरीरग्रहणहेतुसूक्ष्मकर्मशरीरस्यावश्यकत्वात्, अन्यथा देहान्तरग्रहणानुपपत्तेर्मरणानन्तरं सर्वस्याप्यशरीरत्वादयत्नेनैव संसारव्यवच्छित्तिः स्यात् । न च मूर्त्तस्य कर्मणोऽमूर्त्तेनात्मना सम्बन्धो न स्यादिति वाच्यम्, मूर्त्तस्य घटस्यामूर्त्तेनाकाशेन सम्बन्धात्, संसारिणो जीवस्य सर्वथाऽमूर्त्तत्वाभावाच्च । तस्मात्सिद्धं कर्म विचित्रं मूर्त्तञ्चेत्यलं प्रसङ्गेन ॥

तत्र पुण्यमिदं कार्यकारणभेदेन द्विविधं, सुपात्रदानादिभिर्वक्ष्यमाणैः कारणैस्सातोच्चै-

---

१ ननु घटेनाऽऽकाशस्य संयोगे न मूर्त्तत्वं निबन्धनमपितु व्यापकत्वमित्यनुयोगे त्वाह संसारिण इति ॥

गोत्रादिकमनुभूयते जीवैः, तत्र सुपात्रदानादिकं कारणात्मकं पुण्यं, सातोच्चैर्गोत्रादिकन्तु कार्यात्मकं, आत्मशुभाध्यवसायस्य तु पुण्यत्वमौपचारिकममूर्त्तत्वात्, मूर्त्तस्यैव बन्धकत्वाच्च। तदिदं पुण्यपापात्मकं कर्म संतत्याऽनाद्यं, ससारस्यानादित्वात्, अन्यथा पूर्वं जीवस्य पश्चात्कर्मणस्सम्भवः, पूर्वं वा कर्मणः पश्चाज्जीवस्य, उभयोरपि वा युगपद्वाऽन्यः, तत्रैकोऽपि पक्षो न सम्भवति, निर्हेतुकत्वेनात्मनः प्रथम सम्भवासभवात्, तस्यानादिसिद्धत्वेऽपि पश्चात् कर्मबन्धो न सम्भवत्येव, कारणाभावात्। निष्कारणं वा सम्भवे मुक्तस्यापि कर्मबन्धापत्तेः, तथा प्रथमं कर्मसमुद्भवोऽपि न न्याय्यः, कर्त्तुर्जीवस्य तदानीमभावात्, अक्रियमाणस्य कर्मत्वायोगात्, कारणं विनैव तस्य समुद्भवे नाशस्याप्यकारणत्वापत्तेः। तथा न युगपदुत्पत्तिसम्भवः, उभयस्यापि निर्हेतुकत्वात्, युगपदुत्पन्नयोस्तयोः कर्तृकर्मभावस्य सव्येतरगोविषाणयोरिवासम्भवात्। तस्मादनादिरेव जीवकर्मणोः सम्बन्धः। न च जीवकर्मसंयोगसन्तानस्यानादित्वे जीवनभसोरिवानन्तत्वमपि स्यादिति वाच्यम्, बीजाङ्कुरादीनां सतानस्यानादेरपि सान्तत्वदर्शनात्, दृश्यते हि बीजाङ्कुरयोर्मध्येऽन्यतरस्यानिवर्तितकार्यस्यैव व्युच्छेद इति। तथा च मिथ्यात्वाविरतिकषाययोगरूपैर्बन्धहेतुभिर्जीवोऽष्टविधेषु औदारिकादिकर्मवर्गणापुद्गलेषु कर्मशरीरग्रहणयोग्यान् पुद्गलानादत्ते, कर्मतया च ग्रहणसमय एव तान् परिणमय्य शुभाशुभपरिणामानुसारेण कर्मपुद्गलेषु स्थितिरसादीन् निष्पाद्य क्षीरोदकवदात्मप्रदेशैस्सह सश्लेषयति। एवम्भूत एव तस्य स्वभावो यत् कर्मवर्गणागत कर्मयोग्यमेव द्रव्यमेकक्षेत्रावगाढमेव रुचकप्रदेशभिन्नैः सर्वैरपि स्वप्रदेशै रागद्वेषक्लिन्नस्वरूपत्वाज्जीवो गृह्णाति न तु स्वात्मभिन्नप्रदेशावगाढं कैश्चिदेव प्रदेशैर्गृह्णाति। तत्र कर्मराशिश्च घात्यघातिभेदेन द्विविधः, अनन्तज्ञानदर्शनचारित्रवीर्यात्मकात्मगुणानां सर्वथा देशेन वा प्रतिहननसमर्थं कर्म घातिकर्मेत्युच्यते, ज्ञानदर्शनावरणवेदनीयमोहनीयायुष्कनामगोत्रान्तरायरूपाष्टविधमूलप्रकृतिभूतकर्मसु ज्ञानदर्शनावरणमोहनीयान्तरायचतुष्टयमात्मनो ज्ञानादिगुणघातकत्वादज्ञानाद्यशुभविपाकजनकत्वाच्चाशुभरूपं घातिकर्म। वेदनीयायुष्कनामगोत्रचतुष्टयन्तु शुभाशुभविपाकजनकत्वाज्ज्ञानाद्यविघातकत्वाच्च शुभाशुभरूपमघातिकर्म, तत्र यच्छुभं कर्म तत्पुण्यमशुभन्तु पापम्, एतच्चोभयमपि न मेर्वादिभावेन परिणतस्कन्धवदतिबादरं, सूक्ष्मेण कर्मवर्गणाद्रव्येण निष्पन्नत्वान्नापि परमाणुवदतिसूक्ष्ममिति विज्ञेयम्॥

द्रव्यभावभेदेन द्विविधपुण्यमध्ये यत्पौद्गलिकं पुण्यत्वेनात्र वर्णितं तदेव द्रव्यपुण्यमित्याह—

इदमेव द्रव्यपुण्यमुच्यते। द्रव्यपुण्यनामकर्मोत्पत्तिहेतुरात्मनश्शुभाध्यवसायो भावपुण्यम्॥

इदमेवेति । पौद्गलिकमेवेत्यर्थः, भावपुण्यमाह–द्रव्यपुण्येति । येनाऽऽत्मनोऽध्यवसायविशेषेण द्रव्यात्मकपुण्यस्य निष्पत्तिः सोऽध्यवसायो भावपुण्यनामेत्यर्थः ॥

अथ मूलप्रकृतिबन्धानामष्टविधकर्मणामुत्तरप्रकृतिबन्धेषु यानि पुण्यरूपाणि द्विचत्वारिंशद्विधानि पूर्वोदितानि प्रत्येकं तेषां स्वरूपं निरूपयितुमुपक्रमते—

**आयुर्नामगोत्रकर्मभिन्नमनुकूलवेदनीयं कर्म सातम् । वेदनीयायुर्नामकर्मभिन्नं गौरवजनकं कर्म उच्चैर्गोत्रम् । मानुषत्वपर्यायपरिणतिप्रयोजकं कर्म मनुजगतिः ॥**

आयुरिति । आयुर्नामगोत्रकर्मभिन्नत्वे सत्यनुकूलवेदनीयत्वे च सति कर्मत्वं सातवेदनीयस्य लक्षणम् । उच्चैर्गोत्रादावतिव्याप्तिवारणाय विशेषणे । अनुकूलवेदनीयं कर्म सातमित्येतावन्मात्रोक्तौ सर्वस्यैव पुण्यात्मककर्मणोऽनुकूलत्वेनाह्लादादिरूपेण वेदनीयत्वादतिव्याप्तिरिति प्रथमं सत्यन्तं, असातवेदनीयेऽतिव्याप्तिवारणाय द्वितीयं सत्यन्तम् । कर्मत्वानुक्तौ सातानुकूलाध्यवसाये कालादिसमवाये वातिव्याप्तिरतस्तदुपात्तम् । देवादिषु गतिषु[3] कर्तुरात्मनश्शरीरमनोद्वारेणाऽऽगन्तुकानेकमनोज्ञद्रव्यक्षेत्रकालभावसम्बन्धसमासादितपरिपाकावस्थं बहुभेदं सुखपरिणतिरूपमिष्टं यदुदयाद्भवति तत्सातवेदनीयमिति भावार्थः । पञ्चदशसागरोपमकोटीकोट्योऽस्य परा स्थितिः, पञ्चदशवर्षशतान्यबाधा, जघन्या काषायिकी द्वादशमुहूर्त्ता, अन्तर्मुहूर्त्तमबाधा, इयञ्च सञ्ज्ञिपञ्चेन्द्रियस्यैव । अकषायिकी तु जघन्यत उत्कृष्टतोऽपि सयोगिकेवल्यादौ समयद्वयमात्रं स्थितिः । उच्चैर्गोत्रस्वरूपमाह—वेदनीयेति । वेदनीयायुर्नामकर्मभिन्नत्वे सति गौरवजनकत्वे च सति कर्मत्वं लक्षणार्थः । सातादावतिव्याप्तिवारणाय विशेषणद्वयम् । गौरवजनकत्वे सति कर्मत्वस्य सद्वेदनीयवतो देवायुष्कस्य तीर्थकरनामकर्मणश्च गौरवदर्शनात् तत्र तत्र सत्त्वादतिव्याप्तिव्युदासाय प्रथमं सत्यन्तम् । नीचैर्गोत्रेऽतिव्याप्तिरतो द्वितीयं सत्यन्तम् । अध्यवसायविशेषे कालादौ वाऽतिव्याप्तिवारणाय विशेष्यम् । यदुदयाज्जीव आर्यदेशे मगधादौ हरिवंशाद्युत्कृष्टजातिषु सम्भ्रान्तकुलेषु प्रभुसमीपाऽऽस्थानेषु सम्भवमानसत्कारैश्वर्यादींश्च लभते तदुच्चैर्गोत्रमिति भावार्थः । अस्य परा स्थितिर्विंशतिसागरोपमकोटीकोट्यः । अबाधाकालो वर्षसहस्रद्वयम् । जघन्या त्वष्टौ मुहूर्त्ता अन्तर्मुहूर्तमबाधा चेति ।

१ जीवस्याध्यवसायवशाद्ग्रहणकाले शुभाशुभादिविशेषणविशिष्टेन कर्मणा ग्रहणसमय एव शुभत्वमशुभत्वं वा भवतीति पुण्यकर्मनिष्पत्तावध्यवसायो हेतुरिति भाव ॥ २ शोधितमिथ्यात्वपुद्गलरूपसम्यक्त्वहास्यरतिपुरुषवेदानां केषाञ्चिन्मते पुण्यरूपत्वेऽपि मोहनीयभेदत्वेन विपर्यासहेतुत्वात्पापरूपत्वमिति तदुपेक्ष्य द्विचत्वारिंशद्विधत्वं पुण्यस्यात्रोक्तम् ॥ ३ बाहुल्येन देवेषु मनुजेषु च सातोदयः कदाचिदसातोदयोऽपि, तिर्यक्षु नारकेषु बाहुल्येनासातोदयः कदाचित्सातोदयोऽपि ॥

मनुजगतिं लक्षयति मानुषत्वेति, मानुषत्वपर्यायपरिणतिप्रयोजकत्वे सति कर्मत्वं लक्षणार्थः। आत्मनो हि संसारस्थस्य मानुषत्वदेवत्वनारकत्वतिर्यक्त्वरूपाश्चतुःपर्याया गतिप्रयुक्ताः। तत्र यस्य कर्मण उदयादेकं कञ्चन पर्यायं विहाय मानुषत्वपर्यायपरिणामवान् भवति तत्कर्म मनुजगतिरिति भावः। सातादावतिप्रसङ्गवारणाय विशेषणम्। कालादावतिप्रसङ्गभङ्गाय विशेष्यम्, परिणतिप्रयोजककर्मत्वमात्रोक्तौ देवगत्यादावतिव्याप्तिरतो मानुषत्वपर्यायेति। पराभिमतमानुषत्वजातिव्युदासाय पर्यायेति। मानुषत्वपर्यायप्रयोजकत्वे सति कर्मत्वस्य मनुजानुपूर्व्यादौ सत्त्वात्तद्वारणाय परिणतीति, आनुपूर्व्याः परिणामेऽप्रयोजकत्वात्परिणामयोग्यस्यैव तत्स्थानप्रापकत्वादिति। अस्या उत्कृष्टा स्थितिः पञ्चदशसागरोपमकोटीकोट्यः, पञ्चदशवर्षशतान्यबाधा, जघन्या तु सागरोपमस्य द्वौ सप्तभागौ पल्योपमासङ्ख्येयभागेन न्यूनौ, अबाधात्वन्तर्मुहूर्तम् ॥

मनुष्यानुपूर्वीं वक्तुकामः प्रथममानुपूर्वीमादर्शयति—

**वक्रगत्या स्वस्वोत्पत्तिस्थानं गच्छतो जीवस्यानुश्रेणि गतिनियामकं कर्म आनुपूर्वी ॥**

वक्रगत्येति। अयमत्र भावः, जीवानां पुद्गलानाञ्च सर्वदिगवच्छेदेन गतिरस्ति। सा च स्वाभिमुख्याकाशप्रदेशानां पंक्तिमनुसृत्यैव न विरुद्धदिगवच्छेदेन गतिः। तत्र भवान्तरसंक्रान्त्यभिमुखो जीवो मन्दक्रियावस्थात्कर्मणो यानाकाशप्रदेशानवष्टभ्य शरीरवियोगं विदधाति प्रदेशान् तानेवाभिन्दन् देशान्तरं प्रयाति, विश्रेणिगत्यभावात्। त्रिधा च श्रेणिः, एका पूर्वापरायताकाशप्रदेशश्रेणिः[1], अन्या च दक्षिणोत्तरायता, इतरा तूर्ध्वाध आयता, आलोकान्तम्। तास्वेव जीवानां पुद्गलानाञ्च गतिर्न ता विभिद्य कदाचिदपि ते प्रयान्ति। तत्र जीवः कर्माधीनत्वाद्भवान्तरप्राप्तौ वक्रां गतिमपि प्रपद्यते, भवान्तरसंक्रान्तौ ऋजुवक्रभेदेन गतेर्द्वैविध्यात्। वक्रगतौ च तावदेकद्वित्रिविग्रहरूपास्त्रिधा गतयो भवन्ति, आद्या द्विसमया, द्वितीया त्रिसमया तृतीया तु चतुस्समया भवति। तत्रर्जुगतौ गच्छतो यथा बलीवर्दस्य न नासारज्जुरपेक्षिता, अपि तु तस्य वक्रतया नेयस्य एव, तथैव ऋज्व्यां गतौ जनिस्थानं प्राप्नुवतात्मनो नानुपूर्व्यपेक्षिता, किन्तु वक्रगत्यां प्रवृत्तस्य, तथा च वक्रया गत्या स्वस्वोत्पत्तिस्थानं गच्छतो जीवस्य श्रेण्यनुसारिगतिनियामककर्मत्वमा-

१ यद्यपि ऊर्ध्वस्य विश्रेणिरिति [illegible] तथापि भवान्तरगमने [illegible] तथोर्ध्वलोकादधो तिर्यग्लोकाद्वा ऊर्ध्वं वाऽनुश्रेण्यैव गमनमिति भाव. ॥ २ ऋजुगतौ [illegible] कर्मापेक्षणादिति ॥

नुपूर्व्या लक्षणम् । तत्र कर्मत्वानुक्तौ धर्मास्तिकायादावतिव्याप्तिः, वक्रगत्येत्यनुक्तौ ऋजुगत्यैवोत्पत्तिस्थानं प्राप्तुरात्मनः श्रेण्यनुसारि गतिनियामकपूर्वायुष्ककर्मण्यतिव्याप्तिरतस्तत्पदम्। तथा च वक्रारम्भकाले पूर्वायुष्कस्य नाशादग्रायुष्कप्राप्तेश्च न तत्र पूर्वायुष्कं गतिनियामकं, नाप्यग्रायुष्कं, गत्यारम्भोत्तरं प्राप्तेः, किन्त्वानुपूर्व्येव तादृशीति न दोषः। जीवस्येत्यनुक्तौ पुद्गलानामपि परप्रयोगापेक्षया वक्रगतिसम्भवेन तत्रानुश्रेणिगमनप्रयोजकप्रयोक्तृकर्मण्यतिव्याप्तिः स्यात्तद्वारणाय तस्योपादानम्। न च ऋजुगत्यामिव वक्रगत्यामपि नानुपूर्व्यपेक्षितेति वाच्यम्, पूर्वकायुष एवर्जुगतौ प्रयोजकत्वात्, वक्रगत्यान्तु पूर्वकायुषः क्षीणत्वेनानुपूर्व्या प्रयोजकत्वात् ॥

अथ मानुषानुपूर्वीलक्षणमाह—

**मनुष्यत्वोपलक्षिताऽऽनुपूर्वी मनुष्यानुपूर्वी। इमे मनुष्यद्विकशब्दवाच्ये देवत्वपर्यायपरिणतिप्रयोजकं कर्म सुरगतिः॥**

मनुष्यत्वोपलक्षितेति। मानुषोपपातक्षेत्रं गच्छतो जीवस्य श्रेण्यनुसारिगतिनियामकानुपूर्वीत्वं मनुष्यानुपूर्वीलक्षणं। अत्रानुपूर्वीपदं धर्मास्तिकाये, मानुषपदं च देवाद्यानुपूर्व्यामतिप्रसङ्गवारणायोपात्तम्। वक्रगत्येति पदन्त्वसम्भववारणाय। अस्याः परा स्थितिः पञ्चदशसागरोपमकोटीकोट्यः। पञ्चदशवर्षशतान्यबाधा, जघन्या तु सागरोपमस्य द्वौ सप्तभागौ पल्योपमासङ्ख्येयभागेन न्यूनौ, अन्तर्मुहूर्तञ्चाबाधाकालः। मनुजगतिर्मनुजानुपूर्वी च पूर्वोदितविभागवाक्यघटकमनुष्यद्विकशब्दवाच्येत्याह-इमे इति, मनुष्यगतिमनुजानुपूर्व्याविस्यर्थः। देवगतेः स्वरूपमाह-देवत्वेति। देवत्वपर्यायपरिणतिप्रयोजकत्वे सति कर्मत्वं लक्षणार्थः। पदकृत्यं मनुजगतिवद्विभावनीयम्। दशसागरोपमकोटीकोट्योऽस्या. परा स्थितिः। दशवर्षशतान्यबाधा, जघन्या तु सागरोपमसहस्रस्य द्वौ सप्तभागौ पल्योपमासङ्ख्येयभागेन न्यूनौ, अबाधा त्वन्तर्मुहूर्तकालः॥

देवानुपूर्वीलक्षणमाह—

**देवत्वोपलक्षिताऽऽनुपूर्वी सुरानुपूर्वी। इमे सुरद्विके। पञ्चेन्द्रियशब्दप्रवृत्तिनिमित्तभूतसदृशपरिणत्यात्मकजातिविपाकोदयवेद्यं कर्म पञ्चेन्द्रियजातिः॥**

---

१ तत्रानुपूर्वीनामकर्मणो नोदय, किन्तु पूर्वकर्मायुरनुभवन्नुत्पत्तिस्थान प्राप्त पुरस्कृतमायुरासादयतीति भाव ॥ २ वक्रयाऽन्तर्गत्येति शेष । पूर्वभवोत्तरकालीना तिर्यगायुत्तरोत्पत्तिस्थानप्राप्तिपूर्वभाविनी गतिरन्तर्गति ॥

देवत्वोपलक्षितेति । देवोपपातक्षेत्रं वक्रगत्या गच्छतो जीवस्यानुश्रेणिगतिनियामकानुपूर्वीत्वं लक्षणार्थः । प्राग्वदेव पदानां कृत्यं बोध्यम् । स्थितिरपि परा जघन्या च देवगतिवदेव । इमे इति देवगत्यानुपूर्व्याविल्यर्थः । सुरद्विके इति । विभागवाक्यस्थसुरद्विकपदवाच्ये इति भावः ॥ पञ्चेन्द्रियजातेः स्वरूपमाह–पञ्चेन्द्रियेति । अयं पञ्चेन्द्रिय इति, पञ्चेन्द्रियशब्दस्य प्रवृत्तौ निमित्तभूता या सदृशपरिणतिरूपा जातिस्तदात्मकविपाकोदयेन विज्ञेयं यत्कर्म सा पञ्चेन्द्रियजातिरित्यर्थः । पञ्चेन्द्रियत्वजातिसद्भावाद्धि पञ्चेन्द्रियोऽयमिति शब्दः प्रयुज्यते ततस्तादृशजातिरूपविपाकोदयेन यत्कर्म विज्ञायते कारणतया सा पञ्चेन्द्रियजातिरिति भावः । जातिनामकर्मेदं सञ्ज्ञाव्यवहारनिमित्तजातौ प्रयोजकं न तु द्रव्यात्मकपञ्चेन्द्रियेषु, तत्रेन्द्रियपर्याप्तिनामकर्मण. प्रयोजकत्वात्, नापि भावात्मकपञ्चेन्द्रियेषु तत्रेन्द्रियावरणक्षयोपशमस्यैव सामर्थ्यात् । तथा च पञ्चेन्द्रियसञ्ज्ञाव्यवहारनिबन्धनजातिप्रयोजकत्वे सति कर्मत्वं लक्षणार्थः । कालादिवारणाय विशेष्य, सातादावतिव्याप्तिवारणाय विशेषणम्, जातिप्रयोजकत्वे सति कर्मत्वस्य एकेन्द्रियादिजातिषु सत्त्वात्तद्वारणाय निबन्धनान्तम् । पञ्चपदमप्यत एव । जातिपदानुपादाने पञ्चेन्द्रियाणामपि पञ्चेन्द्रियसञ्ज्ञाव्यवहारनिबन्धनत्वात् तत्प्रयोजकेऽङ्गोपाङ्गनामकर्मणि इन्द्रियपर्याप्तौ चातिव्याप्तिरतस्तदुपादानम्, जातिर्नामाव्यभिचारिणा सादृश्येनैकीकृतोऽर्थः । अस्याः परा स्थितिर्विंशतिसागरोपमकोटीकोट्यः, वर्षसहस्रद्वयमबाधा च । जघन्य तु सागरोपमस्य द्वौ सप्तभागौ पल्योपमासङ्ख्येयभागेन न्यूनौ, अबाधा त्वन्तर्मुहूर्त्तकालः ॥

अथौदारिकादिशरीरनामकर्मस्वरूपमाख्याति—

**औदारिकशरीरयोग्यगृहीतपुद्गलानां शरीरतया परिणमनप्रयोजकं कर्मौदारिकशरीरम् । वैक्रियपुद्गलानां शरीरत्वेन परिणमनहेतुः कर्म वैक्रियशरीरम् । आहारकपुद्गलानां देहतया परिवर्त्तनसमर्थं कर्माऽऽहारकशरीरम् ॥**

औदारिकेति । शीर्यत इति शरीरं प्रागवस्थातश्चयापचयाभ्यां प्रतिक्षणं विनाशीत्यर्थः । असारस्थूलद्रव्यवर्गणारब्धमौदारिकं, उत्तरशरीरापेक्षयाऽल्पद्रव्यं स्थूलं शिथिलनिचयञ्च । यस्य कर्मण उदयादौदारिकवर्गणापुद्गलान् गृहीत्वौदारिकशरीरत्वेन परिणमयति तत्कर्मौदारिकशरीरमित्यर्थ. । न चैवं शरीरपर्याप्तिरपि तादृशत्वात्तत्रातिव्याप्तिरिति वाच्यम् । गृहीतपुद्गलानां शरीरतया परिणतेः शरीरनामकर्मणैव साध्यत्वात्, आरब्धाङ्गसमाप्तेश्च पर्याप्तिनामकर्मसाध्यत्वेनातिव्याप्त्यभावात् । उक्तञ्च " ननु देहोच्छ्वासनामकर्मभ्यामेव सिद्ध्यतः ।

देहोच्छ्वासौ किमेताभ्यां पर्याप्तिभ्यां प्रयोजनम् ? अत्रोच्यते पुद्गलानां गृहीतानामिहात्मना। साध्या परिणतिर्देहतया तन्नामकर्मणा। आरब्धाङ्गसमाप्तिस्तु तत्पर्याप्त्या प्रसाध्यते। एवं भेदः साध्यभेदाद्देहपर्याप्तिकर्मणो" रिति। विशेष्यविशेषणपदकृत्यं पूर्ववदेव। वैक्रियशरीरनामकर्मादावतिव्याप्तिवारणायौदारिकशरीरयोग्येति। ग्रहणमन्तरेण परिणमनासम्भवेन गृहीतेत्युक्तम्। शरीरतयेत्यनुक्तावौदारिकशरीरबन्धनेऽतिव्याप्तिरिति तस्योपादानम्। बन्धनस्य गृहीतानां गृह्यमाणानाञ्चौदारिकादिशरीरवर्गणापुद्गलानां परस्परसंश्लेषमात्रकारित्वादिति। अस्य च जघन्या परा च स्थितिः पञ्चेन्द्रियजातिवद्बोध्या। अथ वैक्रियशरीरनामाह— वैक्रियेति। विचित्रशक्तिकद्रव्यनिर्मापितं बहुतरद्रव्यं सूक्ष्मं घननिचयं च वैक्रियं। तथा च यस्य कर्मण उदयात् वैक्रियवर्गणापुद्गलान् गृहीत्वा वैक्रियशरीरत्वेन परिणमयति तद्वैक्रियशरीरनामकर्मेति भावः, पदकृत्यं पूर्ववत्। परा स्थितिरस्य पञ्चेन्द्रियजातिवत्। जघन्या तु सागरोपमसहस्रस्य द्वौ सप्तभागौ पल्योपमासंख्येयभागेन न्यूनौ, अबाधाऽन्तर्मुहूर्त्तम्। आहारकशरीरमाचष्टे—आहारकेति। शुभतरशुक्लविशुद्धद्रव्यवर्गणाप्रारब्धं प्रतिविशिष्टप्रयोजनायाऽन्तर्मुहूर्त्तस्थितिकमाहारकं शरीरं सूक्ष्मपरिणामपरिणतं बहुतरपुद्गलद्रव्यारब्धञ्च। सर्वे लक्षणविचाराः प्राग्वद्बोध्याः। अस्योत्कृष्टा स्थितिः सागरोपमकोटीकोटेरन्तः, अबाधा त्वन्तर्मुहूर्त्तम्, जघन्यापि तथैव ॥

तैजसशरीरमभिदधाति—

**तैजसवर्गणागतपुद्गलानां शरीरतया परिवर्त्तकं कर्म तैजसशरीरम्। कार्मणवर्गणागतपुद्गलानां शरीरत्वेन परिवर्त्तनहेतुः कर्म कार्मणशरीरम्। इमानि पञ्चदेहानि ॥**

तैजसवर्गणेति। तेजोगुणोपेतद्रव्यवर्गणासमारब्धं तैजसशरीरं, यदा यस्योत्तरगुणलब्धि रुत्पन्ना भवति तदा रोषप्रसन्नताप्रसङ्गे शरीरमिदमुष्णशीतगुणं शापानुग्रहसामर्थ्याविर्भावकञ्च भवति, यदा तु न सोत्पन्ना तदा तु केवलं सततातृताहारपाचकं भवति। लक्षणं पदकृत्यञ्च पूर्ववत्। अस्य परा जघन्या च स्थितिः पञ्चेन्द्रियवत्। अथ कार्मणस्वरूपमाह—कार्मणवर्गणेति। जीवप्रदेशैर्दुग्धाम्बुवदन्योन्य श्लिष्टा अनन्ता ये कर्मप्रदेशास्तदात्मकं कार्मणं निखिलशरीरहेतुभूतं भवान्तरगतौ तैजसशरीरयुतं सञ्जीव-

---

१ यद्यप्यत्र बन्धनसंघातनामकर्मणी शरीरनामकर्मणो न प्रकृत्यन्तरमिति मत्वा न पृथगुपन्यस्ते, तथापि परस्परावियोगस्याविरभावेनैकत्वरूपस्य तत्कार्यस्य दर्शनतो भवत एवैते इत्यतिव्याप्तिरादर्शिता ॥ २ इदञ्च कर्माण्येव कार्मणमिति व्युत्पत्त्या, तथा च न कर्मभ्य पृथक्कार्मणमत्र। कर्मणा निर्वृत्त कार्मणमिति विग्रहे त्वाह कार्मणनामकर्मणस्त्विति ॥

सहायश्च । शरीराभ्यामेताभ्यां जीवस्य गमनागमने प्रवेशनिर्गमने च स्याताम् । अत्यन्तसूक्ष्मत्वाच्च भवान्तरगमनकालेऽपि नैतयोश्चक्षुर्विषयत्वम् । कार्मणनामकर्मणस्तु समानवर्गणापुद्गलमयत्वेऽपि स्वकार्यभूतात्कार्मणशरीरादन्यत्वमेव कार्मणशरीरस्य कारणभूतत्वात् । यद्यपि सर्वेषामेव शरीराणां कर्मजन्यत्वं कर्मसमूहरूपत्वञ्च तथाप्यौदारिकादिनामकर्मनिमित्तकत्वादौदारिकादिसंज्ञाविशेषात् स्थौल्यादिलक्षणात् तिर्यङ्मनुष्यादिस्वामिभेदात् सामर्थ्यभेदाच्च मृद्रूपकारणाविशेषेऽपि मृत्समूहाविशेषेऽपि च घटशरावादिभेदवत्तेषां परस्परं वैषम्यमस्त्येव । न च नास्त्येव कार्मणं शरीरं निमित्ताभावात्खरविषाणवदिति वाच्यं प्रदीपवत्स्वस्यैव निमित्तनिमित्तिभावात्, मिथ्यात्वाविरत्यादीनां निमित्तत्वाच्च । अन्यथा निर्हेतुकस्य विनाशहेतोरप्यभावादनिर्मोक्षप्रसङ्ग आपद्येत । न च कार्मणस्यौदारिकादिवद्विशरणधर्मत्वाभावात्कथं शरीरत्वमिति वाच्यम्, निमित्तवशात्तस्यापि सततं चयापचयधर्मत्वादिति । लक्षणं कृत्यञ्च प्राग्वत् । अस्याप्युत्कृष्टजघन्यस्थिती पञ्चेन्द्रियवदेव । प्रसङ्गादाह–इमानीति । यद्यपि देहशब्दः पुल्लिङ्गे रूढस्तथापि कार्यभूतशरीराणां पञ्चविधत्वं पुण्यकर्मविभागवाक्यस्थकर्मबोधकपञ्चदेहशब्दवाच्यत्वमेषा पञ्चविधकर्मणाञ्च सूचयितुं 'कायो देहः क्लीबपुंसो' रिति कोशानुरोधेन च नपुंसकनिर्देशः कृतः । तथा च कार्यभूतानीमान्येव पञ्चशरीराणि, कारणभूतानीमानि पञ्चनामकर्माणि विभागवाक्यस्थपञ्चदेहशब्दवाच्यानीति भावः ।

शरीराणामेषां कार्यभूतानां स्वामिनमाह—

**तत्राद्यं शरीरं तिर्यङ्मनुष्याणाम् । द्वितीयं देवनारकिणाम् । तृतीयं चतुर्दशपूर्वधरस्यैव । तुर्यपञ्चमे संसारिणां सर्वेषां । कार्मणं विहायान्यान्युपभोगयन्ति ॥**

तत्रेति । पञ्चानां शरीराणां कर्मजन्यत्वाविशेषेऽपि कर्मसमूहात्मकाविशेषेऽपि च कारणभेदाद्भेदवत्स्वामिभेदादपि भेदेन पञ्चस्वेषु शरीरेषु आद्यस्यौदारिकशरीरस्य तिर्यङ्मनुष्याः स्वामिन इति भावार्थः । उदारं प्रधानं तीर्थकरादिभिरङ्गीकरणात्, उत्कृष्टप्रमाणं वोदारं अस्थितवनस्पतेः सातिरेकयोजनसहस्रप्रमाणत्वात्, शुक्रशोणिताद्युपादानप्रभृति प्रतिक्षणमुत्तरोत्तरां व्यवस्थां स्वकीयपर्याप्त्यपेक्षां प्राप्नोतीति वोदारं तदेवौदारिकं, तच्च गर्भजानां सम्मूर्च्छनजानाञ्च भवतीति भावः । द्वितीयमिति वैक्रियमित्यर्थः । विशिष्टा क्रिया विक्रिया तस्यां भवं वैक्रियं, समुपलब्धवैक्रियलब्धेरिच्छानुविधानादेकं भूत्वाऽनेकं भवति प्रतिहननशीलं

१ भवधारकवैक्रियापेक्षयोत्कृष्टं प्रमाणं बोध्यमन्यथोत्तरवैक्रियमेवोत्कृष्टप्रमाणवत्त्वात् योजनलक्षप्रमाणत्वात्तस्येति ॥

भूत्वा स्थूलत्वात्सूक्ष्मावस्थामनुप्राप्तं सदप्रतिघाति भवति, एककालमेव च सर्वानभिहितलक्षणान् भावान् वेदयते नेत्रमौदारिकादीनि, ईदृशं शरीरमौपपातिकं देवानां नारकाणामेव भवधारकमुत्तरवैक्रियभेदभिन्नञ्चेति भावः । तृतीयमिति, आहारकमित्यर्थः । प्रतिविशिष्टप्रयोजनसाधनायाऽऽह्रियते कार्यपरिसमाप्तेश्च पुनर्मुच्यत इत्याहारकं शुभद्रव्योपचितं शुभपरिणाममव्याघाति च चतुर्दशपूर्वधरस्यैव भवति । पूर्वं प्रणयनात् पूर्वाणि, चतुर्दशसंख्यायुतानि पूर्वाणि चतुर्दशपूर्वाणि, तानि धारणाज्ञानेनाऽऽलम्ब्यत इति चतुर्दशपूर्वधरः, एवंविधश्चतुर्दशपूर्वधर एव सञ्जातलब्धिः श्रुतज्ञानगम्ये कस्मिंश्चिदर्थेऽतिगहने सन्दिहानः तदर्थनिश्चयार्थं क्षेत्रान्तरितस्य भगवतोऽर्हतः पादमूलमौदारिकशरीरद्वारा गमनमसम्भवीति मन्वानो लब्धिप्रत्ययमाहारकशरीरमुपजनय्य तत्राशु गत्वाऽभिवन्द्य प्रष्टा च विच्छिन्नसंशयो भूत्वा तमेव देशं पुनरागत्य प्रागौदारिकमनुप्रविशति विहायाऽऽहारकं शरीरमिति भावः । तुर्यपञ्चमे इति तैजसकार्मणे इत्यर्थः । संसारिणां सर्वेषामिति । अस्मिन्नेव जन्मनि समुद्भव इति नियमाभावात्सर्वत्राप्रतिहतशक्तित्वात् सतैजसं कार्मणं सर्वजन्मसु भवति, कार्मणसहचरितमिदं तैजसं कार्मणभेद उष्मलक्षणं रसाद्याहारपाकजनकं ग्राह्यम्, लब्धिप्रत्ययं तैजसन्तु न सर्वेषां, किन्तु तपोविशेषानुष्ठानात्समुद्भूतशक्तेः कस्यचिदेव । कार्मणन्तु नियमतस्सर्वेषां, इदञ्चौदारिकादीनां बीजं कार्यकारणरूपञ्चेति भावः । ननु शरीराण्युपभोगवन्ति भवन्ति सत्र सर्वेषामेव किं शरीराणामुपभोगवत्त्वमुत केषाञ्चिदेवेत्याशंकायामाह—कार्मणमिति । कार्मणभिन्नशरीरचतुष्टयेन जीवस्सुखदुःखोपभोगं कर्मबन्धनं तद्वेदनं तन्निर्जराञ्च विदधाति, अतस्तान्युपभोगवन्ति न तु कार्मणं, सुखाद्युपभोगस्यासङ्ख्येयसामयिकत्वात्, चतुस्समयपरे विग्रहे एवास्य स्वातंत्र्येण भावात्, न विशिष्टकर्मबन्धस्तदानीमभिव्यक्तबन्धकारणाभावात् स्पष्टहिंसाद्ययोगात्, न च विशिष्टानुभावेन वेद्यते कर्म, कर्मविग्रहस्याल्पकालत्वात्, उदीरणाद्ययोगात्, तथा निर्जरणं, उपकरणाभावात् प्रतिविशिष्टभोगाद्यपेक्षया कार्मणं विहायेत्युक्तं, न तेन तत्रोपभोगमात्रव्युदासः, किन्तु अभिव्यक्तसुखदुःखकर्मानुबन्धानुभवनिर्जरालक्षणोपभोगस्यैव व्युदास इति भावः ॥

अथौदारिकाङ्गोपाङ्गनामकर्म वक्तुमादावङ्गोपाङ्गानि दर्शयति—

**अङ्गानि शिरःप्रभृतीन्यष्टौ उपाङ्गानि तदवयवाङ्गुल्यादीनि, एतन्निमित्तमौदारिकशरीरसम्बन्धिकर्मौदारिकाङ्गोपाङ्गनाम ॥**

अङ्गानीति । प्रभृतिपदेन वक्षःपृष्ठबाहूदरपादानां ग्रहणम्, बाहुद्वयं पादद्वयञ्चादाया-

१ लब्धिप्रत्ययञ्च तिर्यग्योनीनां मनुष्याणाञ्च ॥

ष्टत्वमङ्गानां भाव्यम् । उपाङ्गान्याह—उपाङ्गानीति । तदवयवाङ्गुल्यादीनीति, तेषामष्टानामवयवान्यङ्गुल्यादीन्युपाङ्गानीत्यर्थः । अङ्गुलयो बाहुपादयोरुपाङ्गभूताः, आदिपदेन शिरआदीना ललाटतालुनयनकर्णादय उपाङ्गतया ग्राह्याः । यद्यप्यङ्गनिदर्शनभूतशिरसोऽनुगुणमुपाङ्गतया तदवयवललाटादीनामेव कथन युक्तं तथापि तथोक्तावेकस्यैव शिरस उपाङ्गं दर्शित भवेत्, अङ्गुल्यादीनीत्युक्तौ तु पाणिपादयोरुभयोरेकपदेन दर्शितं स्यादिति ग्रन्थलाघवैषिणा मया तथैवोक्तम्, तत्पदेनाष्टाङ्गाना बुद्धिस्थाना परामर्शसम्भवात् । तथाङ्गुल्यादीनामप्यवयवभूतानि पर्वरेखादीन्यङ्गोपाङ्गानि, एवञ्चाङ्गानि चोपाङ्गानि चाङ्गोपाङ्गानि चेति द्वन्द्व एकपदशेषेऽङ्गोपाङ्गानि, यदुदयादौदारिकशरीरत्वेन परिणताना पुद्गलानामङ्गोपाङ्गविभागेन परिणतिर्भवति तदौदारिकाङ्गोपाङ्गनामेत्यर्थः, औदारिकशरीरसम्बन्ध्यङ्गोपाङ्गनिष्पत्तिप्रयोजकत्वे सति कर्मत्व लक्षण विशेषणविशेष्यपदकृत्य पूर्ववत्, वैक्रियाङ्गोपाङ्गनामकर्मादावतिप्रसक्तिविच्छेदायौदारिकशरीरसम्बन्धीति, औदारिकशरीरसम्बन्धिकर्मत्वमित्युक्तौ कार्मणशरीरादावतिप्रसङ्गस्तस्यापि तत्कारणत्वेन तत्सम्बन्धिकर्मत्वात् । औदारिकशरीरसम्बन्धिनः प्रयोजककर्मत्वमित्युक्तौ तु वर्णगन्धादिनामकर्मण्यतिव्याप्तिर्वर्णादीनामौदारिकशरीरसम्बन्धित्वादतोऽङ्गोपाङ्गेति पदम् । औदारिकशरीरवदस्य परा जघन्या च स्थितिर्बोध्या ॥

वैक्रियाङ्गोपाङ्गलक्षणमाह—

**तादृशं वैक्रियशरीरसम्बन्धि कर्म वैक्रियाङ्गोपाङ्गनाम। तादृशमेवाऽऽहारकशरीरसम्बन्धि कर्माऽऽहारकाङ्गोपाङ्गनाम । इमान्यादिमत्रितनूपाङ्गानि। तैजसकार्मणयोस्त्वात्मप्रदेशतुल्यसंस्थानत्वान्न भवन्त्यङ्गोपाङ्गानि। एवमेकेन्द्रियशरीराणामप्यङ्गोपाङ्गानि न भवन्ति वनस्पत्यादिषु शाखादीनामङ्गत्वादिव्यवहारो न वास्तविकः, किन्तु भिन्नजीवस्य शरीराण्येव ते ॥**

तादृशमिति । अङ्गोपाङ्गनिमित्तमित्यार्थ । वैक्रियशरीरसम्बन्ध्यङ्गोपाङ्गनिष्पत्तिप्रयोजकत्वे सति कर्मत्व लक्षणार्थः । निष्पत्तिपदानुपादाने पर्याप्तनामकर्मण्यारब्धाङ्गसमाप्तेऽतिव्याप्तिरतस्तदुपादानं, अन्यपदप्रयोजन पूर्ववद्भाव्यम् । परा जघन्या चास्य स्थितिर्वैक्रियशरीरवत् । अथाऽऽहारकाङ्गोपाङ्गनामकर्माभिधत्ते—तादृशमेवेति । अत्रापि आहारकशरीरसम्बन्ध्यङ्गोपाङ्गोत्पत्तिनिदानत्वे सति कर्मत्व लक्षणं कृत्यञ्च पूर्ववदेव । उभयविधा स्थितिरस्याप्याऽऽहारकशरीरवदेव भाव्या । विभागवाक्येऽमून्येवादिमत्रितनूपाङ्गशब्देनोक्तानीत्याह-इमानीति । आदिमा यास्तिस्रस्तनवस्तासामुपाङ्गानि अङ्गोपाङ्गाभिधानि इमान्येवेत्यर्थ. ।

ननु शरीरत्वाविशेषात्तैजसकार्मणयोर्न कथमङ्गोपाङ्गानीत्यत्राह—तैजसकार्मणयोस्त्विति । आत्मप्रदेशतुल्यसंस्थानत्वादिति जीवप्रदेशसंस्थानानुरोधित्वादित्यर्थः । प्रयोजनाभावात्प्रमाणाभावाच्चान्तर्गति विहायान्यत्रैतयोस्स्वातन्त्र्येणावर्त्तमानत्वादिति भावः । नन्वौदारिकशरीरभाजां पृथिव्यप्तेजोवायुवनस्पतीनामप्यङ्गोपाङ्गानि सन्ति नवेत्याशङ्कायामाह—एवमेकेन्द्रियशरीराणामपीति । यथा तैजसकार्मणयोर्नाङ्गोपाङ्गानि तथा एकेन्द्रियाणां पृथिव्यादीनां यानि शरीराणि तेषामपि नाङ्गोपाङ्गानि भवन्तीति भावः । ननु कथं वनस्पतीनां शरीराणामङ्गोपाङ्गरहितत्वं मूलस्कन्धशाखाप्रशाखात्वक्पत्रपुष्पफलादीनामवयवत्वादित्याशङ्कायामाह—वनस्पत्यादिष्विति । आदिपदेन वायुतेजोजलपृथिवीनां ग्रहणम्, पश्चानुपूर्व्या निर्देशः, वनस्पतौ मूलादिष्ववयवत्वस्य लोकप्रसिद्धतया तस्यैव प्रथममुपन्यासात् । प्रत्येकनामकर्मप्रभावाच्छाखादीनां भिन्नजीवशरीरत्वमेव न त्वङ्गोपाङ्गत्वं वृक्षस्येति भावः । बन्धनसंघातनामकर्मणोस्तु शरीरविषयत्वादेव शरीरनामकर्मान्तर्भूततया नात्र तयोः पृथगुपन्यासः कृतः ॥

अथ शारीरिकपुद्गलानां गृहीतानां गृह्यमाणानाञ्च परस्परसंश्लेषे सति अन्योन्यसन्निधानेन च व्यवस्थापिते सति संहन्यमानपुद्गलानां संहननमुपकारि भवति तस्मात्संहननस्वरूपमाह—

**अस्थिरचनाविशेषः संहननम् । उभयतो मर्कटबन्धबद्धयोरस्थ्नोः पट्टाकृतिनाऽपराऽस्थ्ना परिवेष्टितयोरुपरि तदस्थित्रयभेदिकीलिकात्मकान्यास्थिविशिष्टत्वप्रयोजकं कर्म वज्रर्षभनाराचम् । इदमादिमसंहननम् ॥**

अस्थीति । अस्थ्नां बन्धविशेष इति भावार्थः । वज्रर्षभनाराचलक्षणमाह—उभयत इति । अत्र वज्रशब्दः कीलिकावचनः, ऋषभशब्दः परिवेष्टनपट्टवचनः, नाराचशब्दस्तु उभयपार्श्वावच्छेदेन मर्कटबन्धनवचनः । तथा च पट्टाकृतितृतीयास्थिपरिवेष्टितोभयपार्श्वावच्छेदमर्कटबन्धबद्धास्थिद्वयोपरि तदस्थित्रयभेदिकीलिकाकल्पान्यास्थिविशिष्टत्वप्रयोजकत्वे सति कर्मत्वं लक्षणार्थः, विशेषणविशेष्ययोः फलं पूर्ववत् । कर्मप्रकृतिग्रन्थेषूक्तं वज्रनाराचकर्मण्यतिव्याप्तिवारणाय पट्टाकृतितृतीयास्थिपरिवेष्टितेत्युक्तम् । ऋषभनाराचकर्मण्यतिव्याप्तिवारणाय पट्टाकृतितृतीयास्थिपरिवेष्टितोभयपार्श्वावच्छिन्नमर्कटबन्धबद्धास्थिद्वयप्रयोजककर्मत्वमनुक्त्वा तदस्थित्रयभेदीत्याद्युक्तम्, अस्योत्कृष्टा स्थितिर्देवगतिवज्जघन्या तु मनुजगतिवत् ।

---

१ जीवप्रदेशानुरोधि तैजसं शरीरं यतो यदा तस्यां तस्यां योनौ औदारिकशरीरानुरोधेन वैक्रियशरीरानुरोधेन च जीवप्रदेशानां संस्थानं तदा तैजसशरीरस्यापि एवं कार्मणस्यापि भाव्यम् ॥ २ वृक्षादौ मूलादिषु प्रत्येकमसंख्येया अपि जीवाः परस्परं विभिन्नशरीराः प्रबलरागद्वेषोपचितप्रत्येकनामकर्मपुद्गलोदयतः परस्परं सहताः श्लेषद्रव्यसंपर्कमिव स्यात् परस्परविमिश्रसंपर्कवर्त्तिरित्याशयेनाह प्रत्येकेति ॥

नामकर्मेदं षड्विधसंहननेषु प्राथमिकं तदेव च विभागवाक्योदितादिमसंहननशब्देन वाच्यमित्याहेदमिति । संहननं षड्विधमपि औदारिकशरीर एव नान्येषु तेषामस्थ्यादिरहितत्वात् ॥

अथ षड्विधेषु शरीराकृतिविशेषरूपसंस्थानेषु समचतुरस्रसंस्थानस्यादिमस्य प्रयोजकं नामकर्म वक्तुमादौ संस्थानपदार्थमाह—

**आकारविशेषस्संस्थानम् । सामुद्रिकलक्षणलक्षितचतुर्दिग्भागोपलक्षितशरीरावयवपरिमाणसादृश्यप्रयोजकं कर्म समचतुरस्रसंस्थानम् । इदमादिमसंस्थानम् । तीर्थकरास्सर्वे सुराश्चैतत्संस्थानभाजः ॥**

आकारविशेष इति । अवयवरचनात्मिका शरीराकृतिरित्यर्थः । समचतुरस्रसंस्थाननामकर्माह—सामुद्रिकेति । समाः शरीरशास्त्रोक्तप्रमाणलक्षणाविसंवादिन्यः चतस्रोऽस्रयः चतुर्दिग्विभागोपलक्षिताः शरीरावयवा यस्य तच्छरीरं समचतुरस्रं भवति, तथा च सामुद्रिकलक्षणलक्षितचतुर्दिग्भागोपलक्षितशरीरावयवपरिमाणसादृश्यप्रयोजकत्वे सति कर्मत्वं लक्षणार्थः । यस्य कर्मण उदयात् औदारिकादिशरीराकृतिरूर्ध्वाधोमध्येषु समप्रविभागेनान्यूनानधिकमानोन्मानप्रमाणेनाविकलावयवतया स्वाङ्गुलाष्टशतोच्छ्रायेण च युक्ता भवति तत्समचतुरस्रनामकर्मेत्यर्थः । चतुर्दिग्भागोपलक्षितेतिपदं न्यग्रोधपरिमण्डलादावतिप्रसङ्गभङ्गार्थम् । इदमिति, समचतुरस्रसंस्थानं विभागवाक्योदितादिमसंस्थानपदवाच्यमित्यर्थः । संस्थानमिदं केषामित्यत्राह—तीर्थकरा इति । च शब्दोऽनुक्तसमुच्चयार्थः, तेन गणधरादिसङ्ग्रहः । अस्योत्कृष्टा स्थितिर्देवगतिवज्जघन्या तु मनुजगतिवत् ॥

प्रशस्तवर्णादिनामकर्मणो लक्षणमाह—

**शरीरधृत्याह्लादजनकवर्णोत्पत्तिहेतुभूतं कर्म प्रशस्तवर्णनाम । शरीरधृत्याह्लादजनकगन्धोत्पत्तिनिदानं कर्म प्रशस्तगन्धनाम । शरीरधृत्याह्लादजनकरसोत्पत्तिकारणं कर्म प्रशस्तरसनाम । शरीरधृत्याह्लादजनकस्पर्शोत्पादनिदानं कर्म प्रशस्तस्पर्शनाम । इमानि प्रशस्तवर्णचतुष्कशब्दवाच्यानि । तत्र शुक्लरक्तपीतनीलकृष्णाः पञ्च वर्णाः । आद्यास्त्रयः प्रशस्ताः । अन्त्यौ द्वावप्रशस्तौ । सुरभ्यसुरभिभेदेन गन्धो द्विविधः । आद्यश्शस्तः, अन्त्योऽशस्तः । रसः कषायाम्लमधुरतिक्तकटुरूपेण पञ्चविधः । आद्यास्त्रयश्शुभाः अन्त्यावशुभौ । स्पर्शोऽपि मृदुलघुस्निग्धोष्णकठिनगुरुरूक्षशीतभेदादष्टविधः । आद्याश्चत्वारः प्रशस्ताः, अन्त्या-**

स्त्वप्रशस्ताः। शरीरस्यागुरुलघुपरिणामप्रयोजकं कर्म अगुरुलघुनाम। सर्वेषां जीवानामेतत्। परत्रासप्रज्ञाप्रहननादिप्रयोजकं कर्म पराघातनाम। उच्छ्वासनिःश्वासप्राप्तिप्रयोजकं कर्मोच्छ्वासनाम ॥

शरीरवृत्तीति। स्वशरीरवृत्तीत्यर्थः। वर्ण्यतेऽलङ्क्रियते गुणवत्क्रियते शरीराद्यनेनेति वर्णः शुक्लादिः। यदुदयादौदारिकादिशरीरेषु आह्लादजनकस्य नेत्रानन्दकरस्य वर्णस्योत्पत्तिस्तत्प्रशस्तवर्णनामेत्यर्थः। अप्रशस्तवर्णनामकर्मण्यतिव्याप्तिनिरासायाह्लादजनकेति, प्रशस्तगन्धनामादिकर्मण्यतिव्याप्तिव्युदासाय वर्णेति। असम्भववारणाय शरीरवृत्तीति। अस्य पञ्चेन्द्रियवत्परा जघन्या च स्थितिर्विज्ञेया। प्रशस्तगन्धनामाह—शरीरवृत्तीति, गन्ध्यते आघ्रायत इति गन्धः, लक्षणपदकृत्यं स्थितिश्च प्रशस्तवर्णवद्बोध्या। प्रशस्तरसनामाह—शरीरेष्विति। कृत्यं स्थितिश्च प्रशस्तवर्णवदेव। प्रशस्तस्पर्शनामाह—शरीरवृत्तीति इदमपि प्रशस्तवर्णवद्बोध्यम्, इमानीति, प्रशस्तवर्णगन्धरसस्पर्शनामकर्माणीत्यर्थः, प्रशस्तेति, विभागवाक्यस्थेत्यादिः। वर्णादयः कतिविधास्तेषु के प्रशस्ता इत्याशंकायामाह—तत्रेति। स्फटिकादाविव शुक्लः, हिङ्गुलकादाविव रक्तः, हरिद्रादाविव पीतः, प्रियङ्गुपर्णादाविव नीलः, कज्जलादाविव कृष्णो वर्णो भाव्यः। आद्यास्त्रय इति शुक्लरक्तपीतवर्णा इत्यर्थः, प्रशस्ता इति प्रायश आशयवशात्प्राणिनां वल्लभास्सन्तस्सुखात्मकात्मपरिणामोपकारिण इति भावः। अन्त्याविति, नीलकृष्णावित्यर्थः, अप्रशस्ताविति। अनिष्टौ द्वेष्यौ सन्तौ स्वाशयापेक्षया दुःखात्मकात्मपरिणामोपकारिणाविति भावः। गन्धभेदमाह—सुरभीति। श्रीखण्डादाविव सुरभिः, लशुनादाविव दुरभिः। आद्य इति, सुरभिरित्यर्थः, शस्त इति, सौमुख्यकारित्वादिति भावः। अन्त्य इति दुरभिरित्यर्थः, अशस्त इति वैमुख्यकारित्वादिति भावः। रसभेदमाह—रस इति। अपक्वकपित्थादाविव कषायः, आम्लवेतसादाविवाम्ल शर्करादाविव मधुरः, कोशातक्यादाविव तिक्तः, शुण्ठ्यादाविव कटुः, लवणो मधुरान्तर्गत इत्येके, संसर्गज इत्यपरे। आद्या इति कषायाम्लमधुरा इत्यर्थः। अन्त्याविति तिक्तकटू इत्यर्थः। स्पर्शभेदानाह—स्पर्शोऽपीति। हंसरुतादाविव मृदुः, अर्कतूलादाविव लघुः, घृतादाविव स्निग्धः, वह्न्यादाविवोष्णः, पाषाणादाविव कठिनः, वज्रादाविव गुरुः, भस्मादाविव रूक्षः, मृणालादाविव शीतः। आद्या इति मृदुलघुस्निग्धोष्णा इत्यर्थः, अन्त्या इति कठिनगुरुरूक्षशीता इत्यर्थः। अथागुरुलघुनामकर्मस्वरूपमाह शरीरस्येति। चत्वारो हि परिणामाः पुद्गलानां गुरुत्वलघुत्वगुरुलघुत्वागुरुलघुत्वभेदात्, यस्य कर्मण उदयात्सर्वप्राणिनां शरीराणि स्वस्वापेक्षया नैकान्तेन लघूनि, तथात्वे वायुना विक्षिप्यमाणानां धारणासम्भवात्, न चैकान्तेन गुरूणि,

वोढुमशक्यत्वात्, किन्त्वगुरुलघुपरिणामपरिणतानि भवन्ति तदगुरुलघुनामकर्मेत्यर्थः। यदूर्ध्वं तिर्यग्वा प्रक्षिप्तमपि पुनर्निसर्गादधो निपतति तद्गुरुद्रव्यं यथा लेष्ट्वादि। यत्तु निसर्गत एवोर्ध्वगतिस्वभावं द्रव्यं तल्लघु यथा दीपकलिकादि। यत्तु नोर्ध्वगतिस्वभावं नाप्यधोगतिस्वभावं किन्तु स्वभावेनैव तिर्यग्गतिधर्मकं तद्द्रव्यं गुरुलघु यथा वाय्वादि। यत्पुनरूर्ध्वाधस्तिर्यग्गतिस्वभावानामेकतरस्वभावमपि न भवति सर्वत्र वा गच्छति तदगुरुलघु यथा व्योमपरमाण्वादि। व्यावहारिकनयमिदं। निश्चयतस्तु एकान्तेन गुरुस्वभावं किमपि वस्तु नास्ति, गुरोरपि लेष्ट्वादे परप्रयोगादूर्ध्वादिगमनदर्शनात्, नैकान्तेन लघुस्वभावं, अतिलघोरपि वाय्वादेः करताडनादिनाऽधोगमनादिदर्शनात्। अतो नैकान्तेन गुरु लघु वा किमपि वस्त्वस्ति। किन्तु यत्किमप्यत्र लोके औदारिकवर्गणादिकं भूभूधरादिकं वा बादरं वस्तु तत्सर्वं गुरुलघु, शेषं तु भाषाऽऽनपानमनोवर्गणादिकं परमाणुद्व्यणुकव्योमादिकञ्च सर्वं वस्त्वगुरुलघ्विति बोध्यम्। एवञ्च निश्चयनयेन कस्यापि शरीरस्य लघुत्वाभावात् गुरुत्वाभावाच्च गुरुलघुत्वमेव कार्मणातिरिक्तस्य, तत्रागुरुलघुत्वप्रयोजकं कर्म सर्वशरीरिणामित्याशयेनाह—सर्वेषामिति। एतदिति, अगुरुलघुनामकर्मेत्यर्थः, भवतीति शेषः। अत्रागुरुलघुपदेन लघुगुरुपरिणामद्वयस्यैव निरासो बोध्यः, न तु अगुरुलघुनामपरिणामस्यैकस्य ग्रहणम्। व्यवहारनयापेक्षया त्वन्योऽन्यापेक्षया शरीराणि लघूनि गुरूणि अगुरुलघून्यपि भवन्तीति विज्ञेयम्। अस्य पञ्चेन्द्रियवदेवोत्कृष्टा जघन्या च स्थितिर्भाव्या। अथ पराघातस्वरूपं निरूपयति–परघासेति। यदुदयादोजस्वी दर्शनमात्रेण वाक्सौष्ठवेन वा नृपसभामपि गतः सभ्यानामपि क्षोभमापादयति प्रतिपक्षप्रतिघातञ्च विधत्ते तत्पराघातनामेत्यर्थः। कृत्यं विशेषणविशेष्ययोः पूर्ववत्। स्थिती चोभयविधे पञ्चेन्द्रियवत्। उच्छ्वासनामकर्म निरूपयति उच्छ्वासेति। ऊर्ध्वगामी वायुरुच्छ्वासः, अधोगतिमान वायुर्निश्वासः प्राणापानापरनामानावेतौ, तौ चानन्तप्रदेशस्कन्धपुद्गलपरिणामजन्यौ, तयोः प्राप्तिर्लब्धिः तत्प्रयोजकं कर्म उच्छ्वासनामकर्म। उच्छ्वासनिःश्वासग्रहणमोक्षणलब्धेरुच्छ्वासनामकर्मसाध्यत्वादौदयिकीनामपि लब्धीनां सम्भवात्, वादृशलब्धेर्व्यापारण एव च श्वासोच्छ्वासपर्याप्तेर्हेतुत्वादिति भावः। उच्छ्वासनिःश्वासलब्धिप्रयोजकत्वे सति कर्मत्वं लक्षणार्थः। पदकृत्यं स्पष्टम्, उभयविधा स्थितिः पञ्चेन्द्रियवत्॥

---

१ निश्चयनये औदारिकवैक्रियाहारकतैजसद्रव्याणि बादररूपत्वाद्गुरुलघूनि, कार्मणमनोभाषादिद्रव्याणि त्वगुरुलघूनि, बादरनामकर्मोदयवर्त्तिजीवानां शरीराणि बादराण्यन्यानि गुरुलघूनि, सूक्ष्मनामकर्मोदयवर्त्तिजीवशरीराणि सूक्ष्मपरिणतानीतराण्यगुरुलघूनि। तथा च गुरुलघुकं शरीरं प्रतीत्य नारकादयो गुरुलघुकाः, जीवं कार्मणञ्च प्रतीत्यागुरुलघुका इति॥

अथाऽऽतपादिनामकर्माण्याचष्टे—

**स्वरूपतोऽनुष्णानां शरीराणामुष्णत्वप्रयोजकं कर्माऽऽतपनाम । तच्च भानुमण्डलगतभूकायिकानाम् । गात्राणामनुष्णप्रकाशप्रयोजकं कर्मोद्योतनाम । तच्च यतिदेवोत्तरवैक्रियचन्द्रग्रहताराररत्नादीनाम् । प्रशस्तगमनहेतुः कर्म शुभखगतिनाम ॥**

स्वरूपत इति । यस्य कर्मण उदयाज्जन्तुशरीराणि स्वभावेनानुष्णान्यपि उष्णप्रकाशरूपमुष्णत्वं लभन्ते तदातपनामकर्मेत्यर्थः । स्वरूपतोऽनुष्णशरीरसम्भूतोष्णप्रकाशप्रयोजककर्मत्वं लक्षणार्थं । वह्निशरीरोष्णस्पर्शस्य स्पर्शनामकर्मोदयजन्यत्वात्तत्रातिव्याप्तिवारणाय स्वरूपतोऽनुष्णेति । तादृशकर्मोदयः कुत्रेत्यत्राह–तच्चेति । भानुमण्डलादिगतानां पृथिवीकायिकानामेवेत्यर्थो विपाकाभिप्रायेणेदम्, न तु वह्नौ तद्विपाकः, प्रवचने प्रतिषेधात्, तत्रोष्णत्वस्योष्णस्पर्शनामोदयेन प्रकाशकत्वस्य चोत्कटलोहितवर्णनामोदयेन सम्भवात् । स्थिती च पञ्चेन्द्रियवत् । उद्योतनामस्वरूपमाह—गात्राणामिति । शरीरवृत्त्यनुष्णप्रकाशप्रयोजकत्वे सति कर्मत्वं लक्षणं, कृत्यं पूर्ववत्, अस्य विपाकस्थानमाह—तच्चेति । विहितोत्तरवैक्रियाणां मुनिदेवानां तथा चन्द्रादीनामित्यर्थः । स्थिती पंचेन्द्रियवदेव । अथ शुभखगतिनामाह—प्रशस्तेति । प्रशस्तगमनहेतुत्वे सति कर्मत्वं लक्षणम्, विशेषणविशेष्यकृत्यं प्राग्वत् । कुखगतावतिव्याप्तिवारणाय प्रशस्तेति, हंसगजवृषादीनामिव प्रशस्ता गतिर्ग्राह्या, सिद्धजीवपुद्गलाना गतिस्तु स्वाभाविकी, न चास्य कर्मण उदयः पक्ष्यादिष्वेव स्यान्न मनुजादौ तेषामाकाशे गत्यभावान्न शुभखगतिरिति वाच्यम्, विहायसस्सर्वगतत्वेन गतिमात्रस्याकाश एव भावात्, न च तर्हि शुभगतिनामेत्येनोच्यतां किं खपदेन व्यावर्त्त्याभावादिति वाच्यम्, संशयव्यवच्छेदार्थं तद्विशेषणोपादानात्, अन्यथा देवत्वादिपर्यायपरिणतिप्रयोजककर्मणश्शङ्कया पौनरुक्त्याशङ्का स्यादिति भावः । तत्त्वार्थभाष्ये तु लब्धिशिक्षर्द्धिप्रत्ययस्याकाशगमनस्य जनकं विहायोगतिनामेति दृश्यते । व्याख्या च लब्धिर्देवादीना देवोत्पत्त्यविनाभाविनी, शिक्षया ऋद्धिः शिक्षर्द्धिः, तपस्विनां प्रवचनमधीयानानां विद्याद्यावर्त्तनप्रभावाद्वाऽऽकाशगमनस्य, लब्धिशिक्षर्द्धिहेतोर्जनकं विहायोगतिनामेति । अस्य परा स्थितिर्देवगतिवत्, जघन्या तु मनुजगतिवत् ॥

१ यतिदेवैर्मूलशरीरापेक्षयोत्तरकाले क्रियमाणं वैक्रियं यतिदेवोत्तरवैक्रियमुच्यत इत्याशयेनाह विहितेति ॥
२ गतिर्द्विविधा भावगतिः कर्मगतिश्चेति, आद्या पञ्चास्तिकायाना, परिणामाश्रयत्वात् कर्मगतिर्द्विविधा विहायोगतिः चतुर्गतिश्चेति, विहायोगतिनामोदयवेद्या जीवाः प्रथमगतिमन्तः, चरमगतिं प्रतीत्य सर्वे जीवा पुद्गलाश्च, सिद्धास्तु सिद्धिक्षेत्रगमनकाल एव न पश्चादिति बोध्यम् ॥

अथ निर्माणनामकर्माचष्टे—

**जातिलिङ्गाङ्गप्रत्यङ्गानां प्रतिनियतस्थानसंस्थापनाप्रयोजकं कर्म निर्माणनाम ॥**

जातीति । जातिरेकेन्द्रियादिस्तत्र स्वस्वजात्यनुसारेणेति यावत्, लिङ्गं स्त्र्यादीनां यदसाधारणं चिह्नं, तस्याङ्गानां प्रत्यङ्गानाञ्च प्रतिनियतस्थानेषु या संस्थापना व्यवस्था तत्र प्रयोजकं यत्कर्म तन्निर्माणनामकर्मेत्यर्थः, जातिलिङ्गाङ्गप्रत्यङ्गविषयकप्रतिनियतस्थानव्यवस्थाप्रयोजकत्वे सति कर्मत्वं लक्षणार्थः । अङ्गोपाङ्गनामकर्मादावतिव्याप्तिवारणाय प्रतिनियतस्थानव्यवस्थेति पदम् । तदिदं कर्म सूत्रधारसन्निभम्, तदभावे हि निर्वर्तितानामप्यङ्गोपाङ्गनामादिकर्मणा शिरउरआदीनां नियतस्थानवृत्तितानियमो न स्यादिति भावः, अस्योभयविधा स्थितिः पञ्चेन्द्रियवत् ॥

अथ त्रसनामकर्माभिधत्ते—

**उष्णाद्यभितप्तानां स्थानान्तरगमनहेतुभूतं कर्म त्रसनाम ।**

उष्णादीति । उष्णादीत्युपलक्षणं तथा च भयि कारणं इति भावः । इदञ्च विहायोगत्यादावतिप्रसङ्गभङ्गाय । विशेषणविशेष्यपदफलं पूर्ववत् । न च गर्भाण्डजमूर्छितसुषुप्तादीनां त्रसत्वं न स्यात्, भयहेतुप्राप्तावपि चलनाभावात्तथा चाव्याप्तिरिति वाच्यम्, तत्रापि स्थानान्तरगमनयोग्यताया भावात् । पञ्चेन्द्रियवदस्य स्थिती बोध्ये ॥

बादरनामाह—

**चक्षुर्वेद्यशरीरप्रापकं कर्म बादरनाम ॥**

चक्षुर्वेद्येति । अत्र चक्षुर्वेद्यत्वं नाम स्थूलतापरिणामो विवक्षितः, तथा च यस्योदयात् पृथिव्यादेरेकैकस्य जन्तुशरीरस्य चक्षुर्ग्राह्यत्वाभावेऽपि बहूनां समुदाये स्थूलतरपरिणामभावाच्चक्षुषा ग्रहणं भवति तद्बादरनामेति भावः । सूक्ष्मनामकर्मादावतिव्याप्तिवारणाय चक्षुर्वेद्येति । चक्षुर्ग्रहणयोग्यशरीरनिर्वर्तकत्वे सति कर्मत्वं लक्षणार्थस्तेन प्रत्येकं पृथिव्यादिशरीराणां प्रत्येकं चक्षुर्वेद्यत्वाभावेऽपि स्थूलतरपरिणामयोग्यत्वान्नाव्याप्तिः । त्रिशुद्धावधिवेद्यशरीरप्रापकसूक्ष्मनामकर्मण्यतिव्याप्तिवारणाय चक्षुरिति । अस्य स्थिती पञ्चेन्द्रियवत् ॥

१ जीवविपाक्यप्येतच्छरीरपुद्गलेष्वपि काञ्चिदभिव्यक्तिं दर्शयति न च जीवविपाकिकर्मणः शरीरे स्वशक्तिप्रकटनमसङ्गतमिति वाच्यम् क्रोधादेर्जीवविपाकित्वेऽपि भ्रुकुटिभङ्गादिजननदर्शनात्, कर्मशक्तेर्विचित्रत्वाच्च ॥

पर्याप्तनामकर्माह—

**स्वयोग्यपर्याप्तिनिर्वर्त्तनशक्तिसम्पादकं कर्म पर्याप्तनाम ॥**

स्वयोग्येति । यदुदयादात्मा स्वस्वयोग्याः पूर्वोदिता पर्याप्तीः प्राप्नोति तत्पर्याप्तनामकर्मेत्यर्थः । स्वयोग्यपर्याप्तिनिर्वर्तनशक्तिसम्पादकत्वे सति कर्मत्वं लक्षणार्थः । स्वयोग्याया पर्याप्तेः पूर्णतानिर्वर्तिका याश्शक्तय पर्याप्तिसञ्ज्ञास्तासां सम्पादकमित्यर्थः । स्वयोग्यपर्याप्त्यात्मकशक्तिसम्पादकत्वे सति कर्मत्वस्यापर्याप्तनामकर्मणि सत्त्वादतिव्याप्तिरतः पर्याप्तिनिर्वर्तनेति शक्तेर्विशेषणम्, अपर्याप्तानामपि पर्याप्तयो भवन्ति, परन्तु परिपूर्णतां नासादयन्ति, अपर्याप्ता एव ते म्रियन्त इति न दोषः । अस्यापि स्थिती पञ्चेन्द्रियवद्वेव ॥

अथ प्रत्येकनामकर्म वक्ति—

**प्रतिजीवं प्रतिशरीरजनकं कर्म प्रत्येकनाम ॥**

प्रतिजीवमिति । जीवं जीवं प्रतीत्यर्थः, तथा च प्रतिजीवं भिन्नभिन्नशरीरनिर्वर्तकत्वे सति कर्मत्वं लक्षणम् । भिन्नभिन्नेति पदन्तु साधारणनामकर्मणि व्यभिचारवारणाय । तस्योदयो नारकामरमनुष्यद्वीन्द्रियादिषु पृथिव्यादिषु कपित्थादिवृक्षेषु च, कपित्थादिवृक्षाणां मूलस्कंधादौ प्रत्येकमसङ्ख्येयजीवत्वेऽपि शरीराणामन्यान्यत्वान्न कोऽपि विरोधः । पञ्चेन्द्रियवत्परा जघन्या च स्थितिः ॥

स्थिरनामकर्म लक्षयति—

**शरीरावयवादीनां स्थिरत्वप्रयोजकं कर्म स्थिरनाम ॥**

शरीरेति । यस्योदयाच्छिरोऽस्थिदन्तादीनां शरीरावयवानां स्थिरता भवति तत्स्थिरनामकर्मेत्यर्थः । शरीरावयवस्थैर्यताप्रयोजकत्वे सति कर्मत्वं लक्षणम्, अङ्गोपाङ्गनामकर्मादौ व्यभिचारवारणाय स्थैर्येति । अस्य परा स्थितिर्देवगतिवदपरा तु मनुजगतिवत् ॥

शुभनामकर्माभिधत्ते—

**उत्तरकायनिष्ठशुभत्वप्रयोजकं कर्म शुभनाम ॥**

उत्तरेति । नाभेरुपरितनावयवसमूह उत्तरकायः, तत्र यच्छुभत्वं पादादौ स्पर्शेन परस्य शुभभावोत्पादात् पवित्रता शिर आदीनां तन्निदानभूतं कर्मेत्यर्थः । सातादौ पुण्य-

कर्ममात्रे शुभत्वप्रयोजकत्वे सति कर्मत्वस्य सत्त्वाद्व्यभिचारवारणायोत्तरशरीरनिष्ठेति। स्थिरनामकर्मवदस्य स्थिती ॥

अथ सौभाग्यनामकर्माऽऽख्याति—

**अनुपकारिण्यपि लोकप्रियतापादकं कर्म सौभाग्यनाम ॥**

अनुपकारिण्यपीति। अनुपकर्त्ता यो लोकाना प्रियो भवति यदुदयात्तत्सौभाग्यनामेत्यर्थ । प्रियत्व च मनस आह्लादकारित्व, प्रशस्तवर्णादावतिप्रसङ्गवारणायानुपकारिण्यपीति। अनुपकारिण्यपि पुत्रादौ मोहनीयनिबन्धनप्रियत्वसम्भवेन तत्र व्यभिचारनिरसनाय लोकेति। देवगतिवत्परा स्थितिर्मनुजगतिवज्जघन्या ॥

सम्प्रति सुस्वरनाम सूचयति—

**कर्णप्रियस्वरवत्त्वप्रयोजकं कर्म सुस्वरनाम। वचनप्रामाण्याभ्युत्थानादिप्रापकं कर्माऽऽदेयनाम ॥**

कर्णेति। यस्योदयात् उच्चरितश्शब्दो मधुरो गम्भीर उदारो भूय प्रीतिकरश्च भवति तत्सुस्वरनामेत्यर्थ । दुस्स्वरनामकर्मणि व्यभिचारवारणाय कर्णप्रियेति। सौभाग्यवदस्य स्थिती। आदेयनामाचष्टे वचनेति। यस्य वचन युक्तिरिक्तमपि प्रामाण्यमास्कन्दति यदुदयात् यस्य च दर्शनमात्रेण लोकोऽभ्युत्थानादि समाचरति तदादेयनामेत्यर्थ । स्थिती च सौभाग्यवत् ॥

यश कीर्तिनाम वक्ति—

**यशःकीर्त्युदयप्रयोजकं कर्म यशःकीर्त्तिनाम। एकदिग्गमनात्मिका कीर्त्तिः। सर्वदिग्गमनात्मकं यशः। दानपुण्यजन्या कीर्त्तिः। शौर्यजन्यं यश इति वा। इमानि त्रसदशकानि ॥**

यश इति। यस्योदयेन यश कीर्त्ती भवतस्तद्यश कीर्तिनामेत्यर्थ । न चास्योदयेऽपि कश्चिन्न यश कीर्त्ती भवत इति वाच्यम्। सद्गुणमध्यस्थपुरुषापेक्षयैव तदुदयाभ्युपगमात्। तेन केनचिद्यश कीर्तिभ्या कीर्तित एवायश कीर्त्यो कीर्त्तितोऽपि न क्षति । उत्कृष्टास्य स्थितिर्देवगतिवत् जघन्या तु मुहूर्त्ता अष्टौ, अबाधा चान्तर्मुहूर्त्तकाल । ननु यश कीर्त्यो पर्यायत्वात्कथ द्वन्द्वाश्रयेण भेद उच्यते इत्यत्राह–एकेति, एकदिग्व्यापिनी पुण्यगुणख्याति

कीर्त्तिरित्यर्थः, सर्वेति, सर्वदिग्व्यापिनी गुणख्यातिर्यश इत्यर्थः । प्रकारान्तरेणाह—दानेति, अथवा पराक्रमतपस्त्यागाद्युद्भूतयशसा यत्कीर्त्तनं श्लाघनं सा यशःकीर्तिरिति तृतीयातत्पुरुषोऽपि भाव्यः । त्रसनामकर्मप्रभृति यशःकीर्तिनामपर्यन्तं यावत् दश नामकर्माणि विभागवाक्योक्तत्रसदशकशब्दवाच्यानीत्यभिप्रायेणाह इमानीति ॥

अथ देवायुषो लक्षणमाह—

## देवभवनिवासकारणायुः प्रापकं कर्म देवायुः ॥

देवभवेति । भवः संसारः, चतुर्गतिको देवमनुष्यतिर्यङ्नरकभेदात् । तत्र भवनिवासे आभ्यन्तरं कारणमायुः । तत्र यस्य भावादात्मनो जीवितं यदभावाच्च मरणमुच्यते तदायुः यत्सन्निधानाद्वा जीवेन शेषप्रकृतय उपभोगायाऽऽनीयन्ते तदायुस्सोपक्रमनिरुपक्रमभेदभिन्नं पौद्गलिकञ्च । आगमोक्तैरुपक्रमैरध्यवसायाद्यैर्बहुना कालेन वेद्यमपि यदल्पकालेन भुज्यते तत्सोपक्रममायुः । तच्च बन्धनसमये श्लथं बद्धं शक्यापवर्तनं तथा । यत्तु बन्धसमये गाढं बद्धं क्रमवेद्यफलं अशक्यापवर्त्तनं, अध्यवसानादिभ्यो निर्गतञ्च तन्निरुपक्रमम् । तत्रानपवर्त्यायुष औपपातिका अन्त्यदेहाः, तीर्थकरचक्रवर्त्यर्धचक्रवर्त्तिनोऽसङ्ख्येयवर्षायुषो मनुष्यास्तिर्यग्योनिजाश्च । शेषा मनुष्यास्तिर्यग्योनिजाः सोपक्रमा निरुपक्रमाश्चापवर्त्त्यायुषोऽनपवर्त्यायुषश्च भवन्ति । तत्रायुषो बन्धकाः सम्यङ्मिथ्यादृष्टिविरहिता मिथ्यादृष्टेरारभ्याप्रमत्तगुणस्थानं यावत् षट्सु स्थानेषु जन्तवोऽजघन्योत्कृष्टाध्यवसायविशेषभाजः पृथुकषायाश्साद्यध्रुवायुर्विकल्पयुजः । अप्रमत्तगुणस्थानवर्त्तिनस्तु निष्ठापका एव । तथा नारकदेवासंख्येयवर्षायुष्कतिर्यङ्मनुष्याः षण्मासावशेषायुषोऽग्र्यभवजीवितं बध्नन्ति । शेषास्तु निजायुषस्तृतीये नवमे सप्तविंशेऽवशेषायुर्भागे तद्बध्नन्ति । तत्रापि पृथिव्यप्तेजोवायुवनस्पतिद्वित्रिचतुरिन्द्रियाणां निरुपक्रमायुषाञ्च पञ्चेन्द्रियाणां नियमतस्तृतीये, सोपक्रमायुषाञ्च पञ्चेन्द्रियाणां तृतीये नवमे सप्तविंशे वा भागेऽवशेषेऽवशिष्टान्तर्मुहूर्तायुषि वा बन्धो बोध्यः । इयमेव भवस्थितिः । एवञ्च देवभवनिवासे हेतुभूतं यदायुः तत्प्रापकं कर्म देवायुर्नामेत्यर्थः । देवभवनिवासहेत्वायुःप्रापकत्वे सति कर्मत्वं लक्षणार्थः, मनुष्यायुरादौ व्यभिचारवारणाय हेत्वन्तं देवपदमप्यत एव । अस्य परा स्थितिस्त्रयस्त्रिंशत्सागरोपमा, पूर्वकोटित्रिभागोऽबाधा, जघन्या च दशवर्षसहस्राणि, अबाधा त्वन्तर्मुहूर्तम् । आयुषोऽबाधायां भङ्गचतुष्टयं पूर्वकोट्यायुष्को मनुजस्त्रिभागावशेषे आयुष्युत्कृष्टस्थितिकमागामिदेवभवायुर्यदा बध्नाति तदोत्कृष्टस्थि-

१. येऽपवर्त्यायुषस्तेषां विषशस्त्रकण्टकादिभिः द्रुतिमागमादिभिश्चायुरपवर्तने, शीघ्रमिति यर्मन्तर्मुहूर्तादुपभोगोऽपवर्तना, तेन न कर्मण कृतनाशाकृताभ्यागमादिप्रसक्तिः । २. ए० सोपक्रमा निरुपक्रमाश्च ।

त्युत्कृष्टाबाधात्मक प्रथमो भङ्ग । स एव जघन्यमध्यमायुष्को वा मनुजोऽन्तर्मुहूर्त्तावशिष्ट आयुष्युत्कृष्टस्थितिकमागामिदेवभवायुष बध्नाति यदा तदोत्कृष्टस्थितिजघन्याबाधात्मको द्वितीय । पूर्वकोट्यायुष्को मनुजो यदा पूर्वकोटित्रिभागावशेष आयुषि दशसहस्रप्रमाण जघन्यस्थितिक देवायुर्बध्नाति तदा देवायुरपेक्षया जघन्यस्थित्युत्कृष्टाबाधात्मकस्तृतीय । जघन्यायुष्कोऽन्तर्मुहूर्त्तावशेष आयुषि दशवर्षसहस्रात्मक यदा देवायुर्बध्नाति तदा जघन्यस्थितिजघन्याबाधात्मको भङ्गश्चतुर्थ इति ॥

अथ मनुजायुराह—

**मनुजभवनिवासनिदानायुः प्रापकं कर्म मनुजायुः । तिर्यग्भवनिवासहेत्वायुःप्राप्तिजनकं कर्म तिर्यगायुः ॥**

मनुजभवेति । स्पष्ट लक्षणम्, त्रिपल्योपमा परा स्थिति । जघन्या तु क्षुल्लकभवप्रमाणा, अबाधाऽन्तर्मुहूर्तकाल । तिर्यगायुराह—तिर्यगिति, लक्षणं स्पष्टम् । यावत्स्वायु परिसमाप्ति कदापि मृत्युसमीहाभावादिदमाह्लादजनकत्वाच्छुभम् । तिर्यग्गतितिर्यगानुपूर्व्यौ तु सङ्क्लिष्टाध्यवसायैरात्मसात्क्रियमाणत्वेनाशुभत्वात्पापमध्ये इति । परा स्थिति त्रिपल्योपमा, अपरा चान्तर्मुहूर्तम् ॥

तीर्थकरनामकर्माह—

**अष्टमहाप्रातिहार्याद्यतिशयप्रादुर्भवननिमित्तं कर्म तीर्थकरनाम ॥**

अष्टेति । 'अशोकवृक्ष सुरपुष्पवृष्टिर्दिव्यध्वनिश्चामरमासनञ्च । भामण्डल दुन्दुभिरातपत्र सत्प्रातिहार्याणि जिनेश्वराणा'मिति श्लोकेऽष्टौ प्रातिहार्याणि प्रतिपादितानि ग्राह्याणि । अष्टमहाप्रातिहार्याद्यतिशयप्रादुर्भावनिमित्तत्वे सति कर्मत्व लक्षणम् । विशिष्टर्द्धियुक्ताना चक्रधरत्वादीनामुच्चैर्गोत्रेऽतिव्याप्तिवारणायाष्टविधप्रातिहार्यादीति । गणधरत्वन्तु श्रुतज्ञानावरण क्षयोपशमनिमित्त मात्र तीर्थकरनामवत् गणधरनामकर्मोपसङ्ख्यानापत्ति । न च तीर्थकरस्यापि श्रुतज्ञानावरणक्षयोपशमो वा चक्रधरादीनामिवोच्चैर्गोत्रविशेषो वा निमित्तमस्त्विति वाच्य तीर्थप्रवर्त्तनफलत्वेन तीर्थकरनामकर्मणोऽभ्युपगमादिति । अस्योत्कृष्टा स्थिति सागरोपमकोटीकोटेरन्त । अबाधान्तर्मुहूर्त्तमेवमेव जघन्या स्थितिरपि किञ्चिन्न्यूना ॥ एतत्कर्म

१ एतत्कर्म मनुजगतिस्थ एव पुरुष स्त्री नपुसको वा तीर्थकरभवपृष्टतस्तृतीयभव प्राप्य बध्नाति बन्धोऽस्य निकाचनातस्तत्प्रारम्भ अनिकाचनन्त्वस्तु तृतीयभवस्मात् अथ यतोऽस्य सागरोपमकोटीकोटिप्रमाणत्वात् तत्र निकाचितमवश्यफलमितरत्तुभजनीयम् । निकाचनान्तु तृतीयभवादारभ्य सम्भवी

विंशतेः स्थानकानामाराधनात् सम्यक्त्वशालिना नृगतावेव तृतीये भवे निकाच्यते। केवलोत्पत्त्यनन्तरमस्योदयः, धर्मोपदेशनादिभिश्चैतद्ग्लान्या वेद्यत इति ॥

तदेव द्विचत्वारिंशद्विधानि पुण्यकर्माण्यभिधायतद्धेतूनामध्यवसायविशेषप्रभवसुपात्रदानादीनामपि पुण्यफलदत्वेन पुण्यरूपत्वमित्यभिमन्यमान पुण्यस्य द्वैविध्यमादर्शयति—

**पुण्यमिदं कार्यकारणभेदेन द्विविधम्। एतानि कर्माणि कार्यरूपाणि जीवानुभवप्रकाराणि। एतेषां हेतवस्तु सुपात्रेभ्यो निरवद्यान्नवसतिवासोजलसंस्तारकादीनां प्रदानं, मनसश्शुभसंकल्पः, वाक्काययोश्शुभव्यापारः, जिनेश्वरप्रभृतीनां नमनादय इति दिक्। इति पुण्यनिरूपणम् ॥**

पुण्यमिदमिति। पवित्रीकरणनिदानं पुण्यमिदमित्यर्थः। एतानीति साताविद्विचत्वारिंशद्विधानि कर्मप्रकृतिग्रन्थानुसारीणि कर्माणि भूतव्रत्यनुकम्पादिफलकानि कार्यरूपाणि जीवैः सुखादिरूपेणानुभवनीयानीत्यर्थ। कारणात्मकपुण्यमाह–एतेषामिति। द्वाचत्वारिंशद्विधानां कर्मणामित्यर्थः। हेतव इति नमनादय इत्यमेतनेनान्वयः, भवन्तीति शेषः। सुपात्रेभ्य इति,सम्यग्दर्शनज्ञानचारित्रतपस्सम्पन्नेभ्य इत्यर्थं, निरवद्यस्यान्नस्य सुरभिलवणस्निग्धमधुरत्वादिभिरच्युतस्य शालिव्रीहिगोधूमादिनिष्पन्नस्याशनस्य, वसतेर्वाससो जलस्य सस्तारकादीनाञ्च प्रदानम्--अनसूयाऽविषादादरपरमप्रीतिकुशलाभिप्रायदृष्टफलानपेक्षानिरुपधित्वानिदानत्वादिगुणयुतदातृकृतातिसर्गः, पुण्योपचयनिर्जराहेतुः, मनसः शुभसकल्प इति, अनभिध्यादिधर्मशुक्लध्यानध्यायित्वादय इत्यर्थ., वाक्काययोः शुभव्यापार इति, अहिंसाऽस्तेयादयश्शुभः काययोगः, असावद्यादिवचनमागमविहितभाषणं च शुभवाग्योगः, योगैरेभिस्त्रिभिश्शुभकर्मण आस्रवो भवति। जिनेश्वरेति तीर्थपत्याचार्योपाध्यायादीनामित्यर्थ., यद्यपि वस्तुतो मनोवाक्कायाना शुभव्यापारस्यैव द्विचत्वारिंशद्विधस्य पुण्यस्य कारणत्वं तथापि किञ्चिद्विस्तरेण सामान्यशेमुषीकाणा बोधाय तस्यैव प्रपञ्च आदर्शितः। न च पुण्यस्यापि पापवत्पारतन्त्र्याविशेषात्तयोर्भेदोऽनुचित इति वाच्यम् इष्टानिष्टनिमित्तभेदात्तत्सिद्धेः। इष्टगतिजातिशरीरेन्द्रियविषयादीना हि निर्वर्त्तकं पुण्यम्। अनिष्टगत्यादीनां निर्वर्त्तक पापमिति वैचित्र्यं सुप्रसिद्धमेवेति ॥

---

र्थंकरभवेऽपूर्वकरणस्य संख्येयभागा, तत ऊर्ध्वं व्यवच्छेद केवलज्ञानोत्पत्तौ चाष्टमहाप्रातिहार्यादिरूपे सुरेन्द्रकृते पूजोपचारे सति सदेवमनुजासुराया परिषदि ग्लानिपरिहारेण धर्मदशनया श्रुतचारित्ररूपधर्मप्ररूपणलक्षणया चतुस्त्रिंशता देहसौगन्ध्यादिभिरतिशयै पर्मादाता बुद्धिवचनातिशयैस्तद्वेद्यत इति भाव ॥

तत्र कर्मप्रकृतयः सामान्यतो द्विविधाः, घातिका अघातिकाश्चेति, ज्ञानदर्शनावरणमोहान्तराया घातिका, अपरा अघातिकाः । घातिकास्तु सर्वघातिका देशघातिकाश्चेति द्विविधाः । तत्र केवलदर्शनावरणनिद्रानिद्राप्रचलाप्रचलास्त्यानर्द्धिनिद्राप्रचलाकेवलज्ञानावरणद्वादशकषायमिथ्यात्वाख्या विंशतिप्रकृतयस्सर्वघातिकाः । ज्ञानावरणचतुष्कदर्शनावरणत्रयान्तरायपञ्चकसंज्वलननोकषायसञ्ज्ञका देशघातिनः । एवं शरीराङ्गोपाङ्गनिर्माणसंघातसंस्थानसंहननस्पर्शरसगन्धवर्णागुरुलघुपराघातोपघाताऽऽतपोद्योतप्रत्येकसाधारणस्थिरास्थिरशुभाशुभनामकर्माणि पुद्गलविपाकप्रदानि, आनुपूर्वी तु क्षेत्रविपाककरा, आयुर्भवधारणफलं, अवशिष्टाः प्रकृतयो जीवविपाकहेतवो बोध्याः । एवं नारकादिचतुर्गतिषु नरकगतौ सातवसातपञ्चेन्द्रियवैक्रियतदङ्गोपाङ्गतैजसकार्मणवर्णचतुष्कागुरुलघुपराघातोच्छ्वासनिर्माणत्रसबादर — पर्याप्तप्रत्येकस्थिरशुभनामानि कर्माणि उदयापेक्षया वर्त्तन्ते । तिर्यग्गतौ मनुष्यत्रिकासुरत्रिकाऽऽहारद्विकतीर्थकरनामकर्माणि विनाऽन्यानि वर्त्तन्ते । मनुजगतौ सुरत्रिकतिर्यगायुरातपनामानि पञ्चविहायान्यानि वर्त्तन्ते । देवगतौ तु मनुजत्रिकतिर्यगायुरौदारिकद्विकातपाहारकद्विकतीर्थकरनामानि वर्जयित्वा शेषाणि वर्त्तन्त इत्यादि विषयबाहुल्याभिप्रायेण दिगित्युक्तम् । दिङ्मात्रेणात्र पुण्यतत्त्वं व्यावर्णितं विस्तरस्तु प्रवचने द्रष्टव्यमिति भावः ॥ पुण्यतत्त्ववर्णनं निगमयति इतीति ॥

इति तपोगच्छनभोमणिश्रीमद्विजयानन्दसूरीश्वरपट्टालङ्कारश्रीमद्विजयकमलसूरीश्वरचरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजयलब्धिसूरिणा विनिर्मितस्य तत्त्वन्यायविभाकरस्य स्वोपज्ञायां न्यायप्रकाशव्याख्यायां पापनिरूपणं नाम चतुर्थः किरणः ॥

## अथ पञ्चमः किरणः

अथावसरसङ्गत्या पापतत्त्वं निरूपयितुमुपक्रमते—

**दुःखोत्पत्तिप्रयोजकं कर्म पापम् ॥**

दुःखोत्पत्तीति । विरोधिद्रव्योपनिपाताद्भिमतवियोगानिष्टसंयोगानिष्टश्रवणादेः पीडा-

---

१. केवलदर्शनज्ञानयोः सर्वात्मनाऽऽवरणादनयोः सर्वघातित्वं न तु दर्शनज्ञानमात्रावारकत्वम्, तथात्वे जीवस्याजीवत्वापत्तेः । २. स्वस्वविषयगुणं सर्वात्मना घातकत्वाभावादिति भावः । अघातिकास्तु न ज्ञानादिगुणं घातयन्ति, किन्तु सर्वदेशघातिनीभिः सह वेद्यमानास्तद्वद्देशघातिरसविपाकं दर्शयन्ति, यथा चौरैः सहाचौरश्चौर इवाभाति ॥ ३. शरीरत्वपरिणतपुद्गलेष्वात्मीयशक्तिप्रदर्शनात् । क्षेत्रेति, आकाश एव स्थानविप्रकर्षेण, विग्रहगतावेवास्य उदय इति भावः । भवेति, स्वयोग्यभव एवोदयोऽस्य, नान्य-

लक्षण आत्मनः परिणामो दुःखमित्यर्थः । दुःखोत्पत्तिप्रयोजकत्वे सति कर्मत्व लक्षणं विशेषणानुपादाने सातादौ विशेष्यानुपादाने कालादिसमवाये व्यभिचारादुभयम् । न चेद्दशदुःखोत्पत्तिप्रयोजकत्वे कर्मत्वस्यासातवेदनीय एव सत्त्वान्मतिज्ञानावरणादावव्याप्तिः । उक्तञ्च तत्त्वार्थसूत्रकृता-"दु खशोकतापाक्रन्दनवधपरिदेवनान्यात्मपरोभयस्थानान्यसद्वेदनीयस्ये"ति, ज्ञानदर्शनावरणादीना प्रदोषनिह्नवादिजनकत्वेन न दुःखोत्पत्तिहेतुत्वमिति वाच्यम् । मतिज्ञानावरणादीनामपि परम्परया दुःखोत्पत्तिहेतुत्वात् साक्षाद्धि फल प्रदोषनिह्नवादयः । ननु पुण्यमेकमेवास्तु न पापम्, न च दु खोपपत्तिः कस्यापि न स्यादिति वाच्यम् । पुण्यस्य तारतम्येन तदुपपत्तेः । परा काष्ठामासादितस्य पुण्यस्यातिशयसुख फलं, तस्यैव च तारतम्ययोगेनापकर्षात् सुखस्यापि हान्या तदपेक्षया तत्सुखस्य दुःखत्वम्, एवमेव परमजघन्यस्य पुण्यलेशस्य नरकदु ख फलमिति कस्यापि दोषस्याभावात्पापलक्षणप्रणयनमसगतमिति चेन्नैवम्, विनिगमनाविरहेणोभयस्यापि सिद्धे । अनुभूयते हि सुखदु खयोर्वैजात्यम्, तच विजातीयमनुरूपं कारणमन्तरेण कथ हि भवेत्, तस्मादस्ति सुखस्यानुरूप कारण पुण्यं दुःखस्यानुरूपञ्च कारण पापमिति । न च पुण्यपापे न सुखदुःखयोरनुरूपे कारणे, सुखदुःखयोरात्मपरिणामत्वात् पुण्यपापयोश्च पौद्गलिकत्वादिति वाच्यम्, सर्वथा कार्यानुरूपत्वस्य कारणेऽनिष्टत्वात् कार्याननुरूपत्वस्य वा, अपि तु सकलमपि वस्तु परस्पर तुल्यातुल्यरूपमेव । अत्र तु कार्यस्य सुखादे कारणपुण्यादिपर्यायत्वादनुरूपत्वं प्रोक्तम् । न च कथं सुखदु खे पुण्यपापयोः पर्याय इति वाच्यम्, सुख प्रति जीवपुण्यसयोगस्य दु ख प्रति जीवपापसयोगस्य हेतुत्वेन च सुखदु खयो. पुण्यपापपर्यायत्वात् । तथा च यथा सुख शुभशिवकल्याणादिशब्दैर्व्यपदिश्यते तथा पुण्यमपि, यथा दुःखञ्चाशुभाशिवाकल्याणादिशब्दैर्व्यपदिश्यते तथा पापमपीति सिद्धं पुण्यातिरिक्तं पापमिति॥

ननु किं दु.खस्यात्मपरिणामविशेषस्यामूर्त्तत्वेन पापमिदमप्यमूर्त्तं स्यात्पापपर्यायत्वाद्दु खस्य, किंवा पापस्य बन्धकत्वेन मूर्त्तत्वात्तत्पर्यायभूतं दुःखमपि मूर्त्तं स्यादित्याशङ्कायामाह—

**पौद्गलिकमेतत् । इदमेव द्रव्यपापमुच्यते । द्रव्यपापनामककर्मोत्पत्तिकारणात्मा शुभाध्यवसायो भावपापम् ॥**

---

स्मिन् भवे गतय इवेति भाव । जीवेति, जीव एवादर्शनि वाज्ञानित्वाचारित्रित्वादात्तृत्वसुखित्वदु खित्व वारिण्य इति भाव ॥

१ विजायतीयकार्यदर्शनेनानुरूपेण विजातीयकारणेन भवितव्यमेवेत्याशयेनाहानुभूयत इति । २ नन्वव तर्हि कथमनुरूपविजातीयकारणानुमानमुच्यते, सवस्य सर्वेण तुल्यातुल्यरूपत्वादित्यत्राहात्रत्विति, तथा च सुखस्य पापापर्यायत्वाद्दु खस्य पुण्यापर्यायत्वात्सुखदु खे प्रति पापपुण्येऽननुरूप, तयो पुण्यपापपर्यायत्वाच्च ते प्रति तेऽनुरूपे इति भाव ॥

पौद्गलिकमेतदिति । एतद् दुःखोत्पत्तिप्रयोजकभूतं कर्मेदमित्यर्थः, पौद्गलिकं मूर्तमेवेत्यर्थः । तथा च मूर्तपापपर्यायत्वेऽपि दुःखस्य न मूर्तत्वं जीवस्यापि तत्र हेतुत्वात्, जीवो हि तत्र परिणामिकारणममूर्तश्चातस्तत्परिणामभूतं दुःखमप्यमूर्तमेवेति भावः, ननु कर्मबन्धे नियतो हेतुर्योगः, स च मनोवाक्काययोगात्मकश्शुभोऽशुभो वा भवेत्, तत्राशुभकर्मबन्धेऽशुभो योगो हेतुश्शुभकर्मबन्धे च शुभो योगो हेतुः, योगश्च मनोवाक्कायानां परिस्पन्दो द्रव्ययोगरूपः, तथा चाध्यवसायविशिष्टेनात्मना परिस्पन्दद्वारा कर्म बध्यते, तस्मात् कर्मपरिस्पन्दयोर्निबन्धनं जीवाध्यवसायः, स च भावयोगरूपस्तस्य शुभत्वे भावपुण्यत्वमशुभत्वे भावपापत्वमित्याशयेनाह–इदमेवेति, पौद्गलिकपापकर्मेत्यर्थः, एवशब्दो भिन्नक्रमः, तथा च पौद्गलिकं पापकर्म द्रव्यपापमेवोच्यत इत्यर्थः, तेन क्रियात्मकद्रव्ययोगस्य पापत्वेऽपि न क्षतिः । अथ भावपापमाह—द्रव्यपापेति, स्पष्टम् ॥

तत्र वक्ष्यमाणप्राणातिपातादिपापबन्धहेतुभिर्योगव्यापारैरर्जितमशुभं कर्म द्व्यशीतिप्रकारैर्जीवेनानुभवनात्तत्प्रकारान् क्रमेण लक्षयितुं मतिज्ञानावरणं प्रथमं लक्षयति—

**इन्द्रियानिन्द्रियजन्याभिलापनिरपेक्षबोधाऽऽवरणकारणं कर्म मतिज्ञानावरणम् ॥**

इन्द्रियेति । इन्द्रियं चक्षुरादिरनिन्द्रियं मनः, इन्द्रियेतरद्वा, तथा तदुभयमेभिर्जन्या ये बोधा विशेषविषया अभिलापनिरपेक्षास्तेषामाच्छादनकारि यत्कर्म तन्मतिज्ञानावरणमित्यर्थः। यथेन्द्रियनिमित्तो बोधः, मनोरहितानामेकाक्षादीनां, अनिन्द्रियमनोनिमित्तः स्मृतिनिश्चितस्य धारणारूपः, इन्द्रियभिन्नमत्यज्ञानावरणीयक्षयोपशमजन्यमविभक्तरूपमोघज्ञानमनिन्द्रियनिमित्तबोधरूपम्, तथा जाग्रदवस्थाकालीनः चक्षुरादीन्द्रियमनोनिमित्तको रूपरसादिबोधः इन्द्रियानिन्द्रियनिमित्तकः, एवम्भूतानामभिलापनिरपेक्षाणां विशेषबोधात्मकानामावरणकारणं कर्मेति भाव. । तथा चेन्द्रियानिन्द्रियजन्याभिलापनिरपेक्षबोधावरणकारणत्वे सति कर्मत्वं लक्षणार्थः । विशेष्यं कालादिवारणाय विशेषणं सातादिवारणाय । श्रुतज्ञानावरणीयेऽतिव्याप्तिवारणायाभिलापनिरपेक्षेति । धारणाज्ञानावरणीयादावव्याप्तिवारणायानिन्द्रियेति । रूपचाक्षुषादिज्ञानावरणीयेऽव्याप्तिवारणायेन्द्रियेति, दर्शनावरणीयादावतिव्याप्तिवारणाय विशेषविषयकज्ञानवाचिबोधपदम् । अवधिज्ञानावरणीयादावतिव्याप्तिवारणाय जन्यान्तम् । नन्वावरणकर्मेदं सतां मत्यादीनामावारकमसतां वा ? नाद्यः प्राप्तात्मलाभत्वात्, सत्त्वेनैवावरणस्यानुपपत्तेः । नान्त्यः, तथा सति न स्यादेवावरणम्, नहि खरविषाणादिवदसदाव्रियते इति चेन्न, आदेशवचनात्, कथञ्चित्सतामावरणं कथञ्चिचासतामिति । द्रव्या-

र्थादेशेन हि सतां मत्यादीनामावरणं, पर्यायार्थादेशेन चासताम् । यदि त्वेकान्तेन सतामावरणं तदा क्षायोपशमिकत्वमेषां न स्यात्, अथैकान्तेनासतां तदापि तन्नोपपद्यते, असत्वात् सत एवावरणदर्शनाच्च,नभसो हि सतो मेघपटलादिनाऽऽवरणं दृश्यते, न च कुटीभूतानि मत्यादीनि कानिचित्सन्ति, येषामावरणान्मत्याद्यावरणानामावरणत्वं भवेत्, किन्तु मत्याद्यावरणसन्निधाने जीवो मत्यादिज्ञानपर्यायैर्नोत्पद्यत इत्यतो मत्याद्यावरणानामावरणत्वमिति । देशघातीदम्, अस्योत्कृष्टा स्थितिस्त्रिंशत्सागरोपमकोटीकोट्यः । वर्षसहस्रत्रयञ्चाबाधाकालः । बाधाकालस्तु यत्प्रभृति ज्ञानावरणादिकर्मोदयावलिकाप्रविष्टं यावच्च निःशेषमुपक्षीणं तावद्भवति । तच्च कर्मबन्धकालादारभ्य त्रिषु वर्षसहस्रेष्वतीतेषूदयावलिकां प्रविशति, स खल्वबाधाकालो यतस्तत्कर्म नानुभूयते तावन्तं कालमिति । जघन्या तु अन्तर्मुहूर्त्तकालः । अबाधाप्यन्तर्मुहूर्त्तमेव ॥

श्रुतज्ञानावरणलक्षणमाह—

**मतिज्ञानसापेक्षशब्दसंस्पृष्टार्थग्रहणावरणकारणं कर्म श्रुतज्ञानावरणम् ॥**

**मतिज्ञानेति ।** मतिज्ञानसापेक्षं मतिज्ञानापेक्षाकारणकं, शब्दो द्रव्यश्रुतमुपचारात् तत्संस्पृष्टो वाच्यवाचकभावेन सम्बद्धो योऽर्थस्तद्विषयकं ग्रहणं श्रुतानुसारि च, तदावरणकारणं कर्मेत्यर्थः । तथा च मतिज्ञानसापेक्षश्रुतानुसारिसाभिलापज्ञानावरणकारणत्वे सति कर्मत्वं लक्षणम् । विशेष्यविशेषणयोः कृत्यं पूर्ववत् । साभिलापज्ञानावरणकारणत्वे सति कर्मत्वस्य शब्दोल्लेखसहितेहादिज्ञानावरणकारणे मतिज्ञानावरणविशेषेऽतिव्याप्तिरिति श्रुतानुसारीति पदमीहादीनां श्रुतानुसारित्वाभावेन न तत्र दोषः, न च मतिज्ञानसापेक्षसाभिलापज्ञानावरणहेतुत्वे सति कर्मत्वमित्युक्तावीहादीनां मतिज्ञानासापेक्षत्वेन तत्र नातिव्याप्तिरिति-वाच्यम्, अवग्रहादिरूपमतिज्ञानसापेक्षत्वादीहादेः । न चेहादीनां कथं न श्रुतानुसारित्वं सङ्केतकालादौ निशमितशब्दानुसरणमन्तरेण तत्र शब्दाभिलापासम्भवादिति वाच्यम्, *व्यवहारकाले शब्दानुसरणं विनापि पूर्वं श्रुतपरिकर्मितमतीनां प्रवृत्तिदर्शनात्*, नहि तदानीमपि पूर्वगृहीतं सङ्केतं श्रुतं वाऽनुस्मृत्य प्रवर्त्ततेऽपि त्वभ्यासपाटवादेव, श्रुतानुसारिसाभि-

१ मतिज्ञानस्य साभिलापानभिलापरूपत्वेऽपि व्यवहारकाले सङ्केतकालप्रवृत्तस्य श्रुतग्रन्थसम्बन्धिनो वा शब्दस्यानुस्मरणादश्रुतानुसारित्वं, श्रुतज्ञाने तादृशशब्दानुस्मरणस्यावश्यकत्वेन श्रुतानुसारित्वमिति भावः ॥ न चैकेन्द्रियाणां सामग्र्यभावेन श्रुतानुसारित्वासम्भवाच्छ्रुतज्ञानाभावेन तदावरणमपि न स्यात्, इष्टञ्च तत्र तदुभयमिति वाच्यम्, भावश्रुतस्य तत्रापि स्वीकारेण दोषाभावात्, न चैवं तत्राश्रुतज्ञानावरणेऽव्याप्तिरिति वाच्यम्, पर्यायनयेन श्रुतानुसारिसाभिलापज्ञानवृत्तिज्ञानत्वसाक्षाद्व्याप्यधर्मवदावरणकारणत्वे सति कर्मत्वस्य विवक्षया दोषाभावादिति भावः ॥

लापज्ञानावरणकारणत्वे सति कर्मत्वमित्युक्तौ यद्यपि न कोऽपि दोषस्तथापि साभिलापज्ञाने मतिज्ञानस्य हेतुत्वमात्रप्रदर्शनपरं मतिज्ञानसापेक्षेति पदम् । यद्वाऽक्षरादिश्रुतविशेषेषु येऽवग्रहादयः समुपजायन्ते ते चाश्रुतानुसारित्वे मतिज्ञानतया व्यपदिश्यन्ते श्रुतस्य मतिपूर्वकत्वात्, यस्तु तेषु श्रुतानुसारी ज्ञानविशेषः स श्रुतज्ञानत्वेनेति सूचयितुं वा तत्पदम् । अस्योभयविधा स्थितिर्मतिज्ञानावरणवत्, देशघातीदम् ॥

अथावधिज्ञानावरणलक्षणमाचष्टे—

**इन्द्रियानिन्द्रियनिरपेक्षमूर्त्तद्रव्यविषयप्रत्यक्षज्ञानावरणनिदानं कर्मावधिज्ञानावरणम् ॥**

इन्द्रियेति । इन्द्रियानिन्द्रियनिरपेक्षमूर्त्तद्रव्यविषयकप्रत्यक्षज्ञानावरणनिदानत्वे सति कर्मत्वमवधिज्ञानावरणस्य लक्षणम् । विशेषणविशेष्यपदकृत्यं प्राग्वत् । मतिज्ञानावरणादावतिव्याप्तिवारणाय निरपेक्षान्तं प्रत्यक्षविशेषणम्, तस्य घटादिरूपयत्किञ्चिन्मूर्तद्रव्यविषयकप्रत्यक्षज्ञानावरणनिदानकर्मत्वात्, यदि प्रत्यक्षपदेन पारमार्थिकप्रत्यक्षग्रहणाच्च दोष इत्युच्यते तर्हि तत्सूचनायैव तदुपादानं विज्ञेयम् । न च तथात्वेऽपि मनःपर्यवावरणादावतिव्याप्तिः, तस्य मूर्त्तमनोद्रव्यविषयकप्रत्यक्षज्ञानावरणकारणकर्मत्वात्, केवलज्ञानावरणस्यापि सकलमूर्त्तद्रव्यविषयकप्रत्यक्षज्ञानावरणकारणकर्मत्वाच्चेति वाच्यम्, यावन्मूर्त्तमात्रद्रव्यविषयकप्रत्यक्षज्ञानावरणकारणत्वे सति कर्मत्वस्य लक्षणार्थत्वात् । हीयमानकवर्धमानकानवस्थितावधिज्ञानावरणविशेषेष्वपि उत्कृष्टावधिग्रहणेन लक्षणं द्रव्यार्थिकप्राधान्याद्योजनीयम् । पर्यायनयप्राधान्यविवक्षायान्तु यावन्मूर्त्तद्रव्यमात्रविषयकप्रत्यक्षज्ञानवृत्तिज्ञानत्वसाक्षाद्व्याप्यधर्मवदावरणकारणत्वे सति कर्मत्वं लक्षणम्, तादृशो धर्मोऽवधित्वमेव, नत्वनुगामित्वादिकं, तेन विभङ्गज्ञानावरणादौ नाव्याप्तिः । देशघातीदम् । स्थितौ मतिज्ञानावरणवत् ॥

मनःपर्यवज्ञानावरणस्वरूपमाह—

**इन्द्रियानिन्द्रियनिरपेक्षसंज्ञिपञ्चेन्द्रियमनोगतभावज्ञापकप्रत्यक्षज्ञानावरणसाधनं कर्म मनःपर्यवावरणम् ॥**

इन्द्रियानिन्द्रियेति । इन्द्रियानिन्द्रियनिरपेक्षसंज्ञिपञ्चेन्द्रियमनोगतभावज्ञापकात्मकप्रत्यक्षज्ञानावरणकारणत्वे सति कर्मत्वं लक्षणम् । मनुष्यक्षेत्रवर्त्तिसंज्ञिपञ्चेन्द्रियैः काययोगेन गृहीतानि मनोयोग्यद्रव्याणि चिन्तनानुगुणं मनोयोगेन मनस्त्वेन परिणमय्याऽवलम्ब्य-

मानानि द्रव्यमनांसि तद्गता ये भावाश्चिन्तानुकूलपरिणामास्तेषां ज्ञापकात्मकं यत्प्रत्यक्षज्ञानं तदावरणकारणं कर्मेत्यर्थः । अत्रापीन्द्रियानिन्द्रियपदं पारमार्थिकप्रत्यक्षज्ञापनायैव, अन्यथा मनःप्रणिधानहेतुकत्वादनिन्द्रियनिरपेक्षत्वकथनं पूर्वत्रात्र चासङ्गतं स्यात् संज्ञिपञ्चेन्द्रियपदेन मनुष्यक्षेत्रवर्तिसंज्ञिपञ्चेन्द्रिया ग्राह्यास्तेन तद्बहिर्वर्त्तिना मनोगतभावज्ञानं मनःपर्यवितो न भवतीति सूचितम्, संज्ञिपञ्चेन्द्रियमनोगतभावमात्रज्ञापकप्रत्यक्षज्ञानावरणकारणत्वे सति कर्मत्वं वाच्यं तेन न केवलज्ञानावरणेऽतिव्याप्तिरालोचितबाह्यार्थज्ञानन्त्वनुमानात् । यावद्भावज्ञापकेत्यादि तु न वाच्यम्, ऋजुमतिमन पर्यवावरणेऽव्याप्तेः[१], देशघातीदम् । स्थिती मतिज्ञानावरणवत् ॥

अथ केवलज्ञानावरणमाह—

**मनइन्द्रियनिरपेक्षलोकालोकवर्त्तिसकलद्रव्यपर्यायप्रदर्शकप्रत्यक्षज्ञानावरणसाधनं कर्म केवलज्ञानावरणम् । इति ज्ञानावरणीयपञ्चकम् ॥**

मनइन्द्रियनिरपेक्षेति । अत्रापि मनइन्द्रियनिरपेक्षेति प्रत्यक्षविशेषणमव्यवहितात्मद्रव्यसमुत्थत्वेन पारमार्थिकप्रत्यक्षत्वसूचनपरम् । अशेषद्रव्यपर्यायग्राहिप्रत्यक्षज्ञानावरणहेतुकत्वे सति कर्मत्वं तु लक्षणम् । सर्वघातीदम्, उभयविधा स्थितिरपि मतिज्ञानावरणवत् । अत्रात्मनो ज्ञस्वभावस्य प्रकाशरूपस्य ज्ञानावरणक्षयोपशमक्षयसमुद्भवा प्रकाशविशेषा मतिज्ञानादिव्यपदेश्या पर्याया इति बहुविकल्पास्तत्र च मत्यादिज्ञानावरणादयोऽपि बहुविकल्पा भवन्तीति बोध्यम् । नन्वभव्यस्य मन पर्यवज्ञानशक्ति केवलप्राप्तिसामर्थ्यञ्चास्ति न वा ? चेदस्ति, अभव्यत्वानुपपत्तिर्यदि नास्ति तर्हि कथं तत्र तदावरणसद्भाव , उभयसामर्थ्याभावादिति चेन्नादेशवचनादुक्तं हि द्रव्यार्थादेशेन सतोस्तयोरावरणम् । पर्यायार्थिकनयेनासतोरपीति । न च द्रव्यार्थादेशेनाभव्यस्य तयो सत्त्वे भव्यत्वापत्तिरितिवाच्यम् । सम्यक्त्वादिपर्यायव्यक्तियोगार्हस्यैव भव्यत्वं तद्विपरीतस्याभव्यत्वमिति नियमात् न तु मन पर्यवकेवलज्ञानसामर्थ्यवतो भव्यत्वं तद्विपरीतस्याभव्यत्वमिति नियम इति न कोऽपि दोष । इमान्येव विभागवाक्ये पूर्वोक्ते ज्ञानावरणीयपञ्चकपदेनोक्तानीति सूचयतीतीति ॥

---

१ ऋजुमतिमन पर्यवज्ञानं हि घटोऽनेन चिन्तित इत्यादिसामान्याकाराध्यवसायनिबन्धनकतिपयपर्यायविशिष्टमनोद्रव्यपरिच्छित्तिरूपम् नात्र सुवर्णवर्णाग्निपुत्रकत्वादितत्पर्यायविषयकत्वमिति न तदावरणेऽव्याप्तिर्मात्रपदेन मनोभिमद्रव्यमात्रस्यैव व्यवच्छेदादिति भाव ॥

सम्प्रति दानान्तरायमभिधत्ते—

**सामग्रीसमवधानासमवधानयोस्सतोर्दानसामर्थ्याभावप्रयोजकं कर्म दानान्तरायः ॥**

**सामग्रीति** । अन्तर मध्य दातृदेयादीना तदेति ईयते वाऽनेनेत्यन्तराय । यस्मिन्मध्येऽवस्थिते दात्रादेर्दानादिक्रियाऽभावो दानादीच्छाया वहिर्भावो वा सोऽन्तराय॰ । दानस्यान्तरायो दानान्तराय॰ । अन्तर्धीयतेऽनेनात्मनो दानादीत्यन्तराय । अन्तर्धानमात्मनो दानादिपरिणामस्येति वाऽन्तराय । दाने सामग्र्य, देयद्रव्य प्रतिग्राहको दानफलवेत्तृत्वमित्याद्यस्तासा समवधानेऽसमवधाने वा यत्कर्मोदित दानक्रियायास्तत्सामर्थ्यस्य वा प्रतिरोधकं तादृश कर्म दानान्तराय उच्यत इत्यर्थ॰ । सामग्रीसमवाधानासमवधानयोस्सतोरिति पदमस्यस्य दानान्तरायभूतं कर्म दानसामर्थ्यादर्शनादित्यनुमाने क्वचिद्दयवस्त्वाद्यभावेन दानसामर्थ्याभावसत्त्वेन व्याप्यसिद्ध्या तयो प्रयोज्यप्रयोजकभाववैधुर्यशङ्कानिरसनार्थमुपात्तम्, नत्वव्याप्त्यतिव्याप्त्यसम्भवदोषव्युदासाय, प्रसक्त्यभावात् । एवमग्रेऽपि भाव्यम् । विशेषणविशेष्यकृत्यं पूर्ववत्, लाभान्तरायादावतिप्रसङ्गवारणाय दानेति । मतिज्ञानावरणस्येवास्य स्थिती विज्ञेये ॥

लाभान्तरायमाह—

**सम्यग्याचितेऽपि दातृसकाशादलाभप्रयोजकं कर्म लाभान्तरायः । अनुपहताङ्गस्यापि ससामग्रीकस्यापि भोगासामर्थ्यहेतु कर्म भोगान्तरायः । एकशो भोग्यं भोगो यथा कुसुमादयः । अनुपहताङ्गस्यापि ससामग्रीकस्याप्युपभोगासामर्थ्यहेतुः कर्मोपभोगान्तरायः । अनेकशो भोग्यमुपभोगो यथा वनितादयः । पीनाङ्गस्यापि कार्यकाले सामर्थ्यविरहप्रयोजकं कर्म वीर्यान्तरायः, इत्यन्तरायपञ्चकम् ।**

**सम्यगिति** । सर्वदाऽर्थिप्रार्थनानुगुण दातुस्सकाशाद् यस्य कर्मण उदयप्रभावेण याचकेन सविनयं याचितेऽपि अल्पमपि न लभ्यते वस्तु तत्कर्म लाभान्तराय इत्यर्थ । अत्रापि सम्यग्याचितेति पदं प्रयोज्यप्रयोजकभावरक्षार्थं । अन्यथाऽस्यालाभ सिद्धिप्रयोज्योऽलाभस्यादित्यत्र याचनसामर्थ्याभावस्य प्रयोजकत्वसिद्धा सिद्धसाधनत्वापत्तेर्लाभान्तरायस्यासिद्धिप्रसङ्ग स्यात् । दानान्तरायादावतिव्याप्तिवारणाय लाभेति । स्थिती च मतिज्ञानावरणवत् । भोगान्तराय लक्षयति—अनुपहताङ्गस्यापीति । निखिलाङ्गसम्भूतोऽपि माल्यचन्दनादि-

सामग्रीसमवधानेऽपि यदुदयान्न भुङ्क्ते माल्यादीनि तत्कर्म भोगान्तराय इत्यर्थः। प्रयोज्यप्रयोजकभावरक्षार्थमनुपहताङ्गस्यापि ससामग्रीकस्यापीति च पदम्। भोगपदन्तु दानान्तरायादावतिव्याप्तिवारणाय। स्थिती मतिज्ञानावरणवत्। भोगोपभोगयोः पर्यायताव्युदसनार्थं भोगशब्दार्थमाह—एकश इति एकवार सकृदेवेति यावत्। तन्निदर्शनमाह—यथेति। कुसुमादयो ह्येकदा भुक्ता न पुनर्भोगाय त एवोपयुज्यन्त इति सकृद्भोगसाधनत्वात्ते भोगा उच्यन्त इति भावः। उपभोगान्तरायमाह—अनुपहताङ्गस्यापीत्यादिना। स्पष्टम्, स्थिती ज्ञानावरणवत्, उपभोगपदार्थमाह—अनेकश इति बहुवारमित्यर्थः पुन पुनरिति भावः, निदर्शनमाह—वनितादय इति। अथ वीर्यान्तरायमाचष्टे—पीनाङ्गस्यापीति। हृष्टपुष्टाङ्गस्येत्यर्थः, निरामये वपुषि सत्यपि कार्यकाले यौवनावस्थायामपि वर्त्तमानोऽल्पशक्तिर्भवति, साध्येऽपि प्रयोजने यदुदयान्न प्रवर्त्तते तत्कर्म वीर्यान्तराय इत्यर्थः। लक्षणविचारः पूर्ववदेव। स्थिती मतिज्ञानावरणवत्। अस्योदयाधिक्यं पृथिव्यप्तेजोवायुवनस्पतिषु द्वीन्द्रियादारभ्य चरमसमयछद्मस्थं यावत् तत्क्षयोपशमजनिततारतम्याद्वीर्यस्य वृद्धिः। उत्पन्नकेवले भगवति तु सर्ववीर्यान्तरायक्षयः। एते पञ्चान्तराया विभागवाक्येऽन्तरायपञ्चकशब्देनोक्ता इत्याह—इतीति। एते पञ्चापि देशघातिनः॥

अधुना चक्षुर्दर्शनावरण वक्ति—

**चक्षुषा सामान्यावगाहियोधप्रतिरोधकं कर्म चक्षुर्दर्शनावरणम्। तद्भिन्नेन्द्रियेण मनसा च सामान्यावगाहियोधप्रतिरोधकं कर्माचक्षुर्दर्शनावरणम्॥**

चक्षुषेति। चक्षुर्जन्यसामान्यमात्रविषयकबोधप्रतिरोधकत्वे सति कर्मत्व चक्षुर्दर्शनावरणस्य लक्षणम्। विशेष्यविशेषणकृत्य पूर्ववत्। अचक्षुर्दर्शनावरणादौ व्यभिचारवारणाय चक्षुर्जन्येति, मतिज्ञानावरणविशेषेऽतिव्याप्तिवारणाय सामान्यमात्रविषयकेति। मात्रपदम प्यत एव। दर्शनमुपलब्धि' सामान्यार्थग्रहणं स्कन्धावारोपयोगवत्तदहर्जातबालदारकनयनोपलब्धिवद्वा व्युत्पन्नस्यापि। चक्षुषा दर्शनं चक्षुर्दर्शनमिति तत्त्वार्थवृत्तिः, चक्षुर्दर्शनावरणीयक्षयोपशमतोऽवबोधव्याप्रतिमात्रसार, सूक्ष्मजिज्ञासारूपमवग्रहप्राग्जन्म, मतिज्ञानावरणक्षयोपशमसम्भूत, सामान्यमात्रग्राह्यवग्रहव्यङ्ग्यं स्कन्धावारोपयोगवच्चक्षुर्दर्शनमिति तत्त्वार्थ-

---

१ दर्शन हि पञ्चभिरिन्द्रियैर्भवति, चक्षुषोऽप्राप्यकारित्वेनेतरेन्द्रियाणाञ्च प्राप्यकारित्वेन चक्षुर्दर्शनमचक्षुर्दर्शनमितीन्द्रियाश्रयणाद्दर्शनस्य द्वैविध्यात्तदपेक्षया द्वैविध्यमावरणस्य एकधा सङ्ग्रहासम्भवात्, मनस्त्वनिन्द्रिय मतस्तद्दर्शनस्याचक्षुर्दर्शनेन सङ्ग्रहोऽत प्रथम चक्षुर्दर्शनावरणमाह॥

हारिभद्रटीका । उभयविषव्याख्यानेन विषयविषयिसन्निपातानन्तरसमुद्भूतनिःशेषविशेषविमुखसद्विषयकं दर्शनमिति लभ्यते । विशुद्धनयेनेदम् । उपचारनयेन तु दृष्टिर्दर्शनं सामान्यविशेषात्मके वस्तुनि सामान्यबोधः, यथा वनमिदमिति । एवं पूर्वपूर्वज्ञानमुत्तरोत्तरविशेषविषयकज्ञानापेक्षया दर्शनमवधेयम् । देशघातीदम् । अस्य स्थिती मतिज्ञानावरणवत् । अचक्षुर्दर्शनावरणस्वरूपमाह, तद्भिन्नेन्द्रियेणेति । चक्षुर्भिन्नेन्द्रियेणेत्यर्थे, चक्षुर्दर्शनावरणवारणाय तद्भिन्नेति । मनसेति, मनोजन्येत्यर्थः, तथा च चक्षुर्भिन्नेन्द्रियमनोऽन्यतरजन्यसामान्यमात्रावगाहिबोधप्रतिरोधकत्वे सति कर्मत्वमचक्षुर्दर्शनावरणस्य लक्षणम् । कृत्यं पदानां स्पष्टमेव । देशघातीदम् । स्थिती अपि मतिज्ञानावरणवत् ॥

अवधिदर्शनावरणमाचष्टे—

**मूर्त्तद्रव्यविषयकप्रत्यक्षरूपसामान्यार्थग्रहणावरणहेतुः कर्मावधिदर्शनावरणम् ॥**

**मूर्त्तद्रव्येति** । अवधिज्ञानं हि मूर्त्तद्रव्यमात्रविषयकप्रत्यक्षरूपं तस्मिन् यत्सामान्यार्थग्रहणं तदावरणहेतुः कर्म अवधिदर्शनावरणमित्यर्थः । चक्षुर्दर्शनावरणादौ व्यभिचारवारणाय प्रत्यक्षान्तं, तस्य यावन्मूर्त्तमात्रविषयकदर्शनावरणरूपत्वाभावात् । अवधिज्ञानावरणादौ व्यभिचारवारणाय सामान्यार्थग्रहणेति । तथा चावधिज्ञानिनामवध्युपयोगे यत्सामान्यार्थग्रहणं तदावरणकारणं कर्मेति भावः । अत्र सर्वत्र दर्शनमनाकारं ज्ञानं साकारं बोध्यम् । स्थिती अपि मतिज्ञानावरणवत्, देशघातीदम् ॥

अथ केवलदर्शनावरणस्वरूपमाह—

**समस्तलोकालोकवर्त्तिमूर्त्तामूर्त्तद्रव्यविषयकगुणभूतविशेषकसामान्यरूपप्रत्यक्षप्रतिरोधकं कर्म केवलदर्शनावरणम् । इति दर्शनावरणचतुष्कम्, दर्शनलब्धिप्रतिबन्धकम् ॥**

**समस्तेति** । सकलानि यानि लोकालोकवर्त्तीनि मूर्त्तामूर्त्तद्रव्याणि तद्विषयकः गौणीकृताः विशेषा यस्मिन् तादृशं यत्सामान्यविषयकं प्रत्यक्षं तदावरणकारणं कर्मेत्यर्थः । केवलदर्शन-

---

१. नन्ववधिदर्शनिनः उत्कृष्टतोऽप्येकवस्तुगतासङ्ख्येया असङ्ख्येयाः पर्याया जघन्यतश्चत्वारः पर्याया उक्ताः पर्यायाश्च विशेषा एव, ते च ज्ञानस्यैव विषया न दर्शनस्य, तथा चावधिदर्शनस्यैवाभावेनावधिदर्शनावरणमेवाप्रसिद्धमिति चेन्नात्यम् पर्यायैरपि घटशरावोदञ्चनादिभिर्मृदादिसामान्यमेव तथा विशिष्यते न पुनस्तेन एकान्तेन व्यतिरिच्यन्ते अतो मुख्यतया सामान्यं गौणतया विशेषा अपि दर्शनस्य विषय इति न दर्शनाप्रसिद्धिः ॥

मिदं केवलज्ञानोत्तरभावि, चक्षुर्ज्ञानादीनि तु चक्षुर्ज्ञानादिपूर्वभावीनि, गौणीकृतसकलविशेषविषयकसामान्यप्रधानविषयकप्रत्यक्षज्ञानावरणकारणत्वे सति कर्मत्वं लक्षणं, अनाकारस्यास्य दर्शनस्य प्रत्यक्षत्वेनोत्कीर्त्तनं ज्ञानोत्तरकालभावित्वस्याव्यवहितात्मद्रव्यसमुत्थत्वस्य निखिलसामान्यविशेषविषयकत्वस्य च सूचनाय, केवलं गुणप्रधानभावापेक्षया च तयोर्विशेषः । सर्वघातीदम्। अस्यापि जघन्योत्कृष्टा स्थितिर्मतिज्ञानावरणवत्। अथ मनःपर्यवदर्शनं नास्त्येव, मनोभावविषयकत्वेन सामान्यविषयकबोधानात्मकत्वेन साकारत्वात्तस्य, अतो दर्शनावरणानि चतुर्विधान्येव, तान्येव च विभागवाक्ये दर्शनावरणचतुष्कपदेनोक्तानीत्याह–इतीति । चत्वारीमानि दर्शनावरणानि दर्शनस्योद्गममेव प्रतिरुन्धन्ति तस्माद्दर्शनचतुष्कं दर्शनलब्धिप्रतिबन्धकमित्याह–दर्शनेति । तल्लब्धिरेव यदा प्रतिरुद्धा तदा कुतस्तदुपयोग इति भावः ॥

अथ निद्रां लक्षयति—

**चैतन्याविस्पष्टतापादकं सुखप्रबोधयोग्यावस्थाजनकं कर्म निद्रा । चैतन्यस्याविस्पष्टतापादकं दुःखप्रबोध्यावस्थाहेतुः कर्म निद्रानिद्रा ॥**

चैतन्येति । चैतन्यस्य याऽविस्पष्टता तमसाऽऽवृतघटवदवस्थानं, निद्रोदयाद्धि जीवस्तमोऽवस्थायामवस्थितो भवति, तस्या आपादकं सुखेनानायासेन योऽयं प्रबोधः, नखच्छोटिकामात्रेणैवावबोधस्तद्योग्यावस्था निद्रावस्थेत्युच्यते तज्जनकं कर्मापि निद्रा कारणे कार्योपचारादत एव न जहल्लिङ्गत्वं निद्राशब्दस्येति भावार्थः। चैतन्याविस्पष्टतापादकत्वे सति कर्मत्वस्य निद्रानिद्रायां सत्त्वात्तद्वारणाय सुखप्रबोधयोग्यावस्थाजनकत्वे सतीति । शुभकर्ममात्रस्य सामान्येनात्मनः सुखप्रबोधयोग्यावस्थाजनकत्वसंशयव्युदासाय चैतन्यस्याविस्पष्टतापादकत्वे सतीत्युक्तं न शुभकर्म चैतन्यस्याविस्पष्टतापादकमतो न दोषः । यद्यपि पापकर्म चैतन्याविस्पष्टतापादकं, तथापि न निद्रातिरिक्तं तत्सुखप्रबोधयोग्यावस्थाजनकमतो न दोषः । अस्या उत्कृष्टा स्थितिः त्रिंशत्सागरोपमकोटीकोटयो वर्षसहस्रत्रितयञ्चाबाधा, जघन्या तु सागरोपमस्य त्रयस्सप्तभागाः पल्योपमासङ्ख्येयभागेन न्यूना अन्तर्मुहूर्तञ्चाबाधा। निद्रानिद्रां लक्षयति—चैतन्यस्येति । चैतन्याविस्पष्टतापादकत्वे सति दुःखप्रबोधयोग्यावस्थापादकत्वे च सति कर्मत्वं लक्षणार्थः, मिथ्यात्वमोहनीयादिकर्मणां दुःखप्रबोधयोग्यावस्थापादकत्वाच्चैतन्यस्याविस्पष्टतापादकत्वाभावात्तत्रातिव्याप्तिवारणाय दुःखप्रबोध्यस्वापावस्थापादकत्वे सति कर्मत्वस्य विवक्षितत्वे चैतन्यस्याविस्पष्टतापादकत्वे सतीति पदं न देयमेव, अन्यपदप्रयोजनं पूर्ववत्। निद्रातोऽतिशायिनी निद्रेति मध्यमपदलोपिसमासेन निद्रानिद्रा निष्पन्नेति बोध्यम् । अस्याः स्थिती निद्रावत् ॥

अथ प्रचलामाह—

**उपविष्टस्योत्थितस्य वा चैतन्याविस्पष्टतापादकं कर्म प्रचला ।**

उपविष्टस्येति । प्रचलयत्यात्मानमिति प्रचला, स्वापावस्थाविशेषोऽयम् । अवस्थायामस्यामुपविष्ट ऊर्ध्वस्थितो वा प्रचलयति विघूर्णयत्यात्मानं, अत्र चैतन्यस्याविस्पष्टता न विनिवृत्तेन्द्रियत्वात्प्रीतिलवमात्रनिदाना नेत्रगात्रक्रियाफला विज्ञेया, ईदृशविपाकप्रापकं कर्मापि प्रचलेत्युच्यते तथा चोपवेशनोत्थानकालावच्छिन्नस्थितिमत्पुरुषसम्बन्धिस्वापप्रयुक्तचैतन्याविस्पष्टतापादकत्वे सति कर्मत्वं लक्षणम् । निद्रादावतिव्याप्तिवारणाय सम्बन्ध्यन्तम् । प्रचलाप्रचलादावतिव्याप्तिवारणाय स्थितिमदिति । निद्राद्यतिव्याप्तिवारणायोपवेशनोत्थानकालावच्छिन्नेति । निद्रायां निद्रानिद्रायां च पुरुषो हि शेते । शोकश्रममदादिप्रभवेयं प्रचला । स्थिती निद्रावत् ॥

प्रचलाप्रचलामाह—

**चङ्क्रममाणस्य चैतन्याविस्पष्टतापादकं कर्म प्रचलाप्रचला ॥**

चङ्क्रममाणस्येति । चङ्क्रमणकालावच्छिन्नपुरुषसम्बन्धिस्वापप्रयुक्तचैतन्याविस्पष्टतापादकत्वे सति कर्मत्वं लक्षणम्, कृत्यं स्पष्टम् । स्थिती अपि निद्रावत् ॥

स्त्यानर्द्धिमाह—

**जाग्रदवस्थाऽध्यवसितार्थसाधनविषयस्वापावस्थाप्रयोजकं कर्म स्त्यानर्द्धिः, इति दर्शनलब्ध्यावारकं निद्रापञ्चकम् ॥**

जाग्रदवस्थेति । स्त्याना पिण्डीभूता ऋद्धिरात्मशक्तिरूपा यस्यां सा स्त्यानर्द्धिः, स्त्यानगृद्धिरपि नामान्तरं, स्त्याना बहुत्वेन सघातमापन्ना गृद्धिरभिकाङ्क्षा, जाग्रदवस्थाऽध्यवसितार्थसाधनविषया यस्यां स्वापावस्थायां सा स्त्यानगृद्धिः । ईदृशावस्थापन्नस्य प्रथमसंहननस्योत्कर्षतः केशवार्द्धबलसदृशी शक्तिरुपजायते प्रवचने प्रसिद्धोऽयमर्थः । तथा च जाग्रदवस्थाध्यवसितार्थसाधनविषयकस्वापावस्थाप्रयोजकत्वे सति कर्मत्वं लक्षणं निद्रादिवारणाय विषयकान्तम् । निद्रावदेवास्या उभयविधा स्थितिः । निद्रापञ्चकमिदं प्राप्ताया दर्शनोपलब्धेरुपघातं करोतीत्याह–इतीति, न तु दर्शनावरणचतुष्टयवन्मूलत एव दर्शनलब्धिमुपहन्तीति । अत्रेदं विज्ञेयं दर्शनावरणं बन्धे उदये सत्तायां च यदाचिच्चतुर्धा षोढा नवधा प्राप्यते यदा बन्धादिषु चतुर्धा विवक्ष्यते तदा पूर्वोदितं दर्शनावरणचतुष्टयं विज्ञेयम् । तदेव निद्राप्रच-

लाभ्यां षोढा भवति तदा तु दर्शनावरणषट्कमुच्यते। तदेव च निद्रादिपञ्चभिर्युतं नवधा भवत्येतदेव च विभागे दर्शनावरणनवकमित्युक्तमिति ॥

अथ नीचैर्गोत्रमाह—

## नीचकुलजन्मनिदानं तिरस्कारोत्पादकं कर्म नीचैर्गोत्रम् ॥

नीचकुलेति। नीचकुलं हीनजात्यादिः, चण्डालमौष्टिकव्याधादयः। तत्र यज्जन्माऽऽविर्भावस्तन्निदानं निन्द्यादितिरस्कारोत्पादकञ्च यत्कर्म तन्नीचैर्गोत्रमित्यर्थः। नीचकुलजन्मनिदानत्वे सति तिरस्कारोत्पादकत्वे च सति कर्मत्वं लक्षणम्, विशेषणविशेष्यकृत्यं पूर्ववत्। सामान्येन पापकर्ममात्रस्य तिरस्कारोत्पादकत्वान्नीचकुलजन्मनिदानत्वे सतीत्युक्तम्। न केवलं नीचैर्गोत्रं नीचकुलस्योत्पत्तौ निबन्धनं तथा च सति तत्रोत्पादानन्तरं तस्याभावप्रसङ्गेन संक्रमणोद्वर्त्तनादिकं तदानीं तस्य न स्यात्, अतस्तिरस्कारोत्पादकत्वे च सतीत्युक्तं, तेन न निमित्तकारणमात्रमिदं दण्डादिवत्, येन संक्रमणोद्वर्त्तनादिकं न स्यात्, अपि त्वसमवायिकारणतुल्यं, तेन नीचकुलजस्यापि नोच्चैर्गोत्रोदयविरोधः। तदानीं नीचकुलजन्मनिदानतिरस्कारोत्पादककर्माभावात्। उच्चैर्गोत्रोदये हि न तिरस्कारो भवतीति। अस्य विंशतिसागरोपमकोटीकोट्यः परा स्थितिरबाधा वर्षसहस्रद्वयम्, जघन्या त्वष्टौ मुहूर्त्ताः, अबाधा चान्तर्मुहूर्त्तम् ॥

असातवेदनीयं लक्षयति—

## दुःखविशेषोपलब्धिकारणं कर्मासातवेदनीयम्।

दुःखविशेषेति। दुःखं जन्मजरामरणप्रियवियोगानिष्टसंयोगव्याधिबन्धादिजन्यं शारीरिकं बहुविधं मानसं वाऽतिदुःसहं परिणतिविशेषरूपं तदुपलब्धेः कारणं यत्कर्म तदसातवेदनीयमित्यर्थः। विशेष्यविशेषणदलप्रयोजनं स्फुटम्। दुःखविशेषपदेन च वैलक्षण्यबोधकेन दुःखं प्राणिनां केवलपुण्यापकर्षमात्रजनितं न भवति किन्तु स्वानुरूपकर्मप्रकर्षजनितं वेदनाप्रकर्षानुभवरूपत्वात्, अन्यथा दुःखमिदं पुण्यसम्पाद्येष्टाहारापचयमात्रादेव भवेत्, न तु पापोपचयसम्पाद्यानिष्टाहारादिरूपविपरीतबाह्यसाधनप्रकर्षमपेक्षेतेति, दुःखविशेषानुभूतेः सकलपापकर्मसाधारण्येऽपि वेदनीयोत्तरप्रकृतेरेव साक्षाद्धेतुत्वमिति च सूच्यते। त्रिंशत्सागरोपमकोटीकोट्योऽस्य परा स्थितिः, जघन्या सागरोपमस्य त्रयस्सप्तभागाः पल्योपमासंख्येयभागेन न्यूनाः, सूक्ष्मसंपराये जघन्या द्वादश मुहूर्त्ताः ॥

अथ मिथ्यात्वमोहनीयमाख्याति—

**तत्त्वार्थश्रद्धाप्रतिबन्धकं कर्म मिथ्यात्वमोहनीयम् ॥**

तत्त्वार्थेति। मिथ्यात्वं नाम दर्शनाख्यस्य मोहनीयस्य त्रिभेदस्य मिथ्यात्वसम्यक्त्वमिश्ररूपस्यैको भेदः, तच्च सर्वज्ञप्रणीततत्त्वार्थेषु श्रद्धावैमुख्यकारित्वेन बन्धकत्वेन च मोहनीयम्। सम्यक्त्वमिश्रभेदौ त्वध्यवसायविशेषेण शोधितस्य तस्यैव परिणामविशेषौ, तन्मिथ्यात्वमाभिग्रहिकानाभिग्रहिकसांशयिकादिभेदेनानेकविधमपि यथावस्थितवस्तुतत्त्वश्रद्धाननिरोधकत्वेनैकरूपतया विवक्षितम्। अस्य परा स्थितिः सप्ततिसागरोपमकोटीकोट्यः, अबाधाकालस्सप्तवर्षसहस्राणि, जघन्या तु सागरोपमस्य सप्तभागाः पल्योपमासङ्ख्येयभागेन न्यूनाः, अबाधा चान्तर्मुहूर्त्तम् ॥

स्थावरनामाचष्टे—

**प्रातिकूल्येऽपि स्थानान्तरगमनाभावप्रयोजकं कर्म स्थावरनाम ॥**

प्रातिकूल्येऽपीति। प्रातिकूल्ये सत्यपि स्थानान्तरगमनाभावप्रयोजकत्वे सति कर्मत्वं लक्षणार्थः। न च स्थानान्तरगमनाभावे न प्रयोजकं कर्म, सिद्धाना धर्मादीनाञ्च कर्माभावेऽपि स्थानान्तरगमनाभावादिति वाच्यम्, प्रातिकूल्यप्रयुक्तं यत्स्थानान्तरगमनं तदभावे कर्मण एव प्रयोजकत्वात्, अत एव न तेजोवाय्वोरव्याप्तिः। नहि तयोर्गमनं प्रातिकूल्यप्रयुक्तं, किन्तु स्वाभाविकं, अतः प्रातिकूल्यप्रयुक्तस्थानान्तरगमनाभावस्तयोरप्यस्त्येव तत्र च कर्मैव प्रयोजकमिति भावः। स्थावरनामकर्मोदयादेव पृथिव्यप्तेजोवायुवनस्पतीना स्थानशीलत्वम्। विंशतिसागरोपमकोटीकोट्योऽस्य परा स्थितिर्वर्षसहस्रद्वयमबाधा। सागरोपमस्य सप्तभागा. पल्योपमासङ्ख्येयभागेन न्यूना जघन्या, अबाधा त्वन्तर्मुहूर्त्तम् ॥

सूक्ष्मनाम स्वरूपयति—

**सूक्ष्मपृथिव्यादिकायेषूत्पत्तिनिदानं कर्म सूक्ष्मनाम। यथा सर्वलोकवर्त्तिनां निगोदादीनाम् ॥**

सूक्ष्मेति। यदुदयादितरजीवानुग्रहोपघातायोग्यसूक्ष्मशरीरनिर्वृत्तिः तत्कर्मेति भाव.। यस्य कर्मण उदयान्नियतमेवैकैकस्य वा समुदिताना बहूना वा जन्तुशरीराणामदृश्यत्वं न चक्षु-

१. तेजोवाय्वोस्तु स्थावरनामकर्मोदयेऽपि चलनं स्वाभाविकमेव न पुनरुष्णाद्यभितापेन द्वीन्द्रियादीनामिव विशिष्टमिति ॥

ग्राह्यत्वं तादृशं कर्मेति तात्पर्यार्थः । बादरशरीरन्तु कदाचिद्दृश्यं कदाचिन्न दृश्यमतो नियतमेवेत्युक्तम् । तथा च नियतादृश्यशरीरप्राप्तिहेतुत्वे सति कर्मत्वं लक्षणम् । अस्योत्कृष्टस्थितिरष्टादशसागरोपमकोटीकोट्य, अष्टादशवर्षसहस्राण्यबाधा । जघन्या तु स्थावरनामवत् । निदर्शनं सूक्ष्मनामकर्मभाजामाह यथेति ॥

अपर्याप्तनाम वक्ति—

**एकेन्द्रियादीनां यथास्वं श्वासोच्छ्वासादिपर्याप्त्यपरिपूर्णताप्रयोजकं कर्म अपर्याप्तनाम । यथा लब्ध्यपर्याप्तानाम् ॥**

एकेन्द्रियादीनामिति । यस्योदये सति स्वयोग्या श्वासोच्छ्वासादिपर्याप्तयः परिपूर्णतां नासादयन्ति, अपर्याप्त एव जीवो म्रियते तदपर्याप्तनामकर्मेत्यर्थः । यथायोग्यमित्यस्योदाहरणमेकेन्द्रियादीनामिति, तदेवाह यथेति । अस्य स्थिती अपि सूक्ष्मनामकर्मवत् ॥

अथ साधारणकर्माऽऽविष्करोति—

**अनन्तजीवानामेकशरीरवत्त्वनिदानं कर्म साधारणनाम । यथा कन्दादौ ॥**

अनन्तेति । यस्य कर्मण उदयादनन्तानां जीवानां शरीरमेकं भवति तत्साधारणनामकर्मेत्यर्थः । ननु प्रथममुत्पत्तिदेशमुपयातेन प्राणिना तच्छरीरस्य निष्पादितत्वात्सर्वात्मनाऽन्योन्यानुगमनेन क्रोडीकृतत्वाच्च कथं तत्रान्येषां जीवानामवकाशः, सत्यपि चावकाशे येन तच्छरीरं निष्पादितमन्योऽन्यानुगमनेन च क्रोडीकृतं स एव तत्र प्रधानः, तस्यैव च पर्याप्तापर्याप्तव्यवस्था प्राणापानादिपुद्गलोपादानञ्च स्यान्न शेषाणामिति चेन्नैवम्, तथाविधकर्मोदयसामर्थ्येन समकमेव सर्वेषामुत्पत्तिदेशप्राप्ते, तच्छरीराश्रयपर्याप्तिनिर्वर्तनस्य प्राणापानादियोग्यपुद्गलग्रहणस्य च सर्वैस्तैरुक्तत्वात् । प्रत्येकनामकर्मण्यतिव्याप्तिवारणायानन्तजीवानामिति । निदर्शनमाह यथेति । अस्य स्थिती सूक्ष्मवत् ॥

अस्थिरनामाह—

**प्रयोगशून्यकाले भ्रूजिह्वादीनां कम्पनहेतुः कर्म अस्थिरनाम ॥**

प्रयोगेति । भ्रूजिह्वादीनामिति शरीरावयवद्योतकम् । प्रयोगकाले यच्छरीरावयवानां कम्पनं न तत्कर्म निमित्तं, अपि तु जीवपरिणामप्रयुक्तं, तस्मात्प्रयोगशून्यकाल इत्युक्तं, तथा च प्रयोगशून्यकालीनशरीरावयवास्थिरत्वप्रयोजकत्वे सति कर्मत्वमिति लक्षणम् । विहायोगत्यादिव्यभिचारनिरासकं वा प्रयोगशून्यकाल इति पदम् । पञ्चेन्द्रियवदस्य स्थिती ॥

अशुभनाम लक्षयति—

**नाभ्यधोऽवयवाशुभत्वप्रयोजकं कर्म अशुभनाम ॥**

**नाभ्यधोऽवयवेति ।** नाभ्यधोऽवयवाशुभत्वप्रयोजकत्वे सति कर्मत्वं लक्षणम् । नाभेरधस्तनैः पादाद्यवयवैर्हि स्पृष्टः परो रुष्यतीति तेषामशुभत्वमवसेयम् । कामिन्या पादेनापि स्पृष्टः परो न रुष्यति किन्तु तुष्यत्येवेति व्यभिचार इति न च वाच्यम्, तत्तोषस्य मोहनीयनिबन्धनत्वात् । हुण्डसंस्थानादावतिव्याप्तिवारणाय नाभ्यधोऽवयवेति, हुण्डस्य तु सर्वावयवाशुभत्वप्रयोजकत्वान्नातिव्याप्तिः । पञ्चेन्द्रियवदस्य स्थिती ॥

दुर्भगनामस्वरूपमाह—

**स्वस्य दृष्टमात्रेण परेषामुद्वेगजनकं कर्म दुर्भगनाम ॥**

**स्वस्येति ।** य प्राणी दृष्टमात्रोऽप्युपकारकृदपि रूपादिगुणोपेतोऽपि परेषामुद्वेजको मनसोऽप्रियो भवति यत्कर्मप्रभावात्तद्दुर्भगनामेत्यर्थः । सुरूपे सुगुणेऽपि च स्वस्मिन् परस्योद्वेगजनकत्वे सति कर्मत्वं लक्षणम्, हुण्डादिकर्मण्यतिव्याप्तिवारणाय सुरूप इत्यादिदलं भाव्यम् । अस्यापि स्थिती पञ्चेन्द्रियवत् ॥

दुःस्वरनामाभिधत्ते—

**अमनोहरस्वरवत्त्वप्रयोजकं कर्म दुःस्वरनाम । यथा खरोष्ट्रादीनाम् ॥**

**अमनोहरेति ।** यस्योदयादमनोज्ञस्वरवान्–दीनहीनस्वरो भवति श्रूयमाणोऽप्यसुखमावहति स्वरः तद्दुःस्वरनामेत्यर्थः । सुस्वरनामकर्मण्यतिव्याप्तिवारणार्थममनोहरेति । अस्य स्थिती पञ्चेन्द्रियजातितुल्ये । येषामीदृशं कर्म दृश्यत इत्यत्राह यथेति ॥

अनादेयनाम निर्वक्ति—

**उचितवक्तृत्वेऽप्यग्राह्यतादिप्रयोजकं कर्म अनादेयनाम ॥**

**उचितवक्तृत्वेऽपीति ।** यस्य प्रभावतो युक्तमपि ब्रुवाण परिहार्यवचनो भवति, अर्हणार्हस्याप्यर्हणां नाचरति लोकस्तदनादेयनामेत्यर्थः, निष्प्रभोपेतशरीरनिर्वर्तकं कर्मानादेयनामेति केचित् । उचितवक्तृसम्बन्धिवचनानामग्राह्यताप्रयोजककर्मत्वं लक्षणार्थः । उचितवक्तृसम्बन्धीति पदन्तु पूर्वोक्तनीत्याऽसम्भववारणाय । अस्यापि स्थिती पञ्चेन्द्रियवत् ॥

अयशःकीर्त्तिनामाह—

**ज्ञानविज्ञानादियुतत्वेऽपि यशःकीर्त्त्यभावप्रयोजकं कर्म अयशःकीर्तिनाम । इति स्थावरदशकम् ॥**

ज्ञानविज्ञानेति । व्यावहारिकं यथार्थज्ञान ज्ञान, शास्त्रसस्कृतं ज्ञान विज्ञान, यतो ज्ञानादियोग्यगुणपूर्णोऽपि यो न यशःकीर्तिमान् परन्त्वश्लाघ्यो भवति तदयश कीर्त्तिनामेत्यर्थः । ज्ञानविज्ञानादियुतत्वेऽपीत्यस्य सार्थकता पूर्ववद्भाव्या । स्थिती पञ्चेन्द्रियवत् । स्थावरनाम प्रभृति यावदयश कीर्त्तिकर्माणि विभागवाक्यस्थस्थावरदशकपदवाच्यानीत्याहेतीति ॥

नरकगतिनाम निरूपयति—

**नारकत्वपर्यायपरिणतिप्रयोजकं कर्म नरकगतिः ॥**

नारकत्वेति । लक्षणन्तु नारकत्वपर्यायपरिणतिप्रयोजककर्मत्वम् । कृत्यञ्च मनुजगतिवत् । अस्योत्कृष्टा स्थितिः पञ्चेन्द्रियवत् । जघन्या तु सागरोपमसहस्रस्य द्वौ सप्तभागौ पल्योपमासख्येयभागेन न्यूनौ, अबाधा त्वन्तर्मुहूर्त्तम् ॥

नरकायुषो लक्षणमाचष्टे—

**आयुःपूर्णतां यावन्नरकस्थितिहेतुः कर्म नरकायुः ॥**

आयुःपूर्णतामिति । यावत्स्वयोग्यायुःपूर्णत्व नरकस्थितिहेतुत्वे सति कर्मत्व लक्षणम् । नरकञ्च तीव्रशीतोष्णादिपीडाकर स्थानम् । नरकगतावतिव्याप्तिवारणाय यावत्स्वयोग्यायुःपूर्णत्वमिति पदम् । नरकगतेरायु पूर्णत्वेऽपि सत्ताया वर्त्तमानत्वान्न दोष । त्रयस्त्रिंशत्सागरोपमाणि परा स्थितिरबाधा च पूर्वकोटित्रिभागः, जघन्य दशसहस्रमबाधा चान्तर्मुहूर्त्तम् ॥

नरकानुपूर्वीलक्षणमाह—

**बलान्नरकनयनानुगुणं कर्म नरकानुपूर्वी । इति निरयत्रिकम् ॥**

बलादिति । प्रकृष्टं पापफलमुपभोक्तु नरान्—गुरुपापकारिणः प्राणिन, कायन्ति शब्दयन्तीति नरकास्तद्गतौ व्रजतो जीवस्य द्विसमयादिना विग्रहेण अनुश्रेणिनियता गमनपरिणतिर्येतरसा नरकानुपूर्वीति भाव । स्पष्टमन्यत् । उत्कृष्टा स्थितिः पञ्चेन्द्रियवत् । जघन्या तु नरकगतिवत् । इमान्येव विभागवाक्ये निरयत्रिकपदेनोक्तानीत्याहेतीति ॥

सम्प्रति चारित्रमोहनीयस्य कषायवेदनीयनोकषायवेदनीयरूपेण द्वैविध्यात्कषायस्य च क्रोधमानमायालोभात्मकस्य प्रत्येकमनन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानसज्वलनभेदेन षोडश-

विधत्वात्तान् क्रमेणाभिधातुमादौ अनन्तानुबन्धिशब्दं निर्वक्ति—

**अनन्तानुबन्धिनश्चानन्तसंसारमूलनिदानमिथ्यात्वहेतुका अनन्तभवानुबन्धस्वभावा आजन्मभाविनो नरकगतिप्रदायिनः सम्यक्त्वघातिनः ॥**

अनन्तानुबन्धिनश्चेति । अनन्तः संसारश्चतुर्गतिरूपस्तमनुबध्नन्त्यनुसन्दधतीत्येवंशीला ये जीवपरिणामविशेषाः क्रोधादयस्तेऽनन्तानुबन्धिनः, यद्यप्येतेषामितरकषायविरहितानामुदयो नास्ति तथापि अवश्यमनन्तभवभ्रमणमूलकारणमिथ्यात्वोदयापेक्षकत्वादेतेषामेवैतन्नाम । न पुनः सहजोदयानामन्यकषायाणामपि, तेषामवश्यं मिथ्यात्वोदयापेक्षकत्वाभावात् एतदेवाह–अनन्तसंसारेति । अनन्तस्वरूपसंसारस्य मूलकारणं यन्मिथ्यात्वं तदेव हेतुर्येषामित्यर्थः । मिथ्यात्वसत्त्वे हि नियतमविरतिस्तत्सत्त्वे प्रमादस्तत्सत्त्वे चावश्यं कषाया इति मिथ्यात्वं कषायहेतुरिति भावः । कषायस्य च कर्मशरीरयोग्यपुद्गलग्रहणे प्रधानहेतुत्वादवश्यं तत्सत्त्वे भवसम्बन्ध इत्याशयेनाहानन्तभवानुबन्धस्वभावा इति । क्रोधादय एकैका अपि अनन्तसंसारानुबन्धिन इत्यर्थः । अनुबन्धः सम्बन्धः परस्पराश्लेषरूपः । एषामवधिमाहाऽऽजन्मभाविन इति । यावज्जीवभाविन इत्यर्थः । इष्टानिष्टवियोगसंयोगाभिलषितालाभाद्यन्यतमहेतुना क्रोधादयस्समुत्पन्ना न शाम्यन्त्यामरणं भवान्तरमप्यनुबध्नन्ति, अविद्यमानपश्चात्तापपरिणामास्तीव्रानुशया अत एवैषामाजन्मभावित्वमिति भावः । तत्फलमाह नरकेति । तत्त्वार्थश्रद्धानरूपमिथ्यात्वस्योदयात् सम्यक्त्वस्य संभव एव नास्तीति क्रोधादय एते स्वाभाविकस्यात्मनस्सम्यक्त्वस्य घातका इत्याशयेनाह सम्यक्त्वघातिन इति ॥

अधुनाऽनन्तानुबन्धिक्रोधस्वरूपमाह—

**एवम्भूतं प्रीत्यभावोत्पादकं कर्म अनन्तानुबन्धिक्रोधः ॥**

एवम्भूतमिति । अनन्तानुबन्धित्वे सति प्रीत्यभावोत्पादकत्वे सति कर्मत्वं लक्षणम् । यदुदयाज्जीवोऽनन्तानुबन्धिनं स्वपरोपघातनिरनुग्रहाहितक्रौर्यपरिणाममप्रीतिमन्युशब्दवाच्यं क्रोधमवाप्नोति तत्कर्मापि अनन्तानुबन्धिक्रोध उच्यत इति भावः । न चानन्तानुब-

---

१. प्रायेणानन्तानुबन्ध्युदये मृतो नरकगतावेव गच्छति, तेनानन्तानुबन्ध्युदयवतां मिथ्यादृशां केषाञ्चिदुपरितनग्रैवेयकेषूत्पत्तावपि न क्षतिः ॥ २. अनन्तानुबन्धिषूदितेषु न मिथ्यात्वक्षयोपशमस्तदभावाच्च न सम्यक्त्वमित्युपचारेण सम्यक्त्वघातकत्वमेषां न मुख्यत, तदेव सम्यक्त्वस्याप्रत्ययेन मिथ्यात्वस्य वैयर्थ्यापत्तेः । कषायाणां केवलज्ञानावरणहेतुत्वाभावेऽपि कषायक्षयस्य तद्धेतुत्ववदनन्तानुबन्धिनां क्षयोपशमे सम्यक्त्वलाभो विशेषः ॥

न्धिपदं प्रीत्यभावे विशेषणं तस्यैव तादृशत्वान्न तु कर्मण इति वाच्यम्, तदनुकूलत्वेन कर्मणोऽपि तथात्वाभ्युपगमात् । आद्यसत्यन्तमत्राप्रत्याख्यानक्रोधादावतिप्रसङ्गवारणाय, द्वितीयश्चानन्तानुबन्धिमानादावतिप्रसङ्गवारणाय । अस्य परा स्थितिः त्रिंशत्सागरोपमकोटीकोट्यः । वर्षसहस्रत्रितयं चाबाधा, जघन्या सागरोपमस्य च चत्वारो भागाः पल्योपमासङ्ख्येयभागन्यूनाः । अयं पर्वतराजितुल्यः क्रोधः शिलायामुत्पन्नाया राजेर्यावच्छिलारूपमवस्थानं तद्वदुत्पन्नानन्तानुबन्धिक्रोधस्य यावत्तत्र भवे जीवति तावदनुवृत्तिस्तदनुमरणाच्च प्रायो नरकप्रापकत्वात्तत्तुल्यत्वं भाव्यम् । क्षमया प्रतिहन्यतेऽयम् ॥

अनन्तानुबन्धिमानस्वरूपमाह—

**तादृशं नम्रताविरहप्रयोजकं कर्म अनन्तानुबन्धिमानः ॥**

तादृशमिति । अनन्तानुबन्धीत्यर्थः । यदुदयादनन्तानुबन्धिनं जात्याद्युत्सेकावष्टम्भात् पराप्रणतिरूपं नम्रताविरहं गच्छति तत्कर्मानन्तानुबन्धिमान इत्यर्थः । कृत्यं पूर्ववदूह्यम् । स्थिती चानन्तानुबन्धिक्रोधवत् । शैलस्तम्भसमानोऽयं मानः । कुतश्चित्कारणात्समुत्पन्नोऽनन्तानुबन्धिमान आमरणान्न व्यपगच्छति, जात्यन्तरानुबन्धी निरनुनयोऽप्रत्यवमर्शश्चेति भाव्यम् । मार्दवेन प्रतिहन्यतेऽयम् ॥

अथानन्तानुबन्धिमायामाह—

**ईदृक् सरलताभावप्रयोजकं कर्म अनन्तानुबन्धिमाया ॥**

ईदृगिति । अनन्तानुबन्धीत्यर्थः । यदुदयतोऽनन्तानुबन्धिनीं वञ्चनाद्यात्मिकात्मपरिणतिरूपां सरलत्वाभावात्मिकां मायामाप्नोति तत्कर्मानन्तानुबन्धिमायेति भावः । अनन्तानुबन्धित्वे सति सरलत्वाभावादिप्रयोजकत्वे सति कर्मत्वं लक्षणम्, आदिना प्रणिध्युपधिनिकृत्यादीनां सङ्ग्रहः[1], कृत्यं प्राग्वत् । स्थिती चानन्तानुबन्धिक्रोधवत्, घनवंशमूलसदृशीयं माया, उपायशतेनापि ऋजूकर्तुमशक्यत्वात् । इयं आर्जवेन प्रतिहन्यते ॥

अनन्तानुबन्धिलोभं लक्षयति—

**ईदृशं द्रव्यादिमूर्च्छाहेतुः कर्मानन्तानुबन्धिलोभः ॥**

ईदृशमिति । अनन्तानुबन्धीत्यर्थः । यस्योदयादनन्तानुबन्धिनमनुग्रहप्रवणद्रव्याद्यभिकाङ्क्षावेशरूपमसन्तोषात्मकजीवपरिणामविशेषं लोभमेति तत्कर्मानन्तानुबन्धिलोभ इति भावः ।

---

१. प्रतिहननयोदयनिरोधोदितविफलीकरणरूपमेवमग्रेऽपि ॥

अनन्तानुबन्धित्वे सति द्रव्यादिमूर्च्छादिहेतुत्वे सति कर्मत्वं लक्षणं, कृत्यं पूर्ववत् । लोभोऽयं लाक्षारागसदृशः, सन्तोषेण प्रतिहन्यते । स्थिती चानन्तानुबन्धिक्रोधवत् ॥

सम्प्रत्यप्रत्याख्यानक्रोधाद्यभिधानायाऽप्रत्याख्यानस्वरूपमाह—

**प्रत्याख्यानावरणभूता वर्षावधिभाविनस्तिर्यग्गतिदायिनस्सर्वदेशविरतिघातिनश्चाप्रत्याख्यानाः ॥**

प्रत्याख्यानावरणभूता इति । देशसर्वविरतिभेदतः प्रत्याख्यानं द्विविधं । प्रत्याख्यानं नाम प्रतिषेधस्याचार्यसन्निधायाख्यानं भावतः, न हन्मि यावज्जीवं सर्वान् प्राणिन इत्यादिरूपतः । अल्पं प्रत्याख्यानमप्रत्याख्यानं देशविरतिरूपं तदप्यावृण्वन्तीत्यप्रत्याख्यानावरणास्त एवात्राप्रत्याख्यानशब्देनोक्ताः । तदेवाह प्रत्याख्यानावरणभूता इति देशतोऽपि प्रत्याख्यानस्यावरणभूता इत्यर्थः । एषामुदये हि विरतिर्न भवत्येव । किमेतेऽनन्तानुबन्धिवदाजन्मभाविन इत्यत्राह वर्षावधिभाविन इति । जघन्येनाष्टमासस्थितिका उत्कर्षेण वर्षस्थितिका इति भावः । न चानन्तानुबन्धिक्रोधमनुसृत्य मृतानां नरकेषूत्पत्तिरिवाप्रत्याख्यानावरणक्रोधमनुसृत्य मृतानां, किन्तु क्षुत्पिपासाशीतोष्णदंशमशकादिविविधव्यसनवशीकृततिर्यग्गतावेवेत्याह तिर्यग्गतिदायिन इति । किमेषां कार्यमित्यत्राह सर्वदेशविरतिघातिन इति । देशतस्सर्वतश्च विरतिं निरुन्धन्तीति भावः ॥

एकमन्येन संक्षेपकामोऽप्रत्याख्यानक्रोधमानमायालोभानां स्वरूपाण्युपदर्शयति—

**एतद्विशिष्टाः पूर्वोक्तस्वरूपाः क्रोधादयोऽप्रत्याख्यानक्रोधादयः ॥**

एतद्विशिष्टा इति । अप्रत्याख्यानसहिता इत्यर्थः । पूर्वोक्तस्वरूपा इति प्रीत्यभावोत्पादककर्मत्वनम्रताविरहप्रयोजककर्मत्वसरलताभावप्रयोजककर्मत्वद्रव्यादिमूर्च्छाहेतुकर्मत्वरूपा इत्यर्थः । क्रोधादय इति । किन्त इत्यत्राहाप्रत्याख्यानक्रोधादय इति आदिनोभयत्र मानमायालोभानां ग्रहणम् । लक्षणं प्रयोजनञ्च पूर्ववदूह्यम । स्थिती चानन्तानुबन्धिक्रोधवत् । क्रमेण भूराजिस्थिस्तम्भमेषविषाणकर्दमरागसदृशा एते ॥

प्रत्याख्यानावरणक्रोधादीनभिधातुं प्रत्याख्यानावरणस्वरूपमाह—

**सर्वविरत्यावरणकारिणो मासचतुष्टयभाविनो मनुजगतिप्रदायिनस्साधुधर्मघातिनः प्रत्याख्यानाः ॥**

१. प्राणोपादानेन निर्युक्तिः, अप्रत्याख्यानावरणोदयस्त्वमावरणमस्यतां नित्यमनुबन्धम गुरोपुत्रतः प्रत्याख्यानावरणोदयस्याथ देशविरतिनो देशतोऽप्रत्याख्यानावरणोदयस्याथ मध्यार्धदेशना मनुष्यलोके धुरेः ॥

**सर्वविरत्यावरणकारिण इति** । सर्वविरतिरूपं प्रत्याख्यानमावृण्वन्तीति भावः । अस्योदये हि विरत्यविरतिर्भवति, उत्तमचारित्रलाभस्तु न भवति । अवधिमाह मासचतुष्टयभाविन इति । उत्कर्षेणेयमुक्तिः, जघन्येन तु अहोरात्रं विज्ञेयम् । कुत्रैषा जन्मप्रदत्वमित्यत्राह मनुजगतिप्रदायिन इति मनुजेषूत्पत्तिं लभत इति भावः । कार्यमाह साधुधर्मघातिन इति साधुधर्मपरिणामोत्पत्तिं नाशयन्तीत्यर्थः ॥

प्रत्याख्यानावरणक्रोधचतुष्टयस्वरूपं संक्षेपेणाह—

**ईदृशाः क्रोधादय एव प्रत्याख्यानक्रोधादयः ॥**

**ईदृशा इति** । प्रत्याख्यानावरणभूता इत्यर्थः । क्रोधादय एवेति पूर्वोक्तस्वरूपाः क्रोधादय एवेत्यर्थः । प्रत्याख्यानक्रोधादय इति प्रत्याख्यानावरणभूताः क्रोधमानमायालोभा इत्यर्थः । लक्षणं प्रयोजनञ्च प्राग्वत् । स्थिती चानन्तानुबन्धिक्रोधवत्, क्रमेणैते वालुकाराजिदारुस्तम्भगोमूत्रिकाखञ्जनरागसदृशाः ॥

संज्वलनक्रोधादीन्निर्वक्तुमादौ संज्वलनस्वरूपमाचष्टे—

**ईषत्संज्वलनकारिणः पक्षावधयो देवगतिप्रदायिनो यथाख्यातचारित्रघातिनस्संज्वलनाः । ईदृशाश्च क्रोधादय एव संज्वलनक्रोधादयः ॥**

**ईषत्संज्वलनकारिण इति** । परीषहोपसर्गादिसपाते सति चारित्रिणमपि सं=ईषद् ज्वलयन्तीति संज्वलनाः, एषामुदये हि यथाख्यातचारित्रलाभो न भवति, अकषायचारित्रलाभो न भवतीति भावः । एषामप्यवधिमाह पक्षावधय इति । उत्कर्षेणेदम् पाक्षिकप्रतिक्रमणकाले प्रकर्षतो विध्यापनात्, जघन्येन तु पश्चात्तापोत्पत्त्यनन्तरमेव व्यपगच्छन्तीति भावः । ईदृशं क्रोधादिकमनुभूताना का गतिरित्यत्राह देवगतिप्रदायिन इति । तेषां कार्यमाह यथाख्यातेति । उपशान्तक्षीणकषायस्य यथाख्यातचारित्रावाप्तेरिति भावः । संक्षेपतस्संज्वलनक्रोधादिस्वरूपमुपदर्शयति ईदृशाश्चेति । संज्वलनात्मकाश्चेत्यर्थः । चशब्दः प्रकारभेदसमाप्तिद्योतकः । क्रोधादय एवेति लक्षणं पूर्ववत् । उत्कृष्टा स्थितिः प्राग्वत्, जघन्या [2] संज्वलनक्रोधस्य मासद्वयं संज्वलनमानस्य मासः, संज्वलनमायाया अर्धमासः, संज्वलनलोभस्यान्तर्मुहूर्तम्, सर्वेषामबाधाकालोऽन्तर्मुहूर्तम् । क्रमेणोदकराजितृणस्तम्भनिर्लेखनहरिद्रारागसदृशा एते ॥

१. संज्वलना न केवलं यथाख्यातोपघातिनः किन्तु शेषचारित्राणामपि देशोपघातिनो भवन्ति, यतस्तेषामुदये शेषचारित्रमपि सातिचारं भवतीति भावः ॥ २ व्यवहारनयापेक्षयाऽयं कालनियमः, बाहुबलिप्रभृतीनामन्येषां संयतादीनाञ्च संज्वलनस्य पक्षात्परतोऽपि मासवर्षादिकाले प्रत्याख्यानावरणानामप्रत्याख्यानावरणानामनन्तानुबन्धिनाञ्चान्तर्मुहूर्त्तादिकाञ्च स्थितिश्रवणात् ॥

अथ चारित्रमोहनीयस्यापरभेदं नोकषायाख्यं पूर्वोदितकषायसहचारिणं कषायोद्दीपक सहचारिकषायसमफलं नवविधं क्रमेणाऽऽख्यातुमुपक्रमते—

हास्योत्पादकं कर्म हास्यमोहनीयम् ॥

हास्योत्पादकमिति । यस्योदयेन सनिमित्तमनिमित्तं वा हसति रङ्गावतीर्णनटवत् तत्कर्म हास्यमोहनीयमित्यर्थः । हास्योत्पादकत्वे सति कर्मत्वं लक्षणं, कृत्यं सुस्पष्टम् । उत्कृष्टा स्थितिरनन्तानुबन्धिक्रोधवत्, जघन्या तु सागरोपमस्य द्वौ सप्तभागौ पल्योपमासङ्ख्येयभागन्यूनौ, अन्तर्मुहूर्त्तञ्चाबाधा ॥

रतिमोहनीयमाह—

पदार्थविषयकप्रीत्यसाधारणकारणं कर्म रतिमोहनीयम् ॥

पदार्थेति । पदार्थविषयकप्रीत्यसाधारणकारणत्वे सति कर्मत्वं लक्षणम् । लोभादावतिव्याप्तिवारणायासाधारणेति । सौभाग्यनामकर्मण्यतिव्याप्तिवारणाय पदार्थविषयकेति । स्थिती हास्यमोहनीयवत् ॥

अरतिमोहनीयमाचष्टे—

पदार्थविषयकोद्वेगकारणं कर्म अरतिमोहनीयम् ॥

पदार्थविषयकेति । पदार्थविषयकोद्वेगकारणत्वे सति कर्मत्वं लक्षणम् । दुर्भगनामकर्मण्यतिव्याप्तिवारणाय पदार्थविषयकेति । स्थिती हास्यमोहनीयस्येव ॥

शोकमोहनीयं वक्ति—

अभीष्टवियोगादिदुःखहेतुः कर्म शोकमोहनीयम् ॥

अभीष्टवियोगादीति । अभीष्टवियोगादिजन्यदुःखहेतुत्वे सति कर्मत्वं लक्षणम् । यदुदयात् प्रियविप्रयोगादौ स्वोरस्ताडमाक्रन्दति, परिदेवते, भूपीठे च लुठति, दीर्घं निःश्वसिति, तच्छोकमोहनीयमित्यर्थः । असातेऽतिव्याप्तिवारणाय जन्यान्तम् । स्थिती हास्यमोहनीयवत् ॥

भयमोहनीयमाचष्टे—

भयोत्पादासाधारणं कारणं कर्म भयमोहनीयम् ॥

भयोत्पादेति । यस्योदयेन सनिमित्तमनिमित्तं वा त्रस्यति, वेपते, उद्विजते, तद्भयमोहनीयम् । भयोत्पादासाधारणकारणत्वे सति कर्मत्व लक्षणम् । पराघातेऽतिव्याप्तिवारणायासाधारणेति स्वनिखिलभयकारणमित्यर्थः, पराघातेन तु सभ्यादीना परेषामेव भयं भवति अनेन तु स्वस्येति भावः, स्थिती हास्यमोहनीयवत् ॥

जुगुप्सामोहनीयमाख्याति—

**बीभत्सपदार्थावलोकनजातव्यलीकप्रयोजकं कर्म जुगुप्सामोहनीयम् ॥**

बीभत्सेति । यदुदयात् पुरीषादिबीभत्सपदार्थेषु जुगुप्सावान् भवति, शुभाशुभद्रव्यविषयक वा व्यलीकमुपजायते, तज्जुगुप्सामोहनीयमित्यर्थ । स्थिती हास्यमोहनीयवत् ॥

पुरुषवेदस्वरूपमाचष्टे—

**स्त्रीमात्रसंभोगविषयकाभिलाषोत्पादकं कर्म पुरुषवेदः ॥**

स्त्रीमात्रेति । उद्रिक्तश्लेष्मण आम्रफलाभिलाषेव यस्योदये पुंसः स्त्रियामभिलाषा भवति, तृणाग्निज्वालासमान स पुरुषवेद इत्यर्थः । नपुंसकवेदेऽतिव्याप्तिवारणाय मात्रेति । पुरुषवेदमोहाग्नेर्भृशं ज्वलतस्समासादितप्रतिक्रियस्याश्वेव प्रशमो जायते समासादिततृणपुलकस्येव, नातीव स्यात्सुरनुबन्धः । उत्कृष्टा स्थितिरस्य हास्यमोहनीयवत् जघन्या त्वष्टौ वर्षाणि, अबाधाऽन्तर्मुहूर्तकाल. ॥

स्त्रीवेदमाह—

**पुरुषमात्रसंभोगविषयकाभिलाषोत्पादकं कर्म स्त्रीवेदः ॥**

पुरुषमात्रेति । पित्तद्रव्योदये मधुराभिलाषावत् यस्योदये पुंस्यभिलाषा स्त्रियास्समुपजायते दृढतरखदिरादिकाष्ठप्रवृद्धज्वालाकलापज्वलनवत् , बहुतरकालावस्थायी चिरप्रशाम्यः समापणस्पर्शनेन्धनाभिवर्धितस्स स्त्रीवेदः । नपुसकवेदेऽतिव्याप्तिवारणाय मात्रपदम्, स्थिती हास्यमोहनीयवत् ॥

नपुंसकवेदमाख्याति—

**पुंस्त्रीसंभोगविषयकाभिलाषोत्पादकं कर्म नपुंसकवेदः । इति कषायपञ्चविंशतिः ॥**

पुंस्त्रीति । पित्तश्लेष्मोदये मज्जिकाभिलाषावत् यस्योदये पण्डकस्य स्त्रीपुंसयोरभिलाषासमुदेति महानगरदाहदहनसन्निभकरीषङ्कशानुवदन्तर्विजृम्भमाणदीप्ततरज्वरनिकरो बहुतर-

कालप्रशमः स नपुंसकवेदः । स्त्रीपुरुषवेदयोरतिव्याप्तिवारणाय पुंस्त्रीति । स्थिती हास्यमोहनीयस्येव । इमान्येव पञ्चविंशतिकर्माणि विभागवाक्यघटककषायपञ्चविंशतिपदग्राह्याणीत्याह–इतीति । षोडशकषाया नवनोकषायाश्चेति मिलित्वेत्यर्थः ॥

अथ तिर्यग्गतिमाह—

**तिर्यक्त्वपर्यायपरिणतिप्रयोजकं कर्म तिर्यग्गतिः ॥**

**तिर्यक्त्वेति** । तिर्यक्त्वपर्यायपरिणतिप्रयोजकत्वे सति कर्मत्वं तिर्यग्गतेर्लक्षणम्, कृत्यं मनुजगतिवत्, स्थिती पञ्चेन्द्रियवत् ॥

तिर्यगानुपूर्वीस्वरूपमाह—

**तिर्यग्गतौ बलान्नयनहेतुकं कर्म तिर्यगानुपूर्वी । इति तिर्यग्द्विकम् ॥**

**तिर्यग्गताविति** । बलात्तिर्यग्गतिनयनहेतुत्वे सति कर्मत्वं लक्षणम् । मनुजानुपूर्व्यादावतिव्याप्तिवारणाय तिर्यगिति। स्थिती च पञ्चेन्द्रियवदेव । इमे एव विभागवाक्यघटकतिर्यग्द्विकपदबोध्ये इत्याह इतीति ॥

एकेन्द्रियजातिनाम निरूपयति—

**एकेन्द्रियव्यवहारहेतुः कर्म एकेन्द्रियजातिः । अस्याः स्पर्शेन्द्रियमेव ॥**

**एकेन्द्रियेति** । यदुदयादयं पृथिवीकायिकादिरेकेन्द्रिय इति संज्ञां लभते व्यपदिश्यते च, तादृशं कर्मेत्यर्थः । एकेन्द्रियव्यवहारकारणत्वे सति कर्मत्वं लक्षणम् । द्वीन्द्रियजात्यादिवारणायैकेति । अत्र द्रव्येन्द्रियमङ्गोपाङ्गनामेन्द्रियपर्याप्तिनामसामर्थ्योद्भवति । भावरूपन्तु तत्तदिन्द्रियावरणक्षयोपशमसामर्थ्योद्भवति, जातिनाम तु व्यवहारनिबन्धनसमानपरिणतौ

---

१. ननु व्यवहारश्शब्दप्रयोग, तथा चैकेन्द्रियादिशब्दप्रवृत्तिनिबन्धनभूतजातिविपाकवेद्यकर्मप्रकृतिरेकेन्द्रियादिजातिरिति लक्षणार्थ, तच्च न युक्त शब्दप्रवृत्तिनिमित्तत्वेन क्वापि जात्यसिद्धेरितरथा हर्यादिपदप्रवृत्तिनिमित्ततया हरित्वादिजातेरपि सिद्धि स्यात् तथाप्येकेन्द्रियादिशब्दप्रवृत्तिनिमित्ततया तादृशजातिस्वीकारे नारकादिव्यवहारनियामकतया पञ्चेन्द्रियत्वव्याप्यनारकत्वादिजातिसिद्धौ गतिनाम्नो वैयर्थ्यापत्तेरेति चेन्न, अपकृष्टचैतन्यादिनियामकतयैकेन्द्रियत्वादिजातिसिद्धे, न तु शब्दप्रवृत्तिनिमित्ततया, सा च जातिरेकेन्द्रियादिव्यवहारनिबन्धना, लाघवात्तन्निबन्धनतया च जातिनामसिद्धि । नारकत्वादिकं तु न जातिरूपम्, तिर्यक्त्वस्य पञ्चेन्द्रियत्वादिना साङ्कर्यात् । मानुषत्वावच्छेदेन पञ्चेन्द्रियत्वे तिर्यक्त्वाभावसामानाधिकरण्यस्यैकेन्द्रियत्वावच्छेदेन तिर्यक्त्वे पञ्चेन्द्रियत्वाभावसामानाधिकरण्यस्य सत्त्वात् तदुभयस्य च तिर्यक्पञ्चेन्द्रियावच्छेदेन वृत्ते, किन्तु सुखदु खविशेषोपभोगनियामकपरिणामविशेषतया नारकत्वादीना तन्नियामकत्वेन गतिनाम्न आवश्यकत्वादिति ॥

१८३१



निबन्धनमिति भाव्यम्। इय जाति कीदृशेन्द्रियव्यवहारप्रयोजिकेत्याशङ्कायामाहास्या इति, पञ्चम्यर्थः प्रयुक्तत्व तथा चैकेन्द्रियजातिनामप्रयुक्तं स्पर्शेन्द्रियमेवेत्यर्थः, केवलस्पर्शेन्द्रियापेक्षया योऽयमेकेन्द्रियव्यवहारस्तत्र प्रयोजकमिद कर्मेति भावार्थः। उत्कृष्टाऽस्य स्थिति पञ्चेन्द्रियवत्, जघन्या तु देवगतिवत् ॥

द्वीन्द्रियादिजातिनाम लक्षयति—

**द्वीन्द्रियव्यवहारकारणं कर्म द्वीन्द्रियजातिः । स्पर्शरसने । त्रीन्द्रियव्यवहारसाधनं कर्म त्रीन्द्रियजातिः । स्पर्शरसनघ्राणानि । चतुरिन्द्रियव्यवहारनिदानं कर्म चतुरिन्द्रियजातिः । स्पर्शरसनघ्राणचक्षूंषि ॥**

द्वीन्द्रियेति। द्वीन्द्रियव्यवहारकारणत्वे सति कर्मत्व लक्षणम्। कृत्य पूर्ववत्। कीदृशेन्द्रियव्यवहारे प्रयोजकमित्यत्राह–स्पर्शरसन इति, अस्या इत्यनुपज्यते, शिष्टं स्पष्टम्। अस्या उत्कृष्टा स्थितिरष्टादशसागरोपमकोटीकोट्यः, अष्टादशवर्षशतान्यबाधा, जघन्या तु देवगतिवत्। त्रीन्द्रियजातिनामाचष्टे–त्रीन्द्रियेति। लक्षणं कृत्यञ्च पूर्ववदेव। अस्या व्यवहारे निबन्धनानीन्द्रियाण्याह स्पर्शेति, अस्या इत्यनुपज्यते। स्थिती चास्या द्वीन्द्रियजातिवत्। चतुरिन्द्रियजातिनामाख्याति–चतुरिन्द्रियेति। स्पष्ट लक्षणं कृत्यञ्च। अस्या व्यवहारे निबन्धनानीन्द्रियाण्याह स्पर्शरसनेति। स्थिती च द्वीन्द्रियजातिवत् ॥

अथ कुखगत्यादीन्याह—

**अप्रशस्तगमनप्रयोजकं कर्म कुखगतिः। यथा खरोष्ट्रादीनाम्। स्वावयवैरेव स्वपीडाजनननिदानं कर्म उपघातनाम। शरीरनिष्ठाप्रशस्तवर्णप्रयोजकं कर्म अप्रशस्तवर्णनाम। यथा काकादीनाम्। शरीरनिष्ठाप्रशस्त गन्धप्रयोजकं कर्म अप्रशस्तगन्धनाम। यथा लशुनादीनाम्। शरीरवृत्त्यप्रशस्तरसप्रयोजकं कर्म अप्रशस्तरसनाम। यथा निम्बादीनाम्। शरीरवृत्त्यप्रशस्तस्पर्शप्रयोजकं कर्म अप्रशस्तस्पर्शनाम। यथा बब्बुलादीनाम्। इत्यप्रशस्तवर्णचतुष्कम् ॥**

अप्रशस्तेति। अप्रशस्तगमनप्रयोजकत्वे सति कर्मत्व लक्षणम्। यद्वशेन च खरोष्ट्रटोलादीनामिवाप्रशस्तगमनमङ्गिनामुपजायते सा कुत्सिता विहायोगति कुखगतिः। नरकगत्यादिलक्ष्यताव्युदासाय लक्ष्ये खेति। शुभखगतावतिव्याप्तिवारणायाप्रशस्तेति। स्थिती च पञ्चेन्द्रियवत्। निदर्शनमाह यथेति। उपघातनाम निरूपयति–स्वावयवैरेवेति। स्वशरी-

रावयवैरेव प्रतिजिह्वागलवृन्दलम्बकचौरदन्तादिभिश्शरीरान्तर्वर्धमानैर्यदुदयादुपहन्यते जन्तुस्तदुपघातनामेत्यर्थः । शरीराङ्गोपाङ्गघातकं स्वपराक्रमविजयाद्युपघातजनकं वोपघातनामेति तत्त्वार्थभाष्यम् । असातादावतिव्याप्तिवारणाय स्वावयवैरेवेति । पञ्चेन्द्रियवदेवास्य स्थिती । अप्रशस्तवर्णनामाह–शरीरनिष्ठेति । शरीरनिष्ठाप्रशस्तवर्णप्रयोजकत्वे सति कर्मत्वं लक्षणम् । अप्रशस्तो वर्णोऽतिवीभत्सदर्शनःकृष्णादिवर्णः । प्रशस्तवर्णनाम्न्यतिव्याप्तिवारणायाप्रशस्तान्तम् । पुद्गलनिष्ठाप्रशस्तवर्णे कर्मणोऽप्रयोजकत्वेनाप्रशस्तवर्णनामकर्म फलानुमेयं न भवेदिति शरीरनिष्ठेति । पञ्चेन्द्रियवदस्य स्थिती । अप्रशस्तवर्णनामकर्मोदयवतो दृष्टान्तमाह यथेति । अप्रशस्तगन्धनामाचष्टे–शरीरेति । कुथितमृतमूषकादिदुर्गन्धताऽप्रशस्तगन्धः । शिष्टं सर्वमप्रशस्तवर्णवत् । पञ्चेन्द्रियवदस्य स्थिती, निदर्शनमाह यथेति । अप्रशस्तरसनामाभिधत्ते–शरीरवृत्तीति । लक्षणं पूर्ववत् स्थिती च । दृष्टान्तमाह यथेति । अथाप्रशस्तस्पर्शनामाह–शरीरवृत्तीति । लक्षणं स्पष्टं कृत्यञ्च, स्थिती पूर्ववत् दृष्टान्तमाह यथेति । विभागवाक्ये एत एवाप्रशस्तवर्णचतुष्कपदेनोक्ता इत्याह इतीति ॥

ऋषभनाराचादिसंहननान्याह—

**उभयतो मर्कटबन्धाकलितास्थिसंचयवृत्तिपट्टबन्धसदृशास्थिप्रयोजकं कर्म ऋषभनाराचम् । उभयतो मर्कटबन्धमात्रसंवलितास्थिसन्धिनिदानं कर्म नाराचम् । एकतो मर्कटबन्धविशिष्टास्थिसन्धिनिदानं कर्मार्धनाराचम् । केवलकीलिकासदृशास्थियद्धास्थिनिचयप्रयोजकं कर्म कीलिका ॥ परस्परपृथक्स्थितिकानामस्थ्नां शिथिलसंश्लेषनिदानं कर्म सेवार्त्तम् । इति संहननपञ्चकम् ॥**

उभयत इति । उभयतो मर्कटबन्धसवलितास्थिसचयवृत्तिपट्टसदृशास्थिप्रयोजकत्वे सति कर्मत्वं लक्षणम् अत्र तादृशास्थिमात्रप्रयोजकत्वे सतीति वाच्यमन्यथा वज्रर्षभनाराचे व्यभिचारापत्तेः । नाराचे व्यभिचारवारणाय पट्टसदृशास्थीति । अस्योत्कृष्टा स्थितिर्द्वादशसागरोपमकोटीकोट्य , द्वादशवर्षशतान्यबाधा, पञ्चेन्द्रियवज्जघन्या । अस्य कर्मणः स्थाने वज्रस्यार्धं ऋषभस्यार्धं नाराचस्यार्धमिति कृत्वाऽर्धवज्रर्षभनाराचनाम पठन्ति तत्त्वार्थभाष्यकाराः । कर्मप्रकृतिभिन्थेष्वत्र पट्टहीनं वज्रनाराचनाम पठितम् । नाराचसंहननमाचष्टे–उभयत इति । उभयतो मर्कटबन्धमात्रसवलितास्थिसन्धिनिदानत्वे सति कर्मत्वं लक्षणम्, वज्रर्षभनाराचादावतिव्याप्तिवारणाय मात्रपदम् । अर्धनाराचे व्यभिचारवारणायोभयत इति । चतुर्दशसागरोपमकोटीकोट्यः परा स्थितिः चतुर्दशवर्षशतान्यबाधा, जघन्या पञ्चेन्द्रियवत् ।

ITCT



अर्धनाराचमाचष्टे--एकत इति । एकपार्श्वमात्रावच्छेदेन मर्कटबन्धविशिष्टास्थिसन्धिनिदानत्वे सति कर्मत्वं लक्षणम् । नाराचादिवारणायैकपार्श्वमात्रावच्छेदेनेति । अत एव मात्रपदमपि, षोडशसागरोपमकोटीकोट्योऽस्य परा स्थितिरबाधा च षोडशवर्षशतानि जघन्या पञ्चेन्द्रियवत् । कीलिकामाह--केवलेति । केवलकीलिकासदृशास्थिबद्धास्थिनिचयप्रयोजकत्वे सति कर्मत्वं लक्षणम् । वज्रर्षभनाराचे व्यभिचारवारणाय केवलेति । उत्कृष्टा स्थितिरस्याष्टादशसागरोपमकोटीकोट्य , अष्टदशवर्षशतान्यबाधा जघन्या तु पञ्चेन्द्रियस्येव । अथ सेवार्त्तमाख्याति--परस्परेति । परस्परपृथक्स्थितिकानामस्थ्नां शिथिलसंश्लेषनिदानत्वे सति कर्मत्वं लक्षणम् । अस्य संहननस्योदये सति जीवो नित्यमेव स्नेहाभ्यङ्गादिरूपां परिशीलनामाकाङ्क्षति । अस्यैव च सृपाटिकेति तत्त्वार्थे नामान्तरम् । विंशतिसागरोपमकोटीकोट्योऽस्य परा स्थिति । वर्षसहस्रद्वयञ्चाबाधा, जघन्या पञ्चेन्द्रियवत् । इमानि संहननानि औदारिकशरीर एव भवन्ति । विभागवाक्येऽप्रथमसंहननशब्दवाच्यान्येतान्येवेत्याह इतीति ॥

अथ न्यग्रोधपरिमण्डलादिसंस्थानान्याह--

**नाभेरूर्ध्वं विस्तृतिबाहुल्यसल्लक्षणनिदानं कर्म न्यग्रोधपरिमण्डलम् । नाभ्यधोभागमात्रस्य प्रमाणलक्षणवत्त्वप्रयोजकं कर्म सादिः । सलक्षणपाण्यादिमत्त्वे सति निर्लक्षणवक्षःप्रभृतिमत्त्वप्रयोजकं कर्म कुब्जं ॥**

नाभेरूर्ध्वमिति । नाभेरूर्ध्वमेवेत्यर्थ । यथा न्यग्रोधो वृक्ष उपरि सपूर्णावयवोऽधस्तु हीनस्तथेदमपि कर्म नाभेरुपरि विस्तारबहुलस्य सपूर्णलक्षणादिमत्त्वस्य चाधस्तद्धीनस्य शरीरस्य प्रयोजकमिति भाव । नाभेरूर्ध्वभागमात्रावच्छेदेन विस्तृतिबाहुल्यसल्लक्षणनिदानत्वे सति कर्मत्व लक्षणम् । समचतुरस्रसंस्थानवारणाय नाभेरूर्ध्वभागमात्रावच्छेदेनेति । नाभेरूर्ध्वनिखिलभागमात्राव-छेदेनेत्यपि वाच्य तेन यत्किञ्चित्पाण्यादीना विस्तृतिबाहुल्यसल्लक्षणप्रयोजकत्वे कुब्जनामकर्मणि नातिव्याप्तिः । स्थिती वर्षभनाराचवत् । सादिमाचष्टे--नाभ्यधोभागेति । येन नाभेरधस्तादेव सर्वेऽवयवा समीचीनेन लक्षणेन च युतास्तदित्यर्थ । नाभ्यधस्सर्वभागमात्रावच्छेदेन सुप्रमाणलक्षणवत्त्वप्रयोजकत्वे सति कर्मत्व लक्षण समचतुरस्रेऽतिव्याप्तिवारणाय नाभ्यधस्सर्वभागमात्रावच्छेदेनेति । इदमेव साचिस्वातिशब्दाभ्या व्यवह्रियते । स्थिती तु नाराचसंहननवत् । कु-जमभिधत्ते--सलक्षणेति । यत्र कन्धराया उपरितनावयवा हस्तपादश्च समचतुरस्रलक्षणयुक्त अधस्तनकायस्तु लक्षणविसंवादी तत्कर्म कुब्जम् । सलक्षणपाण्यादिमत्त्वे सति निर्लक्षणवक्ष प्रभृतिमत्त्वप्रयोजकत्वे सति कर्मत्वम् । आदिना पादकन्धरोपरितना अवयवा ग्राह्या , प्रभृतिना च तद्भिन्ना । हुण्डेऽतिव्याप्तिवार-

णायाद्यं सत्यन्तं, समचतुरस्रादावतिप्रसक्तिवारणार्थं द्वितीयं सत्यन्तम्। पाण्यादिमत्त्वञ्च प्रयोजकतासम्बन्धेन। अर्धनाराचसस्थानवदस्य स्थिती ॥

वामनं हुण्डञ्चाभिधत्ते—

**एतद्वैपरीत्यहेतुः कर्म वामनम्। सर्वावयवाशुभत्वनिदानं कर्म हुण्डम्। इति पञ्चसंस्थानानि। एते पापानुभवप्रकाराः ॥**

एतदिति। निर्लक्षणपाण्यादिमत्त्वे सति सलक्षणवक्षःप्रभृतिमत्त्वप्रयोजकत्वे च सति कर्मत्वं लक्षणम्। समचतुरस्रादौ साद्यादौ क्रमेण व्यभिचारवारणाय सत्यन्तद्वयं। कीलिकावदस्य स्थिती। हुण्डमाह—सर्वेति। सर्वावयवाशुभत्वप्रयोजकत्वे सति कर्मत्वं लक्षणम्। अशुभनामकर्मण्यतिव्याप्तिवारणाय सर्वेति। यद्यशुभपदेनात्र लक्षणविस्तारादिर्गृह्यते तदा नाशुभनामकर्मण्यतिप्रसक्तिः किन्तु न्यग्रोधादावेवेति बोध्यम् ॥ स्थिती च सेवार्त्तवत्। इतीति। विभागवाक्यान्तर्गताप्रथमसंस्थानशब्दवाच्यानीति शेषः। इमानि द्व्यशीतिविधानि पापकर्माणि प्राणातिपातादिहेतुभिर्बद्धेन जीवेनानुभूयन्ते इत्याह एत इति। द्व्यशीतिविधा कर्मविशेषा इत्यर्थः ॥

पापहेतून् दर्शयति—

**पापबन्धहेतवस्तु प्राणातिपातमृषावादादत्तादानमैथुनपरिग्रहाप्रशस्तक्रोधमानमायालोभरागद्वेषकलहाभ्याख्यानपिशुनताऽरतिरतिपरपरिवादमायामृषावादमिथ्यात्वशल्यानि। इतिपापतत्त्वम् ॥**

पापबन्धहेतवस्तु इति। नियतपुंल्लिंगो हेतुशब्दः। यद्यपि जीवस्याशुभाध्यवसायविशिष्टा वाक्कायमनसामशुभव्यापारा बन्धहेतवस्तथापि तानेव विशेषतो दर्शयति, यद्वा व्यापारस्य शुभाशुभत्वं न शुभाशुभकर्मकारणत्वेन, शुभयोगस्यापि ज्ञानावरणादिबन्धहेतुत्वाभ्युपगमात्। किन्त्वशुभपरिणामनिवृत्तत्वादतस्तानेवाह प्राणातिपातेत्यादिना। प्राणानामतिपातो विनाशः पातनं शातनं वा प्रमत्तयोगाद्द्रव्यतो भावतश्च। मृषावादो विद्यमानस्यापलापः, अविद्यमानप्रकाशनं शास्त्रप्रतिषिद्धवागनुष्ठानञ्च। अदत्तादानं, परैरदत्तस्य परिगृहीतस्य वा पदार्थसार्थस्य स्वेच्छया ग्रहणं धारणञ्च। मैथुनं मोहकर्मोदयादुद्भूततीव्रकायादिपरिणामयोः स्त्रीपुंसयोर्मिथुनभावः परस्पराऽऽश्लेषः सुखोपलम्भकः। परिग्रहो बाह्याभ्यन्तरेषु लोभानुरक्तचित्तवृत्त्या अभिलाषा। अप्रशस्ताः क्रोधमानमायालोभरागद्वेषाः, प्रशस्तास्त्वेते न पापानुकूलाः। कलहो राटिः, अभ्याख्यानं प्रकटममदोषारोपणं पिशुनता दौर्जन्यम्, मोहनी-

पौद्गलिकोऽयमिति । कायो हि जीवस्य निवासभूतः पुद्गलद्रव्यसंघातः, तद्योगाज्जीवस्य यो वीर्यपरिणामस्स काययोगः, आत्मयुक्तकायायत्ता वाग्वर्गणायोग्यस्कन्धा विसृज्यमाना वाक्करणतामापद्यन्ते तत्सम्बन्धाच्चात्मनो या वीर्यपरिणतिः स वाग्योगः, जीवेन सर्वप्रदेशैर्गृहीता मनोवर्गणायोग्यस्कन्धाः करणभावमालम्बन्ते तत्सम्बन्धाच्चात्मनः पराक्रमविशेषो मनोयोगः, इत्येवं योगत्रिकैरात्मप्रदेशेषु कर्मप्रापिका क्रिया द्रव्याश्रव उच्यते, तदनुकूलाध्यवसायस्तु भावाश्रव इत्याशयेनाह–आत्मप्रदेशेष्विति । शेषं स्पष्टम् । तथा साम्परायिककर्मबन्धभाजां सत्स्वपीन्द्रियादिषु तुल्यतया निमित्तेषु तीव्रमन्दज्ञाताज्ञातभावेभ्यो वीर्यविशेषादधिकरणविशेषाच्चास्रवाणां विशेषो विज्ञेयः ॥

पूर्वोदितानामाश्रवभेदानां स्वरूपमनुक्रमेणोपवर्णयितुमारभते—

## स्पर्शविषयकरागद्वेषजन्याश्रवः स्पर्शेन्द्रियाश्रवः ॥

स्पर्शेति । स्पर्शश्शीतादिरूपेणाष्टविधः स्पर्शेन्द्रियजन्यप्रत्यक्षविषयः, तद्विषयकौ यौ रागद्वेषौ आनुकूल्यप्रातिकूल्याभ्यां प्रीत्यप्रीती तज्जन्यः कर्मबन्धानुगुण आत्माध्यवसायो वा योगक्रियाविशेषो वा स्पर्शेन्द्रियास्रव उच्यत इत्यर्थः । तथा च स्पर्शविषयकरागद्वेषान्यतरजन्यत्वे सत्याश्रवत्वं लक्षणम् । रसनेन्द्रियास्रवादावतिप्रसङ्गभङ्गाय सत्यन्तम् । कालादिवारणाय विशेष्यम् । रसनेन्द्रियास्रवादावतिव्याप्तिवारणाय स्पर्शविषयकेति ॥

रसनेन्द्रियाश्रवमाह—

## रसविषयकरागद्वेषजन्याश्रवः रसनेन्द्रियाश्रवः ॥

रसविषयकेति । अम्लादिभेदेन पञ्चविधा रसाः रसनेन्द्रियजन्यप्रत्यक्षविषयाः तद्विषयकौ यौ रागद्वेषौ आनुकूल्यप्रातिकूल्याभ्यां प्रीत्यप्रीती तदन्यतरजन्यः कर्मबन्धानुगुणो जीवाध्यवसायविशेषो योगविशेषो वाऽऽस्रवः रसनेन्द्रियाश्रव इत्यर्थः, रसविषयकरागद्वेषान्यतरजन्यत्वे सत्याश्रवत्वं रसनेन्द्रियाश्रवस्य लक्षणम्, कृत्यं प्राग्वत् ॥

---

१. परिणामस्य तीव्रमन्दभावे कर्मबन्धोऽपि तीव्रो मन्दश्च भवति, सिंहस्य मोघातिनश्च प्राणातिपाते समानेऽपि कर्मबन्धो न तुल्य, शौर्याभिनिवेशिनो बहुल कर्मबन्धात् । ज्ञातभावोऽभिसन्धाय प्राणातिपातादौ प्रवृत्ति, अज्ञातभावोऽनभिसन्धाय तत्र प्रवृत्ति, वीर्यान्तरायकर्मक्षयोपशमजन्य सामर्थ्यविशेषो वज्रर्षभनाराचसंहननीयापेक्ष त्रिपृष्ठादीनां सरभसिंहपाटनादिरूप तद्विशेषादपि कर्मबन्धविशेष । अधिकरण दुर्गतिप्रापकं निर्वर्तनासंयोजनादिभेदं कर्मबन्धविशेषहेतुरिति ॥

घ्राणेन्द्रियाश्रवमाह—

**गन्धविषयकरागद्वेषजन्याश्रवः घ्राणेन्द्रियाश्रवः ॥**

गन्धेति । सुरभ्यसुरभिरूपघ्राणजप्रत्यक्षयोग्यगन्धविषयकानुकूल्यप्रातिकूल्यप्रयुक्तप्रीत्यप्रीतिजन्याश्रवो घ्राणेन्द्रियाश्रव इत्यर्थः । गन्धविषयकरागद्वेषान्यतरजन्यत्वे सत्याश्रवत्वं लक्षणं, कृत्यं पूर्ववत् ॥

चक्षुरिन्द्रियाश्रवं श्रोत्रेन्द्रियाश्रवञ्चाचष्टे—

**रूपविषयकरागद्वेषजन्याश्रवश्चक्षुरिन्द्रियाश्रवः । शब्दविषयकरागद्वेषजन्याश्रवः श्रोत्रेन्द्रियाश्रवः । इतीन्द्रियपञ्चकाश्रवः ॥**

रूपेति । श्वेतादिरूपेण पञ्चप्रकारं चक्षुर्ग्रहणयोग्यं यद्रूपं तद्विषयकानुकूल्यप्रातिकूल्यप्रयुक्तरागद्वेषान्यतरजन्य आश्रवश्चक्षुरिन्द्रियाश्रव इत्यर्थः, रूपविषयकरागद्वेषान्यतरजन्यत्वे सत्याश्रवत्वं लक्षणं कृत्यं प्राग्वत् । श्रोत्रेन्द्रियाश्रवमाचष्टे—शब्दविषयकेति । सचित्ताचित्तमिश्रात्मकत्रिविधशब्दविषयकरागद्वेषान्यतरजन्याश्रव इत्यर्थः । लक्षणं कृत्यञ्च स्फुटम् । एत एव विभागवाक्ये इन्द्रियपञ्चकपदेनोक्ता इत्याह इतीति ॥

अथ क्रोधाद्याश्रवानाह—

**प्रीत्यभावप्रयुक्ताश्रवः क्रोधाश्रवः । अनम्रताजन्याश्रवो मानाश्रवः । कापट्यप्रयुक्ताश्रवो मायाश्रवः । सन्तोषशून्यताप्रयुक्ताश्रवो लोभाश्रवः । इति कषायचतुष्काश्रवः ॥**

प्रीत्यभावेति । प्रीत्यभावः क्रौर्यपरिणामः, क्रोधोऽनन्तानुबन्ध्यादिभेदः, तत्प्रयुक्त आश्रवः शुभाशुभाध्यवसायः क्रियाविशेषो वा क्रोधाश्रव इत्यर्थः । मानाश्रवमाह—अनम्रतेति । मानोऽनम्रता, अप्रणतिस्तज्जन्याश्रव इत्यर्थः । स च श्रुतजात्यादिगर्वावलम्बना भवति । मायाश्रवमाचष्टे—कापट्येति । माया कापट्यं परविप्रलम्भः, छद्मप्रयोगस्तज्जन्यः शुभाशुभाध्यवसायो वा जीवक्रियाविशेषो वा मायाश्रव इत्यर्थः । लोभाश्रवमभिधत्ते—सन्तोषेति । लोभः सन्तोषशून्यता तृष्णापिपासाभिष्वङ्गास्वादनभक्षणस्तज्जन्यः शुभाशुभाध्यवसायो वा क्रियाविशेषो वा लोभाश्रव इत्यर्थः । विभागवाक्ये, एत एव कषायचतुष्कपदेन ग्राह्या इत्याहेतीति ॥

अधुना हिंसाश्रवमाह—

योदयाच्चित्तोद्वेगोऽरतिस्तत्फला विषयेषु मोहनीयोदयाद्या चित्ताभिरतिः साऽरतिरतिः, परपरिवादः परनिन्दा, मायया सह मृषा मायामृषा, मिथ्यात्वशल्यञ्च, अनेकधा प्राणिगणशलनाच्छल्यं, मिथ्यात्वं तत्त्वाश्रद्धानं, तदेव शल्यं। एते द्व्यशीतिविधपापकर्मणां हेतवः। इति पापतत्त्वमवसितमित्याहेतीति ॥

इति तपोगच्छनभोमणिश्रीमद्विजयानन्दसूरीश्वरपट्टालङ्कारश्रीमद्विजयकमलसूरीश्वर चरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजयलब्धिसूरिणा विनिर्मितस्य तत्त्वन्यायविभाकरस्य स्वोपज्ञायां न्यायप्रकाशव्याख्यायां पापतत्त्वनिरूपणो नाम पञ्चमः किरणः ॥

## अथ षष्ठः किरणः ॥

ननु निरूपितं पुण्यपापरूपं कर्म, सम्प्रति तदनन्तरमुद्दिष्ट आस्रवो निरूपणीयः। तत्र स किं स्वरूपो जीवो वा तत्पर्यायो वा अजीवो वा तत्पर्यायो वा स्यात्, चेतनाचेतनात्मकपदार्थद्वयातिरिक्तस्याभावात्, जीवतत्पर्यायान्यतररूपत्वे जीव एव, अजीवतत्पर्यायान्यतररूपत्वे चाजीव एव भवेदित्याशङ्कायां लक्षणं निरूपयन् पदार्थं सूचयति—

### शुभाशुभकर्मग्रहणहेतुराश्रवः ॥

शुभाशुभेति। शुभाशुभरूपे ये कर्मणी पुण्यपापात्मकेऽष्टविधे, तयोर्यद्ग्रहणमुपादानं बन्धात्मकं तत्र हेतुः साक्षात्कारणं शुभाशुभाध्यवसायविशेषः परम्पराकारणञ्चेन्द्रियकषायाव्रतयोगक्रियाः, द्विविधो हेतुरास्रवपदार्थ इत्यर्थः। तथा च प्रतिक्षणं कर्मग्रहणव्यापृतस्वभावत्वाद्भवस्थजीवस्यावश्यं केनचिद्धेतुना भाव्यं, निर्हेतुकस्य कार्यस्यानुपपत्तेः। तथा च सति यस्तत्र हेतुः स आश्रवः, स चार्हदर्चनवन्दनसर्वविरतितपःस्वाध्यायवीतरागप्रणिधानधर्मध्यानादिप्रशस्तानुष्ठानात् प्राणातिपातमृषावादकषायाद्यप्रशस्तकर्मभ्यश्च भवति, भवति हि यथाक्रमं सत्कृत्यासत्कृत्याभ्यामसतोरपि शुभाशुभाध्यवसायादिरूपयोः शुभाशुभाश्रवयोराविर्भावः, सतोश्च वृद्धिरिति भावार्थः, ननु शुभाशुभकर्मणामादानात्मकस्य बन्धस्य कारणमाश्रव इत्यायातं, तच न सम्भवति, बन्धाभावे आश्रवासम्भवादन्यथा मुक्तस्यापि तदापत्तेः। यद्यास्रवमन्तरेणापि बन्ध इष्यते तर्हि कथमाश्रवस्य बन्धहेतुत्वं तदभावेऽपि जायमानं प्रति तस्य हेतुत्वासम्भवादिति चेन्मैवम्, उभयोरप्यन्योऽन्य कार्यकारणभावाभ्युपगमात्, न च तर्हि बन्धाभावे नाश्रवस्तदभावे च न बन्ध इति परस्पराश्रयप्रसङ्ग इति वाच्यम्, बन्धा-

१ मायामृषावादोऽयं तृतीयकषायद्वितीयाश्रवसंयोगरूप उपलक्षणोऽयमेवंविधसर्वसंयोगानाम्। येषान्तरभावान्तरकरणेन परवञ्चनरूपो वा बोध्य ॥

श्रवयोः कार्यकारणभावप्रवाहस्यानादितयोत्तरोत्तर प्रति पूर्वपूर्वस्य कारणत्वाभ्युपगमेन तदनवकाशात्, बीजाङ्कुरयो कार्यकारणभाववत् । ननु बन्धास्रवयोरेतावता समतैव स्यान्न तु विशेषस्तथा चाऽऽश्रवहेतुर्बन्ध इत्यपि बन्धस्य लक्षण स्यान्न चैतदस्ति, कषायाद्यनुविद्धस्य जीवस्य नूतनकर्मपुद्गलैः सह सम्बन्धो बन्ध इति लक्षणश्रवणादिति चेन्न, शरीरस्य स्नेहाभ्यङ्गाद्रेणुसश्लेषवदास्रवस्योत्पत्त्यनन्तरमेव बन्धहेतुत्वात्, न चैव बन्धस्य साक्षादाश्रवं प्रति हेतुत्वं, क्षेत्रकालादिसहकार्यपेक्षयोदयावस्थाप्राप्तस्यैव कर्मणोऽर्थक्रियाकारित्वात्, न तु बद्धमात्रेणास्रव जनयितुमलम् । सोऽयमास्रवः पूर्वं द्विचत्वारिंशद्विध प्रोक्तः । तत्र यद्यपि मनोवाक्कायाना शुभाशुभरूपा ये वीर्यान्तरायक्षयोपशमजन्या वीर्यप्राणोत्साहपराक्रमचेष्टाशक्तिसामर्थ्यादिशब्दवाच्या योगास्त एवास्रवाः, तत्र कायात्मप्रदेशपरिणामोऽशुभो हिंसास्तेयाब्रह्मादिरूपः, एतद्विपरीतश्शुभो गमनादिक्रियाहेतुः काययोगः । भाषायोग्यपुद्गलात्मप्रदेशपरिणामोऽशुभस्सावद्यानृतपरुषपिशुनादिरूप', शुभ एतद्विपरीतरूपो वाग्योग' । मनोयोग्यपुद्गलात्मप्रदेशपरिणामोऽशुभोऽभिध्याव्यापादेर्ष्यासूयादिरूपः, शुभश्चैतद्विपरीतरूपो मनोयोग इति, तथापि विवक्षाभेदाद्विचत्वारिंशद्विधाः प्रोक्ताः । अयमाश्रवस्सकषायस्याकषायस्यापि भवति, तत्राकषायस्य वीतरागस्यैकसमयस्थितिककर्मण एवास्रवो भवति, सकषायस्य मिथ्यादृष्ट्यादिसूक्ष्मसम्परायान्तस्य तु ससारपरिभ्रमणकारणकर्मण एवास्रवो भवतीति बोध्यम् । यद्यपीन्द्रियकषायाव्रतयोगाना क्रियास्वभावानतिवृत्तेः क्रियावचनेनैवैषा गतार्थता, व्यापाराभाव इन्द्रियादीनामकिञ्चित्करत्वात्, तथापि क्रियास्वभावत्वमेतेषा न नियत, नामस्थापनाद्रव्येन्द्रियादौ क्रियाभावात्, यद्वा नैवमेकान्ततस्तानि क्रियास्वभावान्येवेति, किन्तु द्रव्यार्थिकगुणभावे पर्यायार्थिकप्राधान्यतस्तस्याक्रियास्वभावानतिवृत्तिः, पर्यायार्थिकगुणभावे द्रव्यार्थिकप्राधान्यात्तस्याक्रियास्वभावातिवृत्तिरिति । शुभाशुभाश्रवपरिणामाभिमुखत्वादिन्द्रियकषायाव्रताना द्रव्यास्रवत्वं, भावास्रवः कर्मादान, तच पञ्चविंशतिक्रियाभिरास्रवति कर्मेत्येतदर्थमिन्द्रियकषायाव्रतानामुपादानम् ॥

वस्तुतस्तु कायवाङ्मनसा क्रिया आस्रवास्तेषा गतीन्द्रियकषायलेश्यायोगोपयोगज्ञानदर्शनचारित्रवेदादिपरिणामवतो जीवस्य धर्मरूपत्वाच्च जीवात्मका , कायवाङ्मन.प्रभवत्वात्पारस्वरूपा वा, एतदेवाभिप्रेत्याह—

**पौद्गलिकोऽयम् । आत्मप्रदेशेषु कर्मप्रापिका क्रिया द्रव्याश्रवः, कर्मोपार्जननिदानाध्यवसायो भावाश्रवः ॥**

प्रमादिकर्तृकप्राणवियोगजन्याश्रवो हिंसाश्रवः ॥

**प्रमादिकर्तृकेति ।** प्रमादिपुरुषकर्तृको यः प्राणवियोगस्तज्जन्याश्रवो हिंसाश्रव इत्यर्थः । कषायविकथेन्द्रियनिद्राऽऽसवैः प्रमादमुपगतः प्रमादी, तत्र षोडशविधाः कषायास्तत्परिणत आत्मा प्रमादी स्त्रीभक्तजनपदराजवृत्तान्तप्रतिबद्धा विकथा, रागद्वेषाविष्टचेताः स्त्र्यादिविकथापरिणतः प्रमादी, स्पर्शनादीन्द्रियद्वारकरागद्वेषसमासादितपरिणामविशेष आत्मा प्रमादी दर्शनावरणकर्मोदयजन्यपञ्चविधनिद्रापरिणामविशिष्ट आत्मा प्रमादी । आसवो मद्यं मधुवारशीधुमदिरादि, तदभ्यवहाराद्विह्वलतामुपेतः प्रमत्तः । प्रमादिकर्तृकः, प्रमत्तव्यापारजन्यः । प्राणाः पञ्चेन्द्रियाणि आयुःकायवाङ्मनःप्राणापानाश्चेति द्रव्यपरिणामरूपा दशविधा यथासंभवं जीवेष्ववस्थिताः, तेषां वियोग आत्मनः पृथक्करणं, तज्जन्याश्रव इति भावः । प्राणिनः स्वतो निरवयवत्वेन पृथक्करणासम्भवात् प्राणवियोग इत्युक्तम्, तथा च प्राणवियोगपूर्वकः प्राणिवियोग इति तात्पर्यम् । न च प्राणानामात्मनोऽन्यत्वेन तद्वियोगे नात्मनः किञ्चिद्भवतीत्यधर्माभाव इति वाच्यम्, जीवस्य तत्सम्बन्धिनः प्राणवियोगे दुःखोत्पाददर्शनात् । शरीरिणोऽन्यत्वेऽपि पुत्रकलत्रादिवियोगे सन्तापदर्शनात् । बन्धापेक्षया कथञ्चिच्छरीरशरीरिणोऽनन्यत्वाच्च । केवलं प्राणवियोगमात्रस्य हिंसात्वाभावात्प्रमादिपुरुषकर्तृकेत्युक्तम् । तथा च प्रमत्त एव हिंसको नाप्रमत्त इति प्रतिपादितम् । प्रमत्तो ह्यागमनिरपेक्षो दूरोत्सारितपारमर्षसूत्रोद्देशः स्वच्छन्दप्रभावितकायादिवृत्तिरज्ञानबहुलः प्राणिप्राणापहारमवश्यन्तया करोति । तत्र सोऽयं प्राणवियोगो हिंसापरनामा द्रव्यभावभेदेन द्विविधः, अत्र चतुर्भेदाः, कदाचिद्द्रव्यतः प्राणातिपातो न भावतः, कदाचिद्भावतो न द्रव्यतः, कदाचिद्द्रव्यतो भावतश्च । कदाचिच्च न द्रव्यतो न वा भावत इति । यो हि ज्ञानी श्राद्धः स्वीकृतजीवस्वतत्त्वः कर्मक्षपणार्थं प्रवृत्तचरणमम्पत् काञ्चिद्धर्मक्रियामधितिष्ठन् प्रवचनमातृभिरनुगृहीतः पादन्यासमार्गावलोकितपिपीलिकादिमत्त्वः समुत्क्षिप्तं चरणमक्षेप्तुमसमर्थः कदाचित् पिपीलिकादेरुपरि पादं न्यस्यति, उत्क्रान्तप्राणश्च प्राणी भवति तदास्यात्यन्तशुद्धाशयस्य दयाद्रसावधानविमलचेतसः द्रव्यप्राणव्यपरोपणमात्रान्नास्ति हिंसकत्वम् । द्वितीये व्याधस्य प्रमत्तयाकृष्टधनुषो लक्ष्यमृगमुद्दिश्य विमार्जितशिलीमुखस्य कदाचिच्छरपातस्थानादपसृते सारङ्गे चेतसोऽशुद्धत्वाद् द्रव्यतोऽविनष्टेष्वपि प्राणिषु व्याधस्य हिंसारूपेण परिणतत्वाद्भवत्येव भावतो हिंसा । तृतीये तत्रैव मृगो यदा म्रियते तदा द्रव्यभावाभ्यां हिंसकत्वम् । चतुर्थे तु शैलेशीकरणवर्तिनस्सिद्धाश्च, तेषां योगाभावेन द्रव्यभावहिंसाऽसंभवादतो द्वितीये तृतीय एव कल्पे हिंसकत्वं न प्रथमचतुर्थयोरिति दिक् ॥

असत्याश्रवं लक्षयति—

## अयथावद्वस्तुप्रवृत्तिजन्याश्रवोऽसत्याश्रवः ॥

अयथावदिति । अयथावद्वस्तुप्रवृत्तिर्नाम—ये पदार्था यथार्था न भवन्ति तेषु यथार्थतया वाक्कायमनसां प्रवर्त्तनम् , तज्जन्य आस्रव इत्यर्थः । अत्र प्रवृत्तिग्रहणेन कायजन्यानां पाणिनेत्रौष्ठपादाद्यवयवक्रियाणां अलीकानां परवञ्चनोपयुक्तानां, वाग्जन्यानां असद्वचनानां, मनोजन्यानामसद्विचाराणाञ्च सङ्ग्रहः । ज्ञानग्रहणेन वचनग्रहणेन वाऽन्यतमस्य सङ्ग्रहः स्यान्न तु सर्वेषाम् । नास्त्यात्मा, नास्ति परलोकः, इत्यादिवचनानि, श्यामाकतण्डुलप्रमाणोऽङ्गुष्ठपर्वमात्रप्रमाणो वा आदित्यवर्णो निष्क्रियो वाऽयमात्मेत्यादिवचनानि, अश्वं यो गां ब्रवीति गामश्वमेतादृशान्यपि वचनानि, हिंसापारुष्यारुन्तुदवचांसि च शास्त्रगर्हितत्वेनायथावद्वस्तुविषयकाण्येवेति न क्वाप्यव्याप्तिरप्रशस्तार्थत्वादिति ॥

स्तेयाश्रवं निरूपयति—

## स्वाम्यवितीर्णपदार्थस्वायत्तीकरणजन्याश्रवः स्तेयाश्रवः ।

स्वामीति । स्वामिनाऽवितीर्णानां पदार्थाना यत्स्वायत्तीकरणं तज्जन्याश्रव इत्यर्थः । स्वामिपदं जीवतीर्थंकरगुरूणामुपलक्षक, तेन स्वामिनाऽदत्तस्य तृणादेः, जीवेनादत्तस्य वा पुष्पफलादेस्तीर्थंकरप्रतिषिद्धस्याधाकर्मिकाहारादेः, गुरुभिरननुज्ञातभोज्यादीनामपि सङ्ग्रहः । न चाष्टविधं कर्मान्येनादत्त महीतुः स्तेयस्य स्यादिति वाच्यम् , दानादानप्रवृत्तिनिवृत्तियोग्यवस्तुष्वेव तदुपपत्त्या कर्मण्यसम्भवात् । अन्यथा स्वाम्यवितीर्णेतिपदस्य वैयर्थ्यापत्तेः, कर्मणः सूक्ष्मत्वेन करादिना ग्रहणविसर्जनासम्भवाच्च । न च कथं तर्हि शुभाशुभकर्मणामादानं सङ्गच्छत इति वाच्यम्, शरीराहारशब्दादिविषयेषु रागद्वेषादिपरिणामेन कर्मबन्धस्यैवाऽऽदानरूपत्वात् । न च नित्यकर्मबन्धप्रसङ्ग इति वाच्यम्, गुप्त्यादिभिस्संवरणात् । स्वामिनेति पदेन केनाप्यपरिगृहीतस्य ग्रहणं स्तेयमिति व्युदस्तं, अपरिगृहीतस्य शास्त्रेणाननुज्ञातस्य पदार्थस्य ग्रहणे शासने स्तेयत्वानुक्तेः, ननु शास्त्रस्य परत्वाभावात् परप्रदत्तानेषणीयादेर्ग्रहणे कथं स्तेयत्वमिति चेन्नैवम्, शास्त्रं हि ज्ञानमात्मपरिणामविशेषः, परिणामपरिणामिनोरभेदेन च शास्त्रस्यापि परत्वं निष्प्रत्यूहमेव ॥

---

१. आदानं हि गात्रपार्श्वद्रव्यविषयतापूर्व्यैकदेशविषयं, ननु निखिलद्रव्यविषय, ग्रहणधारणयोर्यत्र बादरपुद्गलस्कन्धरूपं द्रव्यं शरीराणि च व ध र, तद्द्वारा च जीवा ननु धर्मादयोऽविषयपुद्गला वा इति मत ॥

अब्रह्माश्रवमाह—

**सति वेदोदये औदारिकवैक्रियशरीरसंयोगादिजन्याश्रवोऽब्रह्माश्रवः ॥**

**सति वेदोदय इति ।** वेदोदये सति औदारिकवैक्रियशरीरसंयोगादिजन्यत्वे सति आश्रवत्वं लक्षणम् । आदिना पारस्परिकेक्षणवचनचिन्तनानां ग्रहणम् । वेदमोहोदयविरहितेनानुष्ठितवन्दनादिकालीनशरीरसंयोगस्याश्रवनिमित्तत्वाभावसूचनाय वेदोदये सतीति । दैवमैथुनाश्रवसंग्रहाय वैक्रियेति । मानुषाद्यब्रह्मसंग्रहायौदारिकेति । मैथुनस्य स्त्रीपुंयोग एव प्रचुरप्रयोगात् कर्म्मप्रयुक्तपुरुषद्वयादिविलक्षणसंयोगजन्याश्रवेऽव्याप्तिस्स्यादिति मैथुनशब्दं विहाय सामान्यतः शरीरसंयोग एवोक्तः । तेन स्त्रीपुंसयोः पुरुषयोः स्त्रियोश्च संयोगस्य विलक्षणस्य लाभः । अत्र वेदोदयवतोऽपि सतोऽन्यथा पुरुषादिसंयोगेऽब्रह्माश्रवप्रसङ्गवारणाय वेदोदये सतीत्यस्य वेदोदयप्रयुक्तत्वमर्थः, अन्वयश्चास्य संयोगे, उक्तसंयोगस्य वेदोदयप्रयुक्तत्वाभावान्न दोषः । न चैकस्य हस्तादिसंघट्टनादितोऽब्रह्माश्रवो न स्यादिति वाच्यम्, स्त्रीपुंसयो रत्यर्थे संयोगे परस्परकृतस्पर्शाभिमानादिवात्रापि करादिसंघट्टनात् स्पर्शाभिमानस्य तुल्यत्वात् । यथैकस्यापि पिशाचवशीकृतत्वात्सद्वितीयत्वं तथैकस्यापि वेदमोहोदयाविष्कृतकामपिशाचवशीकृतत्वात्सद्वितीयत्वसिद्धेश्च ॥

अथ परिग्रहाश्रवमाख्याति—

**द्रव्यादिविषयाभिकाङ्क्षाजन्याश्रवः परिग्रहाश्रवः । इत्यव्रतपञ्चकाश्रवः ॥**

**द्रव्यादीति ।** बाह्यानां चेतनाचेतनानां रागादीनामाभ्यन्तराणामुपधीनां च संरक्षणार्जनसंस्काराद्विलक्षणव्यापृतिर्द्रव्यादिविषयाभिकाङ्क्षा लोभपरिणतिरूपा विवेकभ्रंशिका तज्जन्याश्रव इत्यर्थ. । तत्र बाह्यो विषयो वास्तुक्षेत्रधनधान्यशय्यासनयानकुप्यद्विचतुःपाद्भाण्डादिः, आभ्यन्तरश्च रागद्वेषक्रोधमानमायालोभमिथ्यादर्शनहास्यरत्यरतिभयशोकजुगुप्सावेदाख्यश्चतुर्दशविधः, आदिनोपधीनां ग्रहणम् । न च यथाऽऽध्यात्मिकरागादौ जीवपरिणामस्वरूपे सङ्गः परिग्रह इत्युच्यते तथैव ज्ञानदर्शनचारित्रेष्वपि सङ्गः परिग्रहः स्यादिति वाच्यम् ज्ञानदर्शनचारित्रवतोऽप्रमत्तस्य मोहाभावेन परिग्रहासम्भवात्, ज्ञानादीनामहेयत्वेनात्मस्वभावानतिवृत्त्याऽपरिग्रहत्वाच्च । कर्मोदयतन्त्रत्वेन रागादीनामनात्मस्वभावत्वात् । शास्त्रसम्मतेषु चारित्रोपयोग्युपधिशय्याहारादिषु काङ्क्षाया आश्रवाहेतुत्वेन रागद्वेषमोहाभिप्रायकमभीतिपदम् । द्रव्यपदं द्रव्यक्षेत्रकालभावात्मकचतुर्विधपरिग्रहसूचकम् । इमे हिंसाद्याश्रवा विभागवाक्येऽव्रतपञ्चकपदबोध्या इत्याहेतीति ॥

अधुना कायाश्रवमाह—

## शरीरचेष्टाजन्याश्रवः कायाश्रवः ॥

शरीरेति । शरीरपदमौदारिकादिकायसप्तकान्यतमपरं यथौदारिककाययोग औदारिकमिश्रकाययोगो वैक्रियकाययोगो वैक्रियमिश्रकाययोग आहारककाययोग आहारकमिश्रकाययोगः कार्मणकाययोगः, तत्र प्रथमद्वितीयौ तिर्यङ्मनुष्याणामेव, केवलिसमुद्घातकाले चाद्यः प्रथमाष्टमसमययोरिष्टः, द्वितीयः केवलिसमुद्घाते द्वितीयषष्ठसप्तमसमयेषु, तृतीयो नारकदेवानां तिर्यङ्मनुष्याणाञ्च विभूतिप्राप्तानाम्, चतुर्थं औदारिकेण सह ग्रहणकाले, देवनारकयोस्त्वपर्याप्तावस्थायाम् कार्मणेन सह, पञ्चम ऋद्धिप्राप्तस्य साधोरेव, षष्ठ औदारिकेण सह ग्रहणकाले, सप्तमः पुनर्विग्रहसमापत्तौ केवलिसमुद्घाते वा त्रिचतुर्थपञ्चमसमयेषु भवति । तत्र यथासम्भवमेभिर्जन्याश्रवः कायाश्रव इति भावः ॥

अथ वागाश्रवं प्रतिपादयति—

## वाक्क्रियाजनिताश्रवो वागाश्रवः ॥

वागिति । शरीरनामकर्मोदयाद्वीर्यान्तरायक्षयोपशमादिनिमित्तकाभ्यन्तरवाग्लब्धिसान्निध्ये सति वाक्परिणामाभिमुखस्यात्मनो वाग्वर्गणालम्बनापेक्षप्रदेशपरिस्पन्दप्रभवाश्रव इत्यर्थः । तत्र वाग्योगश्चतुर्धा सत्यो यथा पापाद्विरमणीयमिति, असत्यो यथा पापं नाम नास्ति किञ्चिदिति, सत्यानृतो यथा इमा गावश्चरन्तीति, अत्र पुंसामपि सम्भवात्, असत्यामृषा यथा हे देवदत्त! ग्रामं गच्छेत्यादि ॥

सम्प्रति मनआश्रवं प्ररूपयति—

## मनश्चेष्टाजन्याश्रयो मनआश्रवः । इति योगत्रिकाश्रवः ॥

मनश्चेष्टेति । वीर्यान्तरायानिन्द्रियावरणक्षयोपशमादिमनोलब्धिसन्निधाने मनोवर्गणालम्बनापेक्षपरिणामोन्मुखात्मप्रदेशपरिस्पन्दप्रसूताश्रव इत्यर्थः । तत्रैकेन्द्रियाणां काययोगो वाङ्मनोव्यापाराभावात्, द्वित्रिचतुरिन्द्रियासञ्ज्ञिपञ्चेन्द्रियाणां कायवाग्योगौ, संज्ञिपञ्चेन्द्रि-

---

१. वैक्रियमिश्रं औदारिकेण कार्मणेन वा सह भवति, तत्र कार्मणेन मिश्रं देवनारकाणामपर्याप्तावस्थाया प्रथमसमयादनन्तरं, पञ्चेन्द्रियतिर्यङ्मनुष्याणाञ्च वैक्रियलब्धिमतां वैक्रियारम्भकाले वैक्रियपरित्यागकाले वा औदारिकेण मिश्रमिति भाव. ॥ २. सिद्धप्रयोजनस्य चतुर्दशपूर्वविद आहारकं परित्यज्य औदारिकमुपाददानस्याऽऽहारकं प्रारभमाणस्य वा भवतीति भाव. ॥

याणां मनोवाक्काययोगाः, उपशान्तकषायक्षीणमोहयोश्च मनोवाक्काययोगाः प्रश्नमन्तरेण केवलिनो वाक्काययोगौ इत्येवं यथासम्भवं समुदिताः कायादयः कचित् क्रियाहेतवः कचिच्चैकैका अपीति बोध्यम् । एत एव विभागवाक्ये योगत्रिकपदवाच्या इत्यभिप्रायेणाह इतीति ॥

अथेन्द्रियकषायाव्रतैः संकीर्णाऽशुद्धा वा क्रिया एकास्रवत्वं प्रतिपद्यन्ते ताश्चात्मनः समिथ्यात्वकषायकर्मणः क्रियारूपाः परिणामाः पञ्चविंशतिरेवेति ताः क्रमेण व्याचिख्यासुराद्यां कायिकीनामक्रियामाह—

**अनुपरतानुपयुक्तभेदभिन्ना कायजन्यचेष्टा कायिकी ॥**

अनुपरतेति । कायेन निर्वृत्ता क्रिया कायिकी, साऽनुपरतानुपयुक्तभेदतो द्विधा, अनुपरतकायिकी नाम प्रदुष्टमिथ्यादृष्ट्यादेः वाङ्मनोनिरपेक्षा पराभिभवाद्यात्मककायोद्यमक्रिया, स्वामी त्वविरतमिथ्यादृष्ट्यादिः, अनुपयुक्तकायिकी नाम प्रमत्तसंयतस्य सुबहुप्रकाराऽनेककर्तव्यतारूपा दुष्प्रयोगकायक्रिया, अस्या अधिकार्यनुपयुक्तसंयत इति भावः ॥

आधिकरणिकीमाह—

**संयोजननिर्वर्त्तनभेदभिन्ना नरकादिप्राप्तिहेतुर्विषशस्त्रादिद्रव्यजनिता चेष्टा आधिकरणिकी ॥**

संयोजनेति । अधिक्रियते येनाऽऽत्मा दुर्गतिप्रस्थानं प्रति तदधिकरणं परोपघातिकूटगलपाशादिद्रव्यजातं, तेन निर्वृत्ताऽऽधिकरणिकी, द्विविधा सा संयोजननिर्वर्त्तनभेदात् । संयोजनं विषगरलहलकूटधनुर्यन्त्रामिमुष्ट्यादीनां सम्बन्धनम् । निर्वर्त्तनं मूलोत्तरगुणभेदात् द्विधा । तत्र मूलगुणनिर्वर्त्तनं, पञ्चानामौदारिकादिशरीराणां मूलतो निष्पादनं, उत्तरगुणनिर्वर्त्तनन्तु पाणिपादाद्यवयवकरणम् । अथवाऽसिशक्तितोमरादीनामादित एव करणं मूलगुणनिर्वर्त्तनम् । तेषामेव पानोज्ज्वलीकरणपरिवारादिसंपादनमुत्तरगुणनिर्वर्त्तनम् । विषशस्त्रादिद्रव्यजनितेति पदं द्रव्याद्यन्येषु वा जनितेति विग्रहभेदेन संयोजननिर्वर्त्तनार्थवर्णनपरमेवेति बोध्यम् । नवमगुणस्थानं यावद्भवत्येषा क्रिया ॥

प्राद्वेषिकीं क्रियामाह—

१. कायिक्यां सत्यामवश्यमाधिकरणिकी, कायस्याप्यधिकरणत्वात्, तस्या अपि कायिक्या प्राद्वेषमन्तरेणासंभवेन प्राद्वेषिक्याऽपि सह परस्परमविनाभाव, पारितापनिक्यास्तत्त्वे त्रिगुणमायानामवश्यंभाव, एवं प्राणातिपातिक्यास्सत्त्वे चतसृणामवश्यंभावो विशेय । तत्र कस्यापि आवश्याद्यत्रिक्रियत्वं कस्याप्याद्यचतु क्रियत्वं कस्यापि च पञ्चक्रियत्वं भाव्यम् ॥

## जीवाजीवविषयकद्वेषजनकक्रिया प्रादोषिकी ॥

जीवाजीवेति । प्रकृष्टो दोषः प्रदोषः क्रोधादिस्तत्र भवा, सा द्विविधा जीवप्रादोषिकी, अजीवप्रादोषिकी चेति, आद्या पुत्रकलत्रादिस्वपरजनविषया, द्वितीया क्रोधोत्पत्तिनिमित्तभूतस्थाणुकण्टकदृषच्छकलशर्करादिगोचरेति भावः, आनवमगुणस्थानमेषा । अस्या एव प्राद्वेषिकीत्यपि नामान्तरमेतत्सूचनायैव मूले क्रोधेत्यनुक्त्वा द्वेषपदोपादानम् ॥

पारितापनिकीं वक्ति—

## स्वपरसन्तापहेतुः क्रिया पारितापनिकी ॥

स्वपरेति । इयमपि स्वपरपरितापहेतुकत्वेन द्विविधा । तत्र स्वहस्तेन परहस्तेन वा पुत्रकलत्रादिवियोगदुःखभारातिपीडितस्यात्मनस्ताडनशिरस्फोटनादिना स्वपारितापनिकी । पुत्रशिष्यादिताडनादिना तु परपारितापनिकी, एषा चानिवृत्तिबादरगुणस्थानं यावत् ॥

प्राणातिपातिकीं निरूपयति—

## स्वपरप्राणवियोगप्रयोजिका क्रिया प्राणातिपातिकी ॥

स्वपरेति । प्राणातिपातः प्राणिविनाशनं तत्प्रधाना क्रिया प्राणातिपातिकी । सा द्विविधा स्वहस्तेन परहस्तेन च, गिरिशिखरपातजलज्वलनप्रवेशशस्त्रपाटनप्रभृतेः स्वपरहस्ताभ्यामात्मविषयकरणकारणे । मोहलोभक्रोधाविष्टैः परस्य स्वपरहस्तप्राणच्यावनमिति । आपञ्चमगुणस्थानं यावदियम् ॥

आरम्भिकीमाचष्टे—

## जीवाजीवभेदभिन्ना जीवाजीवघातात्मिका चेष्टाऽऽरम्भिकी ॥

जीवाजीवेति । आरम्भः पृथिव्यादिकायोपघातलक्षणः शुष्कतृणादिच्छेदलेखनादिर्वा तत्र भवा क्रियाऽऽरम्भिकी । जीवेतरविषयेयम् । जीवमात्रस्य जीवेन स्वपरहस्तादिना अजीवेन दण्डादिना योऽयं घातः प्राणवियोगरूपः, तथाऽजीवस्यालेख्यादौ स्थापनाकारस्य चेतनावियुतस्य जीवेन स्वपररूपेणाजीवेन दण्डशस्त्रादिरूपेण योऽयं घातः—विनाशस्तदात्मिका क्रियेत्यर्थः । आषष्ठगुणस्थानमेषा ॥

---

१ आरम्भिकीसत्त्वे पारिग्रहिक्यप्रत्याख्यान्यौ वा, अप्रत्याख्यानेऽप्यारम्भिकी स्यादेव, आरम्भिकासत्त्वे नियमेन मायाप्रत्ययिकी स्यात्, वैपरीत्येन तु न नियमः । आरम्भिकीसत्त्वे मिथ्यादर्शनप्रत्ययिकप्रत्याख्यानिक्योर्न नियमः, वैपरीत्येन तु नियमः ॥

पारिग्रहिकीमभिधत्ते—

**जीवाजीवविषयिणी मूर्च्छानिर्वृत्ता क्रिया पारिग्रहिकी ॥**

जीवाजीवेति । जीवाजीवविषयकमूर्च्छानिर्वृत्तक्रियात्वं लक्षणम् । विविधोपायैरर्थोपार्जनरक्षणमूर्च्छापरिणामः परिग्रहस्तत्र भवा पारिग्रहिकी। इयञ्च जीवाजीवभेदेन द्विविधा। औपशमममसौ ॥

मायाप्रत्ययिकीमभिधत्ते—

**मोक्षसाधनेषु मायाप्रधाना प्रवृत्तिर्मायाप्रत्ययिकी ॥**

मोक्षसाधनेति । मोक्षसाधनविषयकमायिकप्रवृत्तित्वं लक्षणम् । मोक्षसाधनेषु ज्ञानादिषु स्वपरवञ्चनाभिलाषुकस्य या मायाहेतुका चेष्टा सेत्यर्थः । सप्तमगुणस्थानं यावदियम् ॥

मिथ्यादर्शनप्रत्ययिकीमाह—

**अभिगृहीतानभिगृहीतभेदभिन्ना अयथार्थवस्तुश्रद्धानहेतुकव्यापारवती क्रिया मिथ्यादर्शनप्रत्ययिकी ॥**

अभिगृहीतेति । मिथ्यादर्शनं विपरीततत्त्वप्रतिपत्तिरूपः प्रत्ययः कारणमस्या इति विग्रहः । तत्राभिगृहीता जीवादीनां हीनाधिकपरिमाणादिप्ररूपकदर्शनानुमन्तृपुरुषविषयिणी, अनभिगृहीता कुदृष्टिमताविश्वस्तजीवविषयिणी, अभिगृहीतभिन्नत्वबोधकेनानभिगृहीतपदेन तृतीया सन्दिग्धापि ग्राह्या, सा च शास्त्रैकाक्षरविषयकसंशयप्रभवा । अयथावद्वस्तुश्रद्धानमेव हेतुर्यस्य व्यापारस्य तादृशव्यापारवती तादृशव्यापाराभिन्नव्यापारप्रयोजिका या क्रिया अनुमोदनाद्यात्मिका सेत्यर्थः । विपरीततत्त्वप्रतिपत्त्यादौ हि अनुमोदनादिकं अयथार्थवस्तुश्रद्धानवानेव करोति कारयति चेति भावः । आवृतीयमसौ ॥

अप्रत्याख्यानिकीमाह—

**जीवाजीवविषयिणी विरत्यभावानुकूला क्रियाऽप्रत्याख्यानिकी ॥**

जीवाजीवेति । संयमविघातकारिकषायादीनां न प्रत्याख्यानं परिहारो यस्या साऽप्रत्या-

१. पारिग्रहिकीमस्त्व आरम्भिकीमायाप्रत्ययिकक्रियानियमन सत्त्वम्, मिथ्यादर्शनप्रत्ययिकाप्रत्याख्यानिक्योस्तु न नियमः । यस्य च मायाप्रत्ययिकी तस्य मिथ्यादर्शनप्रत्ययिकी, अप्रत्याख्यानिकी स्याद्वा । अनयोश्च सत्त्वे मायाप्रत्ययिकी नियमतो वर्त्तते । अप्रत्याख्यानिकायास्तु मिथ्यादर्शनप्रत्ययिक्या एवानियमो बोध्यः ॥ २ इयमप्रमत्तस्य कदाचित्प्रवचनमालिन्यरक्षणार्थं भवति, न चोपकारः इति ॥

ख्यानिकी । जीवः प्राणी, अजीवो जीवेतरस्तौ विषयौ यस्याः सा, विरत्यभावोऽप्रत्याख्यातपापकर्मणस्तदनुकूला क्रियाऽप्रत्याख्यानिकीत्यर्थः । संयमघातिकर्मोदयवशान्निवृत्त्यभावानुकूलक्रियेति भावः । चतुर्थगुणस्थानं यावदेषा ॥

दृष्टिकीं निरूपयति—

**प्रमादिनो जीवाजीवविषयदर्शनादरात्मिका क्रिया दृष्टिकी ॥**

प्रमादिन इति । दृष्टिरेव दृष्टिकी, रागादिकलुषितस्य जीवाजीवावलोकनम् । जीवाजीवास्तुरङ्गस्यन्दनप्रभृतयस्तद्विषयकं यद्दर्शनं तदादरात्मिका प्रमादिनः क्रियेत्यर्थः । प्रमादिन इतिपदेनाप्रमादिकर्तृकदर्शनादरस्य व्युदासः, तथा च प्रमादप्रयुक्तजीवाजीवविषयकदर्शनादरक्रियात्वं लक्षणम् । न चेन्द्रियाश्रवे गतार्थत्वादस्याः पृथग्ग्रहणं निरर्थकमिति वाच्यम्, पूर्वत्रेन्द्रियविज्ञानग्रहणात्, इह तु तत्पूर्वकपरिस्पन्दग्रहणाददोषात् । षष्ठगुणस्थानं यावदसौ ॥

स्पृष्टिकीमभिदधाति—

**सदोषस्य जीवाजीवविषयकं स्पर्शनं स्पृष्टिकी ॥**

सदोषस्येति । प्रमादिन इत्यर्थः । रागद्वेषमोहाकुलितचेतसो योषिदाद्यङ्गस्पर्शनक्रियेत्यर्थः । दोषप्रयुक्तजीवाजीवसम्बन्धिस्पर्शनक्रियात्वं लक्षणम् । दोषप्रयुक्तत्वविशेषकृत्यं प्राग्वत् । आषष्ठमसौ ॥

प्रातीत्यिकीमाख्याति—

**प्रमादात् प्राक्स्वीकृतपापोपादानकारणजन्यक्रिया प्रातीत्यिकी ॥**

प्रमादादिति । प्रतीत्य पूर्वपापोपादानकारणमधिकरणमाश्रित्य निष्पन्ना क्रिया । प्रमादप्रयुक्तप्राक्स्वीकृतपापोपादानकारणजन्यक्रियात्वं लक्षणम् । आषष्ठमियम् ॥

सामन्तोपनिपातिकीमाह—

**कारुण्यवीरबीभत्सादिरसप्रयोक्तृणां प्रेक्षकाणाञ्च सानुरागिणां नाट्यादिजन्या क्रिया सामन्तोपनिपातिकी ॥**

कारुण्येति । नैकविधनाटकादिषु कारुण्यादिरसप्रयोक्तृणां नाट्यादिकर्तृणां, अनुरागेण प्रेक्षकाणाञ्च नाट्यादिजन्या क्रिया, स्त्रीपुरुषपशुसम्पातदेशेऽन्तर्मलोत्सर्गकरणं वा, स्वकीये

भ्रातृपुत्रशिष्यादौ, अजीवे स्वप्रतिमादौ समन्ततः सर्वदिग्भ्य आगत्य स्तुतिकारकलोकैः स्तूयमाने या तुष्टिः प्रमोदः सा पुनः सामन्तोपनिपातिकीत्यर्थः। समन्तात्सर्वत उपनिपतनमुपनिपात आगमनं स्त्र्यादीनां संपात्यसत्त्वानां वा यत्र देशे भोजनादौ वा स समन्तोपनिपातस्तत्र भवा क्रिया सामन्तोपनिपातिकी । आपञ्चममेषा ॥

नैःशस्त्रिकीं लक्षयति—

**यन्त्रादिकरणकजलनिस्सारणधनुरादिकरणकशरादिमोचनान्यतररूपा क्रिया नैःशस्त्रिकी ॥**

यन्त्रादीति । राजाद्यनुज्ञया यन्त्रादिद्वारा कूपादिभ्यो जलादीनां निष्कासनं, धनुरादिद्वारा वा शरादीनां मोचनमित्यर्थः । मनुष्यादीनामिष्टकाशकलादीनाञ्च यन्त्रादिभिः कोट्टादिरक्षार्थादिविधीयमानतथाविधदार्वादिनिष्पादितैर्गोफणादिभिश्च निसर्जनं मोचनं नैःशस्त्रिकी नैसृष्टिकीत्यपरनाम्नी क्रियेत्यर्थः । आपञ्चमं भवत्येषा ॥

स्वाहस्तिकीमाह—

**सेवकयोग्यकर्मणां क्रोधादिना स्वेनैव करणं स्वाहस्तिकी ॥**

सेवकयोग्येति । क्रोधादिना गाढाभिमानादिनाऽन्यपुरुषप्रयत्ननिर्वर्त्यक्रियायाः स्वेनैव करणम्, जीवाजीवाभ्यां जीवस्य मारणं, स्वहस्तेन जीवाजीवयोस्ताडनं वा, स्वाहस्तिकीत्यर्थः । आपञ्चममेषा ॥

आज्ञापनिकीमाचष्टे—

**अर्हदाज्ञोल्लङ्घनेन जीवादिपदार्थनिरूपणजीवाजीवान्यतरविषयकसावद्याज्ञाप्रयोजकक्रियान्यतररूपाऽऽज्ञापनिकी ॥**

अर्हदिति । भगवदर्हत्प्रणीताज्ञोल्लङ्घनेन स्वमनीषया जीवादिपदार्थानां निरूपणम्, जीवस्य वाऽजीवस्य वा सावद्येष्वाज्ञापनम् । अर्हत्प्रणीताज्ञानिरपेक्षस्वातंत्र्यप्रयुक्तपदार्थनिरूपणजीवाजीवान्यतरविषयकसावद्याज्ञापनान्यतरत्वे सति क्रियात्वं लक्षणम् । अस्या एव आनयनक्रिया आनयनिकीति च नामान्तरम् । पञ्चमगुणस्थानं यावदेषा । आद्यपक्षे तु प्रथममेव ॥

विदारणिकीमाह—

**पराऽऽचरिताप्रकाशनीयसावद्यप्रकाशकरणं विदारणिकी ॥**

**पराऽऽचरितेति** । परैराचरितानामप्रकाशनीयानां सावद्यानां प्रकाशकरणमित्यर्थः । जीवानामसद्भिर्गुणैरीदृशस्त्वं तादृशस्त्वमित्येवं वर्णनं, अजीवानां वेदृशमेतदिति प्रतारणबुद्ध्या भणनमित्यपि विदारणिकी । षष्ठगुणस्थानं यावदसौ ॥

अनाभोगप्रत्ययिकीं निरूपयति—

**अनवेक्षितासंमार्जितप्रदेशे शरीरोपकरणनिक्षेपोऽनाभोगप्रत्ययिकी ॥**

**अनवेक्षितेति** । अनवलोकिते रजोहरणेनाप्रमार्जिते देशे शरीराणां गमनागमनोल्लङ्घनादिभिरुपकरणानामुपध्यादीनाञ्च निक्षेपणं स्थापनमित्यर्थः । आभोग उपयोगस्तद्विपरीतोऽनाभोगस्तेनोपलक्षिता क्रियाऽप्यनाभोगा न विद्यते वाऽऽभोगो यस्या सा अनाभोगा क्रिया, आद्वादशमसौ ॥

अनवकाङ्क्षप्रत्ययिकीमाह—

**जिनोदितकर्त्तव्यविधिषु प्रमादादनादरकरणमनवकाङ्क्षप्रत्ययिकी ॥**

**जिनोदितेति** । अवकाङ्क्षा स्वपरयोरपेक्षणं सा न भवतीत्यनवकाङ्क्षा सा प्रत्ययः कारणं यस्यास्साऽनवकाङ्क्षप्रत्यया सैवानवकाङ्क्षप्रत्ययिकी, जिनोक्तकर्त्तव्येषु विधिषु प्रमादादिहपरलोकापेक्षयाऽनादरकरणमित्यर्थः । प्रमादप्रयुक्तजिनविहितकर्त्तव्यविधिविषयकानादरक्रियात्वं लक्षणार्थः । इहलोके परलोके च यानि विरुद्धानि तानि यो भजते तस्यापीयं क्रिया कथितेति बोध्यम् । षष्ठं यावदियम् ॥

प्रायोगिकीमाचष्टे—

**आर्त्तरौद्रध्यानानुकूला तीर्थकृद्भिर्गर्हितभाषणात्मिका प्रमादगमनात्मिका च क्रिया प्रायोगिकी ॥**

**आर्त्तेति** । प्रयोगस्य-धावनवल्गनादिकायव्यापारहिंस्रपरुषानृतभाषणादिवाग्व्यापाराभिद्रोहेर्ष्याभिमानादिमनोव्यापाररूपस्य करणं प्रायोगिकी । आर्त्तरौद्रध्यानानुकूलेति मनोव्यापारः, तीर्थकृद्भिर्गर्हितभाषणात्मिकेति वाग्व्यापारः, प्रमादगमनात्मिकेति कायव्यापारः सूचितः । आपष्ठमियम् ॥

सामुदायिकीं निरूपयति—

**इन्द्रियस्य देशोपघातकारिसर्वोपघातकार्यन्यतररूपा क्रिया सामुदायिकी ॥**

**इन्द्रियस्येति ।** इन्द्रियसम्बन्धिदेशविघातकारिसर्वविघातकारिक्रियात्वं लक्षणम् । अस्याः समादानक्रियेत्यपि नामान्तरम् । यावत्पञ्चमगुणस्थानमेषा ॥

प्रेमप्रत्ययिकीं लक्षयति—

**पररागोदयहेतुः क्रिया प्रेमप्रत्ययिकी ॥**

**पररागेति ।** येन वाग्व्यापारेण परस्य रागोदयस्सा क्रियेत्यर्थः, प्रेमोत्पादकवाणीव्यवहारो वा प्रेमप्रत्ययिकी क्रिया । षष्ठगुणस्थानं यावदियम् ॥

द्वेषप्रत्ययिकीमभिधत्ते—

**क्रोधमानोदयहेतुः क्रिया द्वेषप्रत्ययिकी ॥**

**क्रोधेति ।** स्वस्य परस्य वा क्रोधमानयोरुत्पादिका क्रियेत्यर्थः । आषष्ठं भवत्येषा ॥

ईर्यापथिकीमाख्याति—

**अप्रमत्तसंयतस्य वीतरागच्छद्मस्थस्य वा सोपयोगं गमनादिकं कुर्वतो या सूक्ष्मक्रिया सेर्यापथिकी । इति क्रियापञ्चविंशतिः ॥**

समाप्तमाश्रयतत्त्वम् ॥

**अप्रमत्तसंयतस्येति ।** ईरणमीर्या गमनं सैव पन्था मार्गो यस्य तदीर्यापथं, गमनादिद्वारकं कर्म, तस्य बध्यमानस्य वेद्यमानस्य वा निमित्तभूता या क्रिया सा निमित्तनिमित्तिनोरभेदोपचारादीर्यापथिकी क्रिया । सा च केवलयोगप्रत्ययबन्धरूपा । शैलेश्यवस्थाऽर्वाग्वर्तिकेवलिनां छद्मस्थवीतरागाणाञ्च भवतीति भावः । इयञ्च सयोगिगुणस्थानं यावद्भवति, इमा एव विभागवाक्ये क्रियापञ्चविंशतिपदेनोक्ता इत्याहेतीति । एतासु प्रेमद्वेषप्रत्ययक्रियास्थाने सम्यक्त्वमिथ्यात्वक्रिये तत्त्वार्थभाष्यकारेणोक्ते, तयोश्च या शुद्धमिथ्यात्वमोहदलिकानुभवप्रवृत्तप्रशमादिलिङ्गगम्यजीवादिपदार्थविषयकश्रद्धारूपा, जिनसिद्धगुरूपाध्याययतिजनयोग्यपुष्पधूपप्रदीपचामरातपत्रनमस्कारवस्त्राभरणान्नपानशय्यादानाद्यनेकवैयावृत्त्याभिव्यङ्ग्या, शुद्धसम्यक्त्वादिभावसंवर्धनहेतुर्देवादिजन्मसद्वेद्यबन्धकारणं सम्यक्त्वक्रिया । सा च सामान्येन सरागजीवस्वामिकत्वादत्र प्रेमप्रत्ययिकीत्युक्ता । मिथ्यात्वक्रिया तु सम्यक्त्वक्रियाविपरीताऽभिगृहीताभिनिविष्टादिमिथ्यादृष्टिस्वामिकत्वेनात्र द्वेषप्रत्ययिकीति प्रोक्तेति ध्येयम् । सोऽयमास्रवः सरस्तुल्यस्यात्मनः परिणामविशेषः कर्मोदकप्रवेशो रन्ध्रं तत्र प्राणातिपातादिनि-

वृत्त्यादयः सत्यादयोऽपरिग्रहत्व धर्मध्यानादयश्च शुभा आस्रवा॰ द्विचत्वारिंशद्विधस्य पुण्यस्य, तत्प्रत्यनीकाश्चाशुभास्रवा द्व्यशीतिविधस्य पापस्य भवन्ति । क्रियानिरूपण निगमयतीतीति ॥

आस्रवतत्त्व समासतो निरूपितमित्याशयेनाह समाप्तमिति ॥

इति तपोगच्छनभोमणिश्रीमद्विजयानन्दसूरीश्वरपट्टालङ्कारश्रीमद्विजयकमलसूरीश्वर-चरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजयलब्धिसूरिणा विनिर्मितस्य तत्त्वन्यायविभाकरस्य स्वोपज्ञाया न्यायप्रकाशव्याख्यायामास्रवनिरूपणो नाम षष्ठ किरणस्समाप्त ॥

## अथ सप्तमः किरणः ।

इत्थ सक्षेपतो द्वाचत्वारिंशद्विधानाश्रवानाख्याय कर्मग्रहणकारणभूताश्रवस्य प्रतिद्वन्द्वि-भूतमपूर्वकर्मप्रवेशनिषेधफलकं संवर लक्षणप्रकाराभ्यामभिधातु तल्लक्षणमाचष्टे—

### समित्यादिभिः कर्मनिरोधः संवरः ॥

समित्यादिभिरिति । समितिर्वक्ष्यमाणस्वरूपा सैवादिर्येषा गुप्तिपरीषहादीना तैरुपायै कर्मणामागन्तुकाना यो निरोधो निवारण स संवर इत्यर्थः । उपात्तकर्मणा प्रध्वसस्तु तपसा विपाकेन वा भवति । नन्वास्रवनिरोधो हि संवर॰, उक्तञ्च ' आस्रवनिरोध संवर ' (९—१) इति, आस्रवाश्चेन्द्रियकषायादिरूपा न कर्मात्मकास्तथा च कथं कर्मनिरोधस्संवर उच्यत इति चेत्सत्यम्, कर्मागमनिमित्त आश्रवे निरुद्धे तत्पूर्वकस्यानेकदु खबीजजनकस्य कर्मणोऽपि स्थगनात्कारणाभावस्य कार्याभावप्रयोजकतया तत्र प्रयोज्योपचारात्तयोक्तेरविरोधात् । प्रयोजक-स्यैव वाऽऽश्रवनिरोधस्यात्र प्रयोज्योपचारत॰ कर्मनिरोधस्योक्ते । विनोपचार निरुध्यतेऽनेनेति व्युत्पत्त्या वा कर्मनिरोधपदेनाश्रवनिरोधस्यैव प्राप्ते । तथाभिधानन्तु कर्मनिरोधस्या श्रवनिरोधप्रयुक्तत्वसूचनाय । एव समित्यादयोऽप्याश्रवनिरोधे हेतुत्वेन संवरशब्दवान्या भवन्ति । प्रायश्चेष्टारूपत्वात्समितयोऽपि गुप्तिविशेषा एव । चेष्टा हि कायवाङ्मनोव्यापार, तत्रेर्यादाननिक्षेपोत्सर्गौ कायव्यापारे, एषणा मनोव्यापार वाग्व्यापारे च भाषाऽन्तर्गता भवति । सुखबोधार्थमेव समिते पृथगुपादानम् । तत्र रागद्वेषपरिणामात्मकार्त्तरौद्राध्यव-सायान्निवृत्त्यैहिकामुष्मिकविषयेषु निराकृताभिलाषस्य पुसो मनसो गुप्तत्वेन रागादिप्रत्यय कर्म नास्रोष्यति, अप्रियादिवचनेषु वाग्व्यापारविरतस्य यथा शास्त्र वाग्व्यवहरतो वाचो गुप्तत्वान्नाप्रियवचनादिहेतुक कर्मास्रोष्यति तथा कायोत्सर्गभाज परित्यक्तहिंसादिदोष-विषयकक्रियाकलापकस्य समयविहितक्रियानुष्ठायिन कायस्य गुप्तत्वाद्धावनवल्गनानवलोकि तभूचक्रमणादिनिमित्त न कर्मास्रेष्यतितम् । क्षमामार्दवार्जवशौचैर्यतिधर्मैः क्रोधमानमायालो-

भानां सपरिकराणां निग्रहात्संवरावाप्तिः । सत्यत्यागाकिञ्चन्यब्रह्मचर्याणि चारित्रानुयायीनि । संयमेष्वपि सप्तदशप्रकारेषु केचिद् व्रतान्तःपातिनः केचिच्चोत्तरगुणान्तर्भूताः । तपस्तूत्तरगुणान्तःपात्येव । संवृण्वतो हेतुभूता भावना अपि उत्तरगुणानुयायिन्यः । यथास्वमापतिता परीषहा अपि सम्यक्सहनेन संवरहेतवः । हिंसाऽसत्यादीनां तत्संश्लेषविशेषाहितकलुषस्य कर्मास्रवनिमित्तत्वात्तन्निरोधे सति विरतस्य कर्म न निमित्ततामापतति । आधाकर्मादिपरिभोगनिमित्तञ्च कर्मास्रवणं हिंसादिपरित्यागे नैव भवतीति समित्यादयस्संवरहेतवः ॥

समित्यादिजन्यकर्मनिरोधस्य संवररूपत्वे किमात्मकोऽयमित्यत्राह—

**सोऽयमात्मपरिणामो निवृत्तिरूपः ॥**

सोऽयमिति । समित्यादिजन्यसंवरोऽयमित्यर्थः । कर्मोपादानहेतुभूतपरिणामाभावस्य संवररूपत्वेन परिणामनिवृत्त्यात्मा जीवस्य परिणामविशेषोऽयं संवर इति भावः ॥

अस्यापि द्रव्यभावभेदतो द्वैविध्यमादर्शयति—

**कर्मपुद्गलादानविच्छेदो द्रव्यसंवरः ॥**

कर्मपुद्गलेति । संसारकारणस्य कर्मपुद्गलस्य यदादानं–ग्रहणं तद्विच्छेदे द्रव्यात्मककर्म-[1] पुद्गलानां संवरणरूपत्वाद्द्रव्यसंवर इति भावः ॥

भावसंवरपूर्वकत्वादस्य भावसंवरमाह—

**भवहेतुक्रियात्यागस्तन्निरोधे विशुद्धाध्यवसायो वा भावसंवरः । स पुनर्द्विविधो देशसर्वभेदात् ॥**

भवहेत्विति । भवस्संसारः, आत्मनो गत्यन्तरप्राप्तिस्तद्धेतुभूता ये आत्मनः क्रियाविशेषास्तेषां निवृत्तिः, तन्निवृत्तौ जीवस्य शुद्धशुद्धतरशुद्धतमा अध्यवसायास्तेऽपि परिणामनिवृत्तिरूपत्वाद्भावसंवरा इति भावः । ननु संवरो निखिलाश्रवद्वारनिरोधात्मकः, सकलाश्रवच्छिद्राणाञ्च गोपनेच्छा न सर्वेषां सम्भवति, अखिलपरिस्पन्दनिराकरणस्याल्पशक्ति-

---

१. प्राणातिपातादिभ्य आश्रवद्वारेभ्यो मनोवाक्कायैर्यावज्जीवं तदकरणीयत्वादिपरिणाम इति भावः । स्थूलदर्शिनो हि समित्यादिमन्तं मुनिमुपलभ्य संवृतोऽयमिति व्यवहरन्ति, तस्मादयं व्यवहारसंवरः । नैश्चयिकसंवरनिमित्तत्वोपचारेण संवरतया व्यपदिश्यते, अत एव समित्यादयोऽपि पञ्चदशद्वादशद्वाविंशतिप्रभेदाऽन्यगुणपर्येन सप्तपञ्चाशद्विधा व्यवहारसंवरा उच्यन्ते । नैश्चयिकसंवरस्तु समुच्छिन्नक्रियध्यानसहकृतस्य भवति तदनन्तरमेव मुक्तिफलसिद्धेरिति ॥

कानामसंभवात्, योगत्रयस्य परिस्पन्दस्वभावत्वाच्च, किन्तु वज्रर्षभनाराचसंहननभाजां पराक्रमविशिष्टानामेव तत्सामर्थ्यसंभवः, तथा च कथं सर्वेषां संवरसम्भव इत्याशङ्कायामाह स पुनरिति । नहि यावदाश्रवद्वारनिरोधस्यैव संवररूपत्वं ब्रूमो येनोक्तदोषः स्यादपि तु यत्किञ्चिदास्रवद्वारनिरोधोऽपि संवर एव, स एव देशसंवर उच्यते, सकलाश्रवद्वारनिरोधस्तु सर्वसंवरः, स च पूर्णशक्तिकानामेव भवति, देशसंवरस्तु योगत्रयस्य परिस्पन्दस्वभावत्वेऽपि तत्त्वज्ञानां संसारपारावारपारजिगमिषूणां सामायिकादिचारित्रभाजां सम्भवत्येवेति भावः ॥

तत्र ज्ञानदर्शनचारित्रात्मकात्मगुणानां शुद्ध्यशुद्धिप्रकर्षाप्रकर्षाभ्यां वैचित्र्याद्देशसंवरं गुणप्रकर्षोदितारतम्यापेक्षया विभावयति—

**देशसंवरस्त्रयोदशगुणस्थानं यावद्भवति । सर्वसंवरस्त्वन्तिमगुणस्थान एव, निखिलाश्रवाणां निरुद्धत्वात् । इतरत्र तु न तथा ॥**

देशसंवर इति । निखिलाश्रवनिरोधरूपसर्वसंवरस्य त्रयोदशगुणस्थानेष्वसम्भवादाह— सर्वसंवरस्त्विति । अन्तिमेति । चतुर्दशेत्यर्थः । हेतुमाह निखिलेति । प्रथमादिगुणस्थानेषु कुतो नेत्यत्राहेतरत्रेति, त्रयोदशसु गुणस्थानेष्वित्यर्थः । तथेति सर्वाश्रवाणां निरोध इत्यर्थः ॥

तत्र किमिदं गुणस्थानं, कतिविधञ्चेत्यत्र प्रथमं विभागमुक्त्वा ततो गुणस्थानस्वरूपमाह—

**तत्र मिथ्यात्वसास्वादनमिश्राविरतदेशविरतप्रमत्ताप्रमत्तापूर्वकरणानिवृत्तिकरणसूक्ष्मसम्परायोपशान्तमोहक्षीणमोहसयोग्ययोगिभेदाच्चतुर्दशविधानि गुणस्थानानि ॥**

तत्रेति । मिथ्यात्वं सास्वादनं मिश्रमविरतं देशविरतं प्रमत्तमप्रमत्तमपूर्वकरणमनिवृत्तिकरणं सूक्ष्मसंपरायमुपशान्तमोहं क्षीणमोहं सयोग्ययोगि, चेत्येतेषां द्वन्द्वः ततो भेदशब्देन षष्ठीतत्पुरुषसमासः । मिथ्यादर्शनोदयप्रयुक्तं मिथ्यादृष्टिगुणस्थानम् । मिथ्यादर्शनोदयाभावकालीनानन्तानुबन्धिकषायोदयप्रयुक्तं सास्वादनगुणस्थानम् । सम्यङ्मिथ्यात्वोदयप्रयुक्तं मिश्रगुणस्थानम् । सम्यक्त्वसमानाधिकरणचारित्रमोहोदयप्रयुक्तमविरतसम्यग्दृष्टिगुणस्थानम् । प्राणीन्द्रियविषयविरत्यविरतिपरिणामो देशविरतगुणस्थानम् । संयतस्य प्रमादवशेन किञ्चित्प्रस्खलितचारित्रपरिणामः प्रमत्तसंयतगुणस्थानम् । संयतस्य प्रमादविरहेणाविचलितसंयमवृत्तिरप्रमत्तसंयतगुणस्थानम् । उपशमकक्षपकोपचारसमानकालीनापूर्वकरणपरिणामोऽपूर्वकरणगुणस्थानम् । स्थूलभावेनोपशमक्षयसमकालीनानिवृत्तिपरिणामोऽनिवृत्तिकर-

णगुणस्थानम् । सूक्ष्मभावेन कषायोपशमक्षयपरिणाम सूक्ष्मसम्परायगुणस्थानम् । सर्वमोहोपशनप्रयुक्तमुपशान्तमोहगुणस्थानम् । सर्वमोहक्षयप्रयुक्तं क्षीणमोहगुणस्थानम् । योगकालीनघातिकर्मक्षयोदितज्ञानाद्यतिशयस्सयोगिगुणस्थानम् । योगविरहकालीनज्ञानाद्यतिशयोऽयोगिगुणस्थानमिति चतुर्दशविध गुणस्थानमिति भाव ॥

गुणस्थानस्वरूपमाह—

**ज्ञानदर्शनचारित्रात्मकानां जीवगुणानां यथायोगं शुद्ध्यशुद्धिप्रकर्षाप्रकर्षकृतास्स्वरूपभेदा गुणस्थानानि ॥**

ज्ञानदर्शनेति । गुणा ज्ञानदर्शनचारित्ररूपा जीवस्वभावविशेषा, स्थीयते अस्मिन्निति स्थान ज्ञानादीनामेव शुद्ध्यशुद्धिप्रकर्षाप्रकर्षकृत स्वरूपभेद, गुणाना स्थान गुणस्थानमिति गुणस्थानशब्दार्थबोधकमिद मूलमिति बोध्यम् । यत्र यत्रापूर्वगुणाविर्भावस्तत्तद्गुणस्थानमिति भावार्थ ।एतानि भव्यजीवाना नि श्रेणिरिव सिद्धिसौधमारुरुक्षूणा गुणाद्गुणान्तरप्राप्तिरूपाणि विश्रामधामानि चतुर्दशसख्याकानि ॥

अथ प्रथमगुणस्थानं वक्ति—

**मिथ्यात्वगुणस्थानञ्च व्यक्ताव्यक्तभेदेन द्विविधम् । कुदेवकुगुरुकुधर्मान्यतमस्मिन् देवगुरुधर्मबुद्धिर्व्यक्तमिथ्यात्वम् । इदञ्च सञ्ज्ञिपञ्चेन्द्रियाणामेव ॥**

मिथ्यात्वगुणेति । मिथ्यात्व व्यक्ताव्यक्तभेदमिन्न विपर्यस्तदृष्टिरूप, तात्स्थ्यात्तद्व्यपदेश इति न्यायेन तद्योगाज्जीवोऽपि मिथ्यात्वं, अर्शआद्यजन्तेन वा मिथ्यात्व, मिथ्यात्ववानित्यर्थ । तस्य यो गुणाना ज्ञानादीना शुद्ध्यशुद्धिप्रकर्षाप्रकर्षकृत स्वरूपविशेष तदात्मक स्थान मिथ्यात्वगुणस्थानमित्यर्थ । अस्य सञ्ज्ञिपञ्चेन्द्रियतद्भिन्नजीवसम्बन्धित्वेन द्वैविध्यमित्याशयेनाह व्यक्ताव्यक्तभेदेनेति । व्यक्ताव्यक्तहेतुनेत्यर्थ.। तथा च व्यक्तमिथ्यात्ववतोऽव्यक्तमिथ्यात्ववतश्चेति तद्द्विविधमिति भाव । तत्र किं व्यक्तमिथ्यात्व तदाह—कुदेवेति । देवगुरुधर्माभासरूपेषु देवगुरुधर्मबुद्धिरित्यर्थ, तेन यद्येषा कुत्सितत्वं तर्हि कथ देवगुरुधर्मशब्दप्रयोग इति शङ्का परास्ता । उपलक्षणमेतत् तेन जिनोपदिष्टजीवादिपदार्थेषु अश्रद्धा मिथ्याश्रद्धा विपरीतप्ररूपणा सशयकरणमनादरश्च गृह्यन्ते । तथाऽधर्मधर्मोन्मार्गमार्गाजीवजीवासाधुसाध्वमूर्तमूर्तेषु दशसु धर्माधर्ममार्गोन्मार्गजीवाजीवसाध्वसाधुमूर्तामूर्त्तसञ्ज्ञाना, आभिग्रहिकानाभिग्रहिकाभिनिवेशिकसाशयिकानाञ्च मिथ्यात्वाना ग्रहणम् ।

अनाभोगिकं च मिथ्यात्वमव्यक्तमिथ्यात्ववत एवेति ध्येयम्। केषां व्यक्तमिथ्यात्वमित्यत्राह—इदञ्चेति। एतत्पदेनैकद्वित्रिचतुरसञ्ज्ञिपञ्चेन्द्रियाणां व्यवच्छेदः, तत्र व्यक्तमिथ्यात्वक्रियाया अभावात्। ननु ज्ञानदर्शनचारित्रात्मका हि गुणाः, ज्ञानादीनां विपर्यासेन मिथ्यादृष्टौ कथं गुणस्थानसम्भव इति चेदुच्यते, तत्त्वेष्वास्थारूपजीवगुणस्य सर्वतो भावेन घातिनो मिथ्यात्वमोहनीयस्य विपाकोदयतो वस्तुप्रतिपत्तिरूपा दृष्टिर्यद्यपि विपर्यस्ता तथापि काचिन्मनुष्यपश्वादिप्रतिपत्तिरन्ततो निगोदावस्थायामपि तथाभूताव्यक्तस्पर्शमात्रप्रतिपत्तिरविपर्यस्ता भवति चन्द्रप्रभाकरप्रभाया सघनघनपटलसमाच्छादितायामपि काचित्प्रभेव। नहि तयोः प्रभा नूतनजलधरघनपटलेनैकान्तेन तिरस्कृता विनश्यति, दिनरजनिविभागाभावप्रसङ्गात्। तथा प्रबलमिथ्यादर्शनकर्मोदयेऽपि काचिदविपर्यस्ता दृष्टिर्भवतीत्येतदपेक्षया मिथ्यादृष्टेरपि गुणस्थानसम्भव उक्तः। न च कथमसौ मिथ्यादृष्टिरेव, कथञ्चिदविपर्यस्तप्रतिपत्त्यपेक्षया सम्यग्दृष्टित्वादिति वाच्यम्, जिनोदितैकाक्षरेऽप्यनादरे मिथ्यादृष्टित्वेनाप्रतिपन्नतत्त्वानामेषां सुतरां मिथ्यादृष्टित्वात्। न च जिनोदितसकलपदार्थाभिरोचनात्कतिपयपदार्थानामरोचनाच्च सम्यङ्मिथ्यादृष्टिरेवायमिति वाच्यम्। एकस्मिन्नपि वस्तुनि पर्याये वा एकान्तेन विप्रतिपत्तिं प्रतिपन्नस्यास्य मिथ्यादृष्टित्वात्। मतिदौर्बल्यादिना तत्रैकान्तेन सम्यक्परिज्ञानमिथ्यापरिज्ञानाभावत एकान्तेन श्रद्धानविप्रतिपत्त्यभावबत एव सम्यङ्मिथ्यादृष्टित्वादिति विभावनीयम्॥

अव्यक्तमिथ्यात्वमाचष्टे—

**अव्यक्तो मोहोऽव्यक्तमिथ्यात्वम्। इदमनादि। व्यक्तमिथ्यात्वप्राप्तुरेव मिथ्यात्वगुणस्थानं भवेदिति केचित्। अस्य स्थितिर्भव्यजीवमाश्रित्यानादिसान्ता। सादिसान्ता च पतितभव्यस्य। अभव्यमाश्रित्यानाद्यनन्ता॥**

अव्यक्त इति। अत्र मिथ्यात्वं न विपर्यस्तबुद्धिरूपम् अव्यवहारराशिवृत्तित्वात्। किन्तु दर्शनप्रतिबन्धकमोहनीयप्रकृतिरूपमित्याशयेनोक्तमव्यक्तो मोह इति। इदञ्चाव्यक्तमिथ्यात्वं जीवेन सहानादिकालीनमित्याह—इदमिति। ननु मिथ्यादृष्टयस्सर्वाण्यपि जीवस्थानानि यद्यपि लभन्ते तथापि प्राप्तव्यक्तमिथ्यात्वबुद्धय एव व्यवहारराशिवर्तिनो जीवाः प्रथमगुणस्थानं लभन्त इति रत्नशेखरसूरीणामभिप्रायं दर्शयति व्यक्तमिथ्यात्वेति। एव शब्देनाव्यवहारराशिवर्तिनामन्येषाञ्चाव्यक्तमिथ्यात्वभाजां व्युदासः। गुणस्थानबहिर्भूतस्य संसारिणो जीवस्य कस्याप्यभावाद्व्यक्तमिथ्यात्वभाजोऽपि प्रथमगुणस्थानान्तर्गता एवेति ग्रन्थकृदाशयः।

मिथ्यात्वस्य कालचिन्तायामाह–अस्येति । मिथ्यात्वस्येत्यर्थः । चतुर्धा हि तस्य कालविभागस्सम्भवति, अनाद्यनन्तानादिसान्तसाद्यनन्तसादिसान्तभेदात् । तत्र भव्यजीवमाश्रित्याह–भव्यजीवमाश्रित्येति । जातिभव्येतरभव्यजीवमाश्रित्येत्यर्थः, अनादिसान्तेति । अनादिमिथ्यादृष्टेर्भव्यजीवस्य सम्यक्त्वावाप्तौ सत्यां मिथ्यात्वस्य सान्तत्वादिति भावः । पतितभव्यस्येति । अनादिमिथ्यादृष्टेस्सम्यक्त्ववतः केनचिदपि कारणेन पुनः पतितस्य यन्मिथ्यात्वं तस्य तत्सादित्वात् तत्र च जघन्यतोऽन्तर्मुहूर्तं उत्कर्षेणार्हदादिप्रचुराशातनापापबहुलतयाऽपार्धपुद्गलपरावर्त्तं यावदुषित्वा पुनरपि सम्यक्त्वलाभे सान्तत्वाच्च । यस्तु पुनरभव्यस्तस्य मिथ्यात्वमनाद्यनन्तं, अनादिकालात्तस्मिन् सद्भावात्, आगामिकालेऽपि च तदभावासम्भवादित्याशयेनाह–अभव्यमाश्रित्येति । त्रयाणामेव भङ्गानां कण्ठतः प्रतिपादनात्साद्यनन्तत्वं तस्य न संभवतीति सूचितम्, प्रतिपतितसम्यग्दृष्टीनां मिथ्यात्वस्यैव सादित्वेन तेषामवश्यं पुनस्सम्यक्त्वलाभेन मिथ्यात्वस्यानन्तत्वासम्भवादिति भावः । एतादृशस्वामिकत्वेन प्रथमगुणस्थानकमपि तावत्कालप्रमाणमवसेयम् । अत्रस्थो जीवो बन्धयोग्यकर्मप्रकृतिषु विंशत्युत्तरशतसंख्याकासु तीर्थकृत्कर्माहारकद्वयं च विहायान्यासां बन्धकः । उदयप्रायोग्यकर्मप्रकृतीनां द्वाविंशत्युत्तरशतसंख्याकानां मध्यान्मिश्रसम्यक्त्वाऽऽहारकद्विकतीर्थकृत्कर्मेति पञ्चप्रकृतीनामनुदयेन शेषाणां वेदयिता, अष्टचत्वारिंशदधिकशतसत्ताकश्च भवति ॥

अथ द्वितीयगुणस्थानस्वरूपं निरूपयति—

**उपशमसम्यक्त्वपतितस्यानवाप्तमिथ्यात्वस्य सर्वथा यदपरित्यक्तसम्यक्त्वतयाऽवस्थानं तत्सास्वादनगुणस्थानम् । समयादिषडावलिकाकालपर्यन्तमिदम् ॥**

उपशमेति । उपशमसम्यक्त्ववान् हि जीवो यदा शान्तानामनन्तानुबन्धिनां क्रोधादीनामन्यतमे उदीर्णे सत्युपशमसम्यक्त्वात्पतितो भवति परन्तु स यावन्मिथ्यात्वं नोपयाति तावन्मध्ये पायसमुक्तवान्तस्य कञ्चन समयं क्षीरान्नरसस्वादानुवृत्तिरिव तस्य सम्यक्त्वरसानुवृत्तिर्भवति, एवम्भूततया तस्य यदवस्थानं तत्सास्वादनगुणस्थानं, सम्यक्त्वरसास्वादेन सह वर्त्तेत इति सास्वादनस्तस्य गुणस्थानमिति व्युत्पत्तेरित्यर्थः । सासादनगुणस्थानं सासातनगुणस्थानञ्चेत्यस्यैव नामान्तरम् । तथेत्थमवसेयम्, संसारमहासागरान्तःपतितो जीवो मिथ्यादर्शनमोहनीयनिदानानि यावदनन्तपुद्गलपरावर्त्तानेकशारीरिकमानसिकदुःखलक्षाण्यनुभूय कथमपि

१. सम्यक्त्वगुणनिमित्तकत्वात्तीर्थकरनामबन्धस्याहारकद्वयस्याप्रमत्तयतिसम्बन्धिसंयमनिमित्तकत्वाच्चेति भावः ॥

भव्यत्वपरिपाकेनानाभोगनिर्वर्तितेनाध्यवसायविशेषेण यथाप्रवृत्तिकरणेनाऽऽयुर्वर्जानि ज्ञानावरणीयादिकर्माणि सर्वाण्यपि पल्योपमासङ्ख्येयभागन्यूनैकसागरोपमकोटीकोटिस्थितिकानि करोति, अत्र चान्तरे गुरुतरकठोरतरुग्रन्थिवद्दुर्भेदः कर्मपरिणामजन्यो जीवस्य घनरागद्वेषपरिणामरूपोऽऽभिन्नपूर्वो ग्रन्थिर्भवति, यथाप्रवृत्तिकरणेन कर्म क्षपयित्वा ग्रन्थिमिमं यावदभव्या अप्यनेकशः समागच्छन्ति। ततो ग्रन्थिभेदविधानासमर्थाः पुनरपि कर्माण्युत्कृष्टस्थितिकानि संक्लेशवशा बध्नन्ति। यः पुनर्महात्मा कश्चिदासन्ननिर्वृतिसुखो दुर्धर्षवीर्यवानपूर्वकरणस्वरूपेण परमविशुद्धिविशेषेण विधाय भेदं तद्ग्रन्थेः मिथ्यात्वमोहनीयकर्मस्थितेरन्तर्मुहूर्तमुदयक्षणादुपरि गत्वाऽनिवृत्तिकरणसञ्ज्ञितेनान्तर्मुहूर्तकालमानं तत्प्रदेशवेद्यदलिकाभावरूपमन्तरकरणं करोति, कृते च तस्मिन् कर्मणस्तस्य स्थितिद्वयं भवति, एकाऽन्तर्मुहूर्तमानाऽन्तरकरणादधस्तनी प्रथमा, तत उपरितनी द्वितीया, तत्र प्रथमस्थितौ मिथ्यादृष्टिरेव, मिथ्यात्वदलिकवेदनात्, अन्तर्मुहूर्तेनापगतायाञ्च तस्यामन्तरकरणस्याद्य एव समये औपशमिकं सम्यक्त्वमवाप्नोति, मिथ्यात्वदलिकवेदनाभावात्। तस्याञ्चोपशान्ताद्धायामान्तर्मौहूर्तिक्यां जघन्येन समयशेषायामुत्कर्षेण षडावलिकाशेषायां कस्यचित्पुंसः केनचिन्निमित्तविशेषेणानन्तानुबन्ध्युदयो भवति, तदानीमसौ सास्वादनगुणस्थाने वर्त्तते, उपशमश्रेणिप्रतिपतितो वा सास्वादनत्वं यातीति कार्मग्रन्थिकमतम्, सिद्धान्तमते तु श्रेण्यास्समाप्तौ प्रतिपततः प्रमत्तगुणस्थानेऽप्रमत्तगुणस्थाने वाऽवतिष्ठते, कालगतस्तु देवेष्वविरतो भवतीति। सास्वादनोत्तरकालञ्चाऽवश्यं मिथ्यात्वोदयादयं मिथ्यादृष्टिर्भवतीति। स कियन्तं कालमस्मिन् गुणस्थाने वर्त्तेत इत्यत्राह—समयादीति। जघन्येनैकः समय उत्कर्षेण षडावलिकाप्रमाणं, तत ऊर्ध्वं मिथ्यात्वोपगमात्, आवलिका चाऽसंख्यातसमयसमुदायरूपेति भावः॥

तत्र किं तावदुपशमसम्यक्त्वं यस्मात्पतितोऽनवाप्तमिथ्यात्वस्सास्वादनगुणस्थानभाग्भवतीत्यत्राह—

**अनादिकालानुवृत्तमिथ्यात्वप्रथमकषायचतुष्कोपशमनजन्यं सम्यक्त्वमुपशमसम्यक्त्वम्। तद् द्विविधमन्तरकरणजन्यं स्वश्रेणिजन्यञ्चेति। उपशमसम्यक्त्वं करणत्रयापेक्षम्॥**

अनादिकालेति। अनादिकालादनुवृत्तं यन्मिथ्यात्वं यच्च प्रथमकषायचतुष्कमनन्तानुबन्धिक्रोधमानमायालोभरूपं तस्योपशमेन जन्यं यत्सम्यक्त्वं तदुपशमसम्यक्त्वमित्यर्थः। एकस्यापि क्रोधादेरुदये प्रतिपातात्। एतस्य सम्यक्त्वस्य द्वैविध्यमाह—अन्तरेति। तत्रापूर्व-

करणेनैव कृतग्रन्थिभेदस्य मिथ्यात्वपुद्गलराशेरकृतमिथ्यात्वमिश्रसम्यक्त्वरूपत्रिपुञ्जस्यानिवृत्तिकरणेनोदीर्णे मिथ्यात्वे क्षीणेऽनवाप्तेऽनुदीर्णे चान्तरकरणादन्तर्मुहूर्त्तकालं यावत् सर्वथा मिथ्यात्वावेदकस्यान्तरकरणौपशमिकसम्यक्त्वं भवति । उपशमश्रेणिं प्रपन्नस्य तु मिथ्यात्वस्यानन्तानुबन्धिनाञ्चोपशमे स्वश्रेणिगतमुपशमसम्यक्त्वं भवतीति बोध्यम् । नन्वन्तरकरणजन्यमुपशमसम्यक्त्वमुक्तं तत्र किं नामान्तरकरणमिति शङ्कायामुपशमसम्यक्त्वोपयोगिकरणत्रयप्रदर्शनद्वारेण तद्दिदर्शयिषुः प्राहोपशमेति ॥

तत्र किं नाम करणत्रयमित्यत्राह—

**करणत्रयन्तु यथाप्रवृत्त्यपूर्वानिवृत्तिकरणरूपम् । आयुर्वर्जसप्तकर्मणस्स्थितिं पल्योपमासंख्येयभागहीनैककोटीकोटीपरिमाणां विधायाभिन्नपूर्वघनीभूतरागद्वेषात्मकग्रन्थिसमीपगमनानुकूलाध्यवसायो यथाप्रवृत्तिकरणम् । घनीभूतरागद्वेषग्रन्थिभेदनप्रयोजकापूर्वाध्यवसायोऽपूर्वकरणम् । मिथ्यात्वस्थितेरन्तर्मुहूर्त्तमुदयक्षणादुपर्यतिक्रम्योपरितनीं विष्कम्भयित्वान्तर्मुहूर्त्तपरिमाणं तत्प्रदेशवेद्यदलिकाभावप्रयोजकाध्यवसायोऽनिवृत्तिकरणम् । तादृशतत्प्रदेशवेद्यदलिकाभावोऽन्तरकरणम् ॥**

करणेति । यथाप्रवृत्तिकरणमपूर्वकरणमनिवृत्तिकरणञ्चेत्यर्थः । यथाप्रवृत्तिकरणस्वरूपमाह आयुरिति । आयुष उत्कृष्टस्थितेस्त्रयस्त्रिंशत्सागरोपमरूपत्वात्सागरोपमकोटीकोट्यन्तर्गतत्वेन तद्भिन्नत्वमुक्तम्, एवञ्च यादृशाध्यवसायविशेषादनाभोगनिर्वर्त्तितात् तद्भिन्नानि ज्ञानावरणादिकर्माणि निखिलान्यपि पृथक्पृथक्पल्योपमासंख्यातभागहीनैकसागरोपमकोटीकोटीस्थितिकानि भवन्ति, ततश्च कर्कशकर्मपटलापहस्तितवीर्यविशेषैरसुमद्भिः कर्मपरिणामजनितो दुर्भेद्योऽभिन्नपूर्वो घनरागद्वेषरूपो ग्रन्थिः प्राप्यते तादृशाध्यवसायविशेषो यथाप्रवृत्तिकरणमित्यर्थः । अधिकारी चास्य तथाभव्यत्वपरिपाकी किञ्चिन्न्यूनार्धपुद्गलपरावर्त्तावशेषसंसारश्शुक्लपाक्षिकः, कृष्णपाक्षिकोऽभव्यो वा । आद्यो ग्रन्थिभेदं विधाय सम्यक्त्वं प्राप्नोति । द्वितीयस्त्वकृत्वा तद्भेदं पुनः परावर्त्तते । अस्यैवाथाप्रवृत्तकरणमपूर्वप्रवृत्तकरणमिति च नामान्तरम् । ग्रन्थिं समतिक्रामतो यत्करणं तदाह—घनीभूतेति । ये समुदञ्चितादभ्रदुर्वार-

१. अनादिकालादारभ्य यावद्ग्रन्थिस्थानं तावत्प्रथमं यथाप्रवृत्तकरणं भवति, कर्मक्षपणनिबन्धनस्याध्यवसायमात्रस्य सर्वदैव भावात्, अष्टानां कर्मप्रकृतीनामुदयप्राप्तानां सर्वदैव क्षपणात् । ग्रन्थिं समतिक्रामतोऽपूर्वकरणं, प्राक्तनाद्विशुद्धतराध्यवसायरूपेण तेनैव ग्रन्थेर्भेदात् । अभिमुखसम्यक्त्वे जीवेऽनिवृत्तिकरणं भवति तत एवातिशुद्धतमाध्यवसायादनन्तरं सम्यक्त्वलाभात् ॥

वीर्यप्रसरा उत्कर्षतोऽपार्धपुद्गलपरावर्त्तान्तर्भाविसंसारित्वेनासन्ननिर्वृतिसुखा अननुभूतपूर्वं त ग्रन्थिं येनाध्यवसायविशेषेण भिन्दन्ति सोऽध्यवसायो जीवस्यापूर्वकरणमुच्यते। अस्य प्रथमसमये विशुद्धिर्जघन्याऽल्पा च, तस्यैवोत्कृष्टानन्तगुणा, द्वितीयसमये जघन्याऽनन्तगुणा इत्येवं क्रमेण यावदन्तर्मुहूर्त्तपरिसमाप्ति भाव्यम्। अथ तृतीयमनिवृत्तिकरणमभिधत्ते–मिथ्यात्वेति। यादृशविशिष्टतरविशुद्धाध्यवसायमारूढो जीवः स्वाद्धायाससंख्येयेषु भागेषु गतेषु एकस्मिंश्च संख्येयतमे भागेऽवशिष्टे उदयक्षणादुपरि मिथ्यात्वस्थितेरन्तर्मुहूर्त्तमतिक्रम्योपरितनीञ्च विष्कम्भयित्वाऽन्तर्मुहूर्त्तकालपरिमाणं तत्प्रदेशवेद्यदलिकाभावं करोति सोऽध्यवसायविशेषोऽनिवृत्तिकरणमित्यर्थः। आसन्नसम्यक्त्वे जीवेऽनिवृत्तिकरणं भवति। अनेन च मिथ्यात्वकर्मणः स्थितिद्वयं जायत इति विज्ञेयम्। यत्र प्रविष्टानामखिलानां जीवानां समानकालीनानामेकाध्यवसायस्थानान्निवृत्तिर्व्यावृत्तिर्न भवति तदनिवृत्तिकरणं, अत्र हि प्रथमे समये ये वर्तन्ते वृत्ता वर्तिष्यन्ते च सर्वेषां तेषामेकमेवाध्यवसायस्थानम्, द्वितीये समयेऽपि तथैव, किन्तु प्रथमसमयभाविविशोधिस्थानापेक्षयाऽनन्तगुणमध्यवसायस्थानमेवमेव यावदनिवृत्तिकरणचरमसमयं विभाव्यम्। अनिवृत्तिकरणाद्धायास्संख्येयेषु भागेषु गतेषु एकस्मिंश्च संख्येयतमे भागेऽवशेषे मिथ्यात्वस्यान्तरकरणं करोति, अपूर्वकरणेऽनिवृत्तिकरणे च स्थितिघातरसघातगुणश्रेणिगुणसंक्रमा भवन्ति। करणत्रयञ्च प्रत्येकमन्तर्मुहूर्त्तकालमानम्, करणत्रयकालोऽप्यन्तर्मुहूर्त्तप्रमाण एव, अन्तर्मुहूर्त्तस्यासंख्येयभेदत्वादिति॥

इत्थं संक्षेपेण करणत्रये निरूपिते सुज्ञानमेवान्तरकरणमपीति तत्स्वरूपमाह–तादृशेति। अन्तर्मुहूर्त्तकालमानेत्यर्थः। तन्निष्पादनकालोऽप्यन्तरकरणकाल एव, सोऽप्यन्तर्मुहूर्त्तपरिमाणः, प्रथमस्थितेः किञ्चिन्न्यूनोऽभिनवस्थितिबन्धाद्धया तु समानः, तथाहि प्रथमस्थित्यन्तरकरणे द्वे अपि अन्तर्मुहूर्त्तप्रमाणे युगपदारभते। अन्तरकरणप्रथमसमय एव चान्यं स्थितिबन्धं मिथ्यात्वस्यारभ्य स्थितिबन्धान्तरकरणे युगपदेव परिसमापयति। अन्तरकरणे च क्रियमाणे गुणश्रेणिसम्बन्धिनः संख्येया भागाः प्रथमद्वितीयस्थित्याश्रितास्तिष्ठन्ति, एकन्तु गुणश्रेण्यासंख्येयतमं भागमन्तरकरणदलिकेन सहोत्किरति। तदित्थं अन्तरकरणस्थितेर्मिथ्यादलिकं कर्मपरमाण्वात्मकं गृहीत्वाथ प्रथमस्थितौ उपरि द्वितीयस्थितौ च प्रक्षिपति, एवं प्रतिसमयं तावत्प्रक्षिपति यावदन्तरकरणसत्कं सकलमपि तद्दलिकमन्तर्मुहूर्त्तेन क्षीयते, अन्तरकरणादधस्तनी स्थितिः प्रथमा स्थितिरुपरितनी स्थितिर्द्वितीयेत्युच्यते, तत्र प्रथमस्थितौ वर्त्तमान उदीरणाप्रयोगेण प्रथमस्थितिसत्कं दलिकं समाकृष्योदयसमये यत्प्रतिक्षिपति सोदीरणा, यत्तु द्वितीयस्थितेः सकाशात् उदीरणाप्रयोगेण समाकृष्योदयसमये प्रक्षिपति साप्युदीरणैव, आगाल इति नामान्तरेण प्रसिद्धा। उदयोदीरणाभ्या

प्रथमस्थितिमनुभवंस्तावद्गच्छति यावदावलिकाद्विकं शेषं तिष्ठति, प्रथमस्थितेरावलिकाद्विकशेषे त्वागालो व्यवच्छिद्यते केवलमुदीरणैव प्रवर्त्तते । प्रथमस्थितावावलिकाशेषीभूतायामुदीरणापि व्यवच्छिद्यते, ततः केवलेनैवोदयेन तामावलिकामनुभवति, तस्यामपि चापगतायामुदयोऽपि मिथ्यात्वस्य न भवति दलिकाभावात् । तस्मिन्नेव समये उपशान्ताद्धायां प्रविशति तत्र प्रविष्टस्य प्रथमसमय एव मोक्षबीजभूतमौपशमिकं सम्यक्त्वमवाप्नोतीति तात्पर्यार्थः । प्रथमस्थितिचरमसमये द्वितीयस्थितिगतं दलिकमनुभागभेदेन त्रिधा करोति शुद्धमर्धशुद्धमशुद्धञ्चेति । तत्र शुद्धं सम्यक्त्वं देशघाति, देशघातिरसोपेतत्वात् । अर्धशुद्धं मिश्रमोहनीयमशुद्धन्तु मिथ्यात्वमेतदुभयं सर्वघाति, सर्वघातिरसोपेतत्वात् ॥

अथ श्रेणिगतं सम्यक्त्वमौपशमिकमुच्यते—

**श्रेणितो मिथ्यात्वमोहनीयानन्तानुबन्धिचतुःकषायाद्युपशमनतः श्रेणिजन्योपशमसम्यक्त्वं भवति ॥**

**श्रेणित इति** । यदि चतुर्थपञ्चमषष्ठसप्तमान्यतमगुणस्थानेऽनन्तानुबन्धिनो दर्शनमोहस्य च सर्वोपशमनायामुपशमसम्यक्त्वयुक्त उपशमश्रेणिं जीवस्सम्पद्यते तस्य यदौपशमिकं सम्यक्त्वं तच्छ्रेणिजन्योपशमसम्यक्त्वमुच्यत इति भावः ॥

ननु द्विविधमुपशमसम्यक्त्वं लभमानाः सर्वे किमारोहका एव स्युरुतास्ति कश्चिद्विशेष इत्याशङ्कायामाह—

**उभयविधसम्यक्त्वात्पततः सास्वादनगुणस्थानं भवति ॥**

**उभयविधेति** । अस्ति विशेषः, कोऽसौ विशेष इत्याह पतत इति । न सर्वे आरोहका एव, किन्तु पतन्तीति भावः । ननु तर्हि किं तेषां गुणस्थानं भवतीत्यत्राह—सास्वादनेति । सास्वादनमपीति भावः, अत्र तु सास्वादनमुभयविधसम्यक्त्वात्पतत एव भवति नान्येषामिति सूचयितुं तथोक्तिरिति भाव्यम् । उपशमश्रेणितः प्रतिपतन् कश्चिदनन्तानुबन्ध्युदये सास्वादनगुणस्थानं लभते । गुणस्थानमिदं प्रतिपतत एव भवति न त्वारोहतः, मिथ्यात्वगुणस्थानन्तु प्रतिपततोऽपि, मिश्रादीनि च प्रतिपतत आरोहतश्च । एकादशं दशमादारोहत एव, ततोऽग्रे आरोहणाभावात् ततोऽधःपातनियमात् द्वादशादीनि सर्वाणि आरोहत एव, तेभ्यः प्रतिपाता-

१ आन्तर्मौहूर्त्तिक्यामुपशमाद्धाया जघन्यतस्समयशेषायामुत्कृष्टतः षडावलिकाशेषायां सत्यां कस्यचिन्महाविभीषिकोत्थानकल्पोऽनन्तानुबन्ध्युदयो भवति, तदुदये चासौ सास्वादनसम्यग्दृष्टिगुणस्थाने वर्त्तते । मिथ्यात्वस्याद्याप्यप्राप्तत्वादव्यक्तमुपशमगुणस्य वेदनादस्य गुणस्थानस्य गुणस्थानत्वमिति भावः ॥

भावात् । प्रथमादन्यानि गुणस्थानानि भव्यस्यैव । ननु सास्वादनादितरेषां गुणस्थानानामूर्ध्व-मूर्ध्वमारोहरूपतया गुणस्थानत्वं युक्तं, मिथ्यात्वस्याप्यव्यक्तमिथ्यात्वतो व्यक्तमिथ्यात्वप्राप्त्याऽऽरोहणस्वरूपत्वेन तथात्वं सास्वादनस्य सम्यक्त्वात्प्रपातरूपस्य कथं गुणस्थानत्वमिति चेन्न मिथ्यात्वगुणस्थानापेक्षयाऽस्याऽऽरोहणरूपत्वात् अपार्धपुद्गलपरावर्त्तावशेषसंसाराणां भव्यानामेवैतद्गुणस्थानेऽधिकारात् । अत्रस्थो जीव एकोत्तरशतबन्धकः, मिथ्यात्वनरकत्रिकैकेन्द्रियादिजातिचतुष्कस्थावरचतुष्काऽऽतपहुण्डसेवार्त्तनपुंसकवेदरूपषोडशप्रकृतिव्यवच्छेदात् । तथा सूक्ष्मत्रिकाऽऽतपमिथ्यात्वोदयव्यवच्छेदान्नरकानुपूर्व्यनुदयाच्चैकादशोत्तरशतवेदयिता । तीर्थङ्करसत्ताऽसम्भवात् सप्तचत्वारिंशदधिकशतसत्ताकश्च भवति ॥

तृतीयं मिश्रगुणस्थानं सम्यङ्मिथ्यादृष्टिगुणस्थानापराभिधं निरूपयति—

**मिश्रमोहनीयकर्मोदयादन्तर्मुहूर्त्तस्थितिकोऽर्हदुदिततत्त्वेषु द्वेषाभावो मिश्रगुणस्थानम् । यथान्नापरिचितनारिकेलद्वीपनिवासिमनुजस्यान्ने । अत्र जीवो नायुर्बध्नाति न वा म्रियते । अपि तु सम्यक्त्वं मिथ्यात्वं वाऽवश्यं याति ॥**

मिश्रेति । मिश्रमोहनीयकर्मोदयाद्दर्शनमोहनीयप्रकृतिविशेषोदयात् जीवेऽन्तर्मुहूर्त्तकालं लब्धौपशमिकसम्यक्त्वेन मिथ्यात्वमोहनीयं कर्म शोधयित्वा कृतत्रिपुञ्जमध्येऽर्धविशुद्धपुञ्जोदयतोऽर्धविशुद्धं यत्समतया सम्यक्त्वं मिथ्यात्वञ्च भवेत्तेन नार्हदुदिततत्त्वेषु कश्चन द्वेषो न वा प्रीतिस्तन्मिश्रगुणस्थानमित्यर्थः, मिश्रत्वञ्चाऽस्योभयभावयोरेकरूपत्वात्, जात्यन्तरमेतत् वडवाखरयोस्संयोगेन जातस्य जात्यन्तराश्वतरवत्, दधिगुडसंयोगेन रसविशेषवच्च । समतायां निदर्शनमाह—यथेति । तस्य ह्यन्ने न द्वेषो न वा प्रीतिस्तद्वदिदमिति भावः । गुणस्थानेऽत्र जीवः किं करोतीत्यत्राह—अत्रेति । अस्मिन् गुणस्थान इत्यर्थः । तत्र हेतुमाह—अपि त्विति । अस्यान्तर्मुहूर्त्तस्थितिकत्वाद्भावान्तरगमनमावश्यकं तत्रैव चायुर्बन्धो मरणञ्चेति भावः । एवं क्षीणमोहे सयोगिन्यपि न मरणसम्भवश्शेषाणि मरणयोग्यानि गुणस्थानानि, तत्रापि मिथ्यात्वसास्वादनाविरतसम्यग्दृष्टिरूपाणि गुणस्थानानि जीवेन सहोपयान्ति परभवं, नापराण्यष्टाविति बोध्यम् । अत्र मिथ्यात्ववत एव मिश्रगमनमिति सिद्धान्तमतम्, कार्मग्रन्थिकमते तु विहितविभागस्य सम्यक्त्ववतस्सम्यक्त्वप्रच्युतस्याष्टविंशतिसत्कर्मणो मिथ्या-

१. एतासां मिथ्यात्वप्रत्ययत्वान्मिश्रेषु बन्ध., यत एता प्रायो नारकैकेन्द्रियविकलेन्द्रिययोग्यास्त्यन्ताशुभत्वाच्च मिथ्यादृष्टिरेव बध्नातीति ॥

त्विनो वाऽर्धविशुद्धः पुञ्जो यदोदेति तदाऽर्धविशुद्धा भगवदर्हदुदिततत्त्वश्रद्धा जायत इत्यतस्सम्यक्त्वात्प्रच्युतस्यापि मिश्रगमनमिति ॥ एतद्गुणस्थानस्थो जीवश्चतुस्सप्ततेर्बन्धकः, तिर्यक्त्रिकस्त्यानर्द्धित्रिकदुर्भगदुःस्वरानादेयानन्तानुबन्धिमध्याकृतिमध्यसंहननचतुष्कनीचैर्गोत्रोद्योताप्रशस्तविहायोगतिस्त्रीवेदव्यवच्छेदान्मनुष्यदेवायुषोरबन्धाच्च। वेदयिता शतस्य, मिश्रोदयाद्देवमनुष्यतिर्यगानुपूर्व्यनुदयादनन्तानुबन्धिस्थावरैकेन्द्रियविकलत्रिकोदयव्यवच्छेदाच्च । सप्तचत्वारिंशदुत्तरशतसत्ताकश्च भवति, तीर्थंकृत्सत्ताभावात् ॥

अथ चतुर्थं गुणस्थानमाह—

**सम्यक्त्वे सत्यप्रत्याख्यानावरणकषायोदयेन सावद्ययोगात्सर्वथाऽविरमणमविरतसम्यग्दृष्टिगुणस्थानम्। उत्कृष्टतो मनुजभवाधिकषट्षष्टिसागरोपमस्थितिकमिदम्। सम्यक्त्वञ्च भव्यसंज्ञिपञ्चेन्द्रियाणां निसर्गादुपदेशाद्वा भवति । उत्कृष्टतोऽपार्धपुद्गलपरावर्त्तावशिष्टसंसाराणामेतद्भवेत्। जघन्यतस्तद्भवमुक्तिगामिनोऽपि ॥**

सम्यक्त्वे सतीति । यत्राप्रत्याख्यानकषायोदयाज्जीवः सावद्ययोगप्रत्याख्यानं सुन्दरमिति जानन्नपि न पालयति केवलं सम्यक्त्वमात्रमनुभवति तादृशमित्यर्थः। इदमुक्तं भवति यो हि पूर्वोदितौपशमिकसम्यग्दृष्टिः शुद्धदर्शनमोहपुञ्जोदयवर्ती वा क्षायोपशमिकसम्यग्दृष्टिः, क्षीणदर्शनसप्तको वा क्षायिकसम्यग्दृष्टिरविरतिप्रत्ययं दुरन्तनरकादिदुःखफलकं कर्मबन्धं, सावद्ययोगविरतिञ्च परममुनिप्रणीतसिद्धिसौधाध्यारोहनिःश्रेणिकल्पां जानन्नपि न विरतिमभ्युपगच्छति न च तत्पालनाय यततेऽप्रत्याख्यानावरणोदयेन विघ्नितत्वात्, ते ह्यल्पमपि प्रत्याख्यानमावृण्वन्ति, स इहाविरतसम्यग्दृष्टिरुच्यत इति । मिथ्यात्वमोहनीयस्योदीर्णस्य क्षयादनुदीर्णस्योपशमाच्च निर्वृत्तं सम्यक्त्वं क्षायोपशमिकसम्यक्त्वमुच्यते, यदुदयमागतं मिथ्यात्वं तद् वेदितत्वात्क्षीणं, यत्तु शेषं सत्तायामनुदयगतं वर्त्तते तदुपशान्तमुपशान्तं नाम विष्कम्भितोदयभावमपनीतमिथ्यात्वस्वभावञ्च शेषमिथ्यात्वं, अत्र च मिथ्यात्वमिश्रपुञ्जावाश्रित्य विष्कम्भितोदयं शुद्धपुञ्जमाश्रित्यापनीतमिथ्यात्वस्वभावमिति बोध्यम् । यद्यप्यौपशमिकेऽपि उदीर्णमिथ्यात्वस्य क्षयोऽनुदीर्णस्य चोपशमोऽस्ति तथाप्यत्र क्षायोपशमिकसम्यक्त्वे मिथ्यात्वं प्रदेशोदयेन वेद्यते, तत्र तदपि नेति विशेषोऽवसेयः । अत्र शोधितमिथ्यात्वपुद्गला यथावस्थिततत्त्वरुच्यध्यवसायात्मकदृष्टेः सम्यक्त्वावारका न भवन्त्यतस्तेऽप्युपचारेण सम्यक्त्वमुच्यन्त इत्यपि बोध्यम् । अनन्तानुबन्धिकषायचतुष्कक्षयानन्तरं मिथ्यात्वमिश्रसम्यक्त्वपुञ्जलक्षणे त्रिविधेऽपि दर्शनमोहनीये सर्वथा क्षीणे सति क्षायिकं सम्य-

क्त्वं भवति ॥ अस्य गुणस्थानस्योत्कृष्टां स्थितिमाह–उत्कृष्टत इति मनुजभवेति । क्षायोपशमिकमाश्रित्येदम्, क्षायिकमाश्रित्य तु [1] त्रयस्त्रिंशत्सागरोपमाणि साधिकानि । तथाहि कश्चिदितः स्थानादुत्कृष्टस्थितिष्वनुत्तरविमानेषूत्पन्नः, तत्र चाऽविरतसम्यग्दृष्टित्वेन त्रयस्त्रिंशत्सागरोपमाणि स्थितस्ततश्च्युत्वाऽत्राऽप्याऽऽयातो यावद्यापि विरतिं न लभते तावत्तद्भावेनैव स्थित इति मनुष्यभवसम्बद्धकतिपयवर्षाधिकत्रयस्त्रिंशत्सागरोपमत्वं विज्ञेयम् । कस्य कथं सम्यक्त्वमुपजायत इत्यत्राह–भव्येति । भव्यसंज्ञिपञ्चेन्द्रियप्राणिनो यथावद्भगवदुदितेषु जीवादिपदार्थेषु निसर्गादासादितसुनिर्मलत्वगुणरूपात्मस्वभावात्, उपदेशाद्वा सद्गुरूपदिष्टशास्त्रश्रवणाद्वा सम्यक्श्रद्धास्वरूपं सम्यक्त्वं समुन्मिषतीति भावः । दशविधमेतत् सम्यक्त्वमात्रस्य निसर्गोपदेशाज्ञासूत्रबीजाभिगमविस्तारक्रियासंक्षेपधर्मप्रयुक्तत्वात् । उपदेशादिकमन्तरेण क्षयक्षयोपशमादिना जीवाजीवादिपदार्थविषयिणी रुचिर्निसर्गसम्यक्त्वम् । परोपदेशप्रयुक्तजीवादिपदार्थाभिरुचिरुपदेशसम्यक्त्वं, सर्वज्ञाज्ञयैव धर्मानुष्ठानविषया रुचिराज्ञासम्यक्त्वं, सूत्राध्ययनाभ्यासजन्यविशिष्टज्ञानतो जीवादिविषयिणी रुचिरसूत्रसम्यक्त्वं, एकेन पदेनानेकपदार्थप्रतिसन्धानद्वारा प्रसरणशीला रुचिर्बीजसम्यक्त्वं, अर्थतः सकलसूत्रविषयिणी रुचिरभिगमसम्यक्त्वं, सर्वप्रमाणनयजन्यसर्वद्रव्यभावविषया रुचिर्विस्तारसम्यक्त्वं, दर्शनज्ञानचारित्रतपोविनयाद्यनुष्ठानविषयिणी रुचिः क्रियासम्यक्त्वं, अनभिगृहीतकुदृष्टेः प्रवचनानिष्णातस्य निर्वाणपदमात्रविषयिणी रुचिः संक्षेपरुचिः, धर्मपदवाच्यविषयकरुचिर्धर्मसम्यक्त्वमिति ॥ कदा तद्भवतीत्यत्राह–उत्कृष्टत इति । सम्यग्दृष्टीनां सर्वेषां किञ्चिन्न्यूनार्धपुद्गलपरावर्तमात्रमेव संसारस्यावशेषात्, सोऽपि तीर्थकरादिकृताशातनाबहुलानामेव, न तु सर्वेषामिति भावः । जघन्यत इति, तस्मिन्नेव भवे मुक्तिगामिनोऽपीत्यर्थः ॥ अत्रस्थो जीवस्सप्तसप्ततेर्बन्धकस्तीर्थकृदायुर्द्विकस्य च बन्धात् । चतुरुत्तरशतस्य वेदयिता मिश्रोदयव्यवच्छेदात् । आनुपूर्वीचतुष्कसम्यक्त्वोदयाच्च । अष्टत्रिंशदधिकशतसत्ताकश्च । उपशमकस्तु चतुर्थादेकादशं यावत्सर्वेऽप्यष्टचत्वारिंशदधिकशतसत्ताकः क्षपकस्य तु सत्ता तद्गुणस्थाने दर्शयिष्यते ॥

सम्प्रति पञ्चमं गुणस्थानं दर्शयति—

**प्रत्याख्यानकषायोदयात्सर्वसावद्यस्यैकदेशाद्विरतस्य जघन्यमध्यमोत्कृष्टान्यतमवद्विरतिधर्मावाप्तिर्देशविरतगुणस्थानम् ॥**

प्रत्याख्यानेति । सर्वसावद्येभ्यो विरतिमभिलषतोऽपि वैराग्योपचयवतो जीवस्य सर्वविरतिघातकप्रत्याख्यानावरणकषायोदयान्नोत्पद्यते सर्वविरतिसामर्थ्यम्, अपि जघ-

१. यद्वतीर्थङ्करनामकर्मणोऽबद्धायुष्क प्राप्तक्षायिकसम्यक्त्वस्यापेक्षयेदम् ॥

न्यमध्यमोत्कृष्टास्वेकतमा देशविरतिरेव जायते यत्र तद्देशविरतगुणस्थानमित्यर्थः । विरताविरते ह्यष्टौ भङ्गाः, व्रतानि यो न जानाति नाभ्युपगच्छति न च पालनार्थं यतते, यथाऽविरतास्सर्वे । यो न जानाति न चाभ्युपगच्छति परं तु पालयति यथाऽज्ञानतपस्वी । यो न जानाति, अभ्युपगच्छति न तु पालनार्थं यतते यथाऽज्ञपार्श्वस्थसाधुः । यो न जानाति, अभ्युपगच्छति पालयति च यथाऽगीतार्थः । यो जानाति, नाभ्युपगच्छति, न च पालनाय यतते यथा श्रेणिकादयः । यो जानाति नाभ्युपगच्छति पालयति यथा–अनुत्तरदेवः । यो जानाति स्वीकुरुते न च पालयति यथा संविग्नपाक्षिकः । यो जानाति स्वीकरोति पालयति च यथा व्रतीति । तत्र प्रथमादिसप्तभङ्गेषु व्रतपरिपालनेऽपि निष्फलत्वेनाविरत एव भवति, सम्यग्ज्ञानग्रहणपूर्वकपालन एव साफल्यात् । आद्यचतुर्षु हि सम्यग्ज्ञानाद्यभावः, ततस्त्रिषु सम्यग्ज्ञानसत्त्वेऽपि सम्यगभ्युपगमपालनाद्यभावः । अन्तिमे तु देशतः पापाद्विरतो देशविरतोऽपि भवति । यावद् द्वादशव्रतमेकद्विव्यादिव्रतधारणात् । यत्र परमेष्ठिनमस्कारमात्रनियमधारणमाकुट्टीस्थूलहिंसादित्यागो मद्यमांसादित्यागश्च सा जघन्या देशविरतिः। यत्र धर्मयोग्यतागुणा गृहस्थोचितानि षट् कर्माणि द्वादशव्रतपालनं सदाचारश्च भवति सा मध्यमा । सचित्ताहारवर्जनं सदैकासनभोजनमनिन्द्यब्रह्मचर्यव्रतपालनं महाव्रताङ्गीकारस्पृहा च यत्र भवति सोत्कृष्टा देशविरतिरिति बोध्यम् ॥

सर्वसावद्यस्यैकदेशाद्विरतस्येति, अवद्यं पापं तेन सह वर्त्तत इति सावद्यं, हिंसाचौर्यादिगर्हितं कर्म, सर्वेभ्यः सावद्येभ्यो विरतः प्रमत्तसयतादिरपीत्येकदेशेनेत्युक्तम्, प्राणातिपाताद्यन्यतमो देशः, निरपराधत्रिनाशनादिरूपतदेकदेशो वा ताभ्यां विरत एकद्व्याद्यणुव्रतधरः श्रावको द्वादशव्रतधारीति भावः, तानि च व्रतानि अणुव्रतानि पञ्च गुणव्रतानि त्रीणि चत्वारि च शिक्षाव्रतानि । तत्राणूनि लघूनि व्रतानि प्राणातिपातादिविरमणरूपाणीत्यणुव्रतानि महाव्रतापेक्षयैषामल्पविषयत्वात्सर्वविरतापेक्षयाऽल्पगुणिपुरुषानुष्ठानरूपत्वाद्वा महाव्रतनिरूपणोत्तरकालमेवैषां निरूपणीयत्वादनु पश्चाद्वर्ण्यमानानि यानि व्रतानि तान्यणुव्रतानि, महाव्रतप्रतिपत्त्यसमर्थायैतन्निरूपणस्यावश्यकत्वात् । तत्र हिंसा प्रमादप्रयुक्तप्राणव्यपरोपणरूपा स्थूलसूक्ष्मभेदेन द्वैविध्यमश्नुते, स्थूलत्वं यन्मिथ्यादृशीनामपि हिंसात्वेन प्रसिद्धं त्रसविषयकत्वाद्वा, सूक्ष्मत्वञ्च पृथिव्यादिविषयम्, तथैव मृषावादादावपि भाव्यम्, तेभ्यस्थूलेभ्यो विरतिः पञ्चाणुव्रतशब्दवाच्या । साऽपि व्रतभङ्गेन भाव्या बाहुल्यात्, सामान्येन विरताविरतभेदेन श्राद्धानां द्वैविध्येऽपि विशेषतो द्विविधत्रिविधादिभङ्गभेदेनाष्टविधास्ते तथाहि–द्विविधं कृतं कारितं चेति, त्रिविधं मनसा वाचा कायेन, यथा स्थूलहिंसादिकं स्वयं न करोम्यन्यैर्वा न कारयामि मनसा वाचा कायेनेत्यभिप्रायवान् प्रथमः, नास्त्यस्यानुमतिनिषेधः, अपत्यादिपरिग्रहस्य सद्भावात्तैर्हिंसादिकरणे तस्यानुमतिप्राप्तेः, यत्रानुमतिरप्यस्य

स्यात्स्यादविशेषः प्रव्रजिताप्रव्रजितयोस्तद्विषये । द्विविधं द्विविधेनेति द्वितीयो भङ्गः, अस्योत्तरभङ्गात्रयः, तत्र द्विविधं स्थूलहिंसादिकं न करोति न कारयति द्विविधेन मनसा वचसेत्येकः, मनसा कायेनेत्यपरः, वाचा कायेनेत्यन्यः, तत्राद्ये मनसाऽभिसन्धिरहित एव हिंसादिकं वाचाऽब्रुवन्नेवासंज्ञिवत्कायेन दुश्चेष्टितादीनि करोति, द्वितीये मनःकायाभ्याममिसन्धिदुश्चेष्टितादि परिहरन्नेवानाभोगाद्वा वाचैव हन्मि घातयामि चेति ब्रूते । तृतीये च मनसैवाभिसन्धिकृत्य करोति कारयति च । अत्र सर्वत्र त्रिभिरनुमतिरस्त्येव । द्विविधमेकेनेति तृतीयः, अत्राऽप्युत्तरभङ्गात्रयः, द्विविधं करणं कारणञ्चैकविधेन मनसा वा वचसा वा कायेन वेति । एकविधं त्रिविधेनेति चतुर्थः, अत्र चोत्तरौ द्वौ भङ्गौ, तत्रैकविधं करणं वा कारणं वा मनसा वाचा कायेन चेति । एकविधं द्विविधेनेति पञ्चमः, उत्तरभङ्गाश्च षट् एकविधं करणं वा कारणं वा मनोवाग्भ्यां वा मनःकायाभ्यां वा वचःकायाभ्यां वेति । एकविधमेकविधेनेति षष्ठः, अवान्तरभङ्गाष्षट्, एकविधं करणं वा कारणं वा एकविधेन मनसा वा वाचा वा कायेन वेति, इत्येवं मूलभङ्गाः षट् । उत्तरगुणान् गुणव्रतशिक्षाव्रतरूपानाश्रित्य सामान्येनैक एव भेदो विवक्षित इति सप्तमोऽविरतश्चाष्टम इति । तत्र स्थूलानां निरपराधानां निरपेक्षं सङ्कल्पपूर्वकं प्राणिनां प्राणव्यपरोपणरूपां हिंसां प्रत्याख्यातीतीदं प्रथममणुव्रतम्, श्राद्धानां सूक्ष्मपृथिव्यादिप्राणिवधान्निवृत्त्यभावेन स्थूलानामित्युक्तम्, कृष्याद्यारम्भजन्यद्वीन्द्रियादिजीवप्राणव्यपरोपणस्य शरीरकुटुम्बनिर्वाहान्यथानुपपत्त्या सम्भवेन सङ्कल्पपूर्वकमित्युक्तम् । सापराधे गुरुलाघवचिन्तनपूर्वकतत्प्रवृत्तिनिवृत्तिसम्भवेनानियमात् निरपराधिनामित्युक्तम्, निरपराधेऽपि वाह्यमानमहिषवृषहयादौ पाठादिप्रमत्तपुत्रादौ च वधबन्धादिकरणान्निरपेक्षमित्युक्तम् । इत्यहिंसाणुव्रतं प्रथमम् । निखिलद्विपदचतुष्पदापदद्रव्यविषयकालीकानि रक्षणाद्यर्थमन्यन्यस्तस्यापलापवचनं देयादेयविषयकमुत्कोचमत्सरादिप्रयुक्तं प्रमाणपूर्वकं वचनञ्च क्लिष्टाशयोद्भूतत्वात्स्थूलासत्यरूपं तस्माद्विरमणं द्वितीयमणुव्रतम्, यथा कन्यालीकं द्विपाद्विषयकं, वस्तुतोऽतथाभूतां द्वेषादिना विषकन्येयं दुश्शीलेयमविषकन्येयं सुशीलेयमित्यादिरूपेण कथनमेकविधमलीकं, गवालीकं चतुष्पाद्विषयमल्पाप्यतथाभूतां गां बहुक्षीरेयमल्पक्षीरेयमित्यादिरूपेण वर्णनं द्वितीयमलीकं, भूम्यलीकमपदद्रव्यविषयं, इहापि परकीयां भूमिमात्मीयामिति स्वीयां परकीयामिति ऊषरं क्षेत्रमनूषरमनूषरञ्चोषरमिति वदतस्तादृग्वचनं तृतीयमलीकं, न्यासनिह्नवो रक्षणायान्यसमर्पितानां सुवर्णादीनामपलापवचनरूपं चतुर्थम्, अपदद्रव्यविषयकालीकेऽस्यान्तर्भावसम्भवेऽपि न्यासनिह्नवस्य महापापत्वात्पृथगुक्तिः,अदत्तादानेऽस्याऽन्तर्भावसम्भवेऽपि क्रियाप्राधान्यात्तस्मादस्य वचनप्राधान्येनात्रोक्तिः । कूटसाक्ष्यं लभ्यदेयविषये प्रमाणीकृतस्योत्कोचमत्सरादिनाऽहमत्र साक्षीत्येवं कूटं वदतस्तादृशं

वचनं पञ्चमम्, अस्य इतरपापसमर्थनरूपत्वेन पूर्वोलीकेभ्यः पार्थक्येनोपन्यासः । मृषावादो हि क्रोधमानमायालोभरागद्वेषहास्यभयक्रीडाव्रीडारत्यरतिदाक्षिण्यमौखर्यविषादादिभि सम्भवति, सत्यमपि पीडाहेतुश्चेन्मृषावाद एव, सद्भ्यो हित सत्यमिति व्युत्पत्त्यर्थाभावात् । स च मृषावादः स्थूलसूक्ष्मभेदेन द्विविध , स्थूलश्श्राद्धस्य परिहार्य एव, स पञ्चविध उपर्युक्त एव, सूक्ष्ममृषावादे तु यतना । असत्यभेदा भूतनिह्नवादयः । एतद्व्रतफलन्तु विश्वासयशस्स्वार्थसिद्धिप्रियाऽऽदेयाऽमोघवचनतादीति द्वितीयमणुव्रतम् ॥ चौर्यव्यवहारनिमित्तस्य अदत्तस्य परद्रव्यस्य ग्रहणान्निवृत्तिस्तृतीयमणुव्रतम् । अदत्तता च स्वामिजीवतीर्थकरगुरुभिर्भाव्या । यथा यद्वस्तु तत्स्वामिनाऽवितीर्णं तत्स्वाम्यदत्तं, यच्च स्वकीयस्यापि सचित्तफलादेर्विदारण तत्फलजीवेन निजप्राणानर्पणाज्जीवादत्तं, सयतानामाधाकर्मादि श्रावकाणाञ्च प्रासुकमनन्तकायभक्ष्यादिकं तीर्थकराननुज्ञातत्वात्तीर्थकरादत्त, सर्वदोषमुक्तमपि यद्गुरूननभिमन्त्र्य भुज्यते तद्गुर्वदत्तमुच्यते । अत्र स्वाम्यदत्तेनाधिकार, तच्च द्विविधं स्थूलसूक्ष्मभेदात्, अत्यन्तस्थूलविषयं कनकादिकं क्षेत्रखलादावल्पमपि फलादिक वा दुष्टाध्यवसायपूर्वकं ग्रहण स्तैन्यव्यवहारकारणत्वात्स्थूल तद्भिन्नञ्च सूक्ष्मं स्वाम्यननुज्ञया तृणकाष्ठादिग्रहणरूपम् । तत्र श्राद्धस्य सूक्ष्मे यतना स्थूलात्तु निवृत्ति । फलञ्चास्य व्रतस्य सर्वजनविश्वाससाधुवादसमृद्धिवृद्धिस्थैर्यैश्वर्यस्वर्गादिकमिति तृतीयमणुव्रतम् ॥ स्वकीयकलत्रमात्रसन्तोषः स्वीयान्ययोषित्परित्यागो वा श्राद्धाना चतुर्थं मैथुनाणुव्रतम् । अन्ययोषित्पदेन स्वान्यमनुष्याणा देवाना तिरश्चाञ्च योषित परिग्रह , अपरिगृहीता देव्यस्तिरश्च्यश्च काश्चिद्यद्यपि सङ्गृहीतुः परिणेतुश्चाभावेन वेश्याकल्पा एव भवन्ति, तथापि परजातीयभोग्यत्वात्परदारा एव ता इति वर्जनीया । मैथुनं हि सूक्ष्मस्थूलभेदभिन्न, कामोदयेनेन्द्रियाणामीषद्विकारस्सूक्ष्मम् । योगैरौदारिकादिस्त्रीणा सम्भोगस्स्थूलम्, यद्वा ब्रह्मचर्यं द्विधा सर्वतो देशतश्च, तत्र योगत्रयेण निखिलयोषिता सर्वथा सङ्गत्यागः सर्वतो ब्रह्मचर्यं, तदितरत्तु देशत. । तत्र सर्वतोऽशक्तौ देशत , तच्च स्वदारसन्तोषरूप वा परदारवर्जनरूप वा । गृहिणस्स्वदारसतोषे ब्रह्मचारिकल्पत्वमेव परदारगमने च वधबन्धादयो दोषाः स्फुटा एवेति चतुर्थमणुव्रतम् । नवविधपरिग्रहेच्छायास्सर्वतस्त्यागासमर्थेन श्रावकेणेयत्ताकरणं पञ्चममणुव्रतम् तत्र धनधान्यक्षेत्रवास्तुरूप्यसुवर्णकुप्यद्विपदचतुष्पदरूपा नव परिग्रहा । परिग्रहविरतिर्द्विधा सर्वदेशभेदात् । मूर्च्छायास्सर्वथा सर्वभावेषु त्यागस्सर्वत., तदितरो देशतः, तत्र सर्वतस्तत्प्रतिपत्तेश्श्रावकस्य सामर्थ्याभावे देशत इच्छाप्रसरनिरोध कार्यः । इच्छाप्रसरो हि समारिणा स्वाभाविकोऽनस्तदियत्ताकरण महते गुणाय भवति, यथा यथा ह्यल्पो लोभ परिग्रहारम्भश्च तथा तथा सुख प्रवर्धते धर्मस्य च ससिद्धिर्भवति । एतद्व्रतस्य सन्तोषसौख्य-

लक्ष्मीस्थैर्यजनप्रशंसादिफलमिह परत्र च नरामरसमृद्धिसिद्ध्यादीति पञ्चममणुव्रतम् । एतेषामणुव्रतानां परिपालनाय भावनाभूतानि गुणव्रतानि त्रीणि भवन्ति । दिग्व्रतं भोगोपभोगव्रतमनर्थदण्डविरमणञ्चेति । नानाविधा दिशश्शास्त्रेऽभिहिताः, तत्र सूर्योपलक्षिता या सा पूर्वा तदनुक्रमेण दक्षिणादिका माव्याः, तत्र दिक्सम्बन्धिव्रतं दिग्व्रतं, एतावत्सु पूर्वादिदिग्विदिग्भागेषु गमनादि मयाऽनुष्ठेयं न परत इत्येवम्भूतं दिग्व्रतम् । गुणव्रतप्रतिपत्तिमन्तरेणाणुव्रतानां तथाविधविशुद्धिविरहेणेदं गुणव्रतमुच्यते, अनेन चावगृहीतक्षेत्राद्बहिः स्थावरजङ्गमाभयदानलोभाम्भोधिनियंत्रणादिर्महालाभो भवति । गृहस्थो ह्यारम्भपरिग्रहपरत्वाद्यत्र यत्र याति भुङ्क्ते शेते व्यापारं वा कुरुते तत्र तत्र तप्तायोगोलकवज्जीवोपमर्दं करोतीति तस्यैव हिंसादिपापस्थाननिवर्त्तकमेतत्, न साधूनाम्, समितिगुप्त्यादिप्रधानव्रतशालित्वात्तेषामिति प्रथमं गुणव्रतम् । भोगोपभोगमानव्रतं द्वितीयं, तत्र भोगस्सकृदेव भोगयोग्यो यथाऽन्नमाल्यताम्बूलादि, पुनः पुनर्भोगयोग्य उपभोगो यथा वनितावस्त्रालङ्कारगृहशयनादि, तत्र यथाशक्ति परिमाणकरणं भोगोपभोगमानव्रतम्, तत्र श्रावकेण निसर्गतो निरवद्याहारभोजिना भवितव्यम्, तस्मिन्नसति सचित्तपरिहारः कर्त्तव्यः, तत्राप्यसामर्थ्येऽतीव सावद्यान्मद्यामिषानन्तकायादीन् विहाय प्रत्येकमिश्रसचित्तादीनां परिमाणन्तु कर्त्तव्यमेव, तथा विना महोत्सवादिकारणविशेषेणातीव चेतोविकारासक्तिजनापवादादिनिमित्तात्युद्भटवेषयाहनालङ्कारादिकमपि श्रावको वर्जयेत्, एवमतिमालिन्यातिस्थूलह्रस्वसच्छिद्रवस्त्रादिपरिधानेऽपि कुचेलत्वकार्पण्यादिलोकापवादहास्यप्रसङ्गेन निजसम्पत्तिवयोवासस्थानकुलादियोग्यं वेषमारचयेत् । उचितवेषादौ च प्रमाणनियमनमनुष्ठेयम् । एवं दन्तकाष्ठाभ्यङ्गतैलोद्वर्त्तनमज्जनवस्त्रविलेपनाभरणपुष्पफलधूपासनशयनभवनादेस्तथौदनसूपस्नेहशाकपेयाखण्डखाद्याद्यशनपानखादिमस्वादिमादेस्सयक्तुमशक्यस्य व्यक्त्या प्रमाणं कार्यं शेषञ्च त्याज्यम्, इत्येवं भोजनमाश्रित्योक्तम् । कर्मतोऽपि श्रावकेण मुख्यतो निरवद्यकर्मप्रवृत्तिमता भवितव्यम् । तदशक्तावप्यत्यन्तसावद्यविवेकिजननिन्द्यक्रयविक्रयादिकर्म वर्जनीयं, शेषकर्मणामपि प्रमाणं करणीयम् । इत्यञ्चेदं व्रतं भोक्तुं योग्येषु परिमाणकरणेन इतरेषु च वर्जनेन भवतीति द्वितीयं गुणव्रतम् । अनर्थदण्डविरमणं तृतीयं, अर्थः प्रयोजनं गृहस्थस्य क्षेत्रवस्तुधनधान्यं शरीरपालनादिविषयं तदर्थमारंभो भूतोपमर्दोऽर्थदण्डः, दण्डो निग्रहो यातना विनाश इति पर्यायाः । अर्थेन प्रयोजनेन दण्डोऽर्थदण्डः, स चैवम्भूत उपमर्दनलक्षणो दण्डः क्षेत्रादिप्रयोजनमपेक्षमाणोऽर्थदण्ड उच्यते, स्वस्त्रीयस्वजनादिनिमित्तं हि विधीयमानो भूतोपमर्दस्सप्रयोजनत्वादर्थदण्डो भवति, तद्विपरीतोऽनर्थदण्डः, तद्भेदास्तु चत्वारोऽपध्यानपापकर्मोपदेशहिंस्रकार्पणप्रमादाचरणभेदात् । तत्राप्रशस्तं यदार्त्तरौद्रभेदभिन्नं स्थिराध्यवसानरूपं ध्यानं

तदपध्यानं, एतत्परिमाणञ्चान्तर्मुहूर्त्तम् । पापप्रधानं तद्धेतुभूतं वा कर्म पापकर्म, यथा कृष्यादिकम्, तस्योपदेशस्तत्प्रवर्त्तनवाक्यं पापकर्मोपदेशः, यथा क्षेत्रं कृष, वृषवृन्दं षण्डय हयान् दमय क्वथय शत्रून्, यंत्र वाहय, शस्त्रं सज्जय, इत्यादिरूपा उपदेशाः । तथा समापतितो वर्षाकालो दीयतां वल्लरेष्वग्निः, सज्जीक्रियतां हलफलकादि, अतिक्रामति वापकालो मृताः केदारा गाह्यन्तां सार्धदिनत्रयमध्ये, उप्यन्ताञ्च व्रीहयः, जातावस्था कन्यका विवाह्यतां शीघ्रं, प्रत्यासीदन्ति प्रवहणपूरणदिवसाः प्रगुणीक्रियन्तां प्रवहणानीत्यादि सर्वोऽपि पापोपदेश उत्सर्गतश्श्रावकेण त्याज्यः, अपवादतस्तु दाक्षिण्यादिविषये यतना कार्या । तथा हिंसकानामायुधानलविषादीनामर्पणं दानं हिंसकार्पणं, एवम्भूताः पदार्था उत्सर्गतो न देया अपवादतस्तु यतना विधेया । तथा प्रमादेन प्रमादस्य वाऽऽचरणं प्रमादाचरणम्, प्रमादाश्च मद्यविषयकषायनिद्राविकथारूपाः पञ्चविधास्तदाचरणमपि वर्ज्यमेव । एवमेव घृतादिपात्राणामनाच्छादनं सत्यपि जन्तुरहिते स्थाने सचित्तस्योपरि स्थितिकरणं गमनं वस्त्रादिनिक्षेपणं वा, पनककुन्थ्वाद्याक्रान्तभुव्यश्रवणादेः परित्यजन, अयतनया कपाटार्गलादानादि, वृथा पत्रपुष्पादित्रोटनमृत्खटीवर्णिकादिमर्दनवह्न्युद्दीपनगवादिघातदानशस्त्रव्यापारणनिष्ठुरमर्मभाषण हास्यनिन्दाकरणादि, रात्रौ दिवाप्ययतनया वा स्नानकेशग्रथनरन्धनखण्डनदलनभूखननमृदादिमर्दनलेपनवस्त्रधावनजलगालनादि च प्रमादाचरणम्, श्लेष्मादीनां व्युत्सर्गे स्थगनाद्ययतनापि प्रमादाचरणम्, मुहूर्त्तानन्तरं तत्र सम्मूर्च्छिममनुष्यसमूर्च्छनतद्विराधनादिमहादोषसम्भवात्, एवमधिकरणभूतस्य शस्त्रादेः मलमूत्रादेश्चाऽव्युत्सर्जनमपि । स्वकार्ये कृतेऽपि ज्वलदिन्धनप्रदीपादेरविध्यापनमपि तथा, अग्निनिध्यानापेक्षया तदुद्दीपने बहुजीवविराधनाया प्रतिपादनात् । अपिहितप्रदीपचुल्लिकादिधारणचुल्लकोपरि चन्द्रोदयाप्रदानाद्यपि तथा, अशोधितेन्धनधान्यजलादिव्यापारणमपि तथा । एवमेव चतुर्विधोऽप्यनर्थदण्डोऽनर्थहेतुर्निरर्थकश्च, तथा ह्यपध्यानेन नास्ति काचिदिष्टसिद्धिः प्रत्युत चित्तोद्वेगवपुःक्षीणता शून्यताघोरदुष्कर्मबन्धदुर्गत्याद्यनर्थ एव, अतोऽशक्यपरिहारं जात्वपध्यानं क्षणमात्रं स्यात्तदाऽपि सद्य एव परिहार्यं मनोनिग्रह य तनया, पापोपदेशहिंस्रप्रदाने च स्वजनादावन्यथा निर्वाहादर्शनादुःशक्यपरिहारे, अन्येषु तु पापाद्यनर्थफले एव । प्रमादाचरितेऽपि मुधैवायतनादिनिमित्तो हिंसादिदोषः, यतना विना च प्रवृत्तौ सर्वानर्थदण्ड एव, अतस्सदयतया सर्वव्यापारेषु सर्वशक्त्या श्रावकेण यतनाया यतनीयमिति तृतीयं गुणव्रतम् ॥ शिक्षापदव्रतं, शिक्षणं शिक्षा, अभ्यासस्तस्यै तस्या वा पदानि शिक्षापदानि तान्येव व्रतानि शिक्षापदव्रतानि, एतेषां नित्याभ्यसनीयत्वेन गुणव्रतानामपि शिक्षाव्रतेष्वन्तर्भावस्सम्भवति तथापि गुणव्रतानां प्रायो यावज्जीवकत्वात् स्वल्पकालिकत्वाच्च शिक्षापदव्रतानां भेदः, एतानि

चतुर्विधानि, सामायिकं देशावकाशिकं पोषधोपवासोऽतिथिसंविभागश्चेति, आद्ये द्वे प्रतिनियतदिवसानुष्ठेये पुनः पुनरुच्चारणीये, अपरौ द्वौ प्रतिनियतदिवसानुष्ठेयौ। तत्र सामायिकं, समो रागद्वेषवियुक्तो यस्सर्वभूतान्यात्मवत्पश्यति तस्य प्रतिक्षणमपूर्वापूर्वकर्मनिर्जराहेतुभूताया विशुद्धेरायो लाभस्समायः स एव सामायिकम्, वाचिककायिकसावद्यकर्ममुक्तस्यार्त्तरौद्रध्यानरहितस्य च प्राणिनो घटीद्वयकालं यावत्समत्वं सामायिकं, मनोवाक्कायचेष्टापरिहारमन्तरेण तदसम्भवाद्विशेषणद्वयम्। समस्य रागद्वेषविमुक्तस्य सत आयो ज्ञानादीनां लाभ. प्रशमसुखरूपः, समानां वा मोक्षसाधनं प्रति सदृशसमर्थानां सम्यग्दर्शनज्ञानचारित्राणामायो लाभस्समायः, समाय एव सामायिकं, विनयादेराकृतिगणत्वात् ठक् प्रत्ययः। समायः प्रयोजनमस्येति वा सामायिकम्। सामायिकस्थश्श्रावकोऽपि यतितुल्यो भवत्यत एव तदानीं देवपूजादौ नाधिकारः, सामायिके सति भावस्तवस्य प्राप्तत्वेन तदर्थं द्रव्यस्तवस्यानावश्यकत्वात्। सामायिकविधिस्तु तत्तद्ग्रन्थेभ्यो ज्ञातव्यः। व्रतमिदं बहुनिर्जराफलकत्वेन प्रत्यहं श्रावकेणानुष्ठेयम्। इति प्रथमं शिक्षापदव्रतम्। देशावकाशिकं, दिग्व्रतगृहीतस्य दिक्परिमाणस्य यावज्जीवं संवत्सरं चतुर्मासीं वा यावत् दशदिक्षु योजनशताद्यवधिकसंकल्पितगमनादेः मुहूर्त्तप्रहरदिनाहोरात्रादि यावत् संकोचनं गृहशय्यास्थानादेः परतो निषेधनरूपम्। देशे दिग्व्रतगृहीतपरिमाणस्य विभागेऽवकाशोऽवस्थानं देशावकाशः, सोऽत्रास्तीति देशावकाशिकम्। सर्वव्रतानां संक्षेपकरणावश्यकत्वेन तत्तद्व्रतसंक्षेपकरणस्य भिन्नभिन्नव्रतत्वे द्वादशसंख्याविरोधेन च व्रतमिदं अणुव्रतादिसंक्षेपकरणरूपमपीति सर्वव्रतसंक्षेपकरणरूपमिति भाव्यम्। तथैवैतदतिचारोऽपि तत्तदनुसार्यतिचाराणामुपलक्षको ज्ञेयः। यद्वा प्राणातिपातादिव्रतान्तरसंक्षेपकरणेषु वधबन्धादय एवातिचाराः, दिग्व्रतसंक्षेपकरणे तु क्षेत्रस्य संक्षिप्तत्वात् प्रेष्यप्रयोगाद्योऽतिचाराः, भिन्नातिचारसम्भवाच्च दिग्व्रतसंक्षेपकरणस्यैव साक्षाद्देशावकाशित्वमुक्तमिति द्वितीयं शिक्षापदव्रतम्॥ पोषधव्रतं, अष्टमीचतुर्दशीपूर्णिमाऽमावास्यालक्षणपर्वतिथिषु आहारशरीरसत्काराब्रह्मसावद्यकर्मणां त्यागः पोषधव्रतम्, पोषधोपवासस्य चतुर्विधत्वात्, तत्र धर्मस्य पोषं पुष्टिं धत्त इति पोषधः, स एव व्रतं पोषधव्रतं पोषधोपवास इत्युच्यते, प्रोक्तपर्वदिवसानुष्ठेयो व्रतविशेषः पोषधस्तेनोपवसनमवस्थानं पोषधोपवासः, अथवा पोषधोऽष्टम्यादिपर्वदिवसः, उपावृत्तदोषस्य सतो गुणैराहारपरिहारादिभिः उप–सह वास उपवासः पोषधेषूपवासः पोषधोपवासः। व्युत्पत्तिमात्रमिदम्, प्रवृत्तिस्तु पोषधोपवासशब्दस्योपर्युक्ताहारादिचतुष्कवर्जनेषु। तथा च पोषधोपवास आहारशरीरसत्काराब्रह्मव्यापाररूपविषयभेदाच्चतुर्धा, पोषधशब्दोऽपि तत्र प्रयु-

ज्यते, तत्रापि प्रत्येकं देशसर्वभेदादष्टधा भवति, तत्राऽऽहारपोषधो देशतो विवक्षितविकृतेरविकृतेराचाम्लस्य वा सकृदेव द्विरेव वा भोजनमिति, सर्वतस्तु चतुर्विधस्याप्याहारस्याऽहोरात्रं यावत्प्रत्याख्यानम्, शरीरसत्कारपोषधो देशतश्शरीरसत्कारस्यैकतरस्याऽकरणम्, सर्वतस्तु सर्वस्यापि तस्याऽकरणम्, अब्रह्मत्यागरूपब्रह्मचर्यपोषधोऽपि देशतो दिवैव रात्रावेव सकृदेव द्विरेव वा स्त्रीसेवा मुक्त्वा ब्रह्मचर्यकरणम्, सर्वतस्त्वहोरात्रं यावद् ब्रह्मचर्यपालनम् । अव्यापारपोषधस्तु देशतो एकतरस्य कस्यापि कुव्यापारस्याऽकरणम्, सर्वतस्तु सर्वेषां कृषिसेवावाणिज्यपाशुपाल्यगृहकर्मादीनामकरणम् । तत्र देशतः कुव्यापारनिषेधे सामायिकं तु करोति न वा, सर्वतः कुव्यापारनिषेधे तु नियमात्तत्करोति । अकरणे तु तत्फलेन वञ्च्यते । सर्वतः पोषधव्रतञ्च चैत्यगृहे वा साधुमूले वा गृहे वा पोषधशालायां वा त्यक्तमणिसुवर्णाद्यलंकारो व्यपगतमालाविलेपनवर्णकः परिहृतप्रहरणः प्रतिपद्यते, तत्र च कृते पठति पुस्तकं वाचयति, धर्मध्यानं ध्यायति यथैतान् साधुगुणानहं मन्दभाग्यो न समर्थो धारयितुमिति । एतेषां चाहारादिपदानां चतुर्णां देशसर्वभेदानामेकद्व्यादिसंयोगजा अशीतिर्भङ्गा भवन्ति, तदेतत्सर्वमन्यग्रन्थेभ्योऽवसेयमिति तृतीयं शिक्षापदव्रतम् ॥ अथाऽतिथिसंविभागव्रतं, न विद्यन्ते सततप्रवृत्त्या विशदैकाकारानुष्ठानतया तिथयो दिनविभागा यस्य सोऽतिथिः, उक्तञ्च ' तिथिपर्वोत्सवास्सर्वे त्यक्ता येन महात्मना । अतिथिं तं विजानीयाच्छेषमभ्यागतं विदु ' रिति । तस्य सङ्गतो विभागोऽतिथिसंविभागः, तथा च तिथिपर्वादिलौकिकपर्वपरित्यागाद्भोजनकाल उपस्थितेभ्यः साधुभ्यो न्यायागतानां कल्पनीयानामन्नपानादीनां देशकालश्रद्धासत्कारक्रमयुक्तेन परया भक्त्याऽऽत्मानुग्रहबुद्ध्या यद्दीयते सोऽतिथिसंविभागस्तद्रूपं व्रतमिति । आदिनात्र वस्त्रपात्रादीनां ग्रहणम्, न च शास्त्रे वस्त्रादिदातार आहारदातृश्रवणमिव न श्रूयन्ते न वा वस्त्रदानस्य फलमिति वाच्यम्, भगवत्यादौ वस्त्रादिदानस्य साक्षादुक्तत्वात्, संयमोपकारित्वाच्च तेषाम् । अत्र वृद्धोक्ता सामाचारी–पोषधं पारयता श्रावकेण नियमात्साधुभ्यो दत्त्वा पारयितव्यमन्यदा पुनरनियमो दत्त्वा वा पारयति पारयित्वा

१ अभ्यागतव्यावृत्तये साधुभ्य इत्यन्तं पदम् । न्यायेनाऽऽगतानामन्नादीनां व्यावर्त्तनाय न्यायागतानामिति द्विजक्षत्रियविट्शूद्राणां स्वस्ववृत्त्यनुष्ठानं न्यायः, स्ववृत्तिश्च प्रायो लोकप्रसिद्धैव अकल्पनीयव्यवच्छेदाय कल्पनीयानामिति उद्गमादिदोषवर्जितानामिति तदर्थः । अन्नपानादीनामित्यत्रादिना वस्त्रपात्रौषधादिपरिग्रहः, द्रव्यविशेषणं हिरण्यादिव्यवच्छेदाय । अदेशकालागतस्याकल्प्यव्यवच्छेदाय देशकालश्रद्धासत्कारक्रमयुक्तेनेति, तत्र नानाव्रीहिकोद्रवकङ्गुगोधूमादिनिष्पत्तिभाग् देशः सुभिक्षदुर्भिक्षादिः कालः, विशुद्धचित्तपरिणामः श्रद्धा, अभ्युत्थानासनदानवन्दनानुव्रजनादिः सत्कारः, पाकस्य पेयादिपरिपाट्या प्रदानं क्रमः, तैर्युक्तेनेत्यर्थः । पञ्चप्राप्तौ भक्तिकृतमतिशयमाह परया भक्त्येति, आत्मानुग्रहबुद्ध्या प्रदातारणाऽऽत्मानुग्रहबुद्ध्येति ॥

वा ददाति, तस्मात् पूर्वं साधुभ्यो दत्त्वा पश्चात्पारयितव्यम् । कथम् ? यदा भोजनकालो भवति तदाऽऽत्मनो विभूषां कृत्वा प्रतिश्रयं च गत्वा साधूनिमंत्रयते 'भिक्षां गृह्णीते'ति । साधूनाञ्च तं प्रति का प्रतिपत्तिः ?, उच्यते, तदैकः पटलमन्यो मुखान्तकमपरो भाजनं प्रत्युपेक्षते, मा अन्तरायदोषाः स्थापनादोषा वा भवन्तु इति । यदि स च प्रथमायां पौरुष्यां निमंत्रयते, अस्ति च नमस्कारसहितप्रत्याख्यानीयस्ततस्तद्गृह्यते, अथ नास्त्यसौ तदा न गृह्यते यतस्तद्वोढव्यं भवति, यदि पुनर्बाढं लगेत् तदा गृह्यते संस्थाप्यते च, यो वोद्घाटपौरुष्यां पारयति पारणकश्चान्यो वा तस्मै तद्दीयते, पश्चात्तेन श्रावकेण सह संघाटको व्रजति, एको न वर्त्तते प्रेषयितुम्, साधू पुरत. श्रावकस्तु मार्गे गच्छति, ततोऽसौ गृहं नीत्वा तावासनेनोपनिमंत्रयते, यदि निविशेते, तदा भव्यं, अथ न निविशेते तथापि विनयः प्रयुक्तो भवति, ततोऽसौ भक्तं पानञ्च स्वयमेव ददाति, भाजनं वा धारयति, स्थित एवाऽऽस्ते यावद्दीयते, साधू अपि पश्चात्कर्मपरिहारार्थं सावशेषं गृह्णीतः, ततो वन्दित्वा विसर्जयति, अनुगच्छति च कतिचित्पदानि, ततः स्वयं भुङ्क्ते । यदि पुनस्तत्र ग्रामादौ साधवो न भवन्ति तदा भोजनवेलायां द्वारावलोकनं करोति, विशुद्धभावेन च चिन्तयति । यदि साधवोऽभविष्यन् तदा निस्तारितोऽभविष्यमिति, एष पोषधपारणके विधिः, अन्यथा तु दत्त्वा भुङ्क्ते भुक्त्वा वा ददातीति द्वादशव्रतानि श्रावकाणाम् । एतानि च निरतिचारतया परिपालितानि विशेषतो गृहिधर्मो भवतीत्यतिचारा विज्ञेयाः, तत्र पञ्च पञ्चातिचाराः प्रतिव्रतं भवन्ति । ननु सञ्ज्वलनकषायोदयप्रभवत्वादतिचाराणामप्रत्याख्यानप्रत्याख्यानोदयवतां सम्यग्दृष्टिदेशविरतानां ते कथं सम्भवन्ति, सञ्ज्वलनकषायोदयवतस्सर्वविरतस्यैव तेषां संभवात्, देशविरतेरल्पीयस्त्वात् कुन्थुशरीरे व्रणाद्यसम्भववत्, इति चेन्मैवम्, उपासकदशादिषु प्रतिव्रतमतिचारपञ्चकाभिधानात् सर्वविरतौ सञ्ज्वलनोदयेऽतिचारा भवन्ति शेषाणामुदये मूलच्छेद्यमेव स्यादित्यभिप्रायेण सर्वविरतातिचारहेतुत्वेन सञ्ज्वलनोदयस्य शास्त्रे प्रोक्तत्वात्, न तु सञ्ज्वलनोदयमात्रजन्यत्वमतिचाराणाम्, 'सव्वेवि अ अइआरा सजलणाणं तु उदयओ हुंति । मूलच्छिज्जं पुण होइ बारसण्हं कसायाणं' इति । सर्वविरतेस्तृतीयानामुदये मूलच्छेदो देशविरतेर्द्वितीयानां सम्यक्त्वस्य प्रथमानामिति गाथापश्चार्धस्याभिप्रायवर्णनेऽपि यथा संज्वलनोदये सर्वविरतिर्वाप्यते तत्रातिचाराश्च भवन्ति तथा प्रत्याख्यानावरणोदये देशविरतिस्तदतिचाराश्च, अप्रत्याख्यानोदये सम्यक्त्वं तदतिचाराश्च भवन्तु न्यायस्य समानत्वात्, विचित्रो ह्युदयः कषायाणां, ततोऽसौ गुणलाभस्याप्रतिबन्धकस्तदतिचाराणाञ्च निमित्तं भवति संज्वलनोदयवदिति । तत्र प्रथमव्रतस्य प्रकृष्टक्रोधोदयात् वधः, बन्धः, छविच्छेदः, अतिभारारोपणं, भक्तपानव्यवच्छेदश्चेति पञ्चातिचारा भवन्ति, क्रोधाच्चतुष्पदादीनां लगुडादिना ताडनं वधः, प्रबल-

कषायोदयादेव विज्ञेयस्तेन विनयग्रहणार्थं स्वपुत्रादीनां ताडनेऽपि न क्षतिः । तेषामेव रज्ज्वादिना नियंत्रणं बन्धः, सोऽपि पुत्रादीनां क्रियत इति प्रबलक्रोधादेवेति भाव्यम् । छविश्शरीरं त्वग्वा, तस्याश्छेदः, छविच्छेदः, कर्णनासिकागलकम्बलपुच्छादिकर्त्तनम्, अयमपि क्रुध इत्येव तेन पादवल्मीकोपहतपादस्य पुत्रादेस्तत्करणेऽपि नातिप्रसङ्गः । अतिशयितो भारोऽतिभारः, वोढुमशक्य इत्यर्थः,तस्यारोपणं गोकरभरासभमनुष्यादेः स्कन्धे पृष्ठे शिरसि वा स्थापनं, इहापि क्रोधाल्लोभाद्वेति विज्ञेयम् । अशनपानादीनां निषेधः क्रोधाद्भक्तपानव्यवच्छेदः, एते पञ्चाऽतिचारा नाममात्रेणोक्ता विस्तरस्तु तत्तद्ग्रन्थेभ्योऽवसेयः, एवमग्रेऽपि, सहसाभ्याख्यानं मिथ्योपदेशो गुह्यभाषणं कूटलेखो विश्वस्तमंत्रभेदश्चेति द्वितीये व्रते पञ्चातिचाराः, अविमृश्यासद्दोषाध्यारोपणं सहसाभ्याख्यानं यथा चौरस्त्वं पारदारिको वेत्यादि । अन्ये त्वस्य स्थाने रहस्याभ्याख्यानं पठन्ति, तदा रह एकान्तस्तत्र भवं रहस्यं, रहस्येनाभ्याख्यानमसदध्यारोपणं यथा वृद्धायै वक्ति-अयं ते भर्त्ता तरुण्यामतिप्रसक्तः, तरुण्यै वक्ति-अयं ते भर्त्ता प्रौढचेष्टितायां मध्यमवयसि प्रसक्त इत्यादि रहस्याभ्याख्यानमिति । असदुपदेशो मिथ्योपदेशः, प्रतिपन्नसत्यव्रतस्य हि परपीडाकरं वचनमसत्यमेव, ततः प्रमादात् परपीडाकरणे उपदेशोऽतिचारः, यथा वाह्यन्तां खरोष्ट्रादयो हन्यन्तां दस्यव इत्यादि, यद्वा यथास्थितोऽर्थस्तथोपदेशः साधीयान्, विपरीतस्त्वयथार्थोपदेशो यथा परेण सन्देहापन्नेन पृष्टे न तथोपदेशः, यद्वा विवादे स्वयं परेण वाऽन्यतराभिसन्धानोपायोपदेश इति । यन्न सर्वस्मै कथनीयं तस्यानधिकृतेनैवाकारेङ्गितादिभिर्ज्ञात्वाऽन्यस्मै प्रकाशनं गुह्यभाषणं, यथा-एते हीदमिदं च राजविरुद्धादिकं मंत्रयन्ते अथवा गुह्यभाषणं पैशुन्यं, यथा द्वयोः प्रीतौ सत्यामेकस्याकारादिनोपलभ्याभिप्रायमितरस्य तथा कथयति यथा प्रीतिः प्रणश्यति, अस्याप्यतिचारत्वं रहस्याभ्याख्यानवत् हास्यादिनैवेति । अन्यसदृशाक्षरमुद्राकरणं कूटलेखः, एतच्च यद्यपि कायेनासत्यं वाचं न वदामि नवा वादयामीत्यस्य वा व्रतस्य भङ्ग एव तथापि सहसाकारानाभोगादिनाऽतिक्रमादिना वाऽतिचारः, अथवाऽसत्यमित्यसत्यभणनं मया प्रत्याख्यातं, इदं पुनर्लेखनमिति

---

१. ननु बन्धादयो नातिचाराः, श्रावकेण हिंसाया एव प्रत्याख्यातत्वात् हिंसाविरतेरखण्डितत्वाच्च तेषामपि प्रत्याख्यातत्वे च तत्करणे विरतिखण्डनाद् व्रतभङ्ग एव स्यात् तथा व्रतेयत्ताभङ्गोऽपि स्यात्प्रतिव्रतमतिचाराणामाधिक्यादिति चेन्मैवम्, हिंसामात्रस्य प्रत्याख्यातत्वेऽपि तेषामप्यर्थतः प्रत्याख्यातत्वात् हिंसोपायत्वात्तेषाम् । न च तत्करणे व्रतभङ्ग एव नातिचार इति वाच्यम्, देशस्यैव भञ्जनाद्देशस्यैव पालनादतिचारव्यपदेशात् । द्विविधं हि व्रतमन्तर्वृत्त्या बहिर्वृत्त्या च, यदा मारयामीति विकल्पविरहकालीनक्रोधादिप्रयुक्तनिरपेक्षवधादिप्रवृत्तिहिंसाऽभावश्च तदा निर्दयतया विरत्यनपेक्षप्रवृत्तितयाऽन्तर्वृत्त्या तस्य भंगो हिंसाया अभावाच्च बहिर्वृत्त्या पालनमिति ॥ २. अविमृश्यकारित्वं सहसाकारः, असावधानताऽनाभोगः, व्रतभङ्गाय परनिमित्तमंत्रणे कृतेऽप्रतिषेधादतिक्रमः, गमनादिव्यापारे व्यतिक्रमः, क्रोधाद्वधबन्धादावतिचारः, जीवहिंसादौ त्वनाचार इति ॥

भावनया व्रतसापेक्षस्यातिचार एव । विश्वासमुपगतानां मंत्रणस्य प्रकाशकरणं विश्वस्तमंत्रकरणम्, अस्यानुवादरूपत्वेन सत्यत्वाद्यद्यपि नातिचारता घटते तथापि मंत्रितार्थप्रकाशनजनितलज्जादितो मित्रकलत्रादेर्मरणादिसम्भवेन परमार्थतोऽस्यासत्यत्वात् कथञ्चिद्भङ्गरूपत्वेनातिचारतैव । गुह्यभाषणे गुह्यमाकारादिना विज्ञायानधिकृत एव गुह्यं प्रकाशयति, इह तु स्वयं मंत्रयित्वा मन्त्रं भिनत्तीत्यनयोर्भेद इति ॥ स्तेनाहृतग्रहः स्तेनप्रयोगः मानविद्रवः, शत्रुराज्यगमनं, प्रतिरूपव्यवहार इति तृतीयव्रतस्यातिचाराः । चोरानीतपदार्थानां मूल्यादिना ग्रहणं स्तेनाहृतग्रहः, स्तेनाहृतं हि काणक्रयेण मुधिकया वा प्रच्छन्नं ग्रहणं चौरो भवति, यतो नीतिः 'चौरश्चौरापको मन्त्री भेदज्ञः काणकक्रयी । अन्नदः स्थानदश्चेति चौरस्सप्तविधः स्मृतः' इति ततश्चौर्यकरणाद्व्रतभङ्गः, वाणिज्यमेव क्रियते मया न चौरिकेत्यध्यवसायेन व्रतसापेक्षत्वाच्चाभङ्ग इति भङ्गाभंगरूपः प्रथमोऽतिचारः । स्तेनानामभ्यनुज्ञानं हरत यूयमित्यादिरूपेण, स्तेनोपकरणानां वा कुशिकाकर्त्तरिकाघर्घरिकादीनामर्पणं विक्रयणं वा स्तेनप्रयोगः । अत्र च यद्यपि चौर्यं न करोमि न कारयामीत्येवं प्रतिपन्नव्रतस्य स्तेनप्रयोगो व्रतभङ्ग एव, तथापि 'किमधुना यूयं निर्व्यापारास्तिष्ठत, यदि वो भक्तादि नास्ति तदाऽहं ददामि, भवदानीतमोषस्य वा यदि विक्रायको न विद्यते तदाऽऽहं विक्रेष्ये' इत्येवंविधवचनैश्चोरान् व्यापारयतः स्वकल्पनया तद्व्यापारणं परिहरतो व्रतसापेक्षस्यासावतिचार इति द्वितीयोऽतिचारः । मानस्य कुडवादिपलादिहस्तादेः हीनाधिकत्वकरणं मानविद्रवः, हीनमानेन दानमधिकमानेन च ग्रहणं सत्त्वतश्चौर्यमेव, न चैवं श्रावकस्य युज्यत इति तृतीयोऽतिचारः । विरुद्धयो राज्ञोर्यद्राज्यं तत्र राज्ञाऽननुज्ञाते गमनं शत्रुराज्यगमनम् । शत्रुराज्यगमनस्य यद्यपि स्वस्वामिनाऽननुज्ञातस्यादत्तादानरूपत्वेन तदनुष्ठातृणाञ्च चौर्यदण्डयोगेनादत्तादानरूपत्वाद्व्रतभङ्ग एव तथापि शत्रुराज्यगतिं कुर्वता मया वाणिज्यमेव कृतं न चौर्यमिति भावनया व्रतसापेक्षत्वाल्लोके च चोरोऽयमिति व्यपदेशाभावादतिचारता, उपलक्षणत्वाद्राजनिषिद्धवस्तुग्रहणमपि तथेति चतुर्थोऽतिचारः । सदृशवस्तुना व्यवहरणं प्रतिरूपव्यवहारः, यथा व्रीहीणां पलञ्जि, घृतस्य वसा, तैलस्य मूत्रं, हिङ्गोः खदिरादिवेष्टः चणकादिवेष्टं गुन्दादि वा, कुङ्कुमस्य कृत्रिमं तत् कुसुम्भादि वा, मञ्जिष्ठादेश्चित्रकादि, तथा विधाय विक्रयणं, यद्वाऽपहृताना गवादीनां सशृङ्गाणां अग्निपक्वकालिङ्गीफलस्वेदादिना शृङ्गाण्यधो मुखानि प्रगुणानि तिर्यग्वलितानि वा विधायान्यस्वमिव तेषामापाद्य सुखेन धारणविक्रयादि करोतीति पञ्चमः । मानविद्रवः प्रतिरूपक्रिया च परव्यंसनेन परधनग्रहणरूपत्वाद्भङ्ग एव, केवलं खात्रखननादिकमेव चौर्यं प्रसिद्धं मया तु वणिक्कलैव कृतेति भावनया व्रतरक्षणोद्यतत्वादतिचार इति ॥

कषायोदयादेव विज्ञेयस्तेन विनयग्रहणार्थं स्वपुत्रादीनां ताडनेऽपि न क्षतिः । तेषामेव रज्ज्वादिना नियन्त्रणं बन्धः, सोऽपि पुत्रादीनां क्रियत इति प्रबलक्रोधादेवेति भाव्यम् । छविश्शरीरत्वग्वा, तस्याश्छेदः, छविच्छेदः, कर्णनासिकागलकम्बलपुच्छादिकर्त्तनम्, अयमपि क्रुध इत्येव तेन पादवल्मीकोपहतपादस्य पुत्रादेस्तत्करणेऽपि नातिप्रसङ्गः । अतिशयितो भारोऽतिभारः, वोढुमशक्य इत्यर्थः, तस्यारोपणं गोकरभरासभमनुष्यादेः स्कन्धे पृष्ठे शिरसि वा स्थापनं, इहापि क्रोधाल्लोभाद्वेति विज्ञेयम् । अशनपानादीना निषेधः क्रोधाद्भक्तपानव्यवच्छेदः, एते पञ्चाऽतिचारा नाममात्रेणोक्ता विस्तरस्तु तत्तद्ग्रन्थेभ्योऽवसेयः, एवमग्रेऽपि, सहसाभ्याख्यानं मिथ्योपदेशो गुह्यभाषणं कूटलेखो विश्वस्तमन्त्रभेदश्चेति द्वितीये व्रते पञ्चातिचाराः, अविमृश्यासद्दोषाध्यारोपणं सहसाभ्याख्यानं यथा चौरस्त्वं पारदारिको वेत्यादि । अन्ये त्वस्य स्थाने रहस्याभ्याख्यानं पठन्ति, तदा रह एकान्तस्तत्र भवं रहस्यं, रहस्येनाभ्याख्यानमसदध्यारोपणं यथा वृद्धायै वक्ति-अयं ते भर्त्ता तरुण्यामतिप्रसक्तः, तरुण्यै वक्ति-अयं ते भर्त्ता प्रौढचेष्टितायां मध्यमवयसि प्रसक्त इत्यादि रहस्याभ्याख्यानमिति । असदुपदेशो मिथ्योपदेशः, प्रतिपन्नसत्यव्रतस्य हि परपीडाकरं वचनमसत्यमेव, ततः प्रमादात् परपीडाकरणे उपदेशोऽतिचारः, यथा वाह्यन्तां खरोष्ट्रादयो हन्यन्तां दस्यव इत्यादि, यद्वा यथास्थितोऽर्थस्तथोपदेशः साधीयान्, विपरीतस्त्वयथार्थोपदेशो यथा परेण सन्देहापन्नेन पृष्टे न तथोपदेशः, यद्वा विवादे स्वयं परेण वाऽन्यतराभिसन्धानोपायोपदेश इति । यन्न सर्वस्मै कथनीयं तस्यानधिकृतेनैवाकारेङ्गिताविभिर्ज्ञात्वाऽन्यस्मै प्रकाशनं गुह्यभाषणं, यथा-एते हीदमिदं च राजविरुद्धादिकं मन्त्रयन्ते अथवा गुह्यभाषणं पैशुन्यं, यथा द्वयोः प्रीतौ सत्यामेकस्याकारादिनोपलभ्याभिप्रायमितरस्य तथा कथयति यथा प्रीतिः प्रणश्यति, अस्याप्यतिचारत्वं रहस्याभ्याख्यानवत् हास्यादिनैवेति । अन्यसदृक्षाक्षरमुद्राकरणं कूटलेखः, एतच्च यद्यपि कायेनासत्यं वाचं न वदामि न वा वादयामीत्यस्य वा व्रतस्य भङ्ग एव तथापि सहसाकारानाभोगादिनाऽतिक्रमादिना वाऽतिचारः, अथवाऽसत्यमित्यसत्यभणनं मया प्रत्याख्यातं, इदं पुनर्लेखनमिति

---

१. ननु बन्धादयो नातिचाराः, श्रावकेण हिंसाया एव प्रत्याख्यातत्वात् हिंसाविरतेरखण्डितत्वाच्च तेषामपि प्रत्याख्यातत्वे च तत्करणे विरतिखण्डनाद् व्रतभङ्ग एव स्यात् तथा व्रतेयत्ताभङ्गोऽपि स्यात्प्रतिव्रतमतिचाराणामाधिक्यादिति चेन्नैवम्, हिंसामात्रस्य प्रत्याख्यातत्वेऽपि तेषामप्यर्थतः प्रत्याख्यातत्वात् हिंसोपायत्वात्तेषाम् । न च तत्करणे व्रतभङ्ग एव नातिचार इति वाच्यम्, देशस्यैव भञ्जनाद्देशस्यैव पालनादतिचारव्यपदेशात् । द्विविधं हि व्रतमन्तर्वृत्त्या बहिर्वृत्त्या च यदा मारयामीति विकल्पविरहकालीनक्रोधादिप्रयुक्तनिरपेक्षवधादिप्रवृत्ति हिंसाऽभावश्च तदा निर्दयतया विरत्यनपेक्षप्रवृत्तितयाऽन्तर्वृत्त्या तस्य भङ्गो हिंसाया अभावाच्च बहिर्वृत्त्या पालनमिति ॥ २. अविमृश्यकारित्वं सहसाकारः, असावधानताऽनाभोगः, व्रतभङ्गाय केनचिन्निमन्त्रणे कृतेऽप्रतिषेधादतिक्रमः, गमनादिव्यापारे व्यतिक्रमः, क्रोधाद्वधबन्धादावतिचारः, जीवहिंसादौ त्वनाचार इति ॥

भावनया व्रतसापेक्षस्यातिचार एव । विश्वासमुपगतानां मंत्रणस्य प्रकाशकरणं विश्वस्तमंत्रकरणम्, अस्यानुवादरूपत्वेन सत्यत्वाद्यद्यपि नातिचारता घटते तथापि मंत्रितार्थप्रकाशनजनितलज्जादितो मित्रकलत्रादेर्मरणादिसम्भवेन परमार्थतोऽस्यासत्यत्वात् कथञ्चिद्भङ्गरूपत्वेनातिचारतैव । गुह्यभाषणे गुह्यमाकारादिना विज्ञायानधिकृत एव गुह्यं प्रकाशयति, इह तु स्वयं मंत्रयित्वा मन्त्रं भिनत्तीत्यनयोर्भेद इति ॥ स्तेनाहृतग्रहः स्तेनप्रयोगः मानविप्लवः, शत्रुराज्यगमनं, प्रतिरूपव्यवहार इति तृतीयव्रतस्यातिचाराः । चोरानीतपदार्थानां मूल्यादिना ग्रहणं स्तेनाहृतग्रहः, स्तेनाहृतं हि काणक्रयेण मुधिकया वा प्रच्छन्नं ग्रहणं चौरो भवति, यतो नीतिः ' चौरश्चौरापको मन्त्री भेदज्ञः काणकक्रयी । अन्नदः स्थानदश्चेति चौरस्सप्तविधः स्मृतः ' इति ततश्चौर्यकरणाद्व्रतभङ्गः, वाणिज्यमेव क्रियते मया न चौरिकेत्यध्यवसायेन व्रतसापेक्षत्वान्नाभङ्ग इति भङ्गाभंगरूपः प्रथमोऽतिचारः । स्तेनानामभ्यनुज्ञानं हरत यूयमित्यादिरूपेण, स्तेनोपकरणानां वा क्षुरिकाकर्त्तरिकाघर्घरिकादीनामर्पणं विक्रयणं वा स्तेनप्रयोगः । अत्र च यद्यपि चौर्यं न करोमि न कारयामीत्येवं प्रतिपन्नव्रतस्य स्तेनप्रयोगो व्रतभङ्ग एव, तथापि ' किमधुना यूयं निर्व्यापारास्तिष्ठत, यदि वो भक्तादि नास्ति तदाऽहं ददामि, भवदानीतमोषस्य वा यदि विक्रायको न विद्यते तदाऽऽहं विक्रेष्ये ' इत्येवंविधवचनैश्चोरान् व्यापारयतः स्वकल्पनया तद्व्यापारणं परिहरतो व्रतसापेक्षस्यासावतिचार इति द्वितीयोऽतिचारः । मानस्य कुडवादिपलादिहस्तादेः हीनाधिकत्वकरणं मानविप्लवः, हीनमानेन दानमधिकमानेन च ग्रहणं तत्त्वतश्चौर्यमेव, न चैवं श्रावकस्य युज्यत इति तृतीयोऽतिचारः । विरुद्धयो राज्ञोर्यद्राज्यं तत्र राज्ञाऽननुज्ञाते गमनं शत्रुराज्यगमनम् । शत्रुराज्यगमनस्य यद्यपि स्वस्वामिनाऽननुज्ञातस्यादत्तादानरूपत्वेन तदनुष्ठातॄणाञ्च चौर्यदण्डयोगेनादत्तादानरूपत्वाद्व्रतभङ्ग एव तथापि शत्रुराज्यगतिं कुर्वता मया वाणिज्यमेव कृतं न चौर्यमिति भावनया व्रतसापेक्षत्वाल्लोके च चोरोऽयमिति व्यपदेशाभावादतिचारता, उपलक्षणत्वाद्राजनिषिद्धवस्तुग्रहणमपि तथेति चतुर्थोऽतिचारः । सदृशवस्तुना व्यवहरणं प्रतिरूपव्यवहारः, यथा व्रीहीणां पलञ्जि, घृतस्य वसा, तैलस्य मूत्रं, हिङ्गोः खदिरादिवेष्टः चणकादिवेष्टं गुन्दादि वा, कुङ्कुमस्य कृत्रिमं तत् कुसुम्भादि वा, मञ्जिष्ठादेश्चित्रकादि, तथा विधाय विक्रयणं, यद्वाऽपहृतानां गवादीनां सश्टङ्गाणां अग्निपक्वकालिङ्गीफलस्वेदादिना श्टङ्गाण्यधो मुखानि प्रगुणानि तिर्यग्वलितानि वा विधायान्यत्वमिव तेषामापाद्य सुखेन धारणविक्रयादि करोतीति पञ्चमः । मानविप्लवः प्रतिरूपक्रिया च परव्यंसनेन परधनग्रहणरूपत्वाद्भङ्ग एव, केवलं खात्रखननादिकमेव चौर्यं प्रसिद्धं मया तु वणिकलैव कृतेति भावनया व्रतरक्षणोद्यतत्वादतिचार इति ॥

परविवाहकरणं, अनात्तागमः , इत्वरात्तागमः, अनङ्गक्रीडनं, कामतीव्ररागश्चेति पञ्चातिचाराश्चतुर्थव्रते । स्वस्वापत्यव्यतिरिक्तानां कन्याफललिप्सया स्नेहसम्बन्धादिना वा परिणयनविधानं परविवाहकरणम् । इदञ्च स्वदारसन्तोषवता स्वकलत्रात्परदारवर्जकेन च स्वकलत्रवेश्याभ्यामन्यत्र मनोवाक्कायैर्मैथुनं न कार्यं न च कारणीयमिति यदा प्रतिपन्नं तदा परविवाहकरणं मैथुनकारणमर्थतः प्रतिषिद्धमेव भवति तद्व्रती तु मन्यते, विवाह एवायं मया विधीयते न मैथुनं कार्यते इति व्रतसापेक्षत्वादतिचारः । कन्याफललिप्सा च सम्यग्दृष्टेरव्युत्पन्नावस्थायां मिथ्यादृष्टेस्तु भद्रकावस्थायामनुग्रहार्थं व्रतदाने सा संभवतीति । अनात्तागमः, अनात्ता—अपरिगृहीता वेश्या स्वैरिणी प्रोषितभर्तृका कुलाङ्गना वाऽनाथा, तस्या गम आसेवनम्, अनाभोगादिनाऽतिचारोऽयं स्वदारसन्तोषिणः । इत्वरात्तागमः, इत्वरी प्रतिपुरुषमयनशीला वेश्येत्यर्थः, सा चासावात्ता च कञ्चित्कालं भाटीप्रदानादिना सङ्गृहीता, इत्वरात्ता, इत्वरकालं वाऽऽत्ता इत्वरात्ता तस्या गम आसेवनमित्वरात्तागमः, अयञ्च भाटीप्रदानत्वादित्वरकालस्वीकारेण स्वकलत्रीकृत्य वेश्यां सेवमानस्य स्वबुद्धिकल्पनया स्वदारत्वेन व्रतसापेक्षत्वान्न भङ्गः, अल्पकालपरिग्रहाच्च वस्तुतोऽन्यकलत्रत्वाद्भङ्ग इति भङ्गाभङ्गरूपत्वादतिचारः, अयमपि स्वदारसन्तोषिण एव, न तु परदारवर्जकस्य, इत्वरात्ताया वेश्यात्वेनानात्तायास्त्वनाथतयैवापरदारत्वात् शेपास्त्वतिचारा द्वयोरपि ॥ अनङ्गक्रीडनं, अनङ्गः कामः, स च पुंसः स्त्रीपुंनपुंसकेषु सेवनेच्छा हस्तकर्मादीच्छा वा, वेदोदयात् योषितोपि योषिन्नपुंसकपुरुषासेवनेच्छा हस्तकर्मादीच्छा वा, नपुंसकस्याऽपि नपुंसकपुरुषस्त्रीसेवनेच्छा हस्तकर्मादीच्छा वा, एषोऽनङ्गो नान्यः कश्चित्, तेन तस्मिन् वा क्रीडनं रमणमनङ्गक्रीडनम्, अथवा स्वलिङ्गेन कृतकृत्योऽपि काष्टपुस्तफलमृत्तिकाचर्मादिघटितैराहार्यैः प्रजननैर्योषितामवाच्यदेशं पुनः पुनः कुश्नाति केशाकर्षणप्रहारदानदन्तनखकदर्थनादिप्रकारेण मोहनीयकर्मावेशात्तथा क्रीडति यथा बलवान् रागः प्रसूयते, यद्वा अङ्गं देहावयवो मैथुनापेक्षया योनिर्मेहनञ्च, तद्व्यतिरिक्तान्यनङ्गानि, कुचकक्षोरुवदनादीनि तेषु क्रीडनमनङ्गक्रीडनमिति । कामतीव्ररागः, कामे तीव्रो रागः, अतीवाऽऽग्रहः परित्यक्तान्यसकलव्यापारस्य मैथुनेऽध्यवसायता, योषामुखकक्षोपस्थान्तरेषु अवितृप्ततया प्रक्षिप्य लिङ्गं महतीं वेलां निश्चलो मृत इवास्ते चटक इव चटकां मुहुर्मुहुर्योषामारोहति, जातबलक्षयश्च वाजीकरणान्युपयुङ्क्ते इति । अत्र च श्रावकोऽत्यन्तपापभीरुतया ब्रह्मचर्यं चिकीर्षुरपि यदा वेदोदयासहिष्णुतया तद्विधातुं न शक्नोति तदा यापनामात्रार्थं स्वदारसन्तोषादि प्रतिपद्यते, मैथुनमात्रेण च

१. ननु स्वापत्यविवाहने कथं न दोष ? परविवाहनवदिति चेत्सत्यम्, निजकन्याया परिणयनाभावे स्वच्छन्दचारिणीत्वप्रसङ्गेन शासनोपघातसम्भवात्, कृते तु विवाहे पतिनियन्त्रितत्वेन तदसम्भवादिति । सत्यपि कलत्रे तत्र विशिष्टसन्तोषाभावात्स्वयं पुन कलत्रान्तरस्य विवाहन परकलत्रविवाहन स्वदारसन्तोषवतोऽतिचार इति केचित् ॥

यापनायां सम्भवन्त्यामनङ्गक्रीडनकामतीव्ररागावर्थतः प्रतिपिद्धौ, तत्सेवने च न कश्चिद्गुणः प्रत्युत तात्कालिकी छिदा राजयक्ष्मादयश्च रोगा दोषा एव भवन्ति, एवं प्रतिपिद्धाचरणाद्भङ्गो नियमाबाधनाच्चाभङ्ग इत्यतिचारावेतौ ॥ धनधान्यसंख्यातिक्रमः, क्षेत्रवास्तुसंख्यातिक्रमः, रूप्यस्वर्णसंख्यातिक्रमः, गोमनुष्यादिसंख्यातिक्रमः, कुप्यसंख्यातिक्रमश्चेति पञ्च पञ्चमव्रतनातिचाराः । धनधान्यादीनां यावज्जीवं चतुर्मासादिकालावधि वा यत्परिमाणं गृहीतं तस्योलंघनरूपा एते, अतिचारा एते न साक्षात् गृहीतसंख्यातिक्रमरूपाः किन्तु बन्धनयोजनदानगर्भभावैः पञ्चभिर्हेतुभिः स्वबुद्ध्या व्रतभङ्गमकुर्वत एव । तत्र धान्यस्य बन्धनात्संख्यातिक्रमो यथा—कृतधनधान्यपरिमाणस्य कोऽपि लभ्यमन्यद्वा धनं धान्यं च ददाति तच्च व्रतभङ्गभयाच्चतुर्मास्याद्यपरतो गृह्णतो धनादिविक्रये वा कृते ग्रहीष्यामीति भावनया बन्धनान्नियंत्रणात् रज्ज्वादिसंयमनात् सत्यङ्कारदानादिरूपाद्वा स्वीकृत्य तद्गेह एव स्थापयतोऽतिचारः । क्षेत्रवास्तुनो योजनात् क्षेत्रवास्त्वन्तरमीलनाद्गृहीतसंख्यातिक्रमोऽतिचारो भवति, तथाहि एकमेव क्षेत्रं वास्तु चेत्यभिग्रहवतोऽधिकतरतदभिलाषे सति व्रतभङ्गभयात् प्राक्तनक्षेत्रादिप्रत्यासन्नं तद् गृहीत्वा पूर्वेण सह तस्यैकत्वकरणार्थं वृतिभित्त्याद्यपनयने च तत्तत्र योजयतो व्रतसापेक्षत्वात्कथञ्चिद्विरतिबाधनाच्चाऽतिचारः । रूप्यसुवर्णस्य दानात्—वितरणाद् गृहीतसंख्याया अतिक्रमो यथा केनाऽपि चातुर्मासाद्यवधिना रूप्यादिसंख्या विहिता, तेन च तुष्टराजादेः सकाशात्तदधिकं तल्लब्धं, तच्चान्यस्मै व्रतभङ्गभयाद्ददाति, पूर्णेऽवधौ ग्रहीष्यामीति भावनयेति व्रतसापेक्षत्वात् कथञ्चिद्विरतिबाधनाच्चातिचार इति । गोमनुष्यादेर्गर्भतः संख्यातिक्रमो यथा केनाऽपि संवत्सराद्यवधिना द्विपदचतुष्पदानां परिमाणं कृतं, तेषां च संवत्सराद्यवधिमध्य एव प्रसवेऽधिकद्विपदादिभावाद्व्रतभङ्गः स्यादिति तद्भयात्कियत्यपि काले गते गर्भग्रहणं कारयतो गर्भस्थद्विपदादिभावेन बहिर्गततदभावेन च कथञ्चिद्व्रतभङ्गादतिचारः । कुप्यस्य भावतस्संख्यातिक्रमो यथा कुप्यस्य या संख्या कृता तस्याः कथञ्चिद् द्विगुणत्वे भूते सति व्रतभङ्गभयात्तेषा द्वयेनैकैकं महत्तरं कारयतः पर्यायान्तरकरणेन संख्यापूरणात्स्वाभाविकसंख्याबाधनाच्चातिचार इति उक्ता अणुव्रतानां पञ्च पञ्चातिचारास्संक्षेपेण ॥

१. धनं गरिमधरिममेयपारिच्छेद्यभेदाच्चतुर्धा, यदाह—'गणिम जाइफलफोफलाई धरिमं तु कुंकुमगुडाइं । मेज्जं चोप्पडलोणाइ रयणवत्थाइ परिच्छेज्ज ' इति, धान्यं चतुर्विंशतिधा, सप्तदशधा वा । सस्योत्पत्तिभूमि क्षेत्रं सेतुकेतूभयात्मकभेदात्त्रिधा, अरघट्टजलासेच्य सेतुक्षेत्रं, वारिदजलनिष्पाद्यधान्यं केतुक्षेत्रं, उभयजलनिष्पाद्यसस्यमुभयात्मकं । वास्तु गृहादि ग्रामनगरादि च, गृहादि त्रेधा खात भूगृहादि उच्छ्रितं प्रासादादि उभयविधमुभयं । रूप्यं रजतं स्वर्णं उभयमपि घटितमघटितञ्चानेकप्रकारम् । कुप्यं कांस्यलोहताम्रसीसकादिकम् ॥

ऊर्ध्वाधस्तिर्यक्षु निश्चितमानोल्लङ्घनरूपास्त्रयः क्षेत्रवृद्धिः स्मृतिभ्रंशश्चेति पञ्च प्रथमः गुणव्रतस्यातिचाराः, दिग्व्रतविषयस्य पूर्वादिदेशस्य क्षेत्रस्य ह्रस्वस्य पश्चिमादिक्षेत्रान्तरपरिमाणप्रक्षेपेण दीर्घीकरणं क्षेत्रवृद्धिः, यथा केनाऽपि पूर्वापरदिशोः प्रत्येकं योजनशतं गमनपरिमाणं कृतं, स चोत्पन्नप्रयोजन एकस्यां दिशि नवतिं योजनानि व्यवस्थाप्यान्यस्यां तु दशोत्तरं योजनशतं करोति, उभाभ्यामपि प्रकाराभ्यां योजनशतद्वयरूपस्य परिमाणस्याव्याहतत्वादित्येवमेकत्र क्षेत्रं वर्धयतो व्रतसापेक्षत्वादतिचारश्चतुर्थः । स्मृतिभ्रंशो योजनशतादिरूपदिक्परिमाणविषयस्यातिव्याकुलत्वप्रमादित्वमत्यपाटवादिना भ्रंसः, तथाहि केनचित्पूर्वस्यां दिशि योजनशतरूपं परिमाणं कृतमासीत् गमनकाले च स्फुटतया न स्मरति शतं वा पञ्चाशद्वेति, यदि पञ्चाशतमतिक्रामति तदाऽतिचारः, शतमतिक्रामतस्तु भङ्गः, सापेक्षत्वान्निरपेक्षत्वाच्च तस्मात्स्मर्तव्यमेव गृहीतव्रतं, स्मृतिमूलं हि सर्वमनुष्ठानमिति पञ्चमोऽतिचारः॥

सचित्तः सचित्तप्रतिबद्धः, सम्मिश्रः, अभिषवः, दुष्पक्काहार इति द्वितीयगुणव्रतस्य पञ्चाऽतिचाराः, चित्तेन सह वर्त्तते इति सचित्तः, येन सचित्तस्य परिहारः परिमाणं वा कृतमनाभोगादिना सचित्तमधिकसचित्तं वा खादतस्तस्य सचित्ताहाररूपः प्रथमोऽतिचारः । सचित्तप्रतिबद्धस्सचेतनवृक्षादिसम्बद्धः, गुन्दादि पक्कफलादिर्वा सचित्तान्तर्बीजः खर्जूरादिः तदाहारो हि सचित्ताहारवर्जकस्यानाभोगादिना सावद्याहारप्रवृत्तिरूपत्वादतिचारः, अथवा बीजं त्यक्ष्यामि सचेतनत्वात्तस्य, कटाहं त्वचेतनत्वाद्भक्षयिष्यामीति धिया पक्वं खर्जूरादि फलं मुखे प्रक्षिपतस्सचित्तवर्जकस्य सचित्तप्रतिबद्धाऽऽहारो द्वितीयः । सम्मिश्रः अर्धपरिणतजलादिराद्रकदाडिमबीजपूरकचिर्भटिकादिमिश्रपूरणादिर्वा तिलमिश्रो यवधानादिर्वा, एतदाहारोऽप्यनाभोगातिक्रमादिनाऽतिचारः । अथवा सम्भवत्सचित्तावयवस्यापक्वकणिकादेः पिष्टत्वादिनाऽचेतनमिति बुद्ध्याऽऽहारः सम्मिश्राहारो व्रतसापेक्षत्वादतिचार इति तृतीयः । अभिषवः सुरासौवीरकादि सुरामध्वाद्यभिष्यन्दिवृष्यद्रव्योपयोगो वा, अयमपि सावद्याहारवर्जकस्यानाभोगादिनाऽतिचार इति चतुर्थः । दुष्पक्काहारः अर्द्धस्विन्नपृथुकतन्दुलयवगोधूमस्थूलमण्डककङ्कटुकफलादिरैहिकप्रत्यवायकारी यावता चांशेन सचित्तस्तावता परलोकमप्युपहन्ति, पृथुकादेर्दुष्पक्वतया सम्भवत्सचेतनावयवत्वात्पक्वेनाचेतन इति भुञ्जानस्यातिचार इति पञ्चमः, अमी पञ्च भोजनमाश्रित्य त्यक्तव्याः, भोगोपभोगोत्पादकं व्यापारमाश्रित्य तु पञ्चदशातिचारा धर्मसंग्रहादिग्रन्थेभ्योऽवसेयाः॥ कन्दर्पः, कौत्कुच्यं, भोगभूरिता,

१ स्मृतिभ्रंशादनाभोगाद्वा यदि परिमाणमतिक्रान्तो भवत्तदा ज्ञाते तेन निवर्तितव्यं परतश्च न गन्तव्यम् अन्योऽपि न विसर्जनीयः । अथ नाज्ञया कोऽपि व्रजेत्तदा यत्तेन लब्धं स्वयं विस्मृत्य गतेन वा तन्न गृह्यते तीर्थयात्रादिधर्मनिमित्तं तु नियमितक्षेत्रात्परतोऽपि साधोरिवेर्यासमित्युपयोगेन गच्छतो न दोषः, धनार्जनाद्यैहिकफलार्थमेवाधिकगमनस्य नियमनादिति सम्प्रदायः ॥

संयुक्ताधिकरणत्वं, मौखर्यञ्चेति पञ्चातिचारास्तृतीयगुणव्रतस्य । तत्र हेतुः कामप्रधानो वाक्प्रयोगः कन्दर्पो मोहोद्दीपकं वा कर्मेति भावः । सामाचारी चात्र स्वस्य परस्य वा मोहोद्रेक जनकं हि वाक्यं श्रावकेण न वक्तव्यम्, अट्टहासोऽपि न कल्पते कर्त्तुं, यदि नाम हसितव्यमिति तदेवं प्रमादात्कुर्वतोऽतिचारः । कुत्सितं कुचति कुचभ्रूनयनोष्ठनासाकरचरणमुखविकारैस्संकुचतीति कुत्कुचः, कुदिति कुत्सायां निपातः, तस्य भावः कौत्कुच्यं, अनेकप्रकारा भण्डादिविडम्बनक्रियेत्यर्थः । अथवा कौकुच्यमिति नामत्वे कुत्सितः कुच. संकोचादिक्रियाभाक् तद्भावः कौकुच्यमिति विग्रहः । तत्र परे येन हसन्ति, आत्मनश्च लाघवं भवति तादृशं श्रावकस्य न वक्तुं चेष्टितुं वा कल्पते, प्रमादात्तथाचरणे चातिचारः । भोगभूरिता भोगस्योपभोगस्य च स्नानपानभोजनचन्दनकुंकुमकस्तूरिकावस्त्राभरणादेः स्वस्वीयकुटुम्बव्यापारणापेक्षयाऽधिकत्वम् । भोगबहुत्वस्य प्रमादविषयात्मकत्वात्प्रमादाचरितस्यातिचारः । अत्र सामाचारी—यद्युपभोग्यानि तैलामलकादीनि बहूनि गृह्णाति तदा वह्वौल्येन बहवः स्नातुं तडागादौ व्रजन्ति, ततश्च पूतरकादिवधोऽधिकः स्यात् स्यादेवं ताम्बूलादिष्वपि विभाषा, न चैवं कल्पते, तत्र को विधिरुपभोगे ? स्नानेच्छुना तावद्गृह एव स्नातव्यं, नास्ति चेत्तत्र सामग्री तदा तैलामलकैः शिरो घर्षयित्वा, तानि च सर्वाणि शाटयित्वा तडागादीनां तटे निविष्टोऽञ्जलिभिः स्नाति, तथा येषु पुष्पादिषु कुन्थ्वादयस्सम्भवन्ति तानि परिहरति, एवं सर्वत्र वाच्यमिति । सयुक्ताधिकरणत्वं, अधिक्रियते दुर्गतावात्माऽनेनेत्यधिकरणं उदूखलादि, सयुक्तञ्च तदधिकरणञ्चेति विग्रहः । उदूखलेन मुसलं, हलेन फालः, शकटेन युग, धनुषा च शर इत्यादिरूप मित्यर्थः तद्भावस्सयुक्ताधिकरणत्वम्, एतच्च हिंस्रप्रदानव्रतस्यातिचारः । अत्रापि सम्प्रदायः श्रावकेण हि संयुक्तान्यधिकरणानि च न धारणीयानि, सयुक्ताधिकरणं हि यः कश्चिदाददीत, वियुक्ते तु तत्र परः सुखेन प्रतिषेधितुं शक्यत इति । मौखर्यं, मुखमस्यास्तीति मुखरस्तद्भावो मौखर्यं, धार्ष्ट्यप्रायमसभ्यासम्बद्धबहुप्रलपितम्, अयं पापोपदेशस्यातिचारः, मौखर्ये सति पापोपदेशसम्भवात्, अपध्यानाचरितव्रते त्वनाभोगादिनाऽपध्याने प्रवृत्तिरतिचार इति गुणव्रतस्यातिचाराः ॥ योगदुष्प्रणिधान, स्मृत्यनवधारणं, अनादरश्चेति शिक्षापदव्रतस्य प्रथमस्यातिचाराः । योगदुष्प्रणिधानं त्रिविधं, कायदुष्प्रणिधान वचोदुष्प्रणिधानं मनोदुष्प्रणिधानमिति, कायस्य सावद्ये प्रवर्त्तन कायदुष्प्रणिधानं शरीरावयवाना पाणिपादादीनामनिभृततावस्थानमित्यर्थः, वर्णसस्काराभावोऽर्थानवगमश्चापलञ्च वचोदुष्प्रणिधानम्, क्रोधलोभद्रोहाभिमानेर्ष्यादयः कार्यव्यासङ्गसम्भ्रमश्च मनोदुष्प्रणिधानमिति त्रयोऽतिचाराः । स्मृतेस्सामायिककरणात्रसरविषयायाः कृतस्य वा सामायिकस्य प्रबलप्रमादयोगादनवधारणं स्मृत्यनवधारणम्, मया कदा

सामायिकं कर्त्तव्यं, कृतं मया सामायिकं न वेत्येवंरूपस्मरणभ्रंशोऽतिचारो मोक्षानुष्ठानस्य स्मृतिमूलत्वादिति चतुर्थः । अनादरोऽनुत्साहः, प्रतिनियतवेलायां सामायिकस्याकरणं, यथाकथञ्चिद्वा करणानन्तरमेव पारणञ्चेति पञ्चमोऽतिचारः । ननु सति कायदुष्प्रणिधानादौ सामायिकस्य निष्फलत्वेन वस्तुन एवाभावः स्यात्, अतिचारस्तु तन्मालिन्यरूप एव भवतीति सामायिकस्यैवाभावेऽयमतिचारः कथं स्यादतो भङ्गरूपा एवैते नातिचारा इति चेदुच्यते, अनाभोगादतिचारत्वमिति । ननु द्विविध त्रिविधेनेति सावद्यप्रत्याख्यानं सामायिकं, तत्र च कायदुष्प्रणिधानादौ प्रत्याख्यानभङ्गात्सामायिकाभाव एव तद्भङ्गजनितञ्च प्रायश्चित्तं विधेयं स्यात्, मनोदुष्प्रणिधानञ्चाशक्यपरिहारं मनसोऽनवस्थितत्वादतस्सामायिकप्रतिपत्तेरस्वकाशात्तदप्रतिपत्तिरेव श्रेयसी, यदाहुः—' अविधिकृताद्वरमकृत 'मिति, नैवम्, यतः सामायिकं द्विविधं त्रिविधेन प्रतिपन्नं, तत्र च मनसा वाचा कायेन च सावद्यं न करोमि न कारयामीति षट् प्रत्याख्यानानीत्येकतरप्रत्याख्यानभङ्गेऽपि शेषसद्भावान्मिथ्यादुष्कृतेन मनोदुष्प्रणिधानमात्रशुद्धेश्च न सामायिकात्यन्ताभावः, सर्वविरतिसामायिकेऽपि तथाभ्युपगतं, यतो गुप्तिभङ्गे मिथ्यादुष्कृतं प्रायश्चित्तमुक्तम्, अतो न प्रतिपत्तेरप्रतिपत्तिर्गरीयसीति । किञ्च सातिचारादप्यनुष्ठानादभ्यासतः कालेन निरतिचारमनुष्ठानं भवतीति सूरयः । बाह्या अपि ' अभ्यासो हि कर्मणां कौशलमावहति, न हि सकृन्निपातमात्रेणोदबिन्दुरपि ग्राव्णि निम्नतामादधाती'ति, न चाविधिकृताद्वरमकृतमिति युक्तमस्यासूयावचनत्वात्तस्माद्धर्मानुष्ठानं निरन्तरं कार्यमेव, किन्तु तत्कुर्वता सर्वशक्त्या विधौ यतनीयं, इदमेव श्रद्धालोर्लक्षणमिति ॥ प्रेष्यप्रयोगः प्रेष्यानयनं शब्दानुपातनं रूपानुपातनं पुद्गलप्रेरणञ्चेति पञ्चातिचारा द्वितीयशिक्षापदव्रतस्य, प्रेष्यस्य भृत्यादेर्विवक्षितक्षेत्राद्बहिः प्रयोजनाय व्यापारणं प्रेष्यप्रयोगः । स्वयं हि गमने दिवसप्रहरमुहूर्त्तादिपरिमाणस्य देशावकाशिकस्य व्रतस्य भङ्गः स्यादित्यन्यस्य प्रेषणं, गमनागमनादिव्यापारजनितप्राण्युपमर्दो मा भूदित्यभिप्रायेण हि तद्व्रतं गृह्यते स तु स्वयं कृतोऽन्येन वा कारित इति न कश्चित्फले विशेषः, प्रत्युत स्वयं गमने ईर्यापथविशुद्धेर्गुणः, परस्य पुनरनिपुणत्वादीर्यासमित्यभावे दोष इति प्रथमोऽतिचारः । प्रेष्यानयनं विवक्षितक्षेत्राद् बहिःस्थितस्य सचेतनादिद्रव्यस्य प्रेष्येण विवक्षितक्षेत्रे प्रापणम् । स्वयं गमने हि व्रतभङ्गः स्यात् परेण त्वानयने न भङ्ग इति बुद्ध्या यदाऽऽनाययति सचेतनादिद्रव्यं तदाऽतिचार इति द्वितीयः । शब्दानुपातनं क्षुत्कासितादेश्श्रोत्रेऽवतारणम्, यथा विहितस्वगृहवृतिप्राकारादिव्यवच्छिन्नभूप्रदेशाभिग्रहः प्रयोजने उत्पन्ने विवक्षितक्षेत्राद्बहिर्व्रतभङ्गभयात्स्वयं गन्तुं बहिस्स्थितञ्चाह्वातुमशक्नुवन् वृतिप्राकारादिप्रत्यासन्नवर्त्तीभूय कासितादिशब्दमाह्वानीयानां श्रोत्रेऽनुपातयति, ते च

तच्छ्रवणात्तत्समीपमागच्छन्तीति शब्दानुपातननामाऽतिचारः। रूपानुपातनं यथा रूपं-शरीरसम्बन्धि, उत्पन्नप्रयोजनः शब्दमनुच्चारयन् आह्वानीयानां दृष्टावनुपातयति, तद्दर्शनाच्च ते तत्समीपमागच्छन्तीति रूपानुपातननामातिचारः। पुद्गलप्रेरणं पुद्गलाः परमाणवः तत्संघात-समुद्भवा बादरपरिमाणं प्राप्ता लोष्टादयोऽपि, तेषां क्षेपणं, विशिष्टदेशाभिग्रहे हि सति कार्यार्थी परगृहगमननिषेधाद्यदा लोष्टकान् परेषां बोधनाय क्षिपति पातसमनन्तरमेव ते तत्समीपमनुधावन्ति ततश्च तान् व्यापारयतः स्वयमगच्छतोऽप्यतिचारो भवतीति पञ्चमः। अत्राद्यद्वयमव्युत्पन्नबुद्धित्वेन सहसाकारादिना वा, अन्त्यत्रयन्तु मायापरतयाऽतिचारतां यातीति विवेकः। अत्र दिग्व्रतसंक्षेपकरणमणुव्रतादिसंक्षेपकरणस्याप्युपलक्षणं तेषामपि संक्षेपस्यावश्यं कर्त्तव्यत्वादिति विज्ञेयम्। ननु सर्वत्रातिचारा दिग्व्रतसंक्षेपकरणस्यैव श्रूयन्ते न व्रतान्तरसंक्षेपकरणस्य तत्कथं व्रतान्तरसंक्षेपकरणं देशावकाशिकव्रतमिति चेदुच्यते प्राणातिपातादिव्रतान्तरसंक्षेपकरणेषु वधबन्धादय एवातिचाराः, दिग्व्रतसंक्षेपकरणे तु संक्षिप्तत्वात्क्षेत्रस्य प्रेष्यप्रयोगादयोऽतिचाराः, भिन्नातिचारसम्भवाच्च दिग्व्रतसंक्षेपकरणस्यैव देशावकाशित्वं साक्षादुक्तमिति ॥ अप्रत्युपेक्ष्याप्रमृज्य च संस्तारः, अप्रत्युपेक्ष्याप्रमृज्य चादानं, अप्रत्युपेक्ष्याप्रमृज्य च हानं, अनादरः, अस्मृतिश्चेति पञ्चातिचाराः तृतीयस्य शिक्षा-पदव्रतस्य। तत्राप्रत्युपेक्ष्याप्रमृज्य च संस्तारः, संस्तीर्यते प्रतिपन्नपोषधव्रतेन दर्भकुशकम्बली वस्त्रादिरिति संस्तारः, संस्तारशब्दश्च शय्योपलक्षणम्, तत्र शय्या-शयनं सर्वाङ्गीणं वसतिर्वा, संस्तारश्चार्धतृतीयहस्तप्रमाणः, स च प्रत्युपेक्ष्य प्रमार्ज्य च कर्त्तव्यः, प्रत्युपेक्षणं चक्षुषा निरीक्षणम्, प्रमार्जनञ्च रजोहरणवस्त्रप्रान्तादिना तस्यैव शुद्धीकरणम्। अथाप्रत्युपेक्ष्याप्रमृज्य च संस्तारकं करोति तदा पोषधव्रतमतिचरतीति प्रथमोऽतिचारः। अप्रत्युपेक्ष्याप्रमार्ज्य चादानं, आदानं यष्टिपीठफलकादीनां ग्रहणम्, तदपि यष्ट्यादीनां निक्षेपस्योपलक्षणं तेनोभयमपि प्रत्युपेक्ष्य प्रमृज्य च कार्यम्, अप्रत्युपेक्षितस्याप्रमार्जितस्यादानं निक्षेपश्चातिचार इति द्वितीयः। अप्रत्युपेक्ष्याप्रमार्ज्य च हानं—उत्सर्गस्त्याग इति यावत्, तच्चोच्चारप्रश्रवणखेलसिङ्घाणका-दीनां प्रत्युपेक्ष्य प्रमृज्य च स्थंडिलादौ कार्यम्, अप्रत्युपेक्ष्याप्रमृज्य चोत्सर्जनमतिचार इति तृतीयः। इह चाप्रत्युपेक्षणेन दुष्प्रत्युपेक्षणमप्रमार्जनेन च दुष्प्रमार्जनं सङ्गृह्यते, नञः कुत्सार्थस्यापि दर्शनात् यथा कुत्सितो ब्राह्मणोऽब्राह्मण इत्यादिः। अनादरः-अनुत्साहः पोषधव्रतप्रतिपत्तिकर्त्तव्यतयोरिति चतुर्थः। अस्मृतिः अस्मरणं तद्विषयैवेति पञ्चमः॥ सचित्ते स्थापनं, सचित्तस्थगनं, मत्सरः, काललंघः, अन्यापदेशश्चेति चतुर्थस्य शिक्षापद-व्रतस्य पञ्चातिचाराः, तत्र सचित्ते सचेतने पृथिवीजलकुम्भोपचुल्लीधान्यादौ स्थापनं साधुदेयभक्तादेर्निक्षेपणं तच्चादानबुद्ध्या मातृस्थानतो निक्षिपतीति प्रथमः। सचित्तेन कन्द-

हस्तशीलाङ्गलक्षणैरन्वितो ज्ञानध्यानधनो मौनी सम्यक्त्वमिश्रमिथ्यात्वानन्तानुबन्धिचतुष्टयलक्षणसप्तकातिरिक्तैकविंशतिप्रकृतिरूपस्य मोहनीयस्य प्रशमाय क्षयाय वा निरालम्बनध्यानप्रवेशप्रारम्भं कुरुते । के ते नोकषाया इत्यत्राह–नोकषाया इति । हास्यादय इत्यादिना रत्यरतिशोकभयजुगुप्सा ग्राह्याः, वेदत्रयश्चेति, पुंस्त्रीनपुंसकरूपमित्यर्थः । स्थितिमस्य गुणस्थानस्याह्–अन्तरिति । जघन्या त्वेकः समयः । अत्र वर्त्तमानो जीवः शोकारत्यस्थिराशुभायशोऽसातव्यवच्छेदाद्‌आहारकद्विकबन्धाच्चैकोनषष्टेर्बन्धकः । तथा यदि देवायुरपि न बध्यते तदाष्टपञ्चाशतो बन्धकः । एवं स्त्यानर्द्धित्रिकाहारकद्विकोदयव्यवच्छेदात् षट्सप्ततेर्वेदयिता, अष्टत्रिंशदधिकशतसत्ताकश्च भवति ॥

इदानीमष्टमं गुणस्थानं प्रदर्शयति—

**स्थितिघातरसघातगुणश्रेणिगुणसंक्रमापूर्वस्थितिबन्धात्मकानामर्थानां विशुद्धिप्रकर्षादपूर्वतया निर्वर्त्तनमपूर्वकरणगुणस्थानम् ॥**

स्थितिघातेति । स्थितेर्घातः स्तोककरणं करणविशेषेण, एवं रसघातोऽपि, गुणानां श्रेणिरनन्तगुणवृद्धिकरणम्, गुणेन संक्रमणं–नयनं गुणसंक्रमः, अपूर्वायाःस्थितेर्लघुतया बन्धोऽपूर्वस्थितिबन्धः । एतेषां विशुद्धिविशेषादिदम्प्रथमतया करणं यत्रेत्यर्थः । अपूर्वमभिनवमनन्यसदृशं करणं स्थितिघातरसघातगुणश्रेणिगुणसंक्रमस्थितिबन्धानां पञ्चानां पदार्थानां निर्वर्त्तनं यत्र तदपूर्वकरणमिति व्युत्पत्तेः ॥

स्थितिघातादीनां किं स्वरूपमित्याशङ्कायामाह—

**प्रचुरमानाया ज्ञानावरणीयादिकर्मस्थितेरपवर्त्तनाभिधकरणेन तनूकरणं स्थितिघातः । प्रचुररसस्य तेनैव करणेन तनूकरणं रसघातः । तेनैव करणेनावतारितस्य दलिकस्य प्रतिक्षणमसंख्येयगुणवृद्ध्या विरचनं गुणश्रेणिः ॥**

प्रचुरमानाया इति । गरीयस्या ज्ञानावरणादिकर्मणा स्थितेरपवर्त्तनाकरणेनाल्पीकरणमित्यर्थः । रसघातस्वरूपमाह्—प्रचुररसस्येति । कर्मपरमाणुगतस्निग्धलक्षणस्य प्रचुरीभूतस्य रसस्येत्यर्थः, तेनैव करणेनापवर्त्तनाकरणेनेत्यर्थः, पूर्वगुणस्थानेष्वेतौ द्वावपि विशुद्ध्यल्पतया-

१ कश्चित्प्रमत्तः सन् सुरायुर्बन्धमारभते बन्धं च समापयति तदा सप्त व्यवच्छिद्यन्त इति भावः ।

ऽल्पावेव करोत्यस्मिंस्तु विशुद्धिवृद्धित बृहत्प्रमाणतयेमावपूर्वौ करोति । गुणश्रेणिस्वरूपमाचष्टे—तेनैव करणेनेति । अपवर्त्तनाकरणेनैवोपरितनस्थितेर्विशुद्धिवशादवतारितस्य दलिकस्यान्तर्मुहूर्तं यावदुदयक्षणादुपरि द्रुततरक्षपणाय प्रतिक्षणमसङ्ख्येयगुणवृद्ध्या शुद्ध्यपकर्षतः पूर्वगुणस्थानेषु दलिकरचनामाश्रित्य लघीयस्तया कालतो द्राघीयस्तया दलिकस्याल्पस्यापवर्त्तनाकरणेन कृतस्य कालतो ह्रस्वतरतया दलिकरचनामाश्रित्य च पृथुतरतया बहुतरस्य तस्य यद्विरचन सा गुणश्रेणिरित्यर्थः ॥

गुणसक्रमस्वरूपमाह—

**बध्यमानशुभप्रकृतिष्वबध्यमानाशुभप्रकृतिदलिकस्य विशुद्धितो नयनं गुणसंक्रमः ॥**

बध्यमानेति । गुणेन प्रतिसमयमसङ्ख्येयलक्षणेन गुणकारेण सक्रमो बध्यमानप्रकृतिव्यतिरिक्तप्रकृतिदलिक बध्यमानासु शुभप्रकृतिषु प्रक्षिप्य बध्यमानप्रकृतिरूपतया तस्य परिणमन गुणसक्रम, अपूर्वकरणादारभ्य षट्चत्वारिंशदशुभप्रकृतीना सक्रमो भवति, ताश्च प्रकृतयो मिथ्यात्वातपनारकायुर्वर्जा मिथ्यादृष्टियोग्यास्त्रयोदश, अनन्तानुबन्धितिर्यगायुरुद्योतवर्जास्सास्वादनयोग्या एकोनविंशति, मध्यमकषायाष्टकास्थिराशुभायश कीर्त्तिशोकारत्यसातवेदनीया । तत्र मिथ्यात्वस्यानन्तानुबन्धिनाञ्चापूर्वकरणादर्वागेव सक्रम, अत एवाविरतसम्यग्दृष्ट्यादयश्च क्षपयन्ति । आतपोद्योते च शुभे, अशुभप्रकृतीनामेव गुणसक्रमात् । आयुषाञ्च परप्रकृतौ सक्रमासभवादिह तद्वर्जन बोध्यम् । निद्राद्विकोपघाताप्रशस्तवर्णादिनवकहास्यरतिजुगुप्साना त्वपूर्वकरणे स्वस्वबन्धव्यवच्छेदादारभ्य गुणसक्रमो भवति तदेतदुक्त बध्यमानशुभप्रकृतिष्वबध्यमानाशुभप्रकृतिदलिकस्येति ॥

अपूर्वस्थितिबन्धमाख्याति—

**विशुद्धिप्रकर्षेण गुर्व्याः कर्मस्थितेर्लघुतया बन्धनमपूर्वस्थितिबन्धः । अन्तर्मुहूर्त्तकालमेतत् । अत्रस्थो जीवः क्षपक उपशमकश्चेति द्विविधः ॥**

विशुद्धिप्रकर्षेणेति । प्राक्कर्मणामशुद्धत्वाद्द्राघीयस्तया बद्धाया स्थितेर्विशुद्धिवशात् पल्योपमासङ्ख्येयभागेन हीनहीनतरहीनतमतया बन्धनमपूर्वस्थितिबन्ध इत्यर्थः । अस्य गुणस्थानस्य कालमानमाह—अन्तरिति । जघन्यतस्त्वेकसमय । अत्र श्रेणिद्वय दर्शयितुमाह—अत्रस्थ इति । क्षपणार्हत्वादुपशमनार्हत्वाच्च क्षपणोपशमनाभावेऽपि राज्यार्हकुमारस्य राजवत् तथोच्यत इति बोध्यम् । गुणस्थानेऽस्मिन् नैकालिकानेकजीवापेक्षया प्रतिसमय यथो-

पत्रपुष्पफलादिना तथाविधयैव बुद्ध्या स्थगनं पिधानमिति द्वितीयः । मत्सरः कोपः यथा साधुभिर्याचितः कोपं करोति, सदपि मार्गितं न ददाति अथवाऽनेन तावद्रङ्केण याचितेन दत्तं, किमहं ततो न्यून इति मात्सर्याद्ददाति । अत्र परोन्नतिवैमनस्यं मात्सर्यं, इति तृतीयः । कालस्य साधूचितभिक्षासमयस्य लघो-लंघनमतिक्रमः, अयं भावः कालं न्यूनमधिकं वा ज्ञात्वा साधवो न ग्रहीष्यन्ति, ज्ञास्यन्ति च यथाऽयं ददातीत्येवं विकल्पतो दानार्थमभ्युत्थानमतिचार इति चतुर्थः । अन्यस्य परस्य सम्बन्धीदं गुडखण्डादीत्यपदेशः व्याजोऽन्यापदेशः अयं भावः परकीयमेतत्तेन साधुभ्यो न दीयत इति साधुसमक्षं भणनं, जानन्तु साधवो यद्यस्यैतद्भक्तादिकं भवेत्तदा कथमस्मभ्यं न दद्यादिति साधुसम्प्रत्ययार्थम् अथवास्माद्दानात् मम मात्रादेः पुण्यमस्त्विति भणनमिति पञ्चमः । इत्येवमतिचारा आभोगेनापि विधीयमाना अतिचारा एवेत्युपासकदशाङ्गवृत्तिः । धर्मबिन्दुयोगशास्त्रवृत्त्यादौ तु यदाऽनाभोगादिनाऽतिक्रमणादिना वा एतानाचरति तदाऽतिचाराः अन्यथा तु भङ्गा एवेति भावितमिति संक्षेपः । विस्तरस्तु अन्यग्रन्थेभ्योऽवगन्तव्यः ॥

अस्योत्कृष्टां स्थितिमाह—

**उत्कर्षतो देशोनपूर्वकोटिं यावत्स्थितिकमिदम् ॥**

उत्कर्षत इति । गर्भस्थो हि किल नवमासान् सातिरेकान् गमयति, जातोऽपि चाष्टौ वर्षाणि यावद् विरत्यनर्हो भवति तत ऊर्ध्वं देशविरतिं प्रतिपद्य पूर्वकोटिं जीवति तत उक्तं देशोनेति, किञ्चिदूनवर्षनवकलक्षणेन देशेनोनेत्यर्थः । यतिधर्मासमर्थस्यागारिण इयं देशविरतिर्भवति । अत्रस्थो जीवोऽप्रत्याख्यानकषायचतुष्कमनुष्यत्रिकाद्यसंहननौदारिकद्वयबन्धव्यवच्छेदात्सप्तषष्टेर्बन्धकः । अप्रत्याख्यानकषायनरतिर्यगानुपूर्वीद्वयनरकत्रिकदेवत्रिकवैक्रियद्वयदुर्भगानादेयायशोरूपसप्तदशप्रकृतीनामुदयव्यवच्छेदात्सप्ताशीतेर्वेदयिता, अष्टत्रिंशदधिकशतसत्ताकश्च भवति ॥

अधुना षष्ठं गुणस्थानं निरूपयति—

**संज्वलनकषायमात्रोदयप्रयुक्तप्रमादसेवनं प्रमत्तसंयतगुणस्थानम् । प्रमादाश्च मदिराकषायविषयनिद्राविकथानामानः पञ्च । देशविरत्यपेक्षयाऽत्र गुणानां विशुद्धिप्रकर्षोऽविशुद्ध्यपकर्षश्च, अप्रमत्तसंयतापेक्षया तु**

१ वर्षाणामष्टानामध्ये वर्तमानानां परिभवक्षेत्रत्वेन देशतस्सर्वतो वा चरणपरिणामो न भवति, षाण्मासिकानां वज्रस्वामिनां चरणप्रतिपत्तिस्त्वाश्चर्यभूता कादाचित्कीति बोध्यम् ॥

**विशुद्ध्यपकर्षोऽविशुद्धिप्रकर्षश्च । एतदन्तर्मुहूर्त्तमानमिति केचित् । पूर्वकोटिं यावदित्यन्ये ॥**

संज्वलनेति । यो हि सर्वसावद्येभ्यस्सम्यगुपरतोऽपि केवलसञ्ज्वलनकषायस्य तीव्रोदयान्मदिरादिपञ्चविधप्रमादेष्वन्यतम सर्वान्वाऽन्तर्मुहूर्त्तं सेवते तस्येद गुणस्थानमित्यर्थः, अन्तर्मुहूर्त्तादुपरि सप्रमादश्चेत् तस्मादधःपतनमेव स्यात्, प्रमादरहितश्चेदप्रमत्तगुणस्थानमारोहति । के ते प्रमादा इत्यत्राह–प्रमादाश्चेति । देशविरतगुणपेक्षयैतद्गुणानां विशुद्धिप्रकर्षोऽशुद्ध्यपकर्षश्च, अप्रमत्तसयतगुणापेक्षया तु विपर्ययः, एवं सर्वगुणस्थानेषु भाव्यमित्यभिप्रायेणाह–देशविरत्यपेक्षयेति । अस्य स्थितौ मतभेदं दर्शयत्येतदिति, परतो गुणस्थानान्तरगमनात् मरणाद्वेति भाव, जघन्यतस्त्वेकस्समयस्तदूर्ध्वं मरणभावेनाधोगमनादिति । अष्टवर्षोना पूर्वकोटिं यावदुत्कर्षतः प्रमत्तता स्यादिति केषाञ्चिन्मतमादर्शयति–पूर्वकोटिमिति । षष्ठसप्तमयोर्देशोनपूर्वकोटिं यावत्स्थितेर्व्यवस्था भगवतीसूत्रे त्वेव–प्रमत्ताप्रमत्तगुणस्थाने प्रत्येकमन्तर्मुहूर्त्तप्रमाणे एव, ते च पर्यायेण जायमाने देशोनपूर्वकोटिं यावदुत्कर्षेण भवतः, महान्ति चाप्रमत्तापेक्षया प्रमत्तान्तर्मुहूर्त्तानि कल्प्यन्ते, एव चान्तर्मुहूर्त्तोना प्रमत्ताद्धाना मेलने देशोनपूर्वकोटीकालमानं भवतीति दृश्यते । अत्र जीव प्रत्याख्यानावरणकषायचतुष्कव्यवच्छेदात्रिषष्टेर्बन्धकः । तिर्यग्गतितिर्यगायुर्नीचैर्गोत्रोद्योतप्रत्याख्यानरूपाष्टप्रकृत्युदयव्यवच्छेदादाहारकद्वयोदयाच्चैकाशीतेर्वेदयिता, अष्टत्रिंशदधिकशतसत्ताकश्च भवति ॥

एतर्हि सप्तमं गुणस्थानमाह—

**संज्वलनकषायनोकषायाणां मन्द्रोदयतः प्रमादाभावोऽप्रमत्तसंयतगुणस्थानम् । नोकषाया हास्यादयष्षड् वेदत्रयञ्च । अन्तर्मुहूर्त्तस्थितिकमिदम् ॥**

संज्वलनेति । यत्र हि महाव्रती साधु. सञ्ज्वलनाभिधक्रोधादीना कषायचतुष्टयाना नोकषायाणा नवविधानाञ्च मन्द्रोदयतोऽतीव्रविपाकोदयेन पूर्वोदितपञ्चविधप्रमादरहितो भवति तदप्रमत्तसयतगुणस्थानमित्यर्थः । अत्र नष्टाखिलप्रमादो महाव्रतादिभिरष्टादशस-

---

१. ननुदेशविरतादिवत्प्रचुरमपि काल न कथ प्रमत्तत्व भजेत । यतोऽन्तर्मुहूर्त्तमेव तदिति निश्चय स्यादिति चेन्न, सक्लेशस्थानापेक्ष हि प्रमत्तत्व सक्लेशस्थानानि च सख्ययलोकाकाशप्रदेशप्रमाणानि, यावदुपशमश्रेणिं क्षपकश्रेणिं वा मुनिर्नारोहति तावदवश्य स्वभावादेवान्तर्मुहूर्त्तं सक्लेशस्थानेषु स्थित्वा विशोधिस्थाने याति तत्रापि तावत्कालमेव स्थित्वा सक्लेशस्थान याति, एवमत्र निरन्तर परावृत्ती देशोनपूर्वकोटिं यावत्करोतीत्येकजीवाश्रयेणोत्कर्षतोऽप्यन्तर्मुहूर्त्तमिति भाव ॥

त्तरमधिकवृद्ध्याऽसंख्येयलोकाकाशप्रदेशप्रमाणान्यध्यवसायस्थानानि भवन्ति । आद्यक्षण एवैतद्गुणस्थानप्रपन्नत्रैकालिकनानाजीवाश्रयेण जघन्यादीन्युत्कृष्टान्तानि असंख्येयलोकाकाशप्रदेशप्रमाणान्यध्यवसायस्थानानि भवन्ति, ततोऽधिकाधिकानि द्वितीयादिक्षणेषु तु स्युः । स्वभावविशेषाच्च द्वितीयादिसमयेषु अध्यवसायस्थानानां वृद्धिः । अत्र च प्रथमसमयजघन्याध्यवसायादनन्तगुणविशुद्धं प्रथमसमयोत्कृष्टाध्यवसायस्थानम् । तस्माच्च द्वितीयसमयजघन्याध्यवसायस्थानमनन्तगुणविशुद्धम्, ततश्च तदुत्कृष्टमनन्तगुणविशुद्धमित्येवं यावद् द्विचरमसमयोत्कृष्टाध्यवसायस्थानाच्चरमसमयजघन्याध्यवसायस्थानमनन्तगुणविशुद्धं तस्मादपि तदुत्कृष्टमनन्तगुणविशुद्धमिति । अस्यैव च निवृत्तिबादरसम्परायमिति नामान्तरम् । अनेकजीवानामेतद्गुणस्थानं युगपत्प्रविष्टानां परस्परमध्यवसायस्थानव्यावृत्तेः । एकसमयगतानि चामून्यध्यवसायस्थानानि परस्परं षट्स्थानपतितानीति दिक् ॥ अथ क्षपकश्रेणिरुपशमश्रेणिश्च बोधायोच्यते संक्षेपतः प्रसङ्गात् । वर्षाष्टकोपरि वर्त्तमानो वज्रर्षभनाराचसंहननवान् शुद्धध्यानार्पितमना अविरतदेशविरतप्रमत्ताप्रमत्तसंयतानामन्यतमः पुमान् क्षपकश्रेणिप्रतिपत्ता भवति । केवलं यद्यप्रमत्तसंयतः पूर्ववित्तर्हि शुक्लध्यानोपगतः, शेषस्तु सर्वोऽपि धर्मध्यानोपगतः । सम्प्रति प्रथममनन्तानुबन्धिनां विसंयोजना प्रोच्यते, श्रेणिप्रतिपत्तुरवश्यं पूर्वमनन्तानुबन्धिनो विसंयोजनाया आवश्यकत्वात् । अनन्तानुबन्धिनां विसंयोजकश्चतुर्गतिको जीवस्तत्राऽपि देवो नैरयिको वाऽविरतसम्यग्दृष्टिः, तिर्यक्पञ्चेन्द्रियः सर्वाभिः पर्याप्तिभिः पर्याप्तोऽविरतसम्यग्दृष्टिर्देशविरतो वा, मनुष्यस्त्वविरतसम्यग्दृष्टिर्देशविरतस्सर्वविरतो वा भवति । तत्र यथासम्भवं विशुद्धपरिणामोऽनन्तानुबन्धिनां क्षपणाय यथाप्रवृत्त्यपूर्वानिवृत्तिकरणानि करोति, अन्तरकरणं तु न करोत्यत एव प्रथमस्थितिमपि न करोति, उपशमोऽपि न भवति, तेषां गुणसंक्रमश्चात्रापूर्वकरणप्रथमसमयात्प्रवर्त्तते । तथाहि तादृशसमय एव दलिकमनन्तानुबन्धिनां शेषकषायात्मकपरप्रकृतौ स्तोकं संक्रमयति, द्वितीये समये ततोऽसंख्येयगुणं, तृतीये च ततोऽप्यसंख्येयगुणमेवमेव यावदपूर्वकरणचरमसमयम् । एष गुणसंक्रमः । अपूर्वकरणे उद्वलनासंक्रमानुविद्धगुणसंक्रमेणानन्तानुबन्धिनश्शेषप्रकृतिरूपतया व्यवस्था-

१. यद्यप्यत्र कालत्रयापेक्षणात् अनन्तजीवैरस्य प्रतिपन्नत्वात्प्रतिपत्स्यमानत्वाच्चैतद्गुणस्थानं प्रतिपन्नानामनन्ताध्यवसायस्थानानि प्रसज्यन्ते तथापि बहूनामेतत्स्थानप्रतिपत्तॄणामेकाध्यवसायस्थानवर्तित्वादपि न दोष । अध्यवसायस्थानाना भिन्नत्व एव तथा सम्भवात् ॥ २. अनन्तभागवृद्ध्यसंख्यातभागवृद्धिसंख्यातभागवृद्धि संख्येयगुणवृद्ध्यसंख्येयगुणवृद्ध्यनन्तगुणवृद्धिरूपषट्स्थानपतितानीत्यर्थ. ॥ ३. प्रथमस्थितिखण्डस्य स्थित्यपेक्षया बृहत्तरस्य द्वितीयादिस्थितिखण्डानाञ्च विशेषविशेषहीनाना यद्घातनं तेन निष्पन्नो य उद्वलनासंक्रमस्तदनुविद्ध इत्यर्थ ॥

पनेन विनाशयति। उद्वलनासंक्रमे तु प्रथमतः पल्योपमासंख्येयभागमात्रं स्थितिखण्डमन्तर्मुहूर्त्तेन कालेनोत्किर्यते। उत्कीरणं नाम घनदलान्वितस्याल्पदलोच्चारणं, तदेव चोद्वलनमुच्यते। ततो द्वितीयं स्थितिखण्डं प्रथमस्थितिखण्डाद्विशेषहीनतरं पल्योपमासंख्येयभागमात्रमन्तर्मुहूर्त्तेन कालेन विनाशयति, एवं प्रत्येकमन्तर्मुहूर्त्तेन कालेनोत्कीर्यमाणानि पल्योपमासंख्येयभागमात्राणि स्थितिखण्डानि पूर्वपूर्वस्थित्यपेक्षया विशेषतो हीनानि विनाशयति, इत्येवंरूप उद्वलनासंक्रमः। अनिवृत्तिकरणं च प्राप्तो गुणसंक्रमानुविद्धोद्वलनासंक्रमेणाधस्तादावलिकामात्रं मुक्त्वोपरि निरवशेषानन्तानुबन्धिनो विनाशयति, आवलिकामात्रं तु स्तिबुकसंक्रमेण वेद्यमानासु प्रकृतिषु सङ्क्रमयति, ततोऽन्तर्मुहूर्तात्परतोऽनिवृत्तिकरणपर्यवसाने शेषकर्मणामपि स्थितिघातरसघातगुणश्रेणयो न भवन्ति, किन्तु स्वभावस्थ एव भवति चतुर्विंशतिसत्कर्मा। तदेवं क्षपिताऽनन्तानुबन्धिचतुष्को दर्शनमोहनीयक्षपणाय यतते, तदारम्भको मनुष्यो जिनकालसम्भवी वर्षाष्टकोपरि वर्त्तमानो वज्रर्षभनाराचसंहननश्च भवति। दर्शनमोहक्षपणार्थं यथाप्रवृत्त्यादीनि त्रीणि करणानि करोति, अनिवृत्तिकरणाद्धायाञ्च वर्त्तमानो दर्शनत्रिकस्य स्थितिसत्कर्म तावदुद्वलनासङ्क्रमेणोद्वलयति यावत्पल्योपमासंख्येयभागमात्रमवतिष्ठते, ततो मिथ्यात्वदलिकं सम्यक्त्वमिश्रयोः प्रक्षिपति, तत्रैवं, प्रथमसमये स्तोकं द्वितीयसमये ततोऽसङ्ख्येयगुणमेवं यावदन्तर्मुहूर्त्तचरमसमयं, आवलिकागतं मुक्त्वा शेषं द्विचरमसमयसंक्रमितदलिकादसङ्ख्येयगुणं सङ्क्रमयति, आवलिकागतन्तु स्तिबुकसंक्रमेण सम्यक्त्वे प्रक्षिपति, एवं मिथ्यात्वं क्षपितम्। ततोऽन्तर्मुहूर्त्तेन सम्यङ्मिथ्यात्वमप्यनेनैव क्रमेण सम्यक्त्वे प्रक्षिपति, ततस्सम्यङ्मिथ्यात्वं क्षपितम्। ततस्सम्यक्त्वमपवर्त्तयितुं तथा लग्नो यथाऽन्तर्मुहूर्त्तेन तदप्यन्तर्मुहूर्त्तमात्रस्थितिकं जातं, तच्च क्रमेणानुभूयमानमनुभूयमानं सत् समयाधिकावलिकाशेषं जातं, ततोऽनन्तरसमये तस्योदीरणाव्यवच्छेदस्ततो विपाकानुभवेनैव केवलेन वेदयति यावच्चरमसमयं, ततोऽनन्तरसमयेऽसौ क्षायिकसम्यग्दृष्टिर्जायते। इह यदि बद्धायुः क्षपकश्रेणिमारभते तदाऽनन्तानुबन्धिक्षयानन्तरञ्च मरणसम्भवतो व्युपरमते, ततः कदाचिन्मिथ्यात्वोदयाद्भूयोऽप्यनन्तानुबन्धिन उपचिनोति, तद्बीजस्य मिथ्यात्वस्याविनाशात्। क्षीणमिथ्यादर्शनस्तु नोपचिनोति मिथ्यात्वाभावात्। क्षीणसप्तकः पूर्वबद्धायुराश्रित्य सर्वगतिभाग्भवति यदि तिर्यङ्मनुष्यो वा भवति तदाऽसंख्येयवर्षायुष्केष्वेव। बद्धायुष्कोऽपि यदि तदानीं कालं न करोति तथापि सप्तके क्षीणे नियमादवतिष्ठते, न तु चारित्रमोहक्षपणाय यत्नमादधाति, अथ क्षीणसप्तको गत्यन्तरं संक्रामन् कतितमे भवे

मोक्षमुपयातीति चेदुच्यते तृतीये चतुर्थे वा भवे इति । तथा क्षीणसप्तकः पूर्वबद्धायुष्कोऽपि यदि तदानीं कालं न करोति तर्हि कश्चिद्वैमानिकेष्वेव बद्धायुष्कश्चारित्रमोहनीयोपशमार्थमपि यतते, न शेषभवेषु बद्धायुष्कः । यदि पुनरबद्धायुः क्षपकश्रेणिमारभते ततः सप्तके क्षीणे नियमादनुपरतपरिणाम एव चारित्रमोहनीयक्षपणाय यतते । यतमानश्च तत्र यथाप्रवृत्त्यादीनि त्रीणि करणानि करोति, अप्रमत्तगुणस्थाने यथाप्रवृत्तिकरणमपूर्वगुणस्थानेऽपूर्वकरणमनिवृत्तिबादरसम्परायेऽनिवृत्तिकरणम् । तत्रापूर्वकरणे स्थितिघातादिभिरप्रत्याख्यानप्रत्याख्यानावरणकषायाष्टकमनिवृत्तिकरणाद्धाप्रथमसमये पल्योपमासंख्येयभागमात्रस्थितिकं यथा भवेत्तथा क्षपयति । अनिवृत्तिकरणाद्धायाश्च सङ्ख्येयेषु भागेषु गतेषु स्त्यानर्द्धित्रिकनरकतिर्यग्गतिनरकतिर्यगानुपूर्व्येकद्वित्रिचतुरिन्द्रियजातिस्थावरातपोद्योतसूक्ष्मसाधारणानां षोडशप्रकृतीनामुद्वलनासंक्रमेणोद्वल्यमानानां पल्योपमासंख्येयभागमात्रा स्थितिर्जाता, ततो बध्यमानासु प्रकृतिषु तानि षोडशापि कर्माणि गुणसंक्रमेण प्रतिसमयं प्रक्षिप्यमाणानि निःशेषतोऽपि क्षीणानि भवन्ति, इहाप्रत्याख्यानप्रत्याख्यानावरणकषायाष्टकं पूर्वमेव क्षपयितुमारब्धं परं तन्नाद्यापि क्षीणं केवलमपान्तराल एव पूर्वोक्तं प्रकृतिषोडशकं क्षपितं पश्चात्तदपि कषायाष्टकमन्तर्मुहूर्त्तेन क्षपयतीत्येष सूत्रादेशः । अन्ये त्वाहुः षोडशकर्माण्येव पूर्वं क्षपयितुमारभते केवलमपान्तरालेऽष्टौ कषायान् क्षपयति पश्चात् षोडशकर्माणीति । ततोऽन्तर्मुहूर्त्तेन नवानां नोकषायाणां चतुर्णां सञ्ज्वलनानाञ्चाऽन्तरकरणं करोति । तच्च कृत्वा नपुंसकवेददलिकमुपरितनस्थितिगतमुद्वलनविधिना क्षपयितुमारभते । तच्चाऽन्तर्मुहूर्त्तेन पल्योपमासंख्येयभागमात्रं भवति, ततःप्रभृति बध्यमानासु प्रकृतिषु गुणसंक्रमेण तद्दलिकं प्रक्षिपति, तदेवं प्रक्षिप्यमाणमन्तर्मुहूर्त्तेन निःशेषं क्षीणम् । अधस्तनस्थितिदलिकं च यदि नपुंसकवेदेन क्षपकश्रेणिमारूढस्ततोऽनुभवतः क्षपयति, अन्यथा त्वावलिकामात्रं तद्भवति, तच्च वेद्यमानासु प्रकृतिषु स्तिबुकसंक्रमेण संक्रमयति । तदेवं क्षपितो नपुंसकवेदः । ततोऽन्तर्मुहूर्त्तेन स्त्रीवेदोऽप्यनेनैव क्रमेण क्षिप्यते, ततः षट् नोकषायान् युगपत्क्षपयितुमारभते, ततःप्रभृति च तेषामुपरितनस्थितिगतं दलिकं न पुरुषवेदे संक्रमयति किन्तु सञ्ज्वलनक्रोध एव, एतेऽपि च पूर्वोदितविधिना क्षिप्यमाणा अन्तर्मुहूर्त्तेन निःशेषं क्षीणास्तत्समय एव च

१. यदि स्वर्गे नरके वा गच्छति तदा स्वर्गभवान्तरितो नरकभवान्तरितो वा तृतीयभवे मोक्षमुपयाति, यदि तु तिर्यक्षु मनुष्येषु वोत्पद्यते तदाऽसंख्येयवर्षायुष्केष्वेव, न सङ्ख्येयवर्षायुष्केषु, ततस्तदनन्तरं देवभवं ततश्च्युत्वा मनुष्यभवं ततो मोक्षं यातीति चतुर्थभवे मोक्षगमनम् । इदञ्च प्रायिकं, श्रीकृष्णस्य पञ्चमभवेऽपि मोक्षगमनश्रवणात् । २. नपुंसकवेदेन श्रेणिमारब्धस्येदमर्थं ।

पुंवेदस्य बन्धोदयोदीरणाव्यवच्छेदः, समयोनावलिकाद्विकबद्ध मुक्त्वाऽशेषदलिकक्षयश्च, ततोऽसाविदानीमवेदको जातः, क्रोधं च वेदयतस्तस्य क्रोधाद्धायास्त्रयो विभागा भवन्ति, अश्वकर्णकरणाद्धा किट्टिकरणाद्धा किट्टिवेदनाद्धा चेति, तत्राश्वकर्णकरणाद्धायां वर्त्तमानः प्रतिसमयमनन्तान्यपूर्वस्पर्धकानि चतुर्णामपि सञ्ज्वलनानामन्तरकरणादुपरितनस्थितौ करोति, अथ किमिदं स्पर्धकमुच्यते—इह तावदनन्तानन्तैः परमाणुभिर्निष्पन्नान् स्कन्धान् जीवः कर्मतया गृह्णाति तत्र चैकैकस्मिन् स्कन्धे यः सर्वजघन्यरसः परमाणुस्तस्याऽपि रस केवलिप्रज्ञया छिद्यमानः सर्वजीवेभ्योऽनन्तगुणान् रसभागान् प्रयच्छति अपरस्तानप्येकाधिकानन्यस्तु द्व्यधिकानेवमेकोत्तरया वृद्ध्या तावज्ञेयं यावदन्त्यपरमाणुरभव्यानन्तगुणान् सिद्धानन्तभागेनाधिकान् रसभागान् प्रयच्छति, तत्र जघन्यरसा ये केचन परमाणवस्तेषां समुदायस्समानजातीयत्वादेका वर्गणेत्युच्यते, अन्येषां त्वेकाधिकरसभागयुक्तानां समुदायो द्वितीया वर्गणा, अपरेषां तु द्व्यधिकरसभागयुक्तानां समुदायस्तृतीया वर्गणा, एवमनया दिशैकैकरसभागवृद्धानामणूनां समुदायरूपा वर्गणास्सिद्धानन्तभागकल्पा अभव्यानन्तगुणा वाच्याः। एतासाञ्च समुदाय. स्पर्धकमित्युच्यते। इत ऊर्ध्वमेकोत्तरया निरन्तरया वृद्ध्या प्रवर्धमानो रसो न लभ्यते किन्तु सर्वजीवानन्तगुणैरेव रसभागैः, ततस्तेनैव क्रमेण ततःप्रभृति द्वितीयं स्पर्धकमारभ्यते, एवमेव च तृतीयमेव तावद्वाच्यं यावदनन्तानि स्पर्धकानि, एतेभ्य एव चेदानीं प्रथमादिवर्गणा गृहीत्वा विशुद्धिप्रकर्षवशादनन्तगुणहीनरसाः कृत्वा पूर्ववत्स्पर्धकानि करोति, न चैवंभूतानि पूर्वं कदाचनापि कृतानि ततोऽपूर्वाणीत्युच्यन्ते, अस्यां चाश्वकर्णकरणाद्धायां वर्त्तमानः पुंवेदं समयोनावलिकाद्विकेन कालेन क्रोधे गुणसंक्रमेण संक्रमयन् चरमसमये सर्वसंक्रमेण संक्रमयति, तदेव क्षीणः पुंवेदः[१], अश्वकर्णकरणाद्धायाञ्च समाप्तायां किट्टिकरणाद्धायाञ्च वर्त्तमानश्चतुर्णामपि संज्वलनानामुपरितनस्थितिदलिकस्य किट्टीः करोति, किट्टयो नाम पूर्वस्पर्धकेभ्य प्रथमादिवर्गणा गृहीत्वा विशुद्धिप्रकर्षवशादत्यन्तहीनरसाः[२] कृत्वा तासामेकोत्तरवृद्धित्यागेन बृहदन्तरालतया व्यवस्थापनम्। यथा यासामेव वर्गणानामसत्कल्पनयाऽनुभागभागानां शतमेकोत्तरादि ऽऽऽसीत् तासामेव विशुद्धिप्रकर्षादनुभागभागानां दशकस्य पञ्चदशकादेश्च व्यवस्थापनमिति। एताश्च किट्टयः परमार्थतोऽनन्ता अपि स्थूलजातिभेदापेक्षया द्वादश कल्प्यन्ते, एकैकस्य कषायस्य तिस्रस्तिस्र, तद्यथा, प्रथमा

१ पुंवेदिन प्रारम्भकस्यैतत्। यदा नपुंसकवेदी प्रारम्भक तदा प्रथम स्त्रीवेदनपुंसकवेदौ युगपत्क्षपयति, तत्क्षयसमय एव पुंवेदबन्धव्यवच्छेद । तत पुंवेदहास्यषट्के युगपत्क्षपयति। यदा स्त्रीवेदी प्रारम्भक तदा प्रथम नपुंसकवेद ततस्त्रीवेद क्षपयति तत्क्षयसमकालमेव च पुंवेदबन्धव्यवच्छेद, तत पुंवेदहास्यषट्कयोर्युगपत्क्षय इति ॥ २ पुंवेदिन इत्यर्थ ॥

द्वितीया तृतीया च, एवं क्रोधेन क्षपकश्रेणिं प्रतिपन्नस्य द्रष्टव्यम् । यदा तु मानेन प्रतिपद्यते तदोद्वलनाविधिना क्रोधे क्षपिते सति शेषाणां त्रयाणां पूर्वक्रमेण नव कीट्टीः करोति, मायया चेत्प्रतिपन्नस्तर्हि क्रोधमानयोरुद्वलनविधिना क्षपितयोः सतोः शेषद्विकस्य पूर्वक्रमेण षट् किट्टीः करोति, यदि पुनर्लोभेन प्रतिपद्यते तत उद्वलनविधिना क्रोधत्रिके क्षपिते सति लोभस्य किट्टित्रिकं करोति, एष किट्टिकरणविधिः ॥ किट्टिकरणाद्धायां निष्ठितायां क्रोधेन प्रतिपन्नः सन् क्रोधस्य प्रथमकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयते च तावद्यावत्समयाधिकावलिकामात्रं शेषः । ततोऽनन्तरसमये द्वितीयकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयते च तावद्यावत्समयाधिकावलिकामात्रं शेषः । ततस्तृतीयकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयते च तावद्यावत्समयाधिकावलिकामात्रं शेषः, तिसृष्वपि चामूषु किट्टिवेदनाद्धासूपरितनस्थितिगतं दलिकं गुणसंक्रमेणापि प्रतिसमयमसंख्येयगुणवृद्धिलक्षणेन संज्वलने माने प्रक्षिपति, तृतीयकिट्टिवेदनाद्धायाश्चरमसमये संज्वलनक्रोधस्य बन्धोदयोदीरणानां युगपद्व्यवच्छेदः, सत्कर्मोऽपि च तस्य समयोनावलिकाद्विकबद्धं मुक्त्वाऽन्यन्नास्ति सर्वस्य माने प्रक्षिप्तत्वात्, ततो मानस्य प्रथमकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयते च तावद्यावदन्तर्मुहूर्तं, क्रोधस्याऽपि च बन्धादौ व्यवच्छिन्ने सति तस्य दलिकं समयोनावलिकाद्विकेन कालेन गुणसंक्रमेण संक्रमयन् चरमसमये सर्वं संक्रमयति, मानस्यापि च प्रथमकिट्टिदलिकं प्रथमस्थितीकृतं वेद्यमानं समयाधिकावलिकाशेषं जातं, ततो मानस्य द्वितीयकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयते च तावद्यावत्समयाधिकावलिकामात्रं शेषः, ततस्तृतीयकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयते च तावद्यावत्समयाधिकावलिकामात्रं शेषः, तस्मिन्नेव च समये मानस्य बन्धोदयोदीरणानां युगपद्व्यवच्छेदः, सत्कर्मापि च तस्य समयोनावलिकाद्विकबद्धमेव, शेषस्य क्रोधशेषस्येव मायायां प्रक्षिप्तत्वात्, ततो मायायाः प्रथमकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयते च तावद्यावदन्तर्मुहूर्तं संज्वलनमानस्य च बन्धादौ व्यवच्छिन्ने सति तस्य दलिकं समयोनावलिकाद्विकेन कालेन गुणसंक्रमेण मायायां सर्वं प्रक्षिपति, मायाया अपि च प्रथमकिट्टिदलिकं द्वितीयस्थितिगतं प्रथमस्थितीकृतं वेद्यमानं समयाधिकावलिकाशेषं जातं, ततो मायाया द्वितीयकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयते च तावद्यावत्समयाधिकावलिकामात्रं शेषः, ततस्तृतीयकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयते च तावद्यावत्समयाधिकावलिकामात्रं शेषः, तस्मिन्नेव च समये मायाया बन्धोदयोदीरणानां युगपद्व्यवच्छेदः, सत्कर्मापि च तस्याः

समयोनावलिकाद्विकबद्धमात्रमेव, शेषस्य गुणसंक्रमेण लोभे प्रक्षिप्तत्वात् ततो लोभस्य प्रथमकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयते च तावद्यावदन्तर्मुहूर्त्तं, संज्वलनमायायाश्च बन्धादौ व्यवच्छिन्ने सति तस्या दलिकं समयोनावलिकाद्विकेन कालेन गुणसंक्रमेण लोभे सर्वं संक्रमयति, संज्वलनलोभस्य च प्रथमकिट्टिदलिकं प्रथमस्थितीकृतं वेद्यमानं समयाधिकावलिकामात्रं शेषं जातं, ततो लोभस्य द्वितीयकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयते च, तां च वेदयमानस्तृतीयकिट्टिदलिकं गृहीत्वा सूक्ष्मकिट्टीः करोति तावद्यावद् द्वितीयकिट्टिदलिकस्य प्रथमस्थितीकृतस्य वेद्यमानस्य समयाधिकावलिकामात्रं शेषः, तस्मिन्नेव च समये संज्वलनलोभस्य बन्धव्यच्छेदो बादरकषायोदयोदीरणाव्यवच्छेदोऽनिवृत्तिबादरसम्परायगुणस्थानकव्यवच्छेदश्च युगपज्जायते ततस्सूक्ष्मकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमस्थितिं करोति वेदयते च तदानीमसौ सूक्ष्मसम्पराय उच्यते, पूर्वोक्ताश्चावलिकास्तृतीयकिट्टिगताः शेषीभूतास्सर्वा अपि वेद्यमानासु परप्रकृतिषु स्तिबुकसंक्रमेण संक्रमयति प्रथमद्वितीयकिट्टिगताश्च यथास्वं द्वितीयतृतीयकिट्ट्यन्तर्गता वेद्यन्ते, सूक्ष्मसम्परायश्च लोभस्य सूक्ष्मकिट्टीर्वेदयमानः सूक्ष्मकिट्टिदलिकं समयोनावलिकाद्विकबद्धं च प्रतिसमयं स्थितिघातादिभिस्तावत्क्षपयति यावत्सूक्ष्मसम्परायाद्धायाः संख्येया भागा गता भवन्त्येकोऽवशिष्यते, ततस्तस्मिन् संख्येये भागे संज्वलनलोभं सर्वापवर्त्तनयाऽपवर्त्य सूक्ष्मसम्परायाद्धासमं करोति, सा च सूक्ष्मसम्परायाद्धाऽप्यन्तर्मुहूर्त्तमाना, ततः प्रभृति च मोहस्य स्थितिघातादयो निवृत्ताः, शेषकर्मणान्तु प्रवर्त्तन्त एव, तां च लोभस्यापवर्त्तितां स्थितिमुदयोदीरणाभ्यां वेदयमानस्तावद्गतो यावत्समयाधिकावलिकामात्रं शेषः, तत उदीरणा स्थिता, तत उदयेनैव केवलेन तां वेदयते यावच्चरमसमयं, तस्मिंश्च चरमसमये ज्ञानावरणपञ्चकदर्शनावरणचतुष्कयशःकीर्त्युच्चैर्गोत्रान्तरायपञ्चकरूपाणां षोडशकर्मणां बन्धव्यवच्छेदः, मोहनीयस्योदयसत्ताव्यवच्छेदश्च भवति, ततोऽसौ क्षीणकषायो जायते, तस्य च शेषकर्मणां स्थितिघातादयः पूर्ववत्प्रवर्त्तन्ते यावत्क्षीणकषायाद्धायाः संख्येया भागा गता भवन्त्येकस्संख्येयो भागोऽवतिष्ठते, तस्मिंश्च ज्ञानावरणपञ्चकान्तरायपञ्चकदर्शनावरणचतुष्टयनिद्राद्विकरूपाणां षोडशकर्मणां स्थितिसत्कर्म सर्वापवर्त्तनयाऽपवर्त्य क्षीणकषायाद्धासमं करोति, केवलं निद्राद्विकस्य स्वस्वरूपापेक्षया समयन्यून सामान्यतः कर्मरूपतया तु तुल्यं, सा च क्षीणकषायाद्धाऽप्यन्तर्मुहूर्त्तमाना, ततः प्रभृति च तेषां स्थितिघातादयः स्थिताः, शेषाणान्तु भवन्त्येव, तानि च षोडशकर्माणि निद्राद्विकहीनानि उदयोदीरणाभ्यां वेदयमानस्तावद्गतो यावत्समयाधिकावलिकामात्रं शेषः, तत उदीरणा निवृत्ता, तत आवलिकामात्रं यावदुदयेनैव केवलेन तानि वेदयते यावत्क्षीणकषायाद्धाया द्विचरमसमयम्, तस्मिंश्च द्विचर-

मसमये निद्राद्विकं स्वरूपसत्तापेक्षया क्षीणं, चतुर्दशानां च प्रकृतीनां चरमसमये क्षयः, ततोऽनन्तरसमये केवली जायत इति क्षपकश्रेणिः ॥ अथोपशमश्रेणिस्तदारम्भकोऽप्रमत्तसंयत एव, उपशमश्रेणिपर्यवसाने त्वप्रमत्तप्रमत्तसंयतदेशविरताविरतानामन्यतमो भवति, अन्ये त्वविरतदेशविरतप्रमत्ताप्रमत्तसंयतानामन्यतमोऽनन्तानुबन्धिन. कषायानुपशमयति दर्शनत्रिकादिकं तु सयम एव वर्त्तमान इत्याहुः । तत्र प्रथममनन्तानुबन्धिनामुपशमनाऽभिधीयते, अविरतादीनामन्यतमोऽन्यतमस्मिन् योगे वर्त्तमानस्तेजःपद्मशुक्लेश्यान्यतमलेश्यायुक्तः साकारोपयोगयुक्तोऽन्तःसागरोपमकोटीकोटिस्थितिसत्कर्मा करणकालात्पूर्वमप्यन्तर्मुहूर्त्तं यावद्विशुद्ध्यमानचित्तसन्ततिरवतिष्ठते, तथावतिष्ठमानश्च परावर्त्तमानाः प्रकृतीः शुभा एव बध्नाति, नाऽशुभाः, प्रतिसमयञ्चाऽशुभानां कर्मणामनुभागमनन्तगुणहान्या करोति शुभानाञ्चाऽनन्तगुणवृद्ध्या, स्थितिबन्धेऽपि च पूर्णे सत्यन्यं स्थितिबन्धं पूर्वपूर्वस्थितिबन्धापेक्षया पल्योपमासख्येयभागहीनं करोति, पूर्णे चान्तर्मुहूर्त्ते क्रमेण प्रत्येकमान्तर्मुहूर्त्तिकानि त्रीणि यथाप्रवृत्त्यादीनि करणानि करोति, चतुर्थी तूपशमाद्धां, करणवक्तव्यता च सर्वापि कर्मप्रकृतेरवसेया, अनिवृत्तिकरणाद्धायाश्च संख्येयेषु भागेषु गतेषु एकस्मिन् भागेऽवतिष्ठमानेऽनन्तानुबन्धिनामधस्तादावलिकामात्र मुक्त्वाऽन्तर्मुहूर्त्तमानमन्तरकरणमभिनवस्थितिबन्धाद्धासमेनान्तर्मुहूर्त्तेन करोति, अन्तरकरणदलिकं चोत्कीर्यमाणं बध्यमानासु परप्रकृतिषु प्रक्षिपति प्रथमस्थित्यावलिकागतं च दलिकं स्तिबुकसक्रमेण वेद्यमानासु परप्रकृतिषु प्रक्षिपति, अन्तरकरणे च कृते द्वितीयसमयेऽनन्तानुबन्धिनामुपरितनस्थितिदलिकमुपशमयितुमारभते, तथा हि प्रथमसमये स्तोकं, द्वितीयसमये ततोऽसख्यातगुणं, तृतीयसमयेऽपि ततोऽसख्येयगुणं यावदन्तर्मुहूर्त्तेन साकल्यतोऽनन्तानुबन्धिन उपशमिता भवन्ति, उपशमना नाम यथा रेणुनिकरः सलिलबिन्दुनिवहैरभिषिच्याभिषिच्य द्रुघणादिभिर्निकुट्टितो निस्पन्दो भवति तथा कर्मरेणुनिकरोऽपि विशुद्धिवारिपूरेण परिषिच्य परिषिच्यानिवृत्तिकरणरूपद्रुघणनिकुट्टितः सक्रमणोदयोदीरणानिधत्तनिकाचनाकरणानामयोग्यो भवति, अन्ये त्वनन्तानुबन्धिनामुपशमनां न मन्यन्ते किन्तु विसंयोजनां-क्षपणां, सा च

---

१ या प्रकृतयोऽन्यस्याः प्रकृतेर्बन्धमुदयं वा विनिवार्य स्वकीयं बन्धमुदयमुभयं वा दर्शयन्ति ताः परावर्त्तमानाः । तत्र ज्ञानावरणपञ्चकमन्तरायपञ्चकं दर्शनावरणचतुष्टयं पराघाततीर्थकरोच्छ्वासमिथ्यात्वभयजुगुप्सागुरुलघूपघातनिर्माणतैजसवर्णादिचतुष्ककार्मणानि चेत्येकोनत्रिंशत्प्रकृतयो बन्धमुदयञ्चाश्रित्यापरावर्त्तमानाः, आसां बन्धस्योदयस्य वा शेषप्रकृतिभिर्बध्यमानाभिर्वेद्यमानाभिर्वा हन्तुमशक्यत्वात् । शेषा बन्धमाश्रित्यैकनवतिसंख्या उदयापेक्षया सम्यक्त्वसम्यङ्मिथ्यात्वसहितास्त्रिनवति परावर्त्तमानाः ॥ षोडश कषाया निद्रापञ्चकं च स्वोदये सजातीयप्रकृत्युदयनिरोधात्परावर्त्तमानाः स्थिरशुभादिस्थिराशुभप्रकृतयो बन्धं प्रति परावर्त्तमानाः ॥ इतरास्तु बन्धोदयाभ्यामपि परावर्त्तमाना इति ॥

प्रागेवोक्ता, संप्रति दर्शनत्रिकस्योपशमना भण्यते, इह क्षायोपशमिकसम्यग्दृष्टिः संयमे वर्त्तमानोऽन्तर्मुहूर्त्तेन दर्शनत्रिकमुपशमयति, उपशमयंश्च पूर्वोक्तकरणत्रयनिर्वर्त्तनेन विशुद्धया वर्धमानोऽनिवृत्तिकरणाद्धाया असङ्ख्येयेषु भागेषु गतेष्वन्तरकरणं करोति, तच्च कुर्वन् सम्यक्त्वस्य प्रथमस्थितिमन्तर्मुहूर्त्तमानां स्थापयति मिथ्यात्वमिश्रयोश्चावलिकामात्रं उत्कीर्यमाणञ्च दलिकं त्रयाणामपि सम्यक्त्वस्य प्रथमस्थितौ प्रक्षिपति, मिथ्यात्वमिश्रयोः प्रथमस्थितिदलिकं सम्यक्त्वस्य प्रथमस्थितिदलिकमध्ये स्तिबुकसङ्क्रमेण सङ्क्रमयति, सम्यक्त्वस्य पुनः प्रथमस्थितौ विपाकानुभवत. क्रमेण क्षीणायामुपशमसम्यग्दृष्टिर्भवति, उपरितनदलिकस्य चोपशमना त्रयाणामपि मिथ्यात्वादीनामनन्तानुबन्धिनामुपरितनस्थितिदलिकस्येवावसेया, एवमुपशान्तदर्शनत्रिकः प्रमत्ताप्रमत्तपरिवृत्तिशतानि कृत्वा चारित्रमोहमुपशमयितुकामः पुनरपि यथाप्रवृत्त्यादीनि त्रीणि करणानि करोति, केवलमिह यथाप्रवृत्तिकरणमप्रमत्तगुणस्थानेऽपूर्वकरणञ्चापूर्वकरणगुणस्थाने अनिवृत्तिकरणञ्चानिवृत्तिबादरसंपरायगुणस्थानके अपूर्वकरणे च स्थितिघातादिभिर्विशुद्धय ततोऽनन्तरसमयेऽनिवृत्तिकरणे प्रविशति, अनिवृत्तिकरणाद्धायाश्च सङ्ख्येयेषु भागेषु गतेषु दर्शनसप्तकवर्जितानामेकविंशतेर्मोहनीयप्रकृतीनामन्तरकरणं करोति, तत्र यस्य वेदस्य सञ्ज्वलनस्य चोदयोऽस्ति तयोः स्वोदयकालमाना प्रथमस्थितिं करोति शेषाणामेकादशकषायाणामष्टाना च नोकषायाणामावलिकामात्रं, वेदत्रिकसञ्ज्वलनचतुष्कोदयकालमानमन्तरकरणगतदलिकप्रक्षेपस्वरूपञ्च कर्मप्रकृतिटीकातोऽवसेयम्, अन्तरकरणञ्च कृत्वा ततो नपुंसकवेदमन्तर्मुहूर्तेनोपशमयति, तथाहि प्रथमसमये स्तोकं, द्वितीयसमये ततोऽसङ्ख्येयगुणं, एवञ्च प्रतिसमयमसंख्येयगुणं तावदुपशमयति यावच्चरमसमयं, परप्रकृतिषु च प्रतिसमयमुपशमितदलिकापेक्षया तावदसङ्ख्येयगुणं प्रक्षिपति यावद् द्विचरमसमयम्, चरमसमये तूपशम्यमानं दलिकं परप्रकृतिषु सङ्क्रम्यमाणदलिकापेक्षयाऽसंख्येयगुणं द्रष्टव्यम्। उपशान्ते च नपुंसकवेदे स्त्रीवेदं प्रागुक्तविधिनाऽन्तर्मुहूर्तेनोपशमयति, ततोऽन्तर्मुहूर्तेन हास्यादिषट्कं तस्मिंश्चोपशान्ते तत्समयमेव पुरुषवेदस्य

---

१. अनन्तानुबन्धिवर्जाना द्वादशाना कषायाणा नव नोकषायाणामित्यर्थः ॥ २. स्त्रीवेदनपुंसकवेदयोरुदयकालस्सर्वस्तोक, स्वस्थाने तु परस्पर तुल्य तत पुरुषवेदस्य सङ्ख्येयगुण ततस्सञ्ज्वलनक्रोधस्य विशेषाधिक, ततोऽपि सञ्ज्वलनमानस्य विशेषाधिक, ततोऽपि सञ्ज्वलनमायायास्ततोऽपि संज्वलनलोभस्येति स्वोदयकालप्रमाण वेद्यम्। अन्तरकरणसत्कदलिकप्रक्षेपविधिश्च येषां कर्मणा तदानीं बन्ध उदयश्च विद्यते तेषामन्तरकरणसत्कदलिक प्रथमस्थितौ द्वितीयास्थतौ च प्रक्षिपति, यथा पुरुषवेदारूढ पुरुषवेदस्य। येषा केवलमुदय एव तेषामन्तरकरणसत्कदलिकं प्रथमस्थितावेव प्रक्षिपति, यथा स्त्रीवेदस्य। येषान्तु केवल बन्ध एव तेषा तद्दलिक द्वितीयस्थितावेव प्रक्षिपति, यथा सञ्ज्वलनक्रोधारूढस्य सञ्ज्वलनमानादीनाम्। येषा पुनर्न बन्धो नाप्युदयस्तेषा दलिक परप्रकृतौ प्रक्षिपति यथा द्वितीयतृतीयकषायाणामिति ॥

बन्धोदयोदीरणाव्यवच्छेदः, ततः समयोनावलिकाद्विकेन पुवेदमुपशमयति, ततो युगपदन्तर्मुहूर्त्तमात्रेणाप्रत्याख्यानप्रत्याख्यानावरणक्रोधौ, तदुपशान्तौ च तत्समयमेव संज्वलनक्रोधस्य बन्धोदयोदीरणाव्यवच्छेदः, ततस्समयोनावलिकाद्विकेन सञ्ज्वलनक्रोधमुपशमयति ततोऽन्तर्मुहूर्त्तेनाऽप्रत्याख्यानप्रत्याख्यानावरणमानौ युगपदुपशमयति, तदुपशान्तौ च तत्समयमेव सञ्ज्वलनमानस्य बन्धोदयोदीरणाव्यवच्छेद, ततस्समयोनावलिकाद्विकेन संज्वलनमानमुपशमयति, ततो युगपदन्तर्मुहूर्त्तेनाऽप्रत्याख्यानप्रत्याख्यानावरणमाये उपशमयति, तदुपशान्तौ च तत्समयमेव सञ्ज्वलनमायाया बन्धोदयोदीरणाव्यवच्छेद, ततोऽसौ लोभवेदको जातः, लोभवेदनाद्धायाश्च त्रयो विभागास्तद्यथा–अश्वकर्णकरणाद्धा किट्टिकरणाद्धा किट्टिवेदनाद्धा च, तत्राद्ययोर्द्वयोस्त्रिभागयोर्वर्त्तमानः संज्वलनलोभस्य द्वितीयस्थितेः सकाशाद्दलिकमाकृष्य प्रथमस्थितिं करोति वेदयते च, अश्वकर्णकरणाद्धायाञ्च वर्त्तमानः प्रथमसमय एव त्रीनपि लोभानप्रत्याख्यानप्रत्याख्यानावरणसञ्ज्वलनरूपान् युगपदुपशमयितुमारभते । विशुद्ध्या वर्धमानश्चापूर्वाणि स्पर्धकानि करोति सञ्ज्वलनमायायाश्च बन्धादौ व्यवच्छिन्ने सति ततः समयोनावलिकाद्विकेन सञ्ज्वलनमायामुपशमयति, एवमश्वकर्णकरणाद्धाया गताया किट्टिकरणाद्धाया प्रविशति, तत्र च पूर्वस्पर्धकेभ्योऽपूर्वस्पर्धकेभ्यश्च द्वितीयस्थितिगतं दलिकं गृहीत्वा प्रतिसमयमनन्ता. किट्टीः करोति । किट्टिकरणाद्धायाश्चरमसमये युगपदप्रत्याख्यानप्रत्याख्यानावरणलोभावुपशमयति तदुपशान्तौ च तत्समयमेव सञ्ज्वलनलोभबन्धव्यवच्छेदो बादरसंज्वलनलोभोदयोदीरणाव्यवच्छेदश्च, ततोऽसौ सूक्ष्मसपरायो भवति, तदा चोपरितनस्थितेः सकाशात्कतिपयाः किट्टीः समाकृष्य प्रथमस्थितिं सूक्ष्मसंपरायाद्धातुल्यां करोति वेदयते च, सूक्ष्मसम्परायाद्धा चाऽन्तर्मुहूर्त्तमाना, शेषं च सूक्ष्मं किट्टीकृतं दलिकं समयोनावलिकाद्विकबद्धं चोपशमयति, सूक्ष्मसम्परायाद्धायाश्च चरमसमये सञ्ज्वलनलोभ उपशान्तो भवति, ततोऽनन्तरसमयेऽसावुपशान्तमोहो भवति, स च जघन्येनैकसमयमुत्कर्षेतोऽन्तर्मुहूर्त्तं यावदुपतिष्ठते तत ऊर्ध्वं नियमादसौ प्रतिपतति, प्रतिपातश्च द्विधा भवक्षयेणाद्धाक्षयेण च, तत्र भवक्षयो म्रियमाणस्य, अद्धाक्षय उपशान्ताद्धाया समाप्ताया । अद्धाक्षयेण च प्रतिपतन् यथैवारूढस्तथैव प्रतिपतति, यत्र यत्र बन्धोदयोदीरणा व्यवच्छिन्नास्तत्र तत्र प्रतिपतता सता तेन ता अद्धाक्षयेणारभ्यन्त इति यावत्, प्रतिपतश्च तावत्प्रतिपतति यावत्प्रमत्तसयतगुणस्थान, कश्चित्पुनस्ततोऽप्यधस्तनं गुणस्थानद्विकं याति कोऽपि सास्वादनभावमपि, यः

१. पश्चानुपूर्व्या पतित प्रमत्तगुणस्थानमागत्य तत्र विश्रम्य प्रमत्ताप्रमत्तगुणस्थानयो प्रभूतानि सहस्राणि यावत्परिवृत्तो कृत्वा कश्चिद्देशविरताविरतसम्यग्दृष्टिगुणस्थानद्विकमपि गच्छेदिति भाव । २. येषां मतेनाऽनन्तानुबन्धिनामुपशमना भवति तेषां मतेन कश्चित्सास्वादनभावमपि गच्छेदिति भाव ॥

पुनर्भवक्षयेण प्रतिपतति स नियमादनुत्तरविमानसर्वार्थसिद्धवासिपूत्पद्यते, उत्पन्नश्च प्रथमसमय एव सर्वाण्यपि बन्धनादीनि करणानि प्रवर्त्तयतीति विशेष इत्युपशमश्रेणिः ॥ अस्मिन्नष्टमगुणस्थाने जीवः निद्राद्विकदेवद्विकपञ्चेन्द्रियत्वप्रशस्तविहायोगतित्रसनवकवैक्रियाहारकतैजसकार्मणवैक्रियाङ्गोपाङ्गाहारकाङ्गोपाङ्गाद्यसंस्थाननिर्माणतीर्थकृत्त्ववर्णचतुष्कागुरुलघूपघातपराघातोच्छ्वासरूपद्वात्रिंशत्प्रकृतिव्यवच्छेदात् षड्विंशतिबन्धकः । अन्त्यसंहननत्रिकसम्यक्त्वोदयव्यवच्छेदाद् द्वासप्ततेर्वेदयिता, अष्टत्रिंशदधिकशतसत्ताकश्च भवति ॥

अधुना नवमं गुणस्थानमाचष्टे—

**अन्योऽन्याध्यवसायस्थानव्यावृत्त्यभावविशिष्टसूक्ष्मसम्परायापेक्षस्थूलकषायोदयवत्स्थानमनिवृत्तिकरणगुणस्थानम् । अन्तर्मुहूर्त्तकालमेतत् । अत्रस्थोऽपि द्विविधः क्षपक उपशमकश्चेति । क्षपकश्रेणिस्थः क्षपकः, अयं दर्शनावरणीयप्रकृतित्रिकं नामप्रकृतित्रयोदशकं मोहनीयप्रकृतिविंशतिञ्चात्र क्षपयति । उपशमश्रेणिस्थ उपशमकः । मोहनीयप्रकृतिविंशतिमेवोपशमयत्ययम् ॥**

अन्योऽन्येति । युगपदेव यत्स्थानप्रविष्टानामनेकेषामपि जीवानां परस्पराध्यवसायस्थानानि न व्यावृत्यन्ते तथा सूक्ष्मसम्परायापेक्षया यत्र स्थूलकषायोदयो भवेत् तादृशमनिवृत्तिकरणगुणस्थानमित्यर्थः । युगपदेतद्गुणस्थानं प्राप्तानामनेकेषामपि जीवानामन्योऽन्यमध्यवसायस्थानस्य निवृत्तिर्नास्ति यत्र, यदीयगुणस्थानाद्धायामान्तर्मौहूर्त्तिक्यां प्रथमसमयादारभ्य प्रतिसमयमनन्तगुणविशुद्धं यथोत्तरमध्यवसायस्थानं भवति, यावन्तश्चाऽन्तर्मुहूर्त्ते समयास्तावन्त्येवाऽध्यवसायस्थानानि तत्प्रविष्टानां भवन्ति नाऽधिकानि, एकसमयप्रविष्टानां सर्वेषामप्येकाध्यवसायस्थानत्वात्, तथा सूक्ष्मकिट्टीकृतकषायोदयापेक्षया स्थूलः कषायोदयो भवति तादृशमनिवृत्तिकरणगुणस्थानमिति भावः । अस्योत्कृष्टकालमाह—अन्तरिति । जघन्यतस्त्वेकसमयः । अत्रापि जीवद्वैविध्यं दर्शयति—अत्रस्थोऽपीति । क्षपकस्वरूपमाह—क्षपकेति । कषायाष्टकादीनां क्षपयितेत्यर्थः । काः कर्मप्रकृतीः क्षपयतीत्यत्राह—अयमिति । दर्शनावरणीयत्रिकमिति, निद्रानिद्राप्रचलाप्रचलास्त्यानर्द्धिरूपमित्यर्थः, नामेति, नरकद्विकतिर्यग्द्विकसाधारणोद्योतसूक्ष्मनामैकद्वित्रिचतुरिन्द्रियजात्यातपस्थावररूपमित्यर्थः । मोहनीयेति, अप्रत्याख्यानप्रत्याख्यानकषायनपुंसकस्त्रीवेदहास्यरत्यरतिभयशोकजुगुप्सापुरुषवेदसंज्वलनक्रोध-

१. देवायुर्वर्जायुर्बन्धे उपशमश्रेण्यारोहणाभावादिति भाव ॥

मानमायारूपामित्यर्थः । उपशमकस्वरूपमाह–उपशमेति । कषायाष्टकादीनामुपशमयितेत्यर्थः। मोहनीयेति । अप्रत्याख्यानप्रत्याख्यानसञ्ज्वलनक्रोधमानमायाऽप्रत्याख्यानप्रत्याख्यानलोभहास्यषट्कवेदत्रयरूपविंशतिप्रकृतिमेवेत्यर्थः । अत्रस्थो जीवो हास्यरत्यरतिभयशोकजुगुप्साव्यवच्छेदाद् द्वाविंशतेर्बन्धकः । अत्र षड्विंशतिप्रकृतिभ्यो हास्यादिषट्प्रकृतिविगमे विंशतेरवशेषाद्यद्यपि द्वाविंशतेर्बन्धकत्वमनुपपन्नं तथापि नानाजीवापेक्षया तथोक्तिः, एकजीवापेक्षया तु चतसृणामेवापगमः । हास्यषट्कोदयव्यवच्छेदाच्च षट्षष्टेर्वेदयिता, द्व्युत्तरशतसत्ताकश्च, मानान्तपञ्चत्रिंशत्प्रकृतिसत्ताव्यवच्छेदात् ॥

साम्प्रतं दशमं गुणस्थानस्वरूपमाह—

**मोहनीयविंशतिप्रकृतीनां शमनात् क्षयाद्वा सूक्ष्मतया लोभमात्रावस्थानस्थानं सूक्ष्मसम्परायगुणस्थानम् । अन्तर्मुहूर्त्तमानमेतत् ॥**

**मोहनीयेति** । विंशतिप्रकृतिरूपे मोहे शान्ते क्षीणे वा सूक्ष्मखण्डीभूतातिदुर्जेयसञ्ज्वलनलोभमात्रावस्थानस्य स्थानमित्यर्थः, शमनात् क्षयादिति पदाभ्यामत्रस्थोऽपि जीवः क्षपक उपशमकश्चेति द्विविध इति सूचितम् । अत्र क्षपकश्रेण्या समागत उपशमश्रेण्या समागतश्च सञ्ज्वलनलोभं क्रमेण क्षपयत्युपशमयति चेत्यर्थः । सूक्ष्मतयेति–अनिवृत्तिबादरेण किट्टीकृतत्वादिति भावः । अस्य कालनियममाह–अन्तरिति । उपशान्तकषायस्तु सञ्ज्वलनलोभमुपशमय्यैकादशगुणस्थानं यातीति । क्षपकस्तु लोभं क्षपयित्वोर्ध्वं द्वादशगुणस्थानं यातीति च विज्ञेयम् । सूक्ष्मसम्परायाद्धाचरमसमये तस्य लोभस्य क्षयो वोपशमो वा भवतीति विभावनातोऽन्तर्मुहूर्त्तमानमुक्तम्, अत्रस्थो जीवः पुवेदसञ्ज्वलनचतुष्कबन्धव्यवच्छेदात्सप्तदशकर्मप्रकृतेर्बन्धक , त्रिवेदत्रिसञ्ज्वलनोदयव्यवच्छेदात् षष्टेर्वेदयिता, मायासत्ताव्यवच्छेदाद्द्व्युत्तरशतसत्ताकश्च ॥

उपशमश्रेणिद्वारा समायातस्योपशान्तसञ्ज्वलनलोभस्य प्राप्यं गुणस्थानमेकादशमाह—

**उपशमश्रेण्या सर्वकषायाणामुदयायोग्यतया व्यवस्थापनस्थानमुपशान्तमोहगुणस्थानम्। अत्राष्टाविंशतिमोहनीयप्रकृतीनामुपशमो भवति, उपशान्तमोहस्तूत्कर्षेणाऽन्तर्मुहूर्त्तकालमत्र तिष्ठति । तत ऊर्ध्वं नियमादसौ प्रतिपतति । चतुर्वारं भवत्यासंसारमेषा श्रेणिः ॥**

**उपशमश्रेण्येति** । उपशमश्रेण्या सर्वेषां क्रोधादीनां कषायाणां विद्यमानानामपि भस्म-

च्छन्नाग्निरिव सङ्क्रमणोद्वर्त्तनादिकरणायोग्यतया यत्र व्यवस्थापनं तादृशमुपशान्तमोहगुणस्थानमित्यर्थः, इदमेव चोपशान्तकषायवीतरागच्छद्मस्थगुणस्थानमित्यप्युच्यते, क्रोधमानमायालोभोदयविगमात्, ज्ञानावरणीयादिघातिकर्मोदयावस्थानाच्च । सूक्ष्मस्यापि सञ्ज्वलनलोभस्य सर्वथोपशमनादष्टाविंशतिमोहनीयप्रकृतीनामुपशमो जात इत्याशयेनाह–अत्रेति । एतद्गुणस्थानं उपशमयितुस्स्थितिकालनियममाह–उपशान्तमोहस्त्विति । जघन्येनैकस्समय इत्यपि बोध्यम् । अन्तर्मुहूर्त्तानन्तरमसौ क्व यातीत्यत्राह–तत ऊर्ध्वमिति । उपशान्तस्यावश्यमुदयनियमेनोदिते च चारित्रमोहनीये न्यवर्त्स्यतेति भावः । ननूपशमश्रेणिरेकेनासंसारं कतिवारं कर्त्तुं शक्यत इत्यत्राह–चतुर्वारमिति । एकस्मिन् भवे तूत्कर्षतो द्वौ वारावुपशमश्रेणिं प्रतिपद्यते परन्तु तस्य नियमेन तस्मिन् भवे न क्षपकश्रेणिः, यस्त्वेकवारमुपशमश्रेणिं प्रतिपद्यते तस्य क्षपकश्रेणिर्भवेदपि, आगमाभिप्रायेण तु एकस्मिन् भवे एकामेव श्रेणिं प्रतिपद्यत इति ध्येयम् । ननूपशमश्रेणिमविरतादय एवारभन्ते ते च यथासम्भवं मिथ्यात्वानन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानावरणानामुपशमात्कुर्वन्ति, अन्यथा तेषामुदये सम्यक्त्वादिलाभ एव न स्यात् ततः कथमिदानीमुपशमस्तेषामुच्यत इति चेन्न पूर्वं हि तेषां क्षयोपशम एवासीत् नोपशमस्तत इदानीमुपशमः क्रियते । ननु क्षयोपशमोऽप्युदिते कर्मांशे क्षीणेऽनुदिते चोपशान्ते भवति उपशमोऽपि चैवम्भूत इति तयोर्विशेषाभाव इति चेन्न क्षयोपशमे तदावारकस्य कर्मणः प्रदेशतोऽनुभवनात्, उपशमे तु सर्वथा तदभावात्, ननु यदि सत्यपि क्षयोपशमे मिथ्यात्वानन्तानुबन्ध्यादिकषायाणां प्रदेशानुभवोऽस्ति तर्हि कथं न सम्यक्त्वादिगुणविघातः, तदुदये नियमेन सतोऽपि सम्यक्त्वादेरपगमात्, यथा सास्वादनसम्यग्दृष्टेरिति चेन्न प्रदेशानुभवस्य मन्दानुभावत्वात्, मन्दानुभावो ह्युदयो न स्वावार्यगुणविघातमाधातुमलम्, यथा चतुर्ज्ञानिनो मतिज्ञानावरणादीनां विपाकतोऽप्युदयः । तथाहि मतिज्ञानावरणादिकं कर्म ध्रुवोदयं ध्रुवोदयत्वाच्चावश्यं विपाकतोऽनुभवनीयं, विपाकानुभवापेक्षयैव ध्रुवोदयत्वाभिधानात्, अथ च तत्फलं चतुर्ज्ञानिनो न मत्यादिज्ञानविघातकृद् भवति, तदुदयस्य मन्दानुभावत्वात्, तथाहि विपाकतोऽप्यनुभूयमानं मन्दानुभावोदयत्वान्न स्वावार्यगुणविघाताय प्रभवति, तदा प्रदेशतोऽनुभूयमानमनन्तानुबन्ध्याद्यपि सुतरां तद्गुणविघाताय न भविष्यति, तदुदयस्यातीव मन्दानुभावत्वादिति ॥ अत्रस्थो जीव एकप्रकृतेर्बन्धकः, एकोनषष्टिप्रकृतेर्वेदयिता, अष्टचत्वारिंशदधिकशतसत्ताकश्च भवेदिति ॥

अथ क्षपकश्रेणिमाश्रितस्य विशिष्टतमसङ्ज्वलनलोभस्य तत प्राप्यं स्थानं द्वादशमाचष्टे—

१ पूर्वगुणस्थानेष्वप्युपशमक्रियेदृश्येव सत्ता विज्ञा ॥

**क्षपकश्रेण्या कषायनिस्सत्तापादकं स्थानं क्षीणमोहगुणस्थानम् । क्षपकश्रेणिश्चाभवमेकवारमेव भवति । एतदनन्तरमेव सकलत्रैकालिकवस्तुस्वभावभासककेवलज्ञानावाप्तिः । आन्तर्मौहूर्त्तिकमिदम् ॥**

क्षपकश्रेण्येति । क्षपकश्रेण्या कषायाणा सर्वेषां यत्र सत्तारा्हित्यकरणं तादृशं स्थानं क्षीणमोहगुणस्थानमित्यर्थः, अस्या श्रेण्या आभवमेकधैव सभव इत्याह–क्षपकश्रेणिश्चेति–अत्र चोपान्त्यसमये निद्राप्रचले क्षीणमोहस्यान्त्यसमये च चक्षुर्दर्शनावरणादि दर्शनचतुष्कज्ञानावरणपञ्चकान्तरायपञ्चकानि क्षपयति, ततोऽशेषसामान्यविशेषावभासिकेवलज्ञानवान् भवतीत्याह–एतदनन्तरमेवेति । कालमानमस्याह–आन्तरिति । एतद्गुणवर्त्ती जीवो दर्शनचतुष्कज्ञानावरणान्तरायदशकोच्चैर्गोत्रयशोरूपषोडशबन्धव्यवच्छेदादेकस्य सातवेदनीयस्य बन्धकः, सञ्ज्वलनलोभर्षभनाराचनाराचोदयव्यवच्छेदात्सप्तपञ्चाशत्प्रकृतेर्वेदयिता, लोभसत्ताक्षपकत्वादेकोत्तरशतसत्ताकश्च भवति । तथा चतुर्थगुणस्थान एकप्रकृतेः पञ्चम एकस्याः सप्तमेऽष्टानां नवमे षट्त्रिंशत्प्रकृतीनां द्वादशे सप्तदशप्रकृतीनां क्षय इति कृत्वा क्षीणमोहान्ते त्रिषष्टिप्रकृतीनां स्थितिक्षयः शेषाः पञ्चाशीतिप्रकृतयो जरद्वस्त्रप्रायाः सयोगिगुणस्थाने भवन्तीति ॥

अधुना त्रयोदश गुणस्थानमाह—

**योगत्रयवतः केवलज्ञानोत्पादकं स्थानं सयोगिगुणस्थानम् । इदञ्चोत्कृष्टतो देशोनपूर्वकोटिप्रमाणम् । जघन्यतोऽन्तर्मुहूर्त्तम् ॥**

योगत्रयवत इति । मनोवाक्काययोगात्मकयोगत्रयवतः केवलज्ञानोद्भवप्रयोजकस्थानमित्यर्थः । योगो नाम वीर्यान्तरायक्षयक्षयोपशमसमुद्भूतलब्धिविशेषाविर्भूतो जीवस्य वीर्यविशेषः स्थामोत्साहपराक्रमचेष्टाशक्तिसामर्थ्यादिपर्यायः । स द्विविधः, सकरणोऽकरणश्चेति । ज्ञेयदृश्येष्वखिलवस्तुषूपयुञ्जानस्य केवलिनः केवलज्ञानदर्शनयोर्योऽसावप्रतिघो वीर्यविशेषः सोऽकरणः, स नात्र विवक्षितः । मनोवाक्कायकरणको योगस्त्वत्र विवक्षितः, तैर्योगैरुपेतः केवली सयोगिकेवलीत्युच्यते, केवलिनोऽपि मनोवाक्कायजा योगा भवन्ति । तत्र

---

१. नारकायुष स्थितभाव । २. तिर्यगायुष स्थितभाव । ३. दर्शनमोहनीयसप्तकस्य क्षय देवायुपश्च स्थितभाव । ४ नरकतिर्यग्द्विकसाधारणोद्योतसूक्ष्मविकलत्रिकैकेन्द्रियजातिस्त्यानर्द्धित्रिकातपस्थावरमध्यमाष्टकषायनपुंसकस्त्रीवेदहास्यादिषट्पुंवेदसञ्ज्वलनक्रोधमानमायानामित्यर्थे । ५ सञ्ज्वलनलोभनिद्राद्विकज्ञानान्तरायदशकदर्शनावरणीयचतुष्कक्षय कर्मग्रन्थे तु सञ्ज्वलनलोभस्य दशमान्ते क्षय. ॥

काययोगो गमनागमननिमेषोन्मेषादिषु । वाग्योगो धर्मदेशनादिषु । मनोयोगोऽनुत्तरदेवैर्मनःपर्यववद्भिर्वा मनसा पृष्टस्य मनसैव देशनायां, ते हि भगवत्प्रयुक्तानि मनोद्रव्याणि अवधिज्ञानेन मनःपर्यवज्ञानेन वा पश्यन्ति, दृष्ट्वा च ते विवक्षितवस्त्वालोचनाकारान्यथानुपपत्त्याऽलोकस्वरूपादिकमपि बाह्यमर्थं पृष्टमवगच्छन्तीति । सयोगिकेवल्ययं तीर्थकृदतीर्थकृच्च भवति । येन हि पूर्वस्मिन् भवेऽर्हत्सिद्धप्रवचनगुरुस्थविरबहुश्रुततपस्विषु वात्सल्यादिभिर्विंशतिपुण्यस्थानकैस्तीर्थकृत्कर्माऽर्जितं तस्यात्रोदयात्त्रिभुवनाधिपतिर्जिनेन्द्रस्तीर्थकरश्चतुस्त्रिंशदतिशयैर्युक्तस्तीर्थप्रवर्तको भवति । यस्य तु न तीर्थकृत्कर्म स इतरः सामान्यकेवली, केवलिनामत्र गुणस्थाने स्थितिमाह–इदञ्चेति । चतुरशीतिलक्षेण चतुरशीतिलक्षे गुणिते लब्धा संख्या पूर्वमुच्यते तेषां कोटिः–पूर्वकोटिस्तत्प्रमाणं देशोनमस्य गुणस्थानस्य कालमानमित्यर्थः । देशोनेति, किञ्चिदूनवर्षनवकलक्षणदेशोनेत्यर्थः । जघन्यकालमानमाह–जघन्यत इति । अत्रेदमवसेयं यस्याऽऽयुःपरिस्थितिर्वेदनीयादिकर्मणस्सकाशान्न्यूना भवति तदा स कर्मणां समीकरणार्थं समुद्घातं करोति नेतरः । तत्र वेदनादिभिरेकीभावमुपगतेन जन्तुना बहूनां वेदनीयादिकर्मप्रदेशानां कालान्तरानुभवयोग्यानामुदीरणाकरणेनाकृष्योदये प्रक्षिप्यानुभूय च निर्जरीकरणं समुद्घातः, स च सप्तधा वेदनाकषायमरणवैक्रियतैजसाहारककेवलिभेदात् । वेदनासमुद्घातादयष्षडनुक्रममसातवेदनीयकषायान्तर्मुहूर्त्तावशिष्टायुर्वैक्रियशरीरनामतैजसशरीरनामाहारकशरीरनामकर्माश्रयाः प्रत्येकमान्तर्मुहूर्त्तिकाः, केवलिसमुद्घातस्तु सदसद्वेद्यशुभाशुभनामोच्चनीचैर्गोत्रकर्माश्रयोऽष्टसामयिकः । आहारककेवलिसमुद्घातातिरिक्ताः पञ्चैकेन्द्रियाणां, एत एव वैक्रियवर्जिताश्चत्वारो विकलेन्द्रियाणामसंज्ञिपञ्चेन्द्रियाणाञ्च, सर्वे च मनुष्याणां भवन्ति । अन्तर्मुहूर्त्तावशेषायुः केवली वेदनीयायुषोस्तुल्यताकरणाय नानादिक्षु आ लोकान्तमात्मप्रसारणया दण्डकपाटमन्थनान्तरालपूरणानि चतुर्भिस्समयैः कुर्वन् व्यापीभूत्वा चतुर्भिश्चोपसंहरन् स्वशरीरस्थो भवति, परं तदानीं मनोवाग्योगौ न व्यापारयति । तत्र प्रथमाष्टमसमययोरौदारिकाङ्गयोगः, द्वितीयषष्ठसप्तमसमयेषु औदारिकमिश्रकाययोगः तृतीयचतुर्थपञ्चमसमयेषु च केवलं कार्मणकाययोगो भवति । अत एव तदानीमनाहारकश्च । समुद्घाताच्च निवृत्तो योगत्रयमपि व्यापारयति । ततो योगनिरोधाय ध्यानं ध्यायति । अत्रस्थो जीव एकविधबन्धकः, ज्ञानान्तरायदर्शनचतुष्कोदयव्यवच्छेदाद् द्विचत्वारिंशत्प्रकृतीनां वेदयिता, निद्राप्रचलाज्ञानान्तरायदर्शनचतुष्करूपषोडशप्रकृतीनां सत्ताव्यवच्छेदात्पञ्चाशीतिसत्ताको भवति ॥

सम्प्रत्यन्तिमं चतुर्दशं गुणस्थानमाह—

**योगप्रतिरोधिशैलेशीकरणप्रयोजकं स्थानमयोगिगुणस्थानम् । आदिमह्रस्वपञ्चस्वरोच्चारणाधिकरणकालमात्रमानमेतत् । इति चतुर्दशगुणस्थानानि ॥**

**योगेति** । योगनिरोधावस्थारूपा या शैलेशी तत्करणप्रयोजकं यत्स्थानं तदयोगिगुणस्थानमित्यर्थः, लेश्याविधुरपरमप्रकर्षप्राप्तयथाख्यातचारित्रस्य शीलस्य ईशः शीलेशोऽयोगिकेवली, तस्य त्रिभागेन संकुचिताऽऽत्मदेहस्य इयं शैलेशी, मेरुश्शैलेशः तस्येव या निष्प्रकम्पावस्था भगवतस्सा शैलेशीति वा व्युत्पत्तिः । अत्र पूर्वोक्तस्त्रिविधोऽपि योगः प्रत्येकं सूक्ष्मबादरभेदेन द्विधा, केवलोत्पत्तेरनन्तरं जघन्येनान्तर्मुहूर्त्तकालमुत्कर्षेण देशोनपूर्वकोटिं विहृत्याऽन्तर्मुहूर्त्तावशेषायुष्कस्सयोगिकेवली शैलेशीं प्रतिपित्सुः शुक्लध्यानविशेषध्यायी प्रथमं बादरकाययोगाश्रयेण स्थूलवाङ्मनोयोगयुग्मं सूक्ष्मीकरोति । ततस्सूक्ष्मवाक्चित्तयोरवष्टम्भेन बादरकाययोगं सूक्ष्मत्वं नयति । ततस्सूक्ष्मकाययोगे तिष्ठन् सूक्ष्मवाक्चित्तयोर्निग्रहं करोति, ततश्च तत्रैव तिष्ठन् सूक्ष्मक्रियमनिवृत्तिशुक्लध्यानं ध्यायन् सूक्ष्मकाययोगं स्वात्मनैव निरुणद्धि, अन्यस्यावष्टम्भभूतस्य योगान्तरस्याभावात्, तन्निरोधानन्तरं समुच्छिन्नक्रियमप्रतिपाति शुक्लध्यानं ध्यायन् अ इ उ ऋ लृ इत्यादिमह्रस्वपञ्चस्वरोच्चारणाधिकरणकालमानं शैलेशीकरणमारभते, योगलेश्याकलङ्कविप्रमुक्तयथाख्यातचारित्रस्वामिसम्बन्धिनी या त्रिभागोनस्वदेहावगाहनायामुदरादिरन्ध्रपूरणप्रयुक्तसंकुचितस्वप्रदेशस्यात्मनोऽत्यन्तस्थिराऽवस्थितिस्सा शैलेशी तस्यां करणं—पूर्वरचितशैलेशीसमयसमानगुणश्रेणिकस्य वेदनीयनामगोत्राख्यस्याघातिकर्मत्रितयस्यासंख्येयगुणया श्रेण्याऽऽयुःशेषस्य तु यथास्वरूपस्थितया श्रेण्या निर्जरणं शैलेशीकरणं, तत्राऽसौ प्रविष्टोऽयोगिकेवली भवति । अत्रौदारिकद्विकास्थिरद्विकविहायोगतिद्विकप्रत्येकत्रिकसंस्थानषट्कागुरुलघुचतुष्कवर्णचतुष्कनिर्माणकर्मतैजसकार्मणद्वयप्रथमसंहननस्वरद्विकैकवेदनीयरूपत्रिंशत्प्रकृत्युदयव्यवच्छेदो बोध्यः, मुक्त्युपान्त्यसमये देहपञ्चकबन्धनपञ्चकसंघातपञ्चकाङ्गोपाङ्गत्रयसंस्थानषट्कवर्णपञ्चकरसपञ्चकसंहननषट्कस्पर्शाष्टकगन्धद्वयनीचैर्गोत्रानादेयदुर्भगागुरुलघूपघातपराघातनिर्माणापर्याप्तोच्छ्वासायशोविहायोगतिद्वयशुभाशुभस्थैर्यास्थैर्यदेवगत्यानुपूर्वीप्रत्येकसुस्वरदुःस्वरैकवेदनीया द्वासप्ततिप्रकृतयः क्षयमुपयान्ति, अन्त्यसमये चैकवेद्यादेयपर्याप्तत्रसबादरमनुष्यायुर्यशोमनुष्यगत्यानुपूर्वीसौभाग्योच्चैर्गोत्रपञ्चेन्द्रियत्वतीर्थकृन्नामानीति त्रयोदशप्रकृतीः क्षयं नीत्वा कर्मसम्बन्धविमोक्षलक्षणसहकारि-

१. द्रविडतैलङ्गादिभाषायां एकारौकारयोरपि ह्रस्वत्वात्तद्वारणायादिमेति ॥ २. अत्र केचित् मनुष्यानुपूर्व्या द्विचरमसमये व्यवच्छेद उदयाभावात्, उदयवतीनां हि स्तिबुकसंक्रमाभावात्स्वरूपेण चरमसमये दलिकं दृश्यत एवेति युक्तस्तासां चरमसमये व्यवच्छेदः, आनुपूर्वीनाम्नस्तु क्षेत्रविपा-

समुत्थस्वभावविशेषादूर्ध्वं गच्छन् प्राप्तसिद्धत्वनामा ऋजुश्रेण्या यावत्स्वाकाशप्रदेशेष्विहावगाहस्तावद्रूय एव प्रदेशेभ्य ऊर्ध्वमप्यवगाहमानो विवक्षितसमयाच्चान्यसमयान्तरमस्पृशन् लोकान्त व्रजति न परतोऽपि, धर्मास्तिकायाभावात् तत्र गतश्चाश्वत कालमवतिष्ठत इत्यभिप्रायेणोक्तमादिमेति । एतद्गुणस्थानस्थो जीवोऽबन्धक, उपर्युक्तत्रयोदशप्रकृतिवेदयिता । अन्त्यसमयद्वयात्पूर्वं पञ्चाशीतिसत्ताक, उपान्त्यसमये त्रयोदशप्रकृतिसत्ताक, चरमसमये त्वसत्ताको बोध्य । गुणस्थानेष्वेषु बहुवक्तव्यत्वेऽपि सक्षेपेण ग्रन्थगौरवभिया प्रोक्तमित्याशयेनोपसहरतीति, विस्तरतस्त्वागमेभ्योऽवगन्तव्य इति भाव ॥

इत्थं प्रसङ्गतो गुणस्थानानि सवरस्य विभावनार्थं निरूप्याश्रवता कर्मणा निरोधसाधनभूतास्समित्यादय क्रमेण निरूपयितुमुपक्रमते—

**उपयोगपूर्विका प्रवृत्तिस्समितिः । सेर्याभाषैषणाऽऽदाननिक्षेपोत्सर्गभेदेन पञ्चधा । स्वपरबाधापरिहाराय युगमात्रनिरीक्षणपूर्वक रत्नत्रयफलकं गमनमीर्या । कर्कशादिदोषरहितहितमितानवद्यासन्दिग्धाभिप्रेतशून्यभाषणं भाषा । सूत्रानुसारेणान्नादिपदार्थान्वेषणमेषणा । उपधिप्रभृतीनां निरीक्षणप्रमार्जनपूर्वकग्रहणस्थापनात्मकक्रियाऽऽदाननिक्षेपणा । जन्तुशून्यपरिशोधितभूमौ विधिना मूत्रपुरीषादिपरित्यजनमुत्सर्गः ॥**

उपयोगेति । उपयोगपूर्वकत्वे सति प्रवृत्तित्व लक्षण स्वपरप्राणिपीडापरिहारेच्छया गमनादिप्रवृत्तिरिति भाव । उदासीनप्रवृत्तिवारणाय विशेषण ज्ञानादिवारणाय विशेष्यम्, ईर्यादिपञ्चानामेव समितित्वात् । योगक्रियारूपप्रवृत्तेर्विवक्षणाच्च ज्ञानादिरूपात्मप्रवृत्तौ न दोष । उपयोगपूर्वकत्वस्य माकाङ्क्षवादाकाङ्क्षावारणाय वा प्रवृत्तिपदम् । ता विभजते सेति, समितिरित्यर्थ । पञ्चानामीर्यादीना तान्त्रिकी सज्ञाऽन्वर्था विज्ञेयेति भाव ॥ अथर्यासमितिं स्वरूपयति—स्वपरेति । स्वस्य परस्य वा यथा बाधा न भवत् तथा पुरतो युगमात्र प्रेक्षमाणो बीजहरितादिप्रदेशान् परिहरन् यद्गमन करोति यया च रत्नत्रय सुरक्षित भवत्सेर्यासमितिरित्यर्थ । स्वपरबाधापरिहारप्रयोज्ययुगमात्रनिरीक्षणपूर्वकत्व सति रत्नत्रयफलकत्व सति च गमनत्व लक्षणम् । स्वपरबाधापरिहारप्रयोज्ययुगमात्रनिरीक्षणपूर्वकगमनित्वस्य मत्कारार्थभिगपुरपुरुषपर्यन्तगमनो गमनातिद्वारणाय रत्नत्रयफलकत्व मतीति । धर्मार्थं प्रयतमानस्य

---

किञ्चन भवान्तरालग । नान्य तत्र भवस्थस्य द्विचरमसमय तन्नामसत्ता । इदानीं चरमसमय एव मनुष्यानुपूर्व्यासत्ताकस्य उद नि द्विचरमसमय निमनिप्रकृतीनां चरमसमय । इदानीं सत्ताव्यवच्छेद इति वदन्ति ॥

गमने व्यभिचारवारणाय स्वपरबाधापरिहारप्रयोज्ययुगमात्रनिरीक्षणपूर्वकत्वे सतीत्युक्तम् ॥ भाषासमितेर्लक्षणमाह—कर्कशादीनि । हितं स्वस्य परस्य वा मोक्षपदप्रापणसमर्थं, मितमनर्थकबहुप्रलपनशून्यं प्रयोजनमात्रसाधनं वचनं, अनवद्यं जीवनिकायानामनुपघातकं, असंदिग्धं स्फुटार्थं व्यक्ताक्षरं वा अभिद्रोहशून्यं क्रोधमायालोभैरयुक्तं, एवंविधं कर्कशादिदोषशून्यञ्च भाषणं भाषासमितिरित्यर्थः । अहितामितावद्यसंदिग्धादिवचनवारणाय तत्तत्पदग्रहणमवसेयम् । एषणासमितिमाचष्टे—सूत्रेति । आगमानुसारेणाशनखाद्यस्वाद्यभेदभिन्नस्यान्नस्य, आरनालतण्डुलक्षालनादेरुद्गमादिदोषपरिशुद्धस्य पानस्य, रजोहरणादिचतुर्दशविधोपधीनां स्थविरकल्पयोग्यानां जिनकल्पयोग्यानां द्वादशविधानां आर्यिकायोग्यानां पञ्चविंशतिविधानामुपधीनां गवेषणैषणासमितिरित्यर्थः । सूत्रानुसारेणेत्यनेन दोषवर्जनमभिमतं, तत्राधाकर्मौद्देशिकादिषोडशगृहस्थहेतुका उद्गमदोषाः, धात्रीपिण्डदूतीपिण्डादिषोडशसाधुजन्या उत्पादनादोषाः, उभयजन्याश्च शङ्कितम्रक्षितादयो दशैषणा दोषाः, एभिर्दोषै रहिता अन्नादयः श्रुतचरणधर्मसाधकाः । तथा चोद्गमादिदोषरहिताऽन्नादिपदार्थान्वेषणमेषणासमितेर्लक्षणम् । वनीपककर्तृकभक्ताद्येषणायां व्यभिचारनिरासायोद्गमादिदोषरहितेति ॥ आदाननिक्षेपणासमितिमाख्याति—उपधीति । उपधयश्चतुर्दशविधा द्वादशविधाः पञ्चविंशतिविधाश्च, प्रभृतिपदेन पीठफलकाद्यौपग्रहिकोपकरणानां ग्रहणं, एतेषामुपयोगाय निरीक्ष्य स्थिरतरं प्रमृज्य च रजोहरणेन ग्रहणस्थापनारूपा क्रिया आदाननिक्षेपणासमितिरित्यर्थः । निरीक्षणप्रमार्जनपूर्वकोपधिविषयग्रहणस्थापनात्मकक्रियात्वमस्या लक्षणम्, उदासीनपुरुषकृतोपधिविषयकग्रहणस्थापनात्मकक्रियावारणाय निरीक्षणप्रमार्जनपूर्वकेति ॥ उत्सर्गसमितिस्वरूपप्रकाशनायाऽऽह—जन्तुशून्येति । स्थावरजङ्गमजन्तुशून्यायां परिशोधितभूमावुज्झितव्यवस्तुयोग्यायां विधिना निरीक्षणप्रमार्जनात्मकेन मूत्रपुरीषादीनां परित्याग उत्सर्गसमितिरित्यर्थः । आदिना वस्त्रपात्रादीनां ग्रहणम् । तथा च जीवाविराधनेन योग्यभूमौ विधिना मूत्रपुरीषादित्यजनं लक्षणार्थः, सर्वत्र रत्नत्रयफलत्वं विवक्षणीयं, तेन पूजाद्यभिलाषुकानुष्ठितोक्तक्रियाणां व्युदासः । इति चेष्टावतां संवरसिद्धिफलवत्यः क्रिया उक्ताः ॥

अथ कायादिनिरोधात् संवरफलिका गुप्तीराह—

**योगस्य सन्मार्गगमनोन्मार्गगमननिवारणाभ्यामात्मसंरक्षणं गुप्तिः। सा च कायवाङ्मनोरूपेण त्रिधा । शयनासननिक्षेपादानचंक्रमणेषु चेष्टानियमः कायगुप्तिः । उपसर्गपरीषहभावाभावेऽपि शरीरे नैरपेक्ष्यं, योगनिरोद्धुस्सर्वथा चेष्टापरिहारोऽपि कायगुप्तिः । अर्थचक्षूर्विकारादिसंकेत-**

**हुंकारादिप्रवृत्तिरहितं शास्त्रविरुद्धभाषणशून्यं वचोनियमनं वाग्गुप्तिः। अनेन सर्वथा वाङ्निरोधस्सम्यग्भाषणञ्च लभ्यते। भाषासमितौ सम्यग्भाषणमेव। सावद्यसंकल्पनिरोधो मनोगुप्तिः॥**

**योगस्येति**। कायवाङ्मनोरूपस्य योगस्य ये सन्मार्गगमनोन्मार्गगमननिवारणे ताभ्यामात्मसंरक्षणं गुप्तिरित्यर्थः। योगसम्बन्धिसन्मार्गोन्मार्गप्रवृत्त्यप्रवृत्तिप्रयुक्तात्मसंरक्षणत्वं लक्षणं, तेन वाचि मनसि च गमनागमनयोरसत्त्वेन नाव्याप्तिशङ्का। रागद्वेषापरिणतपुरुषकर्तृकत्वमपि निवेशनीयम्, तेन निबिडबन्धनबद्धतस्करादिकर्तृकयोगसम्बन्धिनिग्रहस्य व्युदासः। योगानां सर्वथा निरोधस्तत्प्रवृत्तिद्वारा मुक्तिमार्गानुकूलपरिणामो वा गुप्तिरिति ध्येयम्। *सर्वथा कायादिचेष्टानिरोधस्यात्र विवक्षितत्वेन गुप्तेर्व्यापकत्वान्न* व्याप्येयोःसमित्यादावतिव्याप्तिशङ्कासम्भवः, परिमितकालविषयस्सर्वयोगनिग्रहोऽपि गुप्तिस्तत्रासमर्थस्य कुशलेषु प्रवृत्तिस्समितिरिति भेदात्। तस्या विभागमाचष्टे सा चेति। तत्र कायगुप्तिं निरूपयति शयनेति। शयनादिविषयककायक्रियानियमत्वं लक्षणं, नेत्रपरिस्पन्दादिस्वाभाविकक्रियायाः कुतूहलेन कृतस्य नियमस्य वारणाय शयनादिविषयकेति। शयनादिविषयकमानसिकनियमवारणाय कायक्रियेति। उच्छृङ्खलपुरुषानुष्ठितशयनादिविषयकनियमवारणाय नियमपदेन शास्त्रीयो नियमो ग्राह्यः। तथा च निशीथिनीप्रथमयामादनन्तरं गुर्वनुज्ञानात्सप्रमाणाया वसतौ स्वावकाशनिरीक्षणप्रमार्जनपूर्वकं संस्तरणपट्टद्वयमास्तीर्य सपादं कायमूर्ध्वमधश्च प्रमृज्यानुज्ञापितसंस्तारकावस्थानोऽनुष्ठितसामायिकविधिर्वामबाहूपधान आकुञ्चितजानुस्ताम्रचूडवद्विहायसि प्रसारितजङ्घः प्रमार्जितपृथ्वीतलन्यस्तपादो वा संकोचसमये भूयः प्रमार्जितसन्दंशक उद्वर्तनकाले च रजोहरणेन प्रमृष्टकायो नात्यन्तं तीव्रनिद्रश्शयीत। यत्र भुवि विवक्षितमासनं तत्रावेक्षणप्रमार्जने विधाय वहिर्निषद्यामास्तीर्य निविशेत, निविष्टोऽप्याकुञ्चनप्रसारणादिकं पूर्वेणैव विधिना कुर्वीत, वर्षादिषु च वृसिकापीठिकादिकमनेनैव विधिनावेक्ष्य प्रमृज्य च तत्र सन्निवेशनं कुर्वीत। दण्डकोपकरणचेष्टाभोजनादिविषयौ निक्षेपादानावपि वीक्षणप्रमार्जनपूर्वकौ निर्दुष्टौ स्याताम्। गमनमपि प्रयोजनवतो युगमात्रप्रदेशविन्यस्तदृष्टेर्जीवपरित्यागेन मन्दं मन्दं पदं न्यसतः प्रशस्तं स्यादित्यादिरूपाः कर्तव्याकर्तव्यविषयाश्शास्त्रीया व्यवस्था अवगन्तव्याः, एवमन्येऽपि नियमाः

१. गुप्तेर्व्यापकत्वञ्च यस्समितस्स नियमाद्गुप्तः गुप्तो हि प्रवीचाराप्रवीचाररूपः प्रवीचारो नाम कायिको वाचिको व्यापारः तथा च यस्समितः गमनागमनभाषणादिरूपेण प्रवृत्तस्स गुप्तोऽपि भवति। यस्तु कायवाचौ निरुध्य शुभं मन उदीरयन् धर्मध्यानानुप्रयुक्तचित्तो भवति॥ गुप्त उच्यते न तु समितः केवलाप्रवीचाररूपत्वादस्येति बोध्यम्॥

शास्त्रीयाः प्रदर्श्यन्ते उपसर्गेति, उपसर्गो देवादिकृतोपद्रवाः परीषहा अग्रे वक्ष्यमाणाः क्षुधादयः, तेषां भावेऽभावे वा स्वीये शरीरे यन्नैरपेक्ष्यमभिमानाभावस्सा कायगुप्तिरित्यर्थः, सति ह्यभिमाने तद्वारणायासती कायचेष्टा स्यादेवेति नियमभङ्गस्स्यादिति भावः । अपरमपि नियममाह–योगेति । योगः शरीरवाङ्मनोरूपस्तस्य निरोद्धुः केवलिनः कायोत्सर्गभाजो वा यस्सर्वथा कायचेष्टापरिहारस्साऽपि कायगुप्तिरित्यर्थस्तदुक्तम् ' कायक्रियानिवृत्तिः कायोत्सर्गे शरीरगुप्तिस्स्या 'दिति । यद्यपि कायव्यापारो मनोव्यापारसंसृष्ट एव, तथापि कायचेष्टायास्साक्षात्कायेनैव निष्पादितत्वात् बहिरुपलक्ष्यमाणत्वाच्च प्राधान्येन विवक्षा ॥ वाग्गुप्तेस्स्वरूपमाह–अर्थवदिति । न केवलं वचोनियमनमात्रं वचोगुप्तिः, सार्थकभ्रूविकारादिसहितवचोनियमस्य वाग्गुप्तित्वापत्तेरित्यत आहार्थवदित्यादि । कस्मैचित्प्रयोजनाय कृतैर्भ्रूविकारादिसङ्केतैर्हुंकारादिप्रवृत्तिभिश्च रहितमित्यर्थः । आद्येनादिना नेत्रमुखकरादिनर्तनस्य, द्वितीयेन च शरलोष्टोत्क्षेपादेर्ग्रहणम् । यद्वा शास्त्रानुसारिभाषणमपि वाग्गुप्तिर्भवतीत्याह–शास्त्रविरुद्धभाषणशून्यमिति । ननु शास्त्रविरुद्धभाषणशून्यमित्यनेन शास्त्रानुसारिभाषणरूपवचोलाभेन योगनिरोद्धुस्सर्वथा मौनरूपाया गुप्तौ लक्षणमिदमव्याप्तमतिव्याप्तञ्च भाषासमितावित्यत्राह–अनेनेति । तथा च नियमनशब्दस्य शास्त्रानुसारिवचनेऽवचने च रूढत्वेन नाव्याप्तिः । सम्यग्भाषणञ्चेति । सम्यगुपयुक्तस्य लोकागमाविरोधेन भाषणमित्यर्थः, ननु भाषासमितौ कथमतिव्याप्तिपरिहार इत्यत्राह–भाषासमिताविति । एवशब्देनाभाषणस्य व्युदासः । भाषणाभाषणरूपत्वाद्वाग्गुप्तेर्भाषणमात्रस्वरूपभाषासमित्यपेक्षया वैलक्षण्यं व्यापकत्वं चात एव शास्त्रानुसारिभाषणरूपमित्यनुक्त्वा शास्त्रविरुद्धभाषणशून्यमित्युक्तम् । उक्तञ्च ' अनृतादिनिवृत्तिर्वा मौनं वा भवति वाग्गुप्ति ' रिति ॥ अथ मनोगुप्तिमाह–सावद्येति । अवद्यं गर्हितं पापं तेन सहितो यस्सङ्कल्पश्चिन्तनमार्तरौद्रध्यानरूपं चित्तचाञ्चल्यं वा तस्य निरोधोऽकरणमित्यर्थः । सावद्यसङ्कल्पनिरोधस्य लक्षणम्, अनेन च निरवद्यसङ्कल्पस्सरागसंयमादौ, संसारहेतौ च सङ्कल्पनिरोधश्च मनोगुप्तिरिति लभ्यते । न सर्वथा मनोनिरोधोऽसम्भवात् योगनिरोधावस्थामन्तरेण तदसम्भवात् ॥

अथ समितिगुप्त्योस्संवरहेतुत्वमभिधायानन्तरोद्दिष्टस्य परीषहस्य स्वरूपमुपदर्शयति—

**प्रतिबन्धकसमवधाने सत्यपि समभावादविचलनं परीषहः ॥**

प्रतिबन्धकेति । समन्तादापतितेषु मविधिभक्तपानाद्यलाभादिषु समभावाद् वैगुण्यमनवलम्ब्याविचलनं निष्प्रकम्पचित्ततयाऽवस्थानं परीषह इत्यर्थः । परिपूर्वात्सहेर्भावेऽच्प्रत्ययः परिषहणं परीषहः, क्षुधादिजय इत्यर्थः । न तावदच्प्रत्ययः पचादिनिबन्धनः कर्तरि तस्य

विधानात् । न कर्मसाधनो घञ्, सहेरुपधावृद्धिप्रसङ्गात्, नाऽपि पुंसि संज्ञायां घः, तस्य करणाधिकरणयोर्विधानात् । प्रतिबन्धकसमवधानेऽपि माम्यतया क्षुधादिजन्यदुःखसहनत्वं लक्षणम् । क्लेशेन दुःखसहनस्य परीषहत्वाभावात्साम्यतयेति । परीषहपदवाच्यानां क्षुधादिजयानामात्यन्तिकनिवृत्तिसाधनसम्यग्दर्शनादितोऽच्यवनं कर्मनिर्जरणञ्च प्रयोजनम् । तत्र परीषहाः सोढव्याश्च नैगमसंग्रहव्यवहारर्जुसूत्रनयेनाविरतदेशविरतविरतानां भवन्ति, त्रयाणामपि परीषहवेदनीयासातादिकर्मोदयजनितस्य क्षुधादेस्तत्सहनस्य च यथायोगं सकामाकामनिर्जरहेतोस्सम्भवात् । शब्दसमभिरूढैवम्भूतानां मतेन विरतस्यैव भवन्ति निरुपचरितपरीषहशब्दप्रवृत्तेस्तत्रैव सम्भवात् । उत्पादकमेषां द्रव्यं नैगमनयेन जीवो जीवाः, अजीवोऽजीवाः, जीवाजीवौ, जीवा अजीवः, जीवोऽजीवाः, जीवा अजीवाश्चेत्यष्टौ । संग्रहनये जीवोऽजीवो वा, न द्वित्वबहुत्वे । व्यवहारेऽजीव एव, शेषाणां मतेन जीव एव परिषह्यमाणस्यैव परीषहत्वात्परिषहणस्योपयोगात्मकस्य जीवस्वाभाव्येन जीवद्रव्यत्वात् । गुणसंहतिरूपस्यैव द्रव्यत्वाच । तत्तल्लक्षणनिरूपणावसरे कर्मप्रकृतयः पुरुषाश्च वक्ष्यन्ते । एषणीयस्य अनेषणीयस्य चाग्रहणात् ग्रहणे वाऽपरिभोगात् नैगमसङ्ग्रहव्यवहाराणां मतेन सहनं भवति, स्थूलदर्शिनामेषामन्नादिपरिहारस्यैव क्षुधादिसहनत्वेनेष्टत्वात्, शेषाणां मतेन तु नाभुञ्जानस्यैव तत्सहनमपि तु प्रासुकमन्नादिकल्प्यञ्च गृह्णतो भुञ्जानस्याऽपि भवति भावप्रधानत्वात् । यदाश्रित्य क्षुधादिर्भवति तद्वस्त्वेव परीषह इति नैगमः, क्षुधादिजनिता वेदना तदुत्पादकञ्च परीषह इति सङ्ग्रहव्यवहारौ, वेदनां प्रतीत्य जीवे परीषह इति ऋजुसूत्रः, परीषहोपयुक्त आत्मैव परीषह इति शब्दसमभिरूढैवम्भूताः । एकजीवापेक्षया जघन्योत्कृष्टत एषां वर्त्तनाऽग्रे वक्ष्यते । नैगमसङ्ग्रहव्यवहाराणां मतेन वर्षलक्षणं कालमाश्रित्य परीषहो भवति उत्पादकवस्तूनामपि परीषहत्वोक्तेः, ऋजुसूत्रमतेऽन्तर्मुहूर्त्तं, वेदनाया उपयोगात्मिकायास्तावन्मानत्वात् । शब्दादिनयमतेन एकस्समयस्तन्मतेनोपयोगात्मकपर्यायस्य प्रतिसमयमन्यान्यत्वात् ॥

परीषहभेदश्च सम्बन्धितया कतिविध इत्याशङ्कायां तं विभजते—

**स च क्षुत्पिपासाशीतोष्णदंशावस्त्रारतिवनिताचर्यानैषेधिकशय्याऽऽ-**

१. चपेटादिना पुरुषेणोदीरितत्वाज्जीवो निमित्त, बहुभिस्तथात्वे जीवा, जीवप्रयोगरहितेन पृष्ठपाषाणचेतनेनोदीरितत्वादजीव, बहुभिरजीवैस्तथात्वेऽजीवा., कुण्टेन काष्ठादिना तथात्वे जीवाऽजीवौ, अनेकपुरुषैरेकेन शिलादिना तथात्वे जीवा अजीवश्च, कुण्टकेनानेकबाणादिभिस्तथात्वे जीवोऽजीवाश्च, बहुभिर्कुण्टैर्बहुभिर्बाणादिभिस्तथात्वे तु जीवा अजीवाश्चेति भाव । न द्वित्वबहुत्वे इति, सामान्यमात्रविषयत्वान्नयस्येति भाव । अजीव एवेति, कर्मण एव कारणत्वात्तस्यैव च सर्वजनप्रतीतिनिमित्तत्वादिति भावः ॥

**क्रोशवधयाचनाऽलाभरोगतृणस्पर्शमलसत्कारप्रज्ञाऽज्ञानसम्यक्त्वरूपेण द्वाविंशतिविधः। सत्यामप्यतिशयितक्षुद्वेदनायां सविधिभक्ताद्यलाभेऽपि क्षुधोपसहनं क्षुत्परीषहः। सत्यां पिपासायामदुष्टजलाद्यभावेऽपि तृट्परिषहणं पिपासापरीषहः। प्रचुरशीतबाधायामप्यत्यल्पैरेव वस्त्रादिभिश्शीतोपसहनं शीतपरीषहः। प्रभूतोष्णसन्तप्तोऽपि जलावगाहनाद्यनासेवनमुष्णपरीषहः।**

स चेति। परीषहश्चेत्यर्थः, द्वाविंशतिविध इत्यनेन सम्बन्धः। ननु सहनस्वरूपस्य परीषहस्याविशेषेण कथं द्वाविंशतिविधत्वमित्यत्राह–क्षुदिति। तथा च परिसोढव्यानां क्षुधादीनां द्वाविंशतिविधत्वेन तत्साध्यसहनस्याऽपि द्वाविंशतिविधत्वमिति भाव.। सम्यक्त्वरूपेणेति, साध्यत्वादिति शेषः। न च परिषह्यन्त इति कर्मव्युत्पत्त्या व्युत्पन्नेन बाहुलकघप्रत्ययान्तेन परीषहशब्देन क्षुधादय एव वाच्या इति वाच्यम्। क्षुधादीनां सवर रूपस्याभावात्। तज्जयस्यैव तथात्वात् सवररूपस्यैव परीषहस्य वाच्यत्वात्। अत एव सर्वत्र मूले जयपरत्वेनैव परीषहा लक्षिता इति॥ अथातिदुस्सहत्वात्क्षुद्वेदनायास्तत्सहनरूपक्षुत्परीषहमेवादौ लक्षयति–सत्यामपीति। अनशनाध्वरोगतपस्स्वाध्यायश्रमवेलातिक्रमावमौदर्यासद्वेद्योदयादिभ्यो जठरविदाहिन्या शरीरेन्द्रियहृदयसंक्षोभिकायां क्षुद्वेदनायां समुदितायां तस्याः सहनं क्षुत्परीषह इति भावः। क्रोधादिजन्यक्षुधुपसहनस्य परीषहत्ववारणाय सविधिभक्ताद्यलाभेऽपीति, एतेनास्य विशेषणस्यातिशयताद्योतकत्वेन साम्यताया लाभात् साम्यताप्रयुक्तक्षुधोपसहनत्वस्यैव लक्षणार्थत्वेन क्रोधादिजन्यक्षुधोपसहने क्रोधप्रयुक्तत्वस्यैव सत्त्वान्नातिव्याप्तिरेवमग्रलक्षणेष्वपि भाव्यम्, शास्त्रप्रतिपादितेन भक्तेन तां शमयतोऽनेषणीयञ्च समुत्सृजतः क्षुत्परीषहः, लक्षणन्तु सविधिभक्ताद्यलाभेऽपि क्षुधोपसहनत्वमेवेति ध्येयम्। क्षुधायाश्चतुर्दशस्वपि गुणस्थानेषु सम्भवस्तत्कारणस्य वेदनीयस्य सद्भावादिति॥ बुभुक्षापीडितस्य पिपासासम्भवात्तज्जयरूप पिपासापरीषहमाह–सत्यामिति। स्नानावगाहपरिषेकत्यागिनोऽतिलवणस्निग्धरूक्षविरुद्धाहाराऽऽतपानशनपित्तज्वरादिभिरुदितां शरीरेन्द्रियशोषिकां पिपासां क्षुद्भिन्नसामर्थ्यवती प्रत्यनाद्रियमाणस्य, निदाघेऽपि विहारादिषु हृदेष्वासन्नेष्वप्यप्कायिकजीवपरिज्ञानेन जलमनाददानस्य, भिक्षाकालेऽप्यनेषणीयजलाद्यनभिलाषुकस्य पिपासासहनं जायत इति भावः। अदुष्टजलाद्यभावेऽपि तृट्परिषहणत्वं लक्षणं, कृत्यमूह्यम्। पिपासेयं सर्वेष्वपि गुणस्थानेषु सम्भविनीति॥ शीतपरीषहमाह–प्रचुरेति। महत्यपि शीते जीर्णवसने नाकल्प्यानि वासांसि गृह्णाति, शीतत्राणायाऽऽगमोक्तेन विधिनैषणीयमेव कल्पादि गवेषयेत्परिभुञ्जीत वा, नापि शीतार्तो ज्वलनं ज्वालयेत्, नान्यज्वालितं वा

सेवेत, एवमनुतिष्ठता शीतोपसहनं कृतं भवेदिति भावः। सर्वेषु गुणस्थानेषु शीतं सम्भवि ॥ उष्णपरीषहमाचष्टे—प्रभूतेति। पटीयो नैदाघदिवाकरकरनिकरसन्तप्तकलेवरस्य तृष्णानशनपित्तरोगघर्मश्रमार्दितस्य स्वेदशोषदाहाभ्यर्दितस्य जलावगाहनव्यजनवातावलेपनकदलीपत्राद्यासेवनविमुखस्य पूर्वानुभूतशीतलद्रव्यप्रार्थनापेतान्तरङ्गस्योष्णवेदनाप्रतीकारक्रियानादरस्य चारित्रिणश्चारित्ररक्षणायोष्णतासहनमुष्णपरीषह इति भावः, प्रभूतोष्णसन्तापेऽपि जलावगाहनाद्यनासेवनत्वं लक्षणम्। चारित्रिकर्तृकत्वं सर्वत्र वाच्यमन्यथा पूजाद्यभिलाषिणाऽनुष्ठितताद्दशानासेवनस्याप्युष्णपरीषहत्वप्रसक्तिः स्यात्, उष्णोऽयमखिलेषु गुणस्थानेषु सम्भवी॥

दंशपरीषहं निर्वक्ति—

**समभावतो दंशमशकाद्युपद्रवसहनं दंशपरीषहः। एते वेदनीयक्षयोपशमजन्याः। सदोपवस्त्रादिपरिहारेणाल्पमूल्याल्पवस्त्रादिभिर्वर्त्तनमचस्त्रपरीषहः। अप्रीतिप्रयोजकसंयोगसमवधाने सत्यपि समतावलम्बनमरतिपरीषहः। कामबुद्ध्या स्त्र्याद्यङ्गप्रत्यङ्गादिजन्यचेष्टानामवलोकनचिन्तनाभ्यां विरमणं स्त्रीपरीषहः। एते च चारित्रमोहनीयक्षयोपशमजन्याः॥**

समभावत इति। दंशमशकमत्कुणवृश्चिकादिक्षुद्रसत्त्वैर्बाध्यमानोऽपि निजकर्मविपाकमनुचिन्तयन्न तत्स्थानादपगच्छेत्, न च तदपनयनाय धूमविद्यामंत्रौषधादीनि प्रयुञ्जीत, न वा व्यजनादिभिर्निवारयेत्, तथा च दंशाद्युपद्रवजयस्स्यात्, समभावतो दंशाद्युपद्रवसहनत्वं लक्षणम्। दंशाद्युपद्रवोऽपि निखिलेषु गुणस्थानेषु सम्भवति। एषां क्षुधादीनां पञ्चानां वेदनीयोदये समवतारात् तेषां जयाश्चारित्रमोहनीयक्षयोपशमादिजन्या इत्याहेत इति, वेदनीये सति क्षयोपशमजन्याः, अर्थात् चारित्रमोहनीयक्षयोपशमादिजन्या इत्यर्थः, सहनस्य चारित्ररूपत्वादिति भावः, एवमग्रेऽपि। उक्तञ्च भगवतीटीकायां " एतेषु पीडैव वेदनीयोत्था, तदधिसहनन्तु चारित्रमोहनीयक्षयोपशमादिसम्भवमधिसहनस्य चारित्ररूपत्वादिति " ति, सहनस्य केवलं चारित्रमोहनीयक्षयोपशमादिजन्यत्वेन वेदनीयचारित्रावरणक्षयोपशमजन्या इत्यनुक्त्वा केवलं वेदनीयक्षयोपशमजन्या इत्युक्तं, क्षुधादौ तत्त्रये च कारणप्रदर्शनाय तथोपन्यासः कृतः। ज्ञानावरणवेदनीयमोहनीयाऽन्तरायात्मकप्रकृतिचतुष्टयोदय एव द्वावि-

१. यद्यपि शीतोष्णयोरेकदैकत्रासम्भवस्तथापि अत्यन्तिके शीते तथाविधमिषणौ च युगपदेकस्य पुंसस्सम्भवतस्ती, एकदिगवच्छेदेन शीतस्यापरदिगवच्छेदेनोष्णस्य सम्बन्धादिति नासम्भवम्, यद्वा शीतोष्णयोर्बाधकत्वात्, तयोर्युगपदसम्भवात्, एतद्विषयकस्मरणस्य वा प्रायेण तत्सत्त्वासम्भवादिति बोध्यम् ॥

शतीना जेयाना क्षुधादीनामवतारो यथायोग भवति । एते पञ्चैव परीषहा वेदनीये सति चारित्रमोहनीयक्षयोपशमादिजन्या इति न वाच्यमन्येषामपि भावात् किन्तु क्रम परीषहाणामुद्दिश्यैत्रमुक्तमिति भाव ॥ अथावस्त्रपरीषहमाह—सदोषेति । उद्गमादिदोषविशिष्टवस्त्रादिपरिहारेणेत्यर्थ । इदञ्चाल्पमूल्यानामल्पवस्त्राणा सदुष्टानामग्राह्यताज्ञापनाय । अल्पमूल्येति । इदञ्च निर्दुष्टबहुमूल्याल्पवस्त्रपरिग्रहव्युदासाय । अन्यथा परिग्रहादिदोष प्रसज्येत । अल्पवस्त्रेति । इदञ्च निर्दुष्टाल्पमूल्यनिरर्थकबहुवस्त्रसङ्ग्रहनिराकरणाय । एवञ्च सर्वथा वस्त्रशून्यप्रायामेवाऽवस्त्रपरीषहस्य निराकृत । लक्षण स्पष्टम्, अस्य सभवो नवमगुणस्थान यावत् । चारित्रमोहनीयस्य सम्भवात् । नाग्रिमगुणस्थानकेषु, तत्र मोहनीयस्य क्षीणत्वादिति ॥ अरतिपरीषहमभिधत्ते—अप्रीतीति । सूत्रोपदेशेन विहरतस्तिष्ठतो वा सयमविषयकधृतिवैपरीत्यमुत्पद्यते, एतादृशाप्रीतिप्रयोजकसयोगसम्भवेऽपि सम्यग्धर्माराधनरतिमता भवितव्य तथासत्यरतिनिजयो भवेदिति भाव । अप्रीतिप्रयोजकसयोगसमवधानाऽसमवधानकालीनसाम्यभावावलम्बनमत्र लक्षणम् । क्षुत्परीषहादिव्युदासाय कालीनान्तम् । नवमगुणस्थान यावदियमरति ॥ स्त्रीपरीषहमाह–कामबुद्ध्येति । कामबुद्ध्या स्त्रीणामङ्गप्रत्यङ्गसस्थानहसितललितविभ्रमादिचेष्टाना यद्विलोकन चिन्तनं वा, ताभ्या सर्वथा विरमणमित्यर्थः । कामप्रयुक्तस्त्र्याद्यङ्गप्रत्यङ्गादिचेष्टावलोकनचिन्तनप्रवृत्तिराहित्यं लक्षणम् । धर्मोपदेशबुद्ध्या स्त्र्याद्यङ्गाद्यवलोकने दोषाभावात्कामबुद्ध्येत्युक्तम् । अवलोकनमात्रोक्तौ चिन्तनस्य, तन्मात्रोक्तौ चावलोकनस्य व्युदासासम्भवादुभयोर्ग्रहणम् । नवमगुणस्थानं यावत्कामबुद्ध्या स्त्र्याद्यङ्गाद्यवलोकनादिसम्भव· चारित्रमोहनीयोदयसम्भवात्, अग्रिमेषु स्थानेषु न सभवः मोहनीयस्य क्षपणादुपशमाद्वा तस्मादयं परीषहश्चारित्रमोहनीये सति चारित्रमोहनीयक्षयोपशमजन्य इत्यभिप्रायेणाह—एते चेति । अवस्त्रारतिस्त्रीपरीषहाश्चेत्यर्थ । चारित्रमोहनीयक्षयोपशमजन्या इति यथाक्रम जुगुप्साया अरतिमोहनीयस्य पुवेदस्य च क्षयादुपशमाद्वा परीषहा एते भवन्तीति भाव· ॥

चर्यापरीषहमाह—

एकत्र निवासममत्वपरिहारेण सनियम ग्रामादिभ्रमणजन्यक्लेशादिसहनं चर्यापरीषहः । वेदनीयक्षयोपशमजन्योऽयम् । स्त्रीपशुपण्डकवर्जिते स्थाने निवासादनुकूलप्रतिकूलोपसर्गसम्भवेऽप्यविचलितमनस्कत्वं निषद्यापरीषहः । चारित्रमोहनीयक्षयोपशमजन्योऽयम् । प्रतिकूलसंस्तारकवसतिसेवनेऽनुद्विग्नमनस्कत्वं शय्यापरीषहः । अयञ्च वेदनीयक्षयोपशमजन्यः ।

**निर्मूलं समूलं वा स्वस्मिन् कुप्यत्सु जनेषु समतावलम्बनमाक्रोशपरीषहः। चारित्रमोहनीयक्षयोपशमजन्योऽयम्। परप्रयुक्तताडनतर्जनादीनां कायविनश्वरत्वविभावनया सहनं वधपरीषहः। वेदनीयक्षयोपशमजन्योऽयम्॥**

एकत्रेति । निस्संगतामुपगतस्य संयतस्य क्लेशक्षमस्य देशकालप्रमाणोपेतमध्वगमनमनुभवतो यानवाहनादिगमनमस्मरतस्सम्यग्व्रज्यादोषमुज्झतश्चर्यापरीषहो भवति, चर्या चरणं द्विविधं द्रव्यतो भावतश्च, ग्रामानुग्रामविहरणं द्रव्यतश्चर्या, एकस्थानस्थस्याऽपि तत्र निर्ममत्वं भावतश्चर्या सैव परीषहः, एतदुभयप्रदर्शनायैकत्रनिवासममत्वपरिहारेणेत्युक्तम् । सनियममिति । एकरात्रं ग्रामे पञ्चरात्रं नगरेऽवस्थातव्यमित्यादिनियमपूर्वकमित्यर्थः । सर्वेषु गुणस्थानेषु ग्रामादिभ्रमणजन्यक्लेशादिसम्भवो वेदनीयोदयादतश्चर्यापरीषहस्य वेदनीये सति चारित्रमोहनीयक्षयोपशमजन्यत्वमित्याशयमाविष्करोति वेदनीयेति ॥ निषद्यापरीषहं वक्ति—स्त्रीति। निषीदन्त्यस्यामिति निषद्या स्थानं, स्त्रीपशुपण्डकविवर्जितम्, विदितसंयमतत्त्वस्य स्त्रीपश्वादिवर्जितस्थानवासिनोऽनुकूलप्रतिकूलोपसर्गसम्भवेऽपि तत्प्रदेशादविचलतो मन्त्रविद्यादिप्रतीकारानपेक्षमाणस्य प्रागनुभूतसुखास्तरणादिस्पर्शसुखमविगणयतोऽविचलितमनस्कत्वं निषद्यापरीषह इति भावः । नैषेधिकीति केचिदत्र पठन्ति, निषेधनं निषेधः पापकर्मणां गमनादिक्रियायाश्च प्रतिषेधः, स प्रयोजनं यस्यास्सा नैषेधिकी शून्यागारश्मशानादिका स्वाध्यायभूमिः, सैव परीषहो नैषेधिकीपरीषह इति व्याख्यायन्ति । अस्या निषद्याया यावन्नवमगुणस्थानं सम्भवः, अतश्चारित्रमोहनीयस्य क्षयोपशमतो जायतेऽयं परीषह इत्याह—चारित्रेति ॥ शय्यापरीषहं निरूपयति —प्रतिकूलेति । संस्तारकपट्टकादीनां कठिनत्वादिप्रातिकूल्याद्वसतेश्च पांसूत्करादिप्रचुरत्वाद्वा पूर्वानुभूतनवनीतसन्निभमृदुशयनरतिमननुस्मरतोऽत्रानुद्विग्नमनस्कता शय्यापरीषह इत्यर्थः । प्रतिकूलसंस्तारकवसतिसेवनजन्योद्वेगराहित्यं लक्षणम् । जन्यान्तं निषद्यापरीषहव्यावृत्तये । निषद्यापरीषहस्तूपसर्गजन्योद्वेगराहित्यरूपोऽयञ्चोष्णवर्षपांसूत्करप्राचुर्यजन्योद्वेगराहित्यरूप इत्यनयोर्वैधर्म्यमवसेयम् । वेदनीयोदयप्रयुक्तत्वाच्छय्याया निखिलेषु गुणस्थानेषु सम्भवस्समभावावलम्बनेन चारित्रमोहनीयक्षयोपशमतश्च तज्जयो जायत इत्याशयेनाह—अयञ्चेति शय्यापरीषहश्चेत्यर्थः ॥ आक्रोशपरीषहं स्वरूपयति—निर्मूलमिति । आक्रोशनमनिष्टवचनमाक्रोशस्तस्य परीषहः परितस्सहनमाक्रोशप-

१. चर्या हि ग्रामादिषु सञ्चरणमतो विहाररूपा, निषद्या तु ग्रामादिषु प्रतिपन्नमासकल्पादेः स्वाध्यायादिनिमित्तं शय्यातो विविक्तोपाश्रये गत्वा निषदनमिति अवस्थानरूपमित्यनयोर्विशेषः चर्यायां वर्तमानो यदाऽनिवृत्तपरिणाम एव विश्रामभोजनाद्यर्थमित्वरकालं शय्यायां आसेवमानत्वात् ॥ तथा शय्यायां विरोध इति बोध्यम् ॥

रीषहः। स्वस्मिन्निर्मूलं समूलं वा जनेषु कुप्यत्सु, कुप्यन्ति चेत्समूलं शिक्षयन्ति हि मामेते, नैव च मया कार्यमेवं पुनरिति, निर्मूलञ्चेत्तर्हि सुतरां कोप एव न मया कार्योऽसत्यत्वादिति चानुचिन्तनया सौम्यताऽवलम्ब्यते चेत्तदा तस्याऽऽक्रोशजयो जायत इति भावः। हेतुसत्त्वाऽसत्त्वाभ्यां कुप्यज्जनविषयकसमतापरिग्रहत्वं लक्षणम्। आक्रोशस्य चारित्रमोहनीयोदयप्रयुक्तत्वेन नवमगुणस्थानं यावत्सम्भवेन तज्जयस्तत्क्षयोपशमजन्य इत्याशयेनाह—चारित्रेति। वधपरीषहं लक्षयति—परप्रयुक्तेति। दुरात्मकैः परैश्चौरम्लेच्छशबरपरुषपूर्वापकारिद्विपल्लिङ्गान्तरैः पार्ष्णिपाणिलत्ताकशादिभिः कृतानां प्रक्षेपतस्ताडनतर्जनबन्धनाकर्षणादीनां दह्यमानेनाऽपि सुगन्धमेवोत्सृजता चन्दनेनेव पौद्गलिकमनित्यमिदं शरीरमात्मनोऽन्यदेव, आत्मा पुनर्नित्यतया न शक्यत एव ध्वंसयितुं, अतस्स्वकृतफलमुपनतमिदं ममेति विभावयता सम्यक्सहनं वधपरीषह इति भाव.। परप्रयुक्तताडनतर्जनादिसहनत्वं लक्षणम्। वधस्य वेदनीयोदयप्रयुक्तत्वेनाखिलगुणस्थानेषु सम्भवात् चारित्रमोहनीयक्षयोपशमजन्यत्वं तज्जयस्येत्याशयमाविष्करोति वेदनीयेति ॥

याचनापरीषहमभिधत्ते—

**स्वधर्मदेहपालनार्थं चक्रवर्तिनोऽपि साधोर्याचनालज्जापरिहारो याचनापरीषहः। चारित्रमोहनीयक्षयोपशमजन्योऽयम्। याचितेऽपि वस्तुन्यप्राप्तौ विषादानवलम्बनमलाभपरीषहः। लाभान्तरायक्षयोपशमजन्योऽयम्। रोगोद्भवे सत्यपि सम्यक्सहनं रोगपरीषहः।**

स्वधर्मेति। स्वधर्मार्थं देहस्य पालनाय, न तु पुष्ट्यर्थं, परेण लभ्यान्नपानवस्त्रपात्रप्रतिश्रयादेश्चक्रवर्तिनाऽपि सता साधुनाऽवश्यमेव याचनं कार्यं, नतु दीक्षितः श्रीमानपि लज्जयाऽयाचनताऽऽद्रियेत, तथा च सति याचनाविजयः कृतस्स्यादिति भावः। स्वधर्मदेहपालनप्रयुक्तसाधुकर्तृकयाचनालज्जापरिहारत्वं लक्षणम्। रङ्कादिकृतलज्जापरिहारपरिहाराय कर्तृकान्तम्। देहपुष्ट्यभिलाषेण साधुकृतयाचनालज्जापरिहारवारणाय स्वधर्मदेहपालनप्रयुक्तेति। चारित्रमोहोदय एव याचनालज्जासम्भवेन यावन्नवमगुणस्थानं सम्भवात् तत्क्षयोपशमजन्यस्तज्जय इत्यभिप्रायेणाह—चारित्रेति ॥ अलाभपरीषहमाचष्टे—याचितेऽपीति। वस्तुन्यावश्यके याचितेऽपि परेणाऽदत्तेऽन्नवस्त्रादिके परगृहे बहुस्ति, तदस्य तु स्वं स तत्कदाचिद्ददाति, कदाचिन्न न, कस्तत्रास्माकमपरितोषो यन्न यच्छतीत्यादिरूपेण विचारयन् यद्यविकृतान्तरङ्गो भवेत् तदाऽलाभपरीषहस्स्यादिति भावः। याचितवस्त्वलाभप्रयुक्तविषादानवलम्बनत्वं लक्षणम्। इतरपरीषहवारणाय प्रयुक्तान्तम्, तावन्मात्रोक्तौ तु विषादावलम्बनेऽतिव्याप्तिरयादतो

विपाकानवलम्बनत्वमुक्तम् । अलाभस्य लाभान्तरायोदयनिबन्धनत्वाद्यावद्द्वादशगुणस्थान सम्भवेन तत्क्षयोपशमादस्य परीषहस्यावतार इत्याह लाभान्तरायेति । रोगपरीषहमाचष्टे–रोगोद्भव इति । ज्वरातिसारकासश्वासादिमहद्रोगोद्भवेऽपि गच्छनिर्गता जिनकल्पिकादयश्च न चिकित्साविधापने प्रवर्त्तन्ते, किन्तु सम्यगेव तदधिसहन्ते स्वकृतकर्मणः फलमिदमुदितमिति चिन्तयन्तः । गच्छवासिनस्त्वल्पबहुत्वालोचनया सम्यक्सहन्ते, प्रवचनोक्तेन वा विधिना चिकित्सामपि कारयन्ति, एवञ्च रोगजयः स्यादिति भावः । यथाशास्त्रानुष्ठानमुद्भूतरोगसहनत्वन्तु लक्षणम् । सर्वथा चिकित्सावैधुर्यमेव कार्यमिति नियमाभावसूचकं यथाशास्त्रानुष्ठानमिति पदम्, तच्च सम्यक्पदेन लभ्यते । वेदनीयोदयप्रयुक्तत्वेन रोगस्याखिलगुणस्थानेषु सम्भवोऽवसेयः ॥

तृणस्पर्शपरीषहमाह—

**जीर्णशीर्णसंस्तारकाधस्तनतीक्ष्णतृणानां कठोरस्पर्शजन्यक्लेशसहनं तृणस्पर्शपरीषहः । शरीरनिष्ठमलापनयनानभिलाषो मलपरीषहः । वेदनीयक्षयोपशमजन्या एते । भक्तजनानुष्ठितातिसत्कारेऽपि गर्वपराङ्मुखत्वं सत्कारपरीषहः । अयञ्च चारित्रमोहनीयक्षयोपशमजन्यः । बुद्धिकुशलत्वेऽपि मानापरिग्रहः प्रज्ञापरीषहः । ज्ञानावरणक्षयोपशमजन्यः । बुद्धिशून्यत्वेऽप्यखिन्नत्वमज्ञानपरीषहः । ज्ञानावरणक्षयोपशमजन्यः । इतरदर्शनचमत्कारदर्शनेऽपि स्वदेवतामान्निध्याभावेऽपि जैनधर्मश्रद्धातोऽविचलनं सम्यक्त्वपरीषहः । दर्शनमोहनीयक्षयोपशमजन्योऽयम् ॥**

जीर्णशीर्णेति । गच्छनिर्गतानां गच्छवासिनाञ्च यतीनामशुषिरतृणस्य हि दर्भादेः परिभोगोऽनुज्ञातः, तत्र येषां शयनमनुज्ञातं ते तान् दर्भान् भूमावीषदार्द्रतादियुक्तायामास्तीर्य दर्भाणामुपरि संस्तारकोत्तरपट्टौ च विधाय शेरते, चौरापहृतोपकरणो वाऽत्यन्तजीर्णत्वात्प्रतनुसंस्तारकपट्टको वा तदुपरि शेते, तत्र च शयानस्य यद्यपि कठिनतीक्ष्णाग्रभागैस्तृणैरत्यन्तपीडा समुपजायते तथापि परुषदर्भादितृणस्पर्शं सम्यक्सहेत, एवञ्च सति तृणपरीषहः स्यादिति भावः । वधपरीषहादिवारणाय तृणानामित्युक्तम् । वेदनीयोदयप्रयुक्तत्वेन तृणस्पर्शवेदनायाः निखिलगुणस्थानेषु सम्भवोऽवसेयः ॥ मलपरीषहं निरूपयति–शरीरनिष्ठेति । शरीरनिष्ठो यो घर्माम्बुसम्पर्कजन्यो घनपरागपुञ्जः स्थिरतामापन्नो ग्रीष्मोष्मणा चार्द्रतां गतोऽत एव दुर्गन्ध उद्वेगकरश्च तस्यापनयनाय न कदापि जलावगाहनाभिलाषः कार्यः, सत्येव

मलपरीषहः स्यादिति भावः । लक्षणं स्पष्टम् । अस्यापि मलस्य वेदनीयोदयप्रयुक्तत्वं निखिलगुणस्थानसम्भवित्व विज्ञेयम् । एषां रोगतृणस्पर्शमलपरीषहाणा वेदनीये सति चारित्रमोहनीयक्षयोपशमजन्यत्वमित्याह–वेदनीयक्षयोपशमजन्या इति, वेदनीये सति चारित्रमोहनीयक्षयोपशमादिजन्या इत्यर्थः ॥ सत्कारपरीषह वक्ति–भक्तजनेति । भक्तजनैरनुष्ठिता भक्तपानवस्त्रपात्रादिभिः कृतास्सत्काराः, सद्भूतगुणोत्कीर्तनवन्दनाभ्युत्थानासनप्रदानादिव्यवहाराश्च, एभिर्न मानमुद्वहेत, नोत्कर्षाद्याकुलं चेतः कुर्यात्, अकृते वा सत्कारादौ न विषादमुपयायात् ततश्च सत्कारस्य परिसहनं स्यादिति भावः । भक्तजनानुष्ठितसत्कारसम्बन्धिगर्वपराङ्मुखत्वं लक्षणम् । भक्तजनानुष्ठितेति स्वरूपविशेषणं, प्रज्ञापरीषहादिवारणाय सम्बन्ध्यन्तम् । सत्कारसम्बन्धिमानस्य चारित्रमोहनीयोदयप्रयुक्ततया नवमगुणस्थानं यावत्सम्भवेन तत्क्षयोपशमजन्यस्तत्परीषह इत्याहायश्चेति ॥ अथ सम्यग्ज्ञानात्मकमोक्षमार्गाच्यवनफलकं प्रज्ञापरीषहमाचष्टे–बुद्धिकुशलत्वेऽपीति । बुद्ध्यतिशयप्राप्तौ हि न गर्वमुद्वहेत्, प्रज्ञाप्रतिक्षेपेणाप्यबुद्धिकत्वेन परीषहो भवति, नाहं किञ्चिज्जाने मूर्खोऽह सर्वैः परिभूत इत्येवं परितापमुपागतस्य कर्मविपाकोऽयमिति मत्वा तदकरणात्तज्जयो भवतीति भावः । विज्ञानप्रयुक्तमदनिरासत्वं लक्षणम् । सत्कारपरीषहवारणाय विज्ञानप्रयुक्तेति । एतादृशप्रज्ञाया ज्ञानावरणक्षयोपशमतन्त्रत्वेन द्वादशगुणस्थान यावत्सम्भवात् तत्क्षयोपशमे सति मानाभावजन्यत्वं तस्य परीषहस्येत्याविष्करोति ज्ञानावरणेति ॥ अज्ञानपरीषहमाह–बुद्धिशून्यत्वेऽपीति । बुद्धिस्सोपाङ्गं चतुर्दशपूर्वैकादशाङ्गरूप श्रुतं तद्वैधुर्येण मनोमालिन्यं न विदध्यात् केवल ज्ञानावरणोदयविजृम्भितमेतत् स्वकृतकर्मपरिभोगतस्तपोऽनुष्ठानतोवापैतीति भाव· यतोऽज्ञानस्य जयो भवेदिति भावः । बुद्धिशून्यताप्रयुक्तखेदापरिग्रहत्वं लक्षणम्, अज्ञानस्य ज्ञानावरणोदयविलसितत्वेन यावद् द्वादशगुणस्थान सभवात्तत्क्षयोपशमतस्तद्विजय इत्याह ज्ञानावरणेति ॥ अथान्तिमं सम्यक्त्वपरीषहमभिधत्ते–इतरदर्शनेति, दर्शनान्तरीयाणां चमत्कारादिदर्शनेऽपि निजदेवतासान्निध्याभावेऽपि वा जैनधर्मश्रद्धाया अविचलनमित्यर्थः । इतरदर्शनचमत्कारस्वदेवतासान्निध्याभावान्यतरप्रयुक्तजैनधर्मश्रद्धाशैथिल्याभाववत्त्वं लक्षणम् । अश्रद्धाया दर्शनमोहनीयोदयप्रयुक्तत्वेन यावन्नवमगुणस्थानं सम्भवात् तत्क्षयोपशमजन्यस्तज्जय इत्याह–दर्शनेति । आवश्यके तत्त्वार्थे चाऽत्राऽसम्यक्त्वपरीषहं अदर्शनपरीषहाभिध पठन्ति ॥ जेया क्षुधादय एते उत्कृष्टत एकत्र प्राणिनि विंशतिर्वर्तन्ते, शीतोष्ण-

१ नपुंसकवेदाद्युपशमश्रेण्यनिवृत्तिबादरसम्परायो भवति, तदुपशमनानन्तरे च यतो दर्शनमोहस्य प्रदेशतः उदयोऽस्ति न तु सर्वत, ततस्तत्प्रत्ययस्याम्यक्त्वपरीषहस्तस्यास्ति, सूक्ष्मसम्परायस्य ॥ मोहस्यस्वेऽपि न सूक्ष्मोऽपि तदुदय, ततो न तन्निमित्तकपरीषहसम्भव इति भाव ॥

योश्चर्यानिषद्ययोश्चैकत्रैकदाऽसंभवात्, जघन्यतस्त्वेक एव । एवमसंकल्पोपस्थितान् क्षुधादीन् सहमानस्यासंक्लिष्टचेतसो रागादिपरिणामास्रवाभावान्महान्संवरो भवतीति ॥

निरूपितेषु समितिगुप्तिपरीषहेषु चतुर्थं संवरहेतुं यतिधर्ममाचष्टे—

**मोक्षमार्गानुकूलयतिप्रयत्नो यतिधर्मः । स च क्षान्तिमार्दवार्जवनिर्लोभतातपस्संयमसत्यशौचाकिञ्चन्यब्रह्मचर्यभेदाद्दशविधः । एतल्लक्षणान्यग्रे वक्ष्यन्ते ॥**

मोक्षमार्गेति । मोक्षमार्गानुकूलत्वे सति यतिप्रयत्नत्वं लक्षणम् । क्षमादिसमुच्चयस्य संवरधारकत्वाद्धर्मत्वं तच्चागारिधर्मेऽपि, अतो यतीत्युक्तमनेन तस्यालक्ष्यत्वं ख्यापितम्, यतिधर्म इत्युक्तत्वाद्यतिस्वरूपरक्षकचारित्रव्युदासः, सति हि चारित्र उत्तमधर्मप्रवृत्तिर्भवेत्, तत्र गुप्तिः प्रवृत्तिनिग्रहाय, तत्रासमर्थानां प्रवृत्तिनिग्रहोपायदर्शनाय समितयः, मोक्षमार्गात्सम्यग्दर्शनादितोऽच्यवनार्थं क्षमाद्यर्थञ्च परीषहाः, प्रमादनिवृत्त्यर्थं यतिधर्माः, परीषहानुकूलतया भावनाः, कर्मनिर्जरणार्थञ्च चारित्राणीति विज्ञेयम् । तथा च प्रमादनिवृत्तिद्वारा यतिधर्मस्य मोक्षमार्गानुकूलत्वमवसेयम् । यद्यपि सर्व एव गुप्त्यादयः कर्मनिर्जरणार्थाः, तथापि चारित्रे सति तथा, अतश्चारित्रस्यैव तत्र प्राथमिकहेतुत्वमुक्तम् । स कतिविध इत्यत्राह—स चेति । अग्रे वक्ष्यन्त इति सम्यक्चरणनिरूपण इत्यर्थः ॥

ननु क्रोधाद्यनुत्पत्तिः क्षमादिविशेषगुणानामवलम्बनाद्भवति तत्र कस्मात्क्षमादीनामवलम्बनमित्याशङ्कायामाह—

**मोक्षप्रवृत्त्युत्तेजकं चिन्तनं भावना । अनित्याशरणसंसारैकत्वान्यत्वाशुचित्वाऽऽस्रवसंवरनिर्जरालोकस्वभावबोधिदुर्लभधर्मस्वाख्यातभेदाद् द्वादशधा सा । एतल्लक्षणान्यप्यग्रे वक्ष्यन्ते ॥**

मोक्षप्रवृत्तीति । मोक्षप्रवृत्तौ मोक्षानुकूलप्रवृत्तौ उत्तेजकं प्रतिबन्धकमवधानकालीनकार्यजनकं यच्चिन्तनं—अनित्यत्वादिरूपेण द्वादशधाऽनुचिन्तनं सा भावनेत्यर्थः । मोक्षानुकूलप्रवृत्त्युत्तेजकत्वे सति चिन्तनत्वं लक्षणम् । असत्प्रवृत्तिचिन्तनव्युदासाय सत्यन्तम् । समित्यादौ स्थितस्यापि कदाचिद्द्रव्यक्षेत्रकालभावेभ्यो मोक्षप्रवृत्तेर्मालिन्यतायां सजाताया-

---

१. सापेक्षनिरपेक्षत्वाभ्यामयं मुनिसम्बन्ध्यनुष्ठानविशेषो द्विविधः, गुरुगच्छादिसाहाय्यमपेक्षमाणो यः प्रव्रज्यां पालयति तस्य धर्मस्सापेक्षो गच्छवासलक्षणः, इतरस्तु निरपेक्षस्य जिनकल्पादिलक्षणः, तत्र सापेक्ष-यतिधर्मो मूलोक्तो भाव्यः ॥

मियमुत्तेजिका भवतीति भाव्यम् । अस्याः प्रकारभेदान् प्रकटयति—अनित्येति । एषामपि स्वरूपाणि सम्यक्चरणनिरूपणे प्रोच्यन्त इत्याह एतदिति ॥

अथ चारित्रलक्षणमभिधत्ते—

**कर्माष्टकशून्यताप्रयोजकमनुष्ठानं चारित्रम् । तच्च सामायिकच्छेदोपस्थापनपरिहारविशुद्धिसूक्ष्मसम्परायययथाख्यातभेदेन पञ्चविधम् ॥**

कर्माष्टकेति । चारित्रमोहोपशमक्षयक्षयोपशमसद्भावे चर्यते तदिति चारित्रं कर्मसाधनं, अष्टविधकर्म द्रव्यक्षेत्रकालभवभावपरिवर्त्तनात्मकससारस्य कारणभूतं, तस्य या शून्यताऽऽत्यन्तिकी निवृत्तिः, तस्याः प्रयोजकं यदनुष्ठानं, बाह्याभ्यन्तरक्रियाविशेषोपरमसहचरितमनुष्ठानं परस्परं प्रकर्षाप्रकर्षयोगिक्रियाविशेषरूपं तच्चारित्रमिति भावार्थः, तच्च संयतासंयतादिषु सूक्ष्मसाम्परायिकान्तेषु प्रकर्षाप्रकर्षयोगि, वीतरागेषु परमोत्कृष्टं विज्ञेयम् । कर्माष्टकशून्यताप्रयोजकत्वे सत्यनुष्ठानत्वं लक्षणम् । असदनुष्ठानव्यावृत्तये सत्यन्तम् । गुप्त्याद्यात्मधर्मविशेषेषु व्यभिचारवारणाय विशेष्यम् । गुप्त्यादयश्चारित्रप्रकर्षानुकूलाः, अत एव च कर्माष्टकशून्यत्व उपचाराद्धेतवः । यद्यपि समित्यादयः क्रियात्मकाः कर्मशून्यतायां प्रयोजकास्तथापि ते चारित्रापेक्षिणः किञ्चिदेव कर्म विरहयन्ति न सर्वाणि, चारित्रं तु कर्मणामष्टविधानामपि विरहे प्रयोजकीभूतयोग्यतावदिति न कोऽपि दोषः । ननु यैः क्षुधादिभिः परिसहनीयैरक्षुब्धा विपश्चितोऽभिनवानि कर्माणि नोपचिन्वन्ति पूर्वप्रचितानि च निर्जरयन्ति ततः कर्मनिर्जरणार्थमाहितसामर्थ्यं चारित्रं चारित्रमोहनीयोपशमक्षयक्षयोपशमलक्षणात्मविशुद्धिलब्धिसामान्यापेक्षयैकं, प्राणिपीडापरिहारेन्द्रियदर्पनिग्रहशक्तिभेदाद् द्विविधं, उत्कृष्टमध्यमजघन्यविशुद्धियोगात्त्रिविधं, विकलज्ञानविषयकसरागवीतरागसकलावबोधगोचरसयोगायोगविकल्पाच्चतुर्विधमेवं सामायिकादिभेदेन पञ्चविधमपि, तत्र स्फुटावबोधार्थं पञ्चधैव विभजते तच्चेति ॥

अथ सामायिकं लक्षयति—

**छेदोपस्थापनादिचतुष्टयभिन्ना सर्वसावद्ययोगविरतिः सामायिकम् । तद्द्विविधम् । इत्वरकालं यावज्जीवकालश्चेति । भाविव्यपदेशयोग्यं स्वल्पकालं चारित्रमित्वरकालं । प्रथमान्तिमतीर्थकरतीर्थयोरेवैतत् । भाविव्यपदेशाभावेन यावज्जीवं संयमो यावज्जीवकालम् । इदञ्च मध्यमद्वाविंशतितीर्थकरतीर्थान्तर्गतसाधूनां विदेहक्षेत्रवर्तिनाञ्च ॥**

छेदोपस्थापनादीति । छेदोपस्थापनादिचतुष्टयभिन्नत्वे सति सर्वसावद्ययोगविरतित्वं

लक्षणम् । छेदोपस्थापनादिवारणाय सत्यन्तम् । यतिधर्मान्तर्गतसंयमस्तु सप्तदशविधश्चारित्रापेक्ष इति भेदः, अवद्यं गर्हितं पापं, सहावद्येन वर्तत इति सावद्यो योगः कायिकादिव्यापारः, सर्वेभ्यः सावद्ययोगेभ्यो विरमणं, रागद्वेषविरहितः समः तस्य—आयो गमनं, सर्वक्रियोपलक्षकमेतत्, सर्वैव क्रिया हि साधोररक्तद्विष्टस्य निर्जरफलैव भवति । समाय एवेति विग्रहे स्वार्थे विनयादित्वाट्ठक्प्रत्यये सामायिकशब्दनिष्पत्तिः । सर्वसावद्ययोगविरतिस्वरूपमेव सामायिकं, विशुद्धतराध्यवसायविशेषविशिष्टा तादृशविरतिरेव छेदोपस्थापनादिः । न च निवृत्तिपरत्वात्सामायिकस्य गुप्तित्वप्रसङ्ग इति वाच्यम्, योगप्रवृत्तेरत्र सद्भावात्, न च प्रवृत्तिरूपत्वे समितित्वप्रसङ्ग इति वाच्यम् सामायिके चारित्रे, यतत एव समितिषु प्रवृत्त्युपदेशेन तत्कारणरूपत्वात् । तद्विभजते तदिति । अथेत्वरकालं लक्षयति भाविव्यपदेशयोग्यमिति । भाविव्यपदेशयोग्यत्वे सति स्वल्पकालचारित्रत्वं लक्षणम् । प्रव्रज्याप्रतिपत्त्यनन्तरमधीतशस्त्रपरिज्ञाध्ययनादेश्छेदोपस्थाप्यसंयमारोपणे क्रियमाणे सामायिकव्यपदेशविगमादिति भावः । छेदोपस्थापनादिवारणाय सत्यन्तम्, तथा च स्वल्पकालेति इत्वरशब्दार्थवर्णनपरमेव, न तु व्यावर्त्तकम् । इत्वरकालसंयतस्य छेदोपस्थाप्यचारित्रग्रहणादर्वाङ् मृतस्य चारित्रेऽव्याप्तिवारणाय योग्येति । क्वेदं चारित्रं भवतीत्यत्राह—प्रथमेति । यावज्जीवकालमाह—भाविव्यपदेशेति । इत्वरस्य हि भाविव्यपदेश उक्तो नेतरेषाम् । यस्तु भाविव्यपदेशं नाश्नुते यावज्जीवञ्च भवति स संयमो यावज्जीवकालिक इति भावः । सामायिक एव सन् चतुर्यामं चतुर्महाव्रतानि मनोवाक्कायैर्यैः पालयन् यावज्जीवं वर्त्तते स यावज्जीवकालिकसामायिकसंयत इति वाक्यम् । प्रव्रज्याप्रतिपत्तिकालादारभ्याऽऽप्राणप्रयाणकालमवतिष्ठत एवम्भूतं चारित्रमिति भावः, यथाख्यातस्यापि भाविव्यपदेशाभावेन यावज्जीवं संयमरूपत्वात्तद्व्युदासाय सामायिकत्वं वाच्यम्, सामायिकत्वं सामायिकपदव्यपदेशयोग्यत्वमित्यर्थस्तेन तस्यापि विशुद्धिविशेषविशिष्टनिरुक्तसामायिकत्वेऽपि न क्षतिः । केषामयं संयम इत्यत्राह इदञ्चेति । उपस्थापनाया अभावादिति भावः ॥

छेदोपस्थापनमाख्याति—

**पूर्वपर्यायोच्छेदे सत्युत्तरपर्यायारोपणयोग्यं चारित्रं छेदोपस्थापनम् । तच्च निरतिचारसातिचारभेदेन द्विविधम् । शैक्षकादेरधीतविशिष्टाध्ययन-**

---

१. भाविव्यपदेशयोग्यत्वविशिष्टचारित्रत्वं छेदोपस्थापनायां व्यभिचरति न चारित्रत्वम्, तस्येदानीं विशुद्धतया तत्र सत्त्वात्, तेन भरतैरवतयोः मध्यमतीर्थकरेषु महाविदेहेषु च सामायिकं यावज्जीवं कथमेतीत्वरसामायिकस्य शुद्धानन्त्येऽपि उपस्थापनायां मुखतोऽपि न प्रतिज्ञालोपः, तस्यान्यथात्वाभावादिति वाच्येन सामायिकव्यपदेशविगमादित्युक्तम्, इत्वरसामायिकव्यपदेशविगमादिति भावः, तस्यैव प्रकृतत्वादिति ॥

**विदो यदारोप्यते तन्निरतिचारम् । खण्डितमूलगुणस्य पुनर्व्रतारोपणं सातिचारम् । उभयमपि प्रथमान्तिमतीर्थंकरतीर्थकाल एव ॥**

पूर्वपर्यायोच्छेद इति । सामान्यसामायिकपर्यायोच्छेदोत्तरकालं यद् विशुद्धतरसर्वसावद्ययोगविरत्यवस्थापन–विविक्तमहाव्रतारोपणं तद्योग्य चारित्रं छेदोपस्थापनमित्यर्थः । पूर्वपर्यायच्छेदेनोत्तरपर्यायारोपणयोग्यत्वे सति चारित्रत्व लक्षणम् । सामायिकादिवारणाय पूर्वपर्यायच्छेदेनेति पूर्वपर्यायश्च चारित्रस्यैव विज्ञेयः । अस्य विभागमाह–तच्चेति । निरतिचारस्वरूपमाह–शैक्षकादेरिति । आदिना तीर्थान्तरसङ्क्रामतो ग्रहण तस्य हि चतुर्महाव्रतधारिणः पञ्चमहाव्रतारोपणं भवति । सातिचारस्वरूपमाचष्टे–खण्डितेति । मूलगुणहन्तुः पुनर्व्रतारोपणमित्यर्थः । उभयविधमपि छेदोपस्थापनं क भवतीत्यत्राह–उभयमपीति । चारित्रमिदं भरतैरावतेष्वाद्यन्ततीर्थंकरतीर्थयोर्भवति नान्यत्रेति भावः ॥

परिहारविशुद्धिकमाख्याति—

**तपोविशेषविशिष्टं परिशुद्धिमच्चारित्रं परिहारविशुद्धिकम् । तदपि निर्विशमानकं निर्विष्टकायिकश्चेति द्विविधम् । निर्विशमानकाः प्रक्रान्तचारित्रोपभोक्तारः, निर्विष्टकायिकाश्च समुपभुक्तप्रक्रान्तचारित्रकायिकाः । एते चाऽऽद्यान्तिमतीर्थंकरतीर्थकाल एव ॥**

तपोविशेषेति । परिहरणं परिहारः प्राणिवधान्निवृत्तिस्तपोविशेषो वा तेन विशिष्टा शुद्धिर्यस्मिन् तत्परिहारविशुद्धिकमिति विग्रह । अस्य भेदमाह तदपीति परिहारविशुद्धिकमपीत्यर्थः, निर्विशमानक परिभुज्यमानकमित्यर्थः । निर्विष्टकायिकमुपभुक्तमित्यर्थस्तपोविशेषोपभोगकालीनश्चारित्रमुपभुक्ततपोविशेषकालीनश्चारित्र चेति तद्विविधमिति भावः । तपोविशेष सूचयितु निरुक्तरूपेण तयो स्वरूपमनुक्त्वा तदनुष्ठायिपुरुषस्वरूपनिरूपणद्वारा निरुक्तमपि सूचयति–निर्विशमानकाश्चेति । प्रक्रान्तेति तपोविशेषसहकृतेत्यर्थः, एवमग्रेऽपि । अत्रेदम्बोध्यम्–उभयविधानामेषा तपो जघन्यमध्यमोत्कृष्टभेदेन त्रिविधमपि प्रत्येक शीतकाल उष्णकाले वर्षाकाले च भवति तत्राऽतिरूक्षे ग्रीष्मकाल एकोपवासरूपं चतुर्थं जघन्यं, उपवासद्वयरूपं षष्ठ मध्यममुत्तमञ्चोपवासत्रयरूपमष्टमम् । ग्रीष्मत किञ्चित्सुकरे शिशिरे जघन्य षष्ठ मध्यममष्टममुत्कृष्टञ्चोपवासचतुष्टयरूप दशमम् । साधारणे काले वर्षासु जघन्यमष्टम मध्यम दशममुत्कृष्टञ्चोपवासपञ्चकरूप द्वादशं तपो भवति, त्रिष्वपि कालेषु पारणे त्वाचाम्लं,

१. यथा पार्श्वनाथतीर्थाद्वर्धमानस्वामितीर्थं सङ्क्रामत पञ्चयामधर्मप्राप्तौ ॥

संसृष्टादिसप्तभिक्षासु प्रथमद्वयं वर्जयित्वा पञ्चानां भिक्षाणा ग्रहः पुनरपि विवक्षितदिने पञ्चानां मध्ये द्वयोरभिग्रहो भवति । तत्र तपोविशेषमुपगतानां नवानां गणो भवति, तत्र परिहाराचारिणश्चत्वारोऽनुपरिहारिणश्चत्वारः कल्पस्थित एको वाचनाचार्य इति । सर्वेषां श्रुताद्यतिशयपरिपूर्णत्वेऽपि तेष्वेकः कल्पत्वात्कल्पस्थितोऽवस्थाप्यते । पूर्वोदितं तपो येऽनुतिष्ठन्ति ते परिहाराचारिणः, पूर्वोक्तभिक्षाभिग्रहयुक्ता नियताचाम्लभक्ता अनुपरिहारिणस्तेषामेव वैयावृत्त्यकराः, कल्पस्थितोऽपि नियताचाम्लभक्त एव । परिहाराचारिणश्च यावत् षण्मासांस्तपश्चरित्वाऽनुपरिहारिकत्व, अनुपरिहारिणो निर्विशमानकत्वापरपर्यायं परिहाराचारित्वञ्च यावत् षण्मास भजन्ते । मासद्वादशकानन्तर वाचनाचार्योऽप्येवं षाण्मासिकं परिहारतपः करोति तदाऽष्टसु सप्तानुपहारिका एकः कल्पस्थितो भवति, एवमयं कल्पोऽष्टादशमासप्रमाणो विज्ञेयः । ततश्च ते पुनरमुमेव कल्पं जिनकल्पं गच्छं वाऽनुसरन्ति । तत्र येऽव्यवधानेन जिनकल्पानुसारिणस्ते यावत्कथिकाः परिहारविशुद्धिका इतरे त्वित्वराः, इत्वराणां देवमानुषतिर्यग्योनिककृता उपसर्गास्सद्योघातिन आतङ्का अतीवासिपह्या वेदनाश्च न प्रादुर्भवन्ति, कल्पप्रभावात् । यावत्कथिकानान्तु सम्भवेयुरपि जिनकल्पिकानामुपसर्गादिसम्भवात् । कल्पोऽयं तीर्थकरपार्श्वे तत्समीपासेवकस्य पार्श्वे वा प्रतिपद्यते नाऽन्यस्य पार्श्वे । तथा चैतेषां यच्चारित्रं तत्परिहारविशुद्धिकमिति । एते परिहारविशुद्धिकाः कस्मिन् क्षेत्रे काले वा सम्भवन्तीत्यत्राह–एते चेति । जन्मतः सद्भावतश्च भरतेष्वैरवतेष्वेव, संहरणाभावाच्च महाविदेहादिषु । जन्मतोऽवसर्पिण्या प्रथमचरमतीर्थपतितीर्थयोः तृतीये चतुर्थे वाऽऽरके, सद्भावतः पञ्चमेऽपि, उत्सर्पिण्या जन्मतो द्वितीये तृतीये चतुर्थे च, सद्भावतस्तृतीये चतुर्थे आरके, नोत्सर्पिण्यवसर्पिणीरूपे तु चतुर्थारकप्रतिभागकाले न सम्भवन्त्येव, महाविदेहक्षेत्रे तेषामभावादिति भावः । विशेषस्त्वस्मिन् चारित्रेऽन्यतो विज्ञेयः ॥

सूक्ष्मसम्परायस्वरूपमभिधत्ते—

**अत्यन्तकृशकषायचारित्रं सूक्ष्मसम्परायम् । इदं संक्लिश्यमानकं विशुद्ध्यमानकं चेति द्विप्रकारम् । उपशमश्रेणीतः प्रपततः प्रथमम्, द्वितीयं तु श्रेणिमारोहतः ॥**

अत्यन्तेति । संसारभ्रान्तिहेतुः कषायो लोभरूपोऽतिसूक्ष्मतया वेदनाविषयत्वेन यत्र वर्तते तच्चारित्रं सूक्ष्मसम्परायमित्यर्थः । अत्यन्तसूक्ष्मकषायसमानकालीनचारित्रत्वं लक्षणम् ।

---

१. अत एव प्रथमतीर्थपतितीर्थे परिहारकल्पोऽयं देशोनपूर्वकोटिद्वय परम्परयाऽनुवर्तते, चरमतीर्थपतितीर्थे च देशोनवर्षशतद्वय, न तु तृतीया पूर्वकोटी, न वा तृतीय वर्षशतमिति ॥

कत्यं स्पष्टम् । तद्विभजते इदमिति । उपशान्तकषायाभिरल्पप्रत्ययलाभान्मुखवस्त्रादिषु ममत्ववायुना सन्धुक्ष्यमाणश्चरणेन्धनमामूलतो दहन् सङ्क्लिश्यमानाध्यवसायज्वलेन प्रतिविशिष्टाध्यवसायात्तं प्रच्यावयति अत इह सङ्क्लिश्यमानकं चारित्रमुच्यते, तच्चोपशमश्रेणीतः पततो भवतीत्याशयेनाह—उपशमश्रेणीन इति । तत्रोपशम्या अनन्तानुबन्धिनो मिथ्यात्वत्रयं नपुंसकस्त्रीवेदौ हास्यादिषट्क पुवेदोऽप्रत्याख्यानप्रत्याख्यानावरणाः सज्वलनाश्च । आरम्भकोऽस्याः श्रेणेरप्रमत्तसयतः । अविरतदेशप्रमत्ताप्रमत्तविरतानामन्यतम इति केचित् ॥ अनुक्षणं विशुद्धाध्यवसायवतश्चारित्रं विशुद्ध्यमानकमुच्यते तच्च श्रेणिमारोहत एव भवतीत्याह—द्वितीयन्त्विति । क्षप्यास्त्वनन्तानुबन्धिनो मिथ्यात्वत्रिकमप्रत्याख्यानप्रत्याख्यानावरणा नपुंसकस्त्रीवेदौ हास्यादिषट्कं पुवेदस्सञ्ज्वलनाश्च, क्षपकश्रेण्यामारोहकश्चाविरतदेशप्रमत्ताप्रमत्तविरतानामन्यतमो विशुध्यमानाध्यवसायः ॥

यथाख्यातसयमलक्षणमाह—

**निष्कषायं चारित्रं यथाख्यातम् । इदमप्युपशमश्रेणिमुपयातस्य कषायाणामुपशमादनुदयाद्यान्तर्मुहूर्त्तस्थितिकम् । क्षपकश्रेणिमधिगतस्य तु कषायाणां सर्वथा क्षयाज्जघन्यतोऽन्तर्मुहूर्त्तस्थितिकालीनमुत्कृष्टतश्च देशोनपूर्वकोटिप्रमाणं बोध्यम् । आद्यं प्रतिपाति, द्वितीयमप्रतिपाति ॥**

**निष्कषायमिति** । कषायरहितत्वे सति चारित्रत्व लक्षणम् । सिद्धावस्थाया व्यभिचारवारणाय विशेष्यम् । उपशमकक्षपकवृत्तित्वादस्यापि द्वैविध्यमिति मनसिकृत्याह—इदमपीति । एकादशगुणस्थानवर्त्तिनो हि सर्वथा कषायाणामुपशमनादुदयाभावाच्चाऽऽद्यमिदं यथाख्यातचारित्रं केवलमन्तर्मुहूर्त्तकालीनमुत्कृष्टत., ततो नियमेन च्यवनादिति भावः । क्षपकश्रेण्या समायातस्य तु द्वादशादिगुणस्थानवर्तिनः सर्वथा कषायाणा क्षयात्तादृशं चारित्र द्वितीय जघन्येनान्तर्मुहूर्त्तस्थितिकमुत्कृष्टतो देशोनपूर्वकोटिप्रमाणं भवतीत्याह—क्षपकेति । तत्राद्यचारित्रस्य कषायसत्तासमानाधिकरणत्वात्तस्य च नियमेनोदयसम्भवात् यस्माद्गुणस्थानाद्यया रीत्या समागतस्तथैव प्रतिपततीत्याशयेनाह—आद्यमिति । क्षपकश्रेणीतः कषायाणा सर्वथा क्षयेण प्रतिपाताभावो द्वितीयचारित्रवत इत्याह—द्वितीयमिति । इदमेव चारित्रं मोक्षाव्यवहितसाधन सामायिकादयोऽप्यत्रागमने क्रमेण श्रेणिकल्पत्वादसाधारणकारणान्येव । गुप्त्यादयस्तु पञ्चविधचारित्रनैर्मल्यापादकतया परम्परयोपकारीभूता इति दिक् ॥

---

१. यथाख्यातचारित्र द्विविध छद्मस्थकेवलिस्वामिभेदात्, छद्मस्थसम्बन्धि च द्विविध मोहक्षयसमुत्थ, तदुपशमप्रभव चेति । केवलिसम्बन्ध्यपि द्विविध सयोग्ययोगिकेवलिभेदादिति ॥

सम्प्रति प्रसङ्गादेतेषा विशेषप्रतिपत्त्यर्थं सामायिकादिसयमिन आश्रित्य षट्त्रिंशत्प्रकारेण विवेचयितुकामस्तान् प्रकारान्नाममाहमादौ वक्ति--

**तत्र द्वाराणि प्रज्ञापनावेदरागकल्पचारित्रप्रतिसेवनाज्ञानतीर्थलिङ्ग-शरीरक्षेत्रकालगतिसंयमसन्निकर्षयोगोपयोगकषायलेश्यापरिणामबन्ध-वेदनोदीरणोपसम्पद्धानसंज्ञाऽऽहारभवाकर्षकालमानान्तरसमुद्धातक्षेत्र-स्पर्शनाभावपरिणामाल्पबहुत्वेभ्यः षट्त्रिंशद्विधानि ॥**

तत्रेति । द्वाराणीत्यस्य षट्त्रिंशद्विधानीत्यमेतनेनान्वयः ॥

अथादौ प्रज्ञापनाद्वारमाह--

**तत्र प्रज्ञापनाद्वारे-सामायिकसंयत इत्वरिको यावत्कथिकश्चेति द्विविधः। छेदोपस्थापनीयस्सातिचारी निरतिचारी चेति द्विविधः। परिहारविशुद्धिको निर्विशमानो निर्विष्टकायिकश्चेति द्विविधः। सूक्ष्मसम्परायसंयत उपशमश्रेणीतः प्रच्यवमानः, उपशमक्षपकश्रेण्यन्यतरारूढश्चेति द्विविधः। यथाख्यातोऽपि छद्मस्थः केवली चेति द्विविध इति बोध्यम् ॥**

तत्रेति । सामायिकस्सयमस्तेन सयत इत्यर्थः । इत्वरिक इति । भाविव्यपदेशान्तरयोग्याल्पकालिकसयमयुक्त इत्यर्थः । स च प्रथमान्तिमतीर्थसाधुर्बोध्यः । यावत्कथिक इति। व्यपदेशान्तरायोग्ययावज्जीवसयमभृत्, मध्यमतीर्थकृद्विदेहक्षेत्रसम्बन्धिसाधुरिति भावः । सातिचारीति । अतिचारवानारोप्यमाणसयमवानित्यर्थः । निरतिचारीति । अतिचारविधुर आरोप्यमाणपुनर्व्रतिक इत्यर्थः । सोऽयं शैक्षकः पार्श्वनाथतीर्थान्तिमतीर्थे सक्रममाणश्च । निर्विशमान इति । प्रक्रान्तचारित्रभोक्तेत्यर्थः । निर्विष्टकायिक इति । उपभुक्तप्रक्रान्तचारित्र इत्यर्थः । इतरत्स्पष्टम् ॥

वेदद्वारमाह--

**वेदद्वारे-सामायिको नवमगुणस्थानावधि वेदको वेदत्रयवांश्च। नवमान्ते तूपशमात्क्षयाद्वा वेदानामवेदकोऽपि भवेत्। एवं छेदोपस्थापनीयोऽपि। पारिहारिकः पुरुषवेदो वा पुंनपुंसकवेदो वा स्यात्। सूक्ष्मसम्परायो यथाख्यातश्चावेदक एवेति ॥**

वेदद्वार इति । सामायिक इति, यावन्नवमगुणस्थानं सामायिकसंयतव्यपदेशः, नवमे च वेदानामुपशमः क्षयो वा भवति, अतस्तदवधि सवेदः, वेदत्रयवानपि । उपशान्ते वा क्षीणे वा वेदे तदानीमवेदकोऽपीति भावः । इदमेवातिदिशत्यन्यत्रापि एवमिति । पारिहारिक इति तपोविशेषयुक्तः परिहारविशुद्धिक इति यावत् । परिहारविशुद्धिकलब्धेः स्त्रियोऽभावान्न स्त्रीवेदकः । पुंनपुंसकवेदो वेति । पुरुष एव सन् यो वार्द्धितकत्वादिभावान्नपुंसकवेदको, न तु जन्मनपुंसकवेदक इत्यर्थः । अस्योपशमक्षपकश्रेण्योरभावेनावेदको नेति भावः । सूक्ष्मसम्पराय इति । उपशमक्षपकश्रेणिद्वय एवैतयोर्भावेनावेदकावेवेति भावः । एवञ्चोपशान्तवेदकौ वा क्षीणवेदकौ वैतौ स्यातामिति तात्पर्यम् ॥

रागद्वारमाह—

**रागद्वारे-सामायिकादिचत्वारस्संयतास्सरागा एव । यथाख्यातसंयतस्त्वराग एवेति ॥**

रागद्वार इति । सामायिकादीति । सामायिकच्छेदोपस्थापनीयपरिहारविशुद्धिकसूक्ष्मसम्परायसंयतास्सरागा एव सकषाया एवेत्यर्थः । अराग एवेति, अकषाय एवेत्यर्थः, उपशान्तकषायवीतरागः क्षीणकषायवीतरागश्चेति भावः ॥

कल्पद्वारमाह—

**कल्पद्वारे-सामायिकसूक्ष्मसम्परायथाख्याताः स्थितकल्पेऽस्थितकल्पे च, छेदोपस्थापनीयस्स्थितकल्प एव भवेत् । परिहारविशुद्धिकोऽपीदृश एव । अस्थितकल्पो मध्यमतीर्थकरतीर्थेषु विदेहे चेति ॥ अथवा सामायिको जिनकल्पस्थविरकल्पकल्पातीतेषु भवेत् छेदोपस्थापनीयपरिहारविशुद्धिकौ न कल्पातीते । सूक्ष्मसम्परायथाख्यातौ तु कल्पातीत एव स्याताम् ॥**

कल्पद्वार इति । दशविधसाधुसमाचारः कल्पः, स च सततं प्रथमचरमजिनसाधुभिरवश्यमासेव्यते, अतस्सततासेव्यमानस्स कल्पः स्थितकल्पः । साधुसमाचारेषु दशस्वाद्याश्चत्वारो नियतं मध्यमजिनसाधुभिरासेव्यन्ते नेतरे, इत्यस्थितकल्पा उच्यन्ते । सामायिक इति, एषः चतुर्विंशतितीर्थकरतीर्थेषु सत्त्वेनैते स्थितकल्पेऽस्थितकल्पे च

१. कालस्वभावात्साधवस्त्रिविधपरिणामिन, तत्राद्यसाधव ऋजुजडा अन्त्यसाधवो वक्रजडा मध्यमास्तु ऋजुप्राज्ञा, तत्र ऋजुजडा यावन्मात्र परिस्फुटेन वचसा वार्यते तावन्मात्रमेवैते वर्जयन्ति न सामर्थ्यलब्धमिति

भवन्तीति भावः । छेदोपस्थापनीय इति । छेदोपस्थापनीयपरिहारविशुद्धिकयोस्तु महाविदेहे मध्यमतीर्थकरतीर्थेषु चासत्त्वेनास्थितकल्पस्य चात्रैव भावात् स्थितकल्प एव तौ भवत इति भावः । ईदृश एव स्थितकल्पवृत्तिरेवेत्यर्थः ॥ कल्पस्य जिनकल्पस्थविरकल्परूपेण द्वैविध्यात्तमप्याश्रित्याह–अथवेति । कल्पातीतः, जिनकल्पस्थविरकल्पाभ्यामन्य इत्यर्थः, छेदोपस्थापनीयेति । स्यातामिति परेणान्वयः । कल्पातीत एवेति । न जिनकल्पे न वा स्थविरकल्पे स्यातां, जिनकल्पस्थविरकल्पधर्माणामभावादिति भावः ॥

चारित्रद्वारमाह—

**चारित्रद्वारे–सामायिकः पुलाको बकुशः कषायकुशीलो वा स्यात् । एवं छेदोपस्थापनीयोऽपि । परिहारविशुद्धिकसूक्ष्मसम्परायौ कषायकुशीलावेव । यथाख्यातस्तु निर्ग्रन्थः स्नातको वेति ॥**

चारित्रद्वार इति । सामायिक इति, पुलाकबकुशकुशीलनिर्ग्रन्थस्नातकरूपेण पञ्चनिर्ग्रन्थभेदा अग्रे वक्ष्यन्ते । तानाश्रित्येयं विचारणा बोध्या, पुलाकादिपरिणामस्य चारित्रत्वात् । सामायिकच्छेदोपस्थापनीयौ प्रतिसेवनाकुशीलावपि स्यातां, न तु कषायकुशीलाविति केचित् । कषायकुशीलावेवेति । न तु पुलाकबकुशप्रतिसेवनाकुशीलनिर्ग्रन्थस्नातकरूपाविति भावः । यथाख्यातस्त्विति । उपशान्तक्षीणमोहो निर्ग्रन्थः सयोगायोगकेवली च स्नातक इति भावः ॥

प्रतिसेवनाद्वारमाश्रित्याह—

**प्रतिसेवनाद्वारे–सामायिकच्छेदोपस्थापनीयौ मूलोत्तरगुणप्रतिसेवकाप्रतिसेवकौ च भवतः । परिहारविशुद्धिकोऽप्रतिसेवकः । एवं सूक्ष्मसम्परायथाख्यातावपि विज्ञेयाविति ॥**

प्रतिसेवनाद्वार इति । अत्र परिनिवीत्युपसर्गपूर्वकादेव षेवृधातोः षिवुधातोर्वा षत्वविधानेन प्रतिपूर्वकस्य षत्वाप्राप्तेः प्रतिसेव्यत इति प्रतिसेवनेत्येव व्युत्पत्तिः, इदमेव द्वारं

---

तेषां दशधा समाचार आसन्, अत्यसाधवश्च रक्तेन किमप्यकृत्यं प्रतिसेव्यापि न कथयन्ति नालोचयन्ति चेति एषामपि दशधा समाचार आसन्, तथाविधमाप्रमोमवतःपन एवंते तथा प्रवर्तन्ते न स्खन, तथा चरणं न घ्नन्ति मध्यमास्तु रहस्यपि यत्प्रतिसेवित तदनभ्यनालोचयन्ति, तज्ज्ञानीय नर्वांपम्पूप वर्जयन्ति, तत्तस्तेषां चतुर्धु नियम कृत इति ॥

विराधनाद्वारमित्यप्युच्यते । मूलोत्तरगुणप्रतिसेवकाविति । इमौ प्रतिसेवकावप्रतिसेवकौ च, यदि प्रतिसेवकौ तदा मूलगुणानां प्राणातिपातविरमणादीनामनाश्रवाणामन्यतमं प्रतिसेवेवाम् । संज्वलनकषायोद्गमात्संयमप्रतिकूलार्थस्य कस्यचित्सेवना प्रतिसेवना । तथोत्तरगुणानां दशविधप्रत्याख्यानानामन्यतमं प्रतिसेवेतामिति भावः । उपलक्षणञ्चैतत् तेन पिण्डविशुद्ध्यादीनां विराधकत्वमपि सम्भाव्यते ॥

ज्ञानद्वारमाचष्टे—

**ज्ञानद्वारे–सामायिकादिचतुर्णां द्वे वा त्रीणि वा चत्वारि वा ज्ञानानि भवन्ति । यथाख्यातस्यैकादशद्वादशगुणस्थानयोश्चत्वारि ज्ञानानि, ऊर्ध्वगुणस्थानयोः केवलज्ञानं भवतीति ॥**

ज्ञानद्वार इति । द्वे वेति । आभिनिबोधिकज्ञानश्रुतज्ञाने इत्यर्थः । त्रीणि वेति । आभिनिबोधिकश्रुतावधिज्ञानानि, आभिनिबोधिकश्रुतमनःपर्यवज्ञानानि वेत्यर्थः । चत्वारि वेति, आभिनिबोधिकश्रुतावधिमनःपर्यवज्ञानानीत्यर्थः । चत्वारि ज्ञानानीत्युत्कर्षेणेति शेषः, तथा च छद्मस्थवीतरागयथाख्यातचारित्रिणो द्वे वा त्रीणि वा चत्वारि वा ज्ञानानि भवन्तीति भावः । ऊर्ध्वगुणस्थानयोरिति, सयोग्ययोगिगुणस्थानयोरित्यर्थः ॥

अथ ज्ञानप्रसङ्गेन मध्य एव ज्ञानविशेषभूतस्य श्रुतस्य प्रकारं विभावयति—

**श्रुतद्वारे–सामायिकच्छेदोपस्थापनीययोर्जघन्यतोऽष्टौ प्रवचनमातर उत्कर्षतस्तु यावच्चतुर्दशपूर्वं श्रुतम् । परिहारविशुद्धस्य जघन्यतो नवमपूर्वस्याचारवस्तु । उत्कृष्टतस्त्वपूर्णदशपूर्वं यावत् । सूक्ष्मसम्परायिकस्य तु सामायिकस्येव । यथाख्यातस्य निर्ग्रन्थस्य सामायिकस्येव । स्नातकस्य श्रुतं नास्तीति ॥**

श्रुतद्वार इति । तथा च ज्ञानद्वार एव श्रुतद्वारस्यान्तर्गततया नाधिकद्वारशङ्का कार्या । आचारवस्त्विति । नवमस्य पूर्वस्य तृतीयाऽऽचारवस्तुनामाधिकारविशेष इति भावः । अपूर्णदशपूर्वमिति । देशोनदशपूर्वमित्यर्थः । सामायिकस्येवेति । जघन्यतोऽष्टौ प्रवचनमातर उत्कृष्टतस्तु यावच्चतुर्दशपूर्वमित्यर्थः, श्रुतं नास्तीति, केवलज्ञानित्वादिति भावः ॥

---

१. परिहारविशुद्धिकोऽपूर्वमागमं नाधीते, यतस्तत्कल्पमधिकृत्य प्रागृहीतोचितयोगाऽऽराधनात एव कृतकृत्यतां भजते, पूर्वाधीतन्तु विस्रोतसिकाक्षयनिमित्तं नित्यमेवैकाग्रमनास्सम्यक् प्रायोऽनुस्मरतीति ॥

तीर्थद्वारमाह—

तीर्थद्वारे–तीर्थेऽप्यतीर्थेऽपि सामायिको भवेत्। अतीर्थे तु तीर्थकरः प्रत्येकबुद्धश्च स्यात्। छेदोपस्थापनीयपरिहारविशुद्धिकौ तीर्थ एव। सूक्ष्मसंपराययथाख्यातौ सामायिक इवेति ॥

तीर्थद्वार इति। स्पष्टम् ॥

लिङ्गद्वारमाह—

लिङ्गद्वारे–सामायिकच्छेदोपस्थापनीयसूक्ष्मसंपराययथाख्याता द्रव्यतस्स्वलिङ्गेऽन्यलिङ्गे गृहिलिङ्गेऽपि। भावतस्तु स्वलिङ्ग एव भवेयुः। परिहारविशुद्धिकस्तु द्रव्यतो भावतश्च स्वलिङ्ग एवेति ॥

लिङ्गद्वार इति। लिङ्गं द्विधा, द्रव्यभावभेदात्, भावलिङ्गं ज्ञानादि, द्रव्यलिङ्गं तु द्विधा स्वपरलिङ्गभेदात्, स्वलिङ्गं रजोहरणादिकं, परलिङ्गं द्विविधं कुतीर्थिकलिङ्गं गृहस्थलिङ्गञ्चेति। स्पष्टमन्यत् ॥

शरीरद्वारमाह—

शरीरद्वारे सामायिकच्छेदोपस्थापनीययोरौदारिकतैजसकार्मणानि, औदारिकतैजसकार्मणवैक्रियाणि, औदारिकवैक्रियाऽऽहारकतैजसकार्मणानि वा शरीराणि भवन्ति। शेषाणान्त्वौदारिकतैजसकार्मणानीति ॥

शरीरद्वार इति। कार्मणवैक्रियाणीति। पूर्वापेक्षयाऽत्र वैक्रियस्यैवाधिक्यप्रदर्शनाय क्रमोल्लंघनम्। शेषाणामिति, परिहारविशुद्धिकसूक्ष्मसम्पराययथाख्यातानामित्यर्थः। त्रीण्येव शरीराणि भवन्तीति भावः ॥

क्षेत्रद्वारमाह—

क्षेत्रद्वारे—जन्मसद्भावावाश्रित्य सामायिकच्छेदोपस्थापनीयसूक्ष्मसम्पराययथाख्याताः कर्मभूम्यां संहरणापेक्षया त्वकर्मभूमौ भवेयुः। परिहारविशुद्धिकस्तु कर्मभूमावेव भवेत्। नास्य संहरणं भवेदिति ॥

१. निग्रन्थेनोभयत्र वर्त्तो, एवेनापि विना [illegible] भव. ॥

क्षेत्रद्वार इति । जन्मसद्भावाविति । जन्म—उत्पत्तिः, सद्भावो विवक्षितक्षेत्रादन्यत्र तत्र या जातस्य तत्र चरणभावेनास्तित्वम् । कर्मभूम्यामिति । अकर्मभूमौ जन्मतो न भवन्ति, तत्र जातानां चारित्राभावात्, अत्रैते चत्वारः स्वयं विहरन्ति, परकृतविहारापेक्षया तु कर्मभूमावकर्मभूमौ वेत्यपि बोध्यम्, पञ्चभरतपञ्चमहाविदेहपञ्चैरावतानि कर्मभूमयः । हैमवतहरिवर्षदेवकुरूत्तरकुरुरम्यकैरण्यवतानि पञ्चभिर्गुणितानि षडकर्मभूमय इति । संहरणापेक्षयेति, संहरणं नाम क्षेत्रान्तरात्क्षेत्रान्तरे देवादिभिर्नयनम् । अकर्मभूमाविति, कर्मभूमावपीति बोध्यम् । कर्मभूमावेवेति, तत्रैव जायते विहरति चेति भावः । नान्येति, एतल्लब्धिमतो देवादिभिस्संहर्तुमशक्यत्वादिति भावः ॥

कालद्वारमाह—

**कालद्वारे—सामायिकं उत्सर्पिण्यामवसर्पिण्यां नोउत्सर्पिण्यवसर्पिण्यामपि काले स्यात् । तत्र यद्युत्सर्पिण्यां स्यात्तदा जन्मतो दुष्षमादुष्षमसुषमासुषमदुष्षमारूपे अरकत्रये, सद्भावतस्तृतीयतुर्ययोः, संहरणतो यत्र क्वापि स्यात् । यद्यवसर्पिण्यां तदा जन्मसद्भावाभ्यां तृतीयचतुर्थपञ्चमेषु पूर्वक्रमविपरीतेष्वरकेषु, संहरणतस्सर्वेषु स्यात् । यदि नोउत्सर्पिण्यवसर्पिण्यां तदा महाविदेहे दुष्षमसुषमासदृशारके स्यात् । एवं छेदोपस्थापनीयोऽपि, परन्तु जन्मसद्भावापेक्षया नोउत्सर्पिण्यवसर्पिण्यां न स्यात् ॥**

कालद्वार इति । *उत्सर्पिण्यवसर्पिणी नोउत्सर्पिण्यवसर्पिणी चेति त्रिविधः कालः ।* तत्राद्यौ द्वौ कालौ भरतैरावतक्षेत्रयोः, तृतीयो महाविदेहहैमवतादिषु भवति । जन्मतो दुःषमेति, द्वितीयतृतीयचतुर्थरूप इत्यर्थः । तत्र द्वितीयस्यान्ते जायते तृतीये चरणं प्रतिपद्यते, तृतीयचतुर्थयोस्तु जायते चरणं प्रतिपद्यते चेति बोध्यम् । सद्भावमाश्रित्य तु तस्य तृतीयचतुर्थयोरेव सत्त्वेत्याह सद्भावत इति । तयोरेव चरणप्रतिपत्तेरिति भावः । यत्र क्वापीति, षट्स्वपीति भाव. । पूर्वक्रमविपरीतेष्विति, सुषमदुष्षमादुष्षमसुषमादुष्षमारूपेष्वित्यर्थः । संहरणतस्त्विति, देवादिकृतसंहरणावच्छेदेनेत्यर्थः । सर्वेष्विति, अरकेष्विति शेष., यस्य कस्यचिदरकस्य सदृशः कालो यत्र तत्रापीत्यर्थः । सुषमसुषमायाः सदृशः कालो देवकुरूत्तरकुरुषु, सुषमासमकालो हरिवर्षरम्यकेषु, सुषमदुष्षमासमानकालो हैमवतैरण्यवतेषु, दुष्षमसुषमातुल्यकालो महाविदेहेषु, दुष्षमादुष्षमदुष्षमासन्निभः कालो न क्वापि क्षेत्र इति बोध्यम् । छेदोपस्थापनीयस्य प्रायः सामा-

यिकतुल्यत्वेऽपि तत्र यो विशेषस्तमाहैवमित्यादिना, प्राय इति शेषः । छेदोपस्थापनीयः प्राय एवमेव सामायिकवदेवेत्यर्थ । प्रायश्शब्दसूचित विशेषमाह परन्त्विति । छेदोपस्थापनीयस्य चतुर्विधारकतुल्यारकवस्तु क्षेत्रेषु नो जन्म न वा सद्भाव , संहरणतस्तु स्यात्सद्भाव इति भावः ॥

परिहारविशुद्धिसंयतमधिकृत्याह—

**परिहारविशुद्धिसंयत उत्सर्पिण्यवसर्पिण्योः काले स्यान्न तु नोउत्सर्पिण्यवसर्पिणीकाले । उत्सर्पिण्यवसर्पिण्योर्यथायोगं द्वितीयतृतीयचतुर्थपञ्चमारकेषु ॥**

परिहारविशुद्धिसंयत इति । परिहारविशुद्ध्या संयम इत्यर्थः । उत्सर्पिण्यवसर्पिण्योः काल इति । उत्सर्पिण्यवसर्पिणीसञ्ज्ञे काल इत्यर्थः, उत्सर्पिणीनामके कालेऽवसर्पिणी नामके काले चेति भावार्थ । यथायोगमिति । उत्सर्पिण्या जन्मतो दुष्षमादुष्षमसुषमासुषमदुष्षमारूपेषु, सद्भावतस्तु दुष्षमसुषमासुषमदुष्षमारूपयोरवसर्पिण्या जन्मतस्सुषमदुष्षमादुष्षमसुषमारूपयोस्सद्भावतस्सुषमदु षमादुष्षमसुषमादुष्षमारूपेष्वरकेष्विति भावः ॥

अथ सूक्ष्मसम्परायंयथाख्यातावाश्रित्याह—

**सूक्ष्मसम्परायो जन्मसद्भावाभ्यां कालत्रये, अरकमाश्रित्य तु यथायोगं सामायिकवत्स्यात् । यथाख्यातोऽप्येवम्, संहरणतस्तु सर्वेष्वरकेषु ॥**

कालत्रय इति । उत्सर्पिण्यवसर्पिणीनोउत्सर्पिण्यवसर्पिणीरूपे कालत्रय इत्यर्थः । अरकेषु कथमित्यत्राहारकमाश्रित्येति । यथायोग सामायिकवदिति । सामायिको हि उत्सर्पिण्या जन्मतो द्वितीयतृतीयचतुर्थेषु भवति, अयमपि तथैव, सामायिकस्सद्भावापेक्षया तृतीयचतुर्थयो । अयन्तु सद्भावतो द्वितीयतृतीयचतुर्थेषु, द्वितीयस्यान्ते जायते तृतीये तु चरणं प्रतिपद्यते, तृतीयचतुर्थयोस्तु जायते चरण प्रतिपद्यते च, चरणभावेन सद्भावविवक्षणे तृतीयचतुर्थयोरेवायमपि । अवसर्पिण्या सामायिको जन्मसद्भावाभ्या तृतीयचतुर्थपञ्चमेषु, अयं [illegible] जन्मतस्तृतीयचतुर्थयो , सद्भावापेक्षया तृतीयचतुर्थपञ्चमेष्विति यथायोगशब्दार्थ इति भावः ॥ इदमेव यथाख्यातेऽप्यतिदिशति यथाख्यातोऽपीति, उभयोस्संहरण स्यान्नवेत्याशङ्कायामाह संहरणतस्त्विति । ननु सूक्ष्मसम्परायंयथाख्यातयोरपगतवेदत्वात् कथं संहरणं, क्षीणवेदाना संहरणस्य शास्त्रे निषिद्धत्वादिति सत्यम्, सामायिकादिषु पूर्वं संहृतो यदा सूक्ष्मसपरायो यथाख्यातो वा भवति तदा भूतसंहरणमाश्रित्यैवमुक्तत्वेनादोषादिति ध्येयम् ॥

का इमा उत्सर्पिण्यादय इत्यत्राह—

**रूपरसाद्युत्कर्षप्रयोजकः काल उत्सर्पिणी। रूपरसादिहानिप्रयोजकः कालोऽवसर्पिणी। तत्रावसर्पिण्यां सुषमसुषमासुषमासुषमदुष्षमा-दुष्षमसुषमादुष्षमादुष्षमदुष्षमारूपाष्षडरका भवन्ति। उत्सर्पिण्यां व्युत्क्रमतष्षडरकास्त एव॥**

रूपेति। उत्सर्पति वर्धत अरकापेक्षया, उत्सर्पयति वा भावानित्युत्सर्पिणीति विग्रहः। रूपरसादीनामुत्कर्षः क्षेत्रे भवति स च कालहेतुकस्तस्माद्रूपरसाद्युत्कर्षप्रयोजकीभूतो यः कालस्सोत्सर्पिणीत्युच्यत इति भावः। आदिना जीवगतानामनुभवायुःप्रमाणशरीरादीनां ग्रहणम्। सूक्ष्माद्धासागरोपमाणां दशभिः कोटीकोटीभिर्निष्पन्नोऽयमुत्सर्पिणीकालविशेषः। अवसर्पिणीस्वरूपमाह रूपरसेति। अवसर्पति हीयत अरकापेक्षया, अवसर्पयति भावान् रूपादीनित्यवसर्पिणीति विग्रहो लक्षणं स्पष्टम्। अयमपि कालविशेष उत्सर्पिणी परिमाण एव। यत्र तु भावा रूपादिस्वरूपा न हीयन्ते न वा वर्द्धन्ते तादृशः कालविशेषो नोऽत्सर्पिण्यवसर्पिणीत्युच्यते। मूले तु सुस्पष्टत्वान्न पृथग्लक्षिता। अथावसर्पिणीं विभजते तत्रेति। सुषमसुषमाया अतिशोभनत्वेन तस्या एव प्रथमं निर्दिदिक्षया क्रममुलंघ्यावसर्पिण्येवादौ विभक्ता। सुषमसुषमेति। शोभनास्समा वर्षा यत्रेति सुषमा, अत्यन्तसुषमत्वाद्वीप्सया सुषमसुषमेति। सर्वथा दुष्षमानुभावरहित एकान्तसुषमारूपो सागरोपमचतुष्कोटीकोटिरूपोऽयं कालः। सुषमेति। सागरोपमाणां कोटीकोटित्रयात्मिका सुषमसुषमापेक्षया हानिमती बोध्या। सुषमदुष्षमेति। दुष्टास्समा यत्र सा दुष्षमा, सुषमा चासौ दुष्षमा चेति विग्रहः। सुषमानुभावबहुलाऽल्पदुष्षमानुभावा सागरोपमाणां कोटीकोटिद्वयप्रमाणाऽवसेया। दुष्षमसुषमेति, दुष्षमा चासौ सुषमा चेति कर्मधारयः, दुष्षमानुभावबहुलाऽल्पसुषमानुभावा द्विचत्वारिंशद्वर्षसहस्रन्यूनैकसागरोपमकोटीकोटिप्रमाणा भवति। दुष्षमेति। इयमेकविंशतिवर्षसहस्रमाना दुष्षमानुभावा। दुष्षमदुष्षमेति। अस्या अपि मानमेकविंशतिवर्षसहस्राणि, सर्वथा सुषमानुभावरहिताऽतिदुष्षमानुभावा चेति षड्भागा अवसर्पिण्या द्रष्टव्याः। अत्र सुषमसुषमायां मनुष्याणां गव्यूतत्रितयं शरीरोच्छ्रायस्त्रीणि च पल्योपमान्यायुः शुभपरिणामोऽपि कल्पवृक्षादिरनेकश्च, तत एषां परतो भागेष्वनन्तगुणा

---

१. अत्र कालस्वरूपतो नित्य इति न तस्य हानिरुपपद्यतेऽन्यथाऽहोरात्र सर्वदा त्रिंशन्मुहूर्त्तात्मकमेव स्यात्, किन्तु अनन्तगुणपरिहाणिभिर्वर्णगन्धरसस्पर्शादिभिर्हीयमानोऽनन्तगुणवृद्धिभिस्तैर्वर्धमान कालो-हीयमानकालो वर्धमानकालश्चेत्युच्यत इति द्रव्यतो नित्यत्वं पर्यायतोऽनित्यत्वमित्याशयेन रूपरसाद्युत्कर्षेत्यादिरूपेण लक्षणं प्रणीतमिति॥

परिहाणिः, सुषमाया गव्यूतद्वयं समुच्छ्रायः पल्योपमद्वयमायुः कल्पवृक्षादिश्च । सुषमदुष्षमायामेकगव्यूतसमुच्छ्राय एकपल्योपमायु. कल्पवृक्षादिः । दुष्षमसुषमायां पूर्वकोट्यायुः पंचशतधनुस्समुच्छ्रायः दुष्षमाया दुःषमदुष्षमायाश्चानियत शरीरोच्छ्रायादिः, तथाप्येवं भण्यते दुष्षमायान्तु प्रारम्भे वर्षशतमायु' सप्तहस्तसमुच्छ्रायः, दुःषमदुष्षमाया पर्यन्ते ▮ हस्तप्रमाणं वपुः षोडशवर्षाणि परमायुर्निरवशेषोपधिपरिहाणिश्चेति बोध्यम् । उत्सर्पिण्यामपि त एव भागास्त्वन्मानास्तत्स्वरूपाः पूर्वोदितक्रमविपरीतक्रमा भवन्तीत्यभिप्रायत आहोत्सर्पिण्यामिति । एवञ्च विंशतिसूक्ष्माद्धासागरोपमकोटीकोटीप्रमाणद्वादशारकरूपमवसर्पिण्युत्सर्पिण्योः कालचक्रं पञ्चसु भरतेषु पञ्चस्वैरवतेषु चानाद्यनन्त परिवर्त्तते । कुरुषु तु सुषमसुषमातुल्यः कालः, हरिरम्यकेषु सुषमातुल्य., हैमवतैरण्यवतेषु सुषमदुष्षमानिभः, षट्पञ्चाशदन्तरद्वीपसहितपञ्चविदेहक्षेत्रेषु दुष्षमसुषमासदृश इति दिक् ॥

सम्प्रति गतिद्वारमाह—

**गतिद्वारे—सामायिकछेदोपस्थापनीयौ मृत्वा देवगतिं यायाताम् । तत्रापि वैमानिक एव । तत्रापि जघन्यतः प्रथमदेवलोकमुत्कृष्टतस्त्वनुत्तरविमानं यावत् । विराधकश्चेत् कोऽपि भवनपतिः स्यात् । परिहारविशुद्धिको वैमानिक एव स्यात् । तत्रापि जघन्यतस्सौधर्मकल्प उत्कृष्टतस्सहस्रारकल्पे स्यात् । सूक्ष्मसम्परायोऽनुत्तरविमाने स्यात् । यथाख्यातसंयतो देवगतौ स्याच्चेत्तदाऽनुत्तरविमान एव स्यादथवा सिद्धिगतिं यायादिति ॥**

गतिद्वार इति । तत्रापीति देवगतावपीत्यर्थ , वैमानिक एवेत्यत्रैवशब्देन भवनवासिवानमन्तरज्योतिष्केषूत्पादो व्युदस्यते । तत्रापीति, वैमानिकेष्वपीत्यर्थ । प्रथमदेवलोकमिति सौधर्मदेवलोकमित्यर्थः । एतत्सर्वं संयमाविराधनया बोध्यम् । देवलोके स्थितिस्तु

१. ननु यत्र शरीरस्य स्वाङ्गुलमूलेऽप्यङ्गुलादुपरितनप्रदेशावगाहित्व, तत्र यथा अनन्ता एवाति सूक्ष्मानन्तभागपरिहाणि, एवमायुष पर्याया एकसमयोनादिरूपा असंख्याता एव आयुःस्थितेरसंख्यातसम यावत्कत्वादसंख्येयाशानामेवायुःपर्यवहानि, उच्यते प्रथमारके प्रथमसमयोत्पन्नमुत्कृष्ट शरीरावगाह भवति, ततो द्वितीयादिसमयोत्पन्ना यावन्नामैकनभःप्रदेशावगाहित्वपर्यवसाने हानमस्मात्पुद्गलानन्त हायमान द्रव्यमात्रहानावपेक्षानन्तत्वकल्पनात्, तथायुर्वद्ध आयुष्यानन्त्य सिद्ध, नभःप्रदेशावगाहस्य पुद्गलोपचयसाध्यत्वात्, एवं प्रतिसमय हीयमानशरीरावगाहनकालेऽभूदनन्तानन्तायु कर्मदलिकानि परिहीयन्ते, तत्र कालहानौ कर्मदलिकहानेरावश्यकत्वात्तानि च अवस्थितिकालस्य यद्यप्यसंख्येया एव अनन्तोऽपि न दोषः ॥

जघन्येन द्वे पल्योपमे, उत्कर्षेण तु त्रयस्त्रिंशत्सागरोपमाणीति । तद्विराधकश्चेद्भवनपतीनामन्यतमेषु देवेषूत्पत्तिः, विराधितसंयमस्य भवनपत्याद्युत्पादस्य शास्त्रानुमतत्वादित्याशयेनाह विराधकश्चेदिति । संयमाविराधकत्वे त्वाह परिहारविशुद्धिक इति, स्पष्टमन्यत् । संयमविराधकश्चेद्भवनपत्यन्यतमेषूत्पद्यते, देवलोके स्थितिरपि जघन्येन द्वे पल्योपमे, उत्कर्षेणाष्टादशसागरोपमाणीति । अनुत्तरविमान इति, अजघन्योत्कृष्टत इति भावः । अयमविराधना प्रतीत्याहमिन्द्रतयोत्पद्यते, विराधना प्रतीत्य तु यः कोऽपि भवनपतिः स्यादिति बोध्यम् । अनुत्तरविमान एवेति, अजघन्योत्कृष्टत इति भावः उभयोरपि संयतयोर्देवलोके स्थितिरजघन्योत्कृष्टतस्त्रयस्त्रिंशत्सागरोपमाणीत्यपि बोध्यम् । यदा तु न देवगतौ तदात्वाहाथवेति ॥

के देवलोकाः के वा भवनपतय इति प्रसङ्गेनोदितायामाशंकायां अग्रे वक्ष्यमाणानपि संक्षेपतोऽत्र वक्ति—

**तत्र सौधर्मैशानसनत्कुमारमाहेन्द्रब्रह्मलान्तकमहाशुक्रसहस्राराऽऽनतप्राणताऽऽरणाऽच्युतभेदेन द्वादशविधा देवलोकाः कल्पोपपन्नदेवानाम् । तदुपरि सुदर्शनसुप्रतिबद्धमनोरमसर्वभद्रविशालसुमनससौमनसप्रीतिकरादित्यभेदेन नव ग्रैवेयकाः । तदुपरि विजयवैजयन्तजयन्तापराजितसर्वार्थसिद्धभेदेन पञ्चानुत्तराः । उभये कल्पातीतानाम् ॥**

तत्रेति । देवा हि सामान्येन विमानवासिज्योतिष्कव्यन्तरभवनपतिभेदेन चतुर्विधाः । विमानवासिनोऽपि कल्पोपपन्नाः कल्पातीताश्चेति द्विविधाः । एवंविधानां देवानां निवासयोग्यस्थानं देवलोक इत्याशयेन तत्स्थानान्याह—सौधर्मेत्यादिना । ज्योतिष्कोपरितनप्रस्तारादसंख्येययोजनाध्वानमारुह्य मेरूपलक्षितदक्षिणभागार्धे प्राग्व्यवस्थितः प्राचीप्रतीच्यायत उदग्दक्षिणविस्तीर्णोऽर्धचन्द्राकृतिर्भास्वरः परिक्षेपत आयामविष्कम्भाभ्यां चासंख्येययोजनकोटीकोट्यो लोकान्तविस्तारः सर्वरत्नमयोऽशोकसप्तपर्णचम्पकचूतसौधर्मावतंसकोपशोभितशक्रावासः सौधर्मः कल्पः । तस्योपरि चोदग्व्यवस्थित ईषदुपरितनश्रेण्या समुच्छ्रिततरो मध्यव्यवस्थिताङ्करस्फटिकरजतजातरूपेशानावतंसकविभूषित ऐशानकल्पः । सौधर्मस्योपरि बहूनि योजनान्यतिक्रम्य सौधर्मकल्पवत्सनत्कुमारः । अस्योपरि माहेन्द्रः कल्प ऐशानकल्पवत् । सनत्कुमारमाहेन्द्रकल्पयोरुपरि बहूनि योजनान्यतीत्य मध्यवर्ती सकलनिशाकराकृतिर्भास्वरः । एवमुपर्युपरि लान्तकमहाशुक्रसहस्रारास्त्रयः कल्पाः, तदुपरि बहूनि योजनान्यतिक्रम्य सौधर्मैशानकल्पद्वयवदानतप्राणतनामानौ द्वौ कल्पौ, तदुपरि समश्रेणिव्यवस्थितौ सनत्कुमार-

माहेन्द्रब्रह्मलान्तकशुक्रसहस्रारानतप्राणतारणाच्युताविति द्वादश देवलोकाः ॥ तत्र कीदृशानां देवानां निवास इत्यत्राह—कल्पोपपन्नदेवानामिति । दीव्यन्तीति देवाः, प्राग्भवोपात्तपुण्यप्राग्भारोपनतविशिष्टभोगसुखाः प्राणिविशेषा , तत्र कल्पा इन्द्रादिदशतया कल्पनात् कल्पाः, कल्पाः आचारा, ते चात्रेन्द्रसामानिकत्रायस्त्रिंशदादिव्यवस्थारूपाः, तान् प्रतिपन्नाः कल्पोपपन्नाः, ते च ते देवाश्च कल्पोपपन्नदेवा वैमानिकविशेषास्तेषामेते लोका इत्यर्थः । तदुपरीति द्वादशदेवलोकोपरीत्यर्थः, नव ग्रैवेयका इति । लोकपुरुषस्य ग्रीवाप्रदेशे भवा ग्रैवेयकास्ते नव यथागमं व्यवस्थितास्सुदर्शनादिशब्दवाच्या नवविधा इत्यर्थ. । तदुपरीति ग्रैवेयकोपरीत्यर्थः । अभ्युदयविघ्नहेतूनां जयात्, कर्मणा विजितप्रायत्वयोपस्थितपरमकल्याणत्वाद्वा प्रतनुकर्मपटलावच्छिन्ना विजयवैजयन्तजयन्ताः, अभ्युदयविघ्नहेतुभिर्न पराजिताः क्षुधादिभिर्वा न पराजिता अपराजिताः, सांसारिकसर्वकर्त्तव्यपरिसमाप्त्याऽनन्तरजन्मनि सकलकर्मक्षयलक्षणमोक्षस्य भावित्वेन सिद्धप्रायास्सर्वार्थसिद्धा एतेषां विमानविशेषा अप्येतन्नामका एव । मूले तु विमानविशेषाणां नामान्यभिहितानि । अनुत्तरा इति, न विद्यन्ते उत्तराणि प्रधानानि विमानानि येभ्यस्तेऽनुत्तराः, देवलोका अपि अनुत्तरा उच्यन्त इति भावार्थः । विमानान्येतानि न परस्परमुपर्युपरि भवन्ति परन्तु मध्ये सर्वार्थसिद्धविमान परितश्चत्वारीति । उभय इति ग्रैवेयका अनुत्तराश्चेत्यर्थः । कल्पातीतानामिति, इन्द्रादिदशतया कल्पनाविरहिणामित्यर्थः, तेषां सर्वेषामपि अहमिन्द्रत्वादिति भावः । तथा च षड्विंशतिर्वैमानिका विज्ञेयाः ॥

अथ ज्योतिष्कादिदेवभेदानाह—

**चन्द्रसूर्यग्रहनक्षत्रतारकाः पञ्च ज्योतिष्काः । पिशाचभूतयक्षराक्षसकिन्नरकिम्पुरुषमहोरगगन्धर्वा अष्टविधा व्यन्तराः । असुरनागसुपर्णविद्युदग्निद्वीपोदधिदिक्पवनस्तनितकुमारभेदेन दशविधा भवनपतयः ॥**

चन्द्रेति । नवत्यधिकसप्तशतयोजनानि भूभागादूर्ध्वं तारकविमानप्रस्तार । ततो दशयोजनानामुपरि सूर्यविमानप्रस्तारः । ततोऽशीतियोजनानामूर्ध्वं चन्द्रविमानप्रस्तारः । तदुपरि

---

१. ये इन्द्रतुल्यतया द्युतिवैभवादिभ्यश्चरन्ति ते सामानिका, ये तु मन्त्रिकल्पाः परस्परेण साहाय्यकारिण उदात्ताचारास्त्रायस्त्रिंशाः गृहपतयस्ते ... कल्पयोर्देवाः सम्यग्दृष्टयोऽपि मिथ्यादृष्टयोऽपि सम्यग्मिथ्यादृष्टयोऽपि, अनुत्तरोपपातिनस्तु सम्यग्दृष्टय एव, विमानाधिपतयस्तु सम्यग्दृष्टय एव, सुलभबोधिनो हेतुर्नामं ... यथायुक्तं । सामानिकदेवा न विमानाधिपतय, देवीनामपि मूल विमानैकदेश एव तदुत्पत्तिदेश्य स्थानम् । जिनजन्मोत्सवादौ नेता सिंहासनानां पालकविमाने सहितत्वात् । शक्रसमहिषीसिंहासनमण्डनमिति बोध्यम् ॥

विंशतियोजनान्यारुह्य नक्षत्रग्रहाणां विमानप्रस्तारः। एतद्विमानवर्त्तिनोऽपि चन्द्रादय उच्यन्ते। ते च द्विविधा मनुष्यक्षेत्रवर्त्तिनो मानुषोत्तरपर्वतात्परतो यावत्स्वयम्भूरमणसमुद्रं वर्त्तिनश्चेति। तत्र प्रथमे मेरोः प्रादक्षिण्येन सर्वदा भ्रमणशीलाः, अपरे च सदावस्थानस्वभावाः, अत एव घण्टावत्स्वस्थानस्था एव तिष्ठन्ति। ज्योतिष्का इति, द्योतयन्ति जगत् प्रकाशयन्तीति ज्योतींषि विमानानि, तेषां लोका ज्योतिष्काः, तेषु भवा अपि ज्योतिष्का इति भावः। अथ तृतीयदेवभेदान्व्यन्तरानाह पिशाचेति। देवत्वावान्तरतन्नामकर्मोदयप्रयुक्ता एते देवभेदा व्यन्तराः, विविधमन्तरं शैलान्तरं कन्दरान्तरं वनान्तरं वाऽऽश्रयरूपं येषां ते व्यन्तराः, विगतं अन्तरं विशेषो मनुष्येभ्यो येषां ते वा व्यन्तराः, मनुष्यानपि चक्रवर्त्तिवासुदेवप्रभृतीन् भृत्यवदुपचरन्ति केचिद्व्यन्तरा इति मनुष्येभ्यो विगतान्तरा इति विग्रहः। चतुर्थदेवभेदानाहासुरेति। कुमारशब्दोऽसुरादिभिः प्रत्येकं योज्यः। एते हि देवाः कान्तदर्शनास्सुकुमारा मृदुमधुरललितगतयश्शृङ्गाराभिजातरूपविक्रियाः कुमारवच्चोद्धतरूपवेषभाषाऽऽभरणप्रहरणावरणपातयानवाहका उल्बणरागाः क्रीडनपराश्चेत्यतः कुमारा उच्यन्ते। भवनपतय इति। भवनानां पतयस्तन्निवासित्वात्स्वामिनो भवनपतयः। नागकुमाराद्यपेक्षया बाहुल्यतो भवननिवासित्वं द्रष्टव्यम्। प्रायो हि ते भवनेषु कदाचिदावासेषु वसन्ति। असुरकुमारास्तु प्राचुर्येणावासेषु कदाचिद्भवनेषु। बहिर्वृत्ता न्यन्तस्समचतुरस्राण्यधःकर्णिकासंस्थानानि भवनानि, कायमानस्थानीया महामण्डपा विचित्रमणिरत्नप्रभाभासितसकलदिक्चक्रा आवासा इति, विस्तरस्त्वन्यत्र निभालनीयः॥

अथ संयमद्वारमाचष्टे—

**संयमद्वारे—सामायिकछेदोपस्थापनीयपरिहारविशुद्धिकसूक्ष्मसम्परायाणां प्रत्येकं संयमस्थानान्यसंख्यातानि। यथाख्यातस्य त्वेकमेव संयमस्थानमिति॥**

**संयमद्वार इति।** संयमश्चारित्रं तस्य स्थानानि विशुद्धिप्रकर्षाप्रकर्षकृतभेदाः, ते च प्रत्येकं सर्वाकाशप्रदेशाग्रगुणितसर्वाकाशप्रदेशपरिमाणाः पर्यवोपेता भवन्तीति, तेन चारित्रद्वारादस्य नाभेदशङ्का कार्या, संयमस्थानस्यात्र विचार्यमाणत्वात्। असंख्यातानीति, सूक्ष्मसम्परायस्य त्वान्तर्मौहूर्त्तिकान्यसंख्येयानि संयमस्थानानि क्षयोपशमवैचित्र्याद्भवन्ति, तदद्धाया अन्तर्मुहूर्त्तमानत्वात् तत्र प्रतिसमयं संयमविशुद्धिविशेषस्य भावादिति विशेषो योध्यः। एकमेव संयमस्थानमिति। एकस्मिन्नेव समये कषायाणामुपशमेन क्षयेण वा चरणशुद्धेर्निर्विशेषत्वादिति भावः। अत्र संयमस्थानस्याल्पबहुत्वचिन्तायां संयमस्थानानि सर्वाण्येव-

विंशतिरसद्भावस्थापनया, तत्र यथाख्यातस्य प्रथममजघन्योत्कृष्टमेकं, ततोऽधस्तनानि चत्वारि तस्मादसङ्ख्येयगुणानि सूक्ष्मसम्परायस्य, ततोऽधस्तनानि चत्वारि विहायाष्टौ पराणि ततोऽसङ्ख्येयगुणानि परिहारविशुद्धिकस्य, त्यक्तानि चत्वारि पूर्वोदितान्यष्टौ ततोऽधस्तनानि चत्वारि चेति षोडशपूर्वेभ्योऽसङ्ख्यातगुणानि सामायिकच्छेदोपस्थापनीययोः, एतानि च द्वयोरपि तुल्यान्येवेति विज्ञेयम् ॥

सन्निकर्षद्वारमभिधत्ते—

**सन्निकर्षद्वारे—सामायिकसंयतस्य चारित्रपर्याया अनन्ताः। एवं यथाख्यातपर्यन्तानां सर्वेषां बोध्याः। सामायिकस्सामायिकान्तराद्धीनस्समानोऽधिकोऽपि स्यात्। हीनाधिकत्वे च षट्स्थानपतितत्वं स्यात्। एवं छेदोपस्थापनीयपरिहारविशुद्धिकापेक्षयाऽपीत्थमेव भाव्यम्। सूक्ष्मसम्परायिकयथाख्यातापेक्षया त्वनन्तगुणहीनचारित्रपर्यायवान् स्यात् ॥**

**सन्निकर्षद्वार इति।** चारित्रपर्याया इति, सर्वविरतिरूपपरिणामस्य चारित्रस्य पर्याया भेदास्ते च बुद्धिकृता विषयकृता वा बोध्याः। बोध्या इति, चारित्रपर्याया अनन्ता इत्यनुषज्यते। ननु सामायिकादीनां सर्वेषां चारित्रभेदस्यानन्तत्वाविशेषेण साम्यतापत्त्या स्वस्वसजातीयेभ्यस्स्वविजातीयेभ्यो वा हीनाधिकभावोऽस्ति नवेत्याशङ्कायामाह सामायिक इति। सामायिकान्तरादिति, स्वसजातीयादित्यर्थः। हीन इति, विशुद्धसंयमस्थानसम्बन्धित्वेन विशुद्धतरपर्यायापेक्षयाऽविशुद्धसंयमस्थानसम्बन्धित्वेनाविशुद्धतराः पर्याया हीनाः, तद्योगात्संयतोऽपि हीन इति भावः। समान इति, सदृशविशुद्धिकपर्याययोगात्समान इत्यर्थः। अधिकोऽपीति, विशुद्धतरपर्याययोगादधिक इत्यर्थः, षट्स्थानपतितत्वमिति। वस्तूनामनन्तासङ्ख्यातसङ्ख्यातभागैः, सङ्ख्यातासंख्यातानन्तगुणैश्च वृद्धिर्वा हानिर्वा भवति, सर्वविरतिविशुद्धिस्थानादीनां वस्तूनां वृद्धिर्वा हानिर्वा विचिन्त्यमाना षट्स्थानगता प्राप्यते यथा अनन्तभागवृद्धिरसंख्यातभागवृद्धिः, सङ्ख्यातभागवृद्धिः, सङ्ख्यातगुणवृद्धिः, असङ्ख्यातगुणवृद्धिः, अनन्तगुणवृद्धिश्च, एवं हानावपीति। स्वविजातीयसंयतापेक्षयाप्येवमेव हीनाधिकत्वं स्यादित्याहैवमिति। इत्थमेवेति, हीनस्समानोऽधिकोऽपि स्यात् हीनाधिकत्वे च षट्स्थानपतितत्वं स्यादित्यर्थः। विजातीयसंयतापेक्षया सामायिकस्य विशेषस्तमधिकृत्याह सूक्ष्मेति। अनन्तगुणेति तथाविधविशुद्धिविरहादिति भावः ॥

**छेदोपस्थापनीय आद्यत्रयचारित्र्यपेक्षया सामायिकवत्स्यात्। अन्त्य-**

**द्वयापेक्षयाऽपि तथैव। एवमेव परिहारविशुद्धिकोऽपि। सूक्ष्मसम्पराय आद्यत्रयापेक्षयानन्तगुणाधिक एव। सूक्ष्मसम्परायान्तरापेक्षया तुल्योऽनन्तगुणेन हीनोऽधिकोऽपि स्यात्। यथाख्यातापेक्षयाऽनन्तगुणहीनः। यथाख्यातस्तु विजातीयसंयतापेक्षयाऽनन्तगुणेनाधिक एव, सजातीयापेक्षया तु तुल्य एवेति॥**

आद्यत्रयचारित्र्यपेक्षयेति—सामायिकछेदोपस्थापनीयपरिहारविशुद्धिकरूपसजातीयविजातीयसंयतापेक्षयेत्यर्थः। सामायिकवदिति, हीनाधिकसमत्वानि भवेयुर्हीनाधिकत्वे तु षट्स्थानपतितत्वञ्च भवेदिति भावः। अन्त्यद्वयापेक्षयापि तथैवेति, सूक्ष्मसम्पराययथाख्यातरूपविजातीयसंयतापेक्षयाऽनन्तगुणहीनचारित्रपर्यायवानित्यर्थः। परिहारविशुद्धिकोऽपि सामायिकतुल्य एवेत्याह एवमेवेति। अनन्तगुणाधिक एवेति। सामायिकछेदोपस्थापनीयपरिहारविशुद्धिकानां तथाविधविशुद्धपर्यायाभावेनाऽयमनन्तगुणाधिक एव, न हीनो न वा समान इति भावः। सजातीयसंयतान्तरापेक्षया तु हीनाधिकतुल्यतास्स्युरेवेत्याह—सूक्ष्मेति। यथाख्यातापेक्षया तु कथमित्यत्राह—यथाख्यातेति। अनन्तगुणहीन इति, अनन्तगुणेन हीन एवेत्यर्थः समत्वे वाऽयमपि यथाख्यात एव स्यादिति भावः। यथाख्यातोऽपि विजातीयचारित्र्यपेक्षयाऽधिक एवान्यथा स्वरूपहान्यापत्तेः, सजातीयान्तरापेक्षया तुल्य एव, परस्पर तारतम्याभावादित्याशयेनाह यथाख्यातस्त्विति। अल्पबहुत्वचिन्तायान्तु सामायिकछेदोपस्थापनीययोर्जघन्याश्चारित्रपर्यायाः परस्पर तुल्यास्सर्वेभ्यस्स्तोकाश्च। परिहारविशुद्धिकसंयतस्य जघन्याश्चारित्रपर्याया अनन्तगुणास्तस्यैवोत्कर्षकाश्चारित्रपर्याया अनन्तगुणाः, सामायिकछेदोपस्थापनीययोश्चैतयोरुत्कर्षकाश्चारित्रपर्याया द्वयोरपि तुल्याः परिहारतस्त्वनन्तगुणाः, सूक्ष्मसम्परायस्य जघन्यकाश्चारित्रपर्याया अनन्तगुणास्तस्यैव चोत्कर्षकाश्चारित्रपर्याया अनन्तगुणाः, यथाख्यातसंयतस्याजघन्योत्कृष्टकाश्चारित्रपर्याया अनन्तगुणा इति॥

योगद्वारमाह—

**योगद्वारे–आद्याश्चत्वारस्संयता योगत्रयवन्तः। यथाख्यातस्तु सयोगी अयोगी चेति॥**

योगद्वार इति। योगत्रयवन्त इति, मनोवाक्कायरूपयोगत्रयवन्तो न त्वयोगिन इत्यर्थः। सयोगीति, एकादशद्वादशत्रयोदशगुणस्थानान्तर्भावेण योगत्रयवानित्यर्थः। अयोगीति चतुर्दशगुणस्थानान्तर्भावेण योगत्रयाभाववानित्यर्थः॥

उपयोगद्वारमाख्याति—

**उपयोगद्वारे—आद्यास्त्रयो यथाख्याताश्च साकारनिराकारोपयोगवन्तः स्युः सूक्ष्मसम्परायस्तु साकारोपयोग्येवेति ॥**

**उपयोगद्वार इति।** उपयुज्यते वस्तुपरिच्छेदं प्रति व्यापार्यते जीव एभिरित्युपयोगा बोधरूपा जीवस्य स्वतत्त्वभूता व्यापाराः, ते च द्विधा–साकारा अनाकाराश्च, तत्राकारः, प्रतिवस्तु प्रतिनियतो ग्रहणपरिणामरूपो विशेषः, सहाकारेण वर्त्तन्त इति साकाराः, सामान्यविशेषात्मके वस्तुनि विशेषांशग्राहिण इत्यर्थः। तद्विपरीतास्त्वनाकाराः सामान्यांशग्राहिण इत्यर्थः। आद्या इति। सामायिकछेदोपस्थापनीयपरिहारविशुद्धिका यथाख्याताश्च साकारोपयोगवन्तो निराकारोपयोगवन्तश्च। साकारोपयोग्येवेति, नाऽनाकारोपयोगयुक्तस्तस्य तथास्वभावत्वादिति भावः ॥

कषायद्वारं वक्ति—

**कषायद्वारे–सामायिकस्सकषाय एव। छेदोपस्थापनीयोऽप्येवम्। परन्तु श्रेणिगतयोस्तु प्रथमं चत्वारः कषायाः, ततः क्रोधादिषु क्रमेण प्रथमादीन् विहाय त्रयो द्वावेको वा स्यात्। परिहारविशुद्धिकस्तु सकषाय एव श्रेणिप्राप्त्यभावात्। सूक्ष्मसम्परायस्संज्वलनलोभकषायवान् यथाख्यातस्त्वकषायीति ॥**

**कषायद्वार इति।** सकषाय एवेति एवशब्देनाकषायत्वव्यवच्छेदः। तथात्वेऽपि यो विशेषस्तमाह परन्त्विति। श्रेणिगतयोरिति। उपशमश्रेणिं वा क्षपकश्रेणिं वा प्रविष्टयोस्सामायिकछेदोपस्थापनीययोरित्यर्थः। प्रथममिति, श्रेणिप्रतिपत्तिपूर्वमित्यर्थः। चत्वार इति, संज्वलनक्रोधमानमायालोभरूपा इत्यर्थः, तत इति, श्रेणिना संज्वलनक्रोधादिके उपशान्ते क्षीणे वेत्यर्थः। क्रमेणेति, क्रोधं विहाय त्रयः, क्रोधमानौ विहाय द्वौ, क्रोधमानमाया हित्वैको वा स्यादित्यर्थः। सकषाय एवेति। सञ्ज्वलनक्रोधमानमायालोभलक्षणचतुःकषायवानेव, न तु तस्य त्रयो द्वावेको वा कषायो भवेदित्यर्थः। किमयमेवमेव भवेदित्यत्राह श्रेणीति, उपशमक्षपकान्यतरश्रेणिप्राप्त्यभावात्, तथास्वभावत्वादिति भावः। यथाख्यातस्त्विति। उपशान्तकषायवान् क्षीणकषायवान्वा स्यादिति भावः ॥

लेश्याद्वारमभिधत्ते—

**लेश्याद्वारे—सामायिकछेदोपस्थापनीयौ षड्विधलेश्यावन्तौ ।**

**परिहारविशुद्धिकः शुभलेश्यात्रयवान्। सूक्ष्मसम्परायश्शुक्लमात्रलेश्यावान्। यथाख्यातस्तु परमशुक्ललेश्यावान्, चतुर्दशगुणस्थाने तु लेश्यारहित इति ॥**

लेश्याद्वार इति । कृष्णादिद्रव्यसाचिव्यप्रयुक्तजीवपरिणामविशेषो लेश्या। योगनिमित्तेयं, तेन सहान्वयव्यतिरेकानुविधानात्। तत्रापि योगघटकद्रव्यरूपा, न तु योगनिमित्तकर्मद्रव्यस्वरूपा, योगनिमित्तकर्मणो घात्यघात्यन्यतरात्मकत्वात्, तत्र च घातिस्वरूपत्वे यथाख्याते सयोगिनि परमशुक्ललेश्याया असत्त्वप्रसङ्गः, अघातिस्वरूपत्वे तु चतुर्दशगुणस्थानस्थे यथाख्याते लेश्यायाः सत्त्वप्रसङ्गश्च स्यात् । अयोगिनो योगपरिणामाभावे लेश्यापरिणामाभावाद्योगपरिणाम एव लेश्या, योगघटकत्वेन चास्याः कषायाणामुदयोपबृंहकत्वमनुभागहेतुत्वञ्च, इयं भावलेश्या, द्रव्यलेश्या तु कृष्णादिद्रव्यात्मिका, सा च कृष्णनीलकापोततेजःपद्मशुक्लभेदात् षोढा । कृष्णद्रव्यसम्बन्धप्रयुक्ताविशुद्धपरिणामः कृष्णलेश्या, एवं नीलनीललोहितलोहितपीतशुक्लद्रव्यप्रयुक्तत्वं नीलादिलेश्यानां भाव्यम् । कृष्णनीलकापोता अशुभाश्शेषाश्शुभाः । षड्विधलेश्यावन्ताविति, सकषायमेवाश्रित्येदम् । शुभलेश्यात्रयवानिति, तेजःपद्मशुक्ललेश्यावानिति भावः । भावलेश्यापेक्षया प्रशस्ता एते । परमशुक्ललेश्यावानिति, अतिविशुद्धपरिणामत्वात् शुक्लध्यानस्य तृतीयो भेदस्तत्रोपयोगिनी, परमशुक्ललेश्येत्युच्यते, एकादशद्वादशगुणस्थानस्थयोः केवल शुक्ला । चतुर्दशे तु नास्ति लेश्येत्याह—चतुर्दशेति। योगाभावादिति भावः ॥

परिणामद्वारमाह—

**परिणामद्वारे—सामायिकच्छेदोपस्थापनीयपरिहारविशुद्धिका वर्द्धमानहीयमानस्थिरपरिणामवन्तः। सूक्ष्मसम्परायः श्रेण्यां वर्धमानो हीयमानश्च स्यान्न स्थिरपरिणामवान्। तत्कालस्तु जघन्यतस्समय एक उत्कृष्टतोऽन्तर्मुहूर्त्तपरिमाणः। एवमाद्यानां कालो ज्ञेयः। यथाख्यातस्तु न हीयमानपरिणामवान्। वर्धमानपरिणामकालस्तु जघन्यत उत्कृष्टतश्चान्तर्मुहूर्त्तमानमिति। स्थितिस्तु जघन्येनैकस्समयः। उत्कृष्टतस्त्रयोदशगुणस्थानस्थस्य किञ्चिदूनपूर्वकोटिपर्यन्ता बोध्येति ॥**

---

१. पूर्वप्रतिपन्नस्तु सर्वास्वपि कथञ्चिद्भवति तत्रापि नात्यन्तसङ्क्लिष्टासु वर्त्तते, तथाभूतासु वर्त्तमानो न प्रभूतं कालमवतिष्ठते, किन्तु स्तोकम्, तत्र प्रवृत्तिस्तु कर्मवशादिति ॥

परिणामद्वार इति । त्रिविधः परिणामश्शुद्धेर्वर्धमानहीयमानस्थिरभेदात् । शुद्धेरुत्कर्षप्राप्तिर्वर्धमानपरिणामः, अपकर्षप्राप्तिर्हीयमानपरिणामः, अवस्थानञ्च स्थिरपरिणामः । त्रिविधोऽप्ययं परिणामस्सामायिकछेदोपस्थापनीयपरिहारविशुद्धिकानां भवतीत्याह सामायिकेति । न स्थिरपरिणामवानिति, गुणस्थानकस्वभावादिति भावः । ननु सूक्ष्मसम्परायसंयतस्य वर्धमानहीयमानपरिणामौ कियत्कालं भवत इत्यत्राह तत्कालस्त्विति, वर्धमानो हीयमानश्च काल इत्यर्थः । जघन्यत इति । तावेकसमयवर्तिनावित्यर्थः । प्रतिपत्तिसमयानन्तरमेव मरणसम्भवादिति भावः । सिंहावलोकनन्यायेन सामायिकादित्रयाणां परिणामकालमाहाऽऽद्यानामिति । काल इति, वर्धमानकालो हीयमानकालोऽवस्थितकालो वेति भावः । तत्र वर्धमानपरिणामकाले बाधिते कषायेणैकसमयमनुभवनाज्जघन्येनैकस्समयः, वर्धमानपरिणामस्यान्तर्मुहूर्त्तकालावस्थानस्वभावत्वादुत्कर्षेणान्तर्मुहूर्त्तः । एवमेव हीयमानावस्थितपरिणामौ बोध्यौ । यथाख्यातस्य वर्धमानावस्थितपरिणामावेवेत्याह यथाख्यातस्त्विति । प्रत्येकं कालमानमाह वर्धमानेति । यः केवलज्ञानमुत्पादयिष्यति यश्च शैलेशीं प्रतिपन्नस्तस्यैवं बोध्यः, तदुत्तरकालं तद्व्यवच्छेदात् । एकस्समय इति, उपशमाद्धायाः प्रथमसमयानन्तरमेव मरणादिति भावः । किञ्चिदूनेति, नववर्षोनेत्यर्थः । पूर्वकोट्यायुषः पुरुषस्य जन्मतो जघन्येन नवसु वर्षेषु गतेषु केवलज्ञानमुत्पद्यते, ततोऽसौ तदूनां पूर्वकोटीमवस्थितपरिणामश्शैलेशीं यावद्विहरति शैलेश्याञ्च वर्द्धमानपरिणामः स्यात्, अतो देशोनेत्युक्तमिति भावः ॥

बन्धद्वारमाचष्टे—

**बन्धद्वारे-सामायिकादयस्त्रयोऽष्टौ कर्मप्रकृतीरायुर्वर्जसप्तकर्मप्रकृतीर्वा बध्नन्ति । सूक्ष्मसम्परायो मोहनीयायुर्वर्जषट्कर्मप्रकृतीर्बध्नाति । यथाख्यातस्तु एकादशद्वादशत्रयोदशगुणस्थानेषु वेदनीयमेव बध्नाति । चतुर्दशे तु बन्धरहित एवेति ॥**

बन्धद्वार इति, अष्टौ कर्मप्रकृतीरिति, आयुर्बंधकाले परिपूर्णा इति शेषः । आयुर्वर्जेति, त्रिभागाद्यवशिष्टायुषामेव जीवानामायुर्बन्धकतया त्रिभागद्वयादौ नायुर्बन्धकत्वमिति

१. आयुषि बध्यमाने नियमेनाष्टावपि प्रकृतयो बध्यन्ते, मोहनीये तु बध्यमाने अष्टौ, आयुर्वर्जास्सप्त वा, ज्ञानदर्शनावरणनामगोत्रान्तरायेषु बध्यमानेषु, अष्टौ, सप्त षट् षट् च मोहनीयायुर्वर्जास्सूक्ष्मसम्पराये बध्यन्ते, वेदनीये तु बध्यमानेऽष्टौ सप्त षडेका च, तत्रैका वेदनीयरूपा उपशान्तादित्रिषु स्थानेषु तत्राष्टविधबन्धका अप्रमत्तान्ता, सप्तविधबन्धका अनिवृत्तिबादरान्ताः षड्विधबन्धकास्सूक्ष्मसम्परायाः, एते सरागा मोहनीयोदयादिति बोध्यम् ॥

तादृशमाश्रित्यायुर्वर्जेत्युक्तम् । मोहनीयायुर्वर्जेति । अप्रमत्तत्वाद्बादरकषायोदयाभावाच्चेति भावः । वेदनीयमेवेति, बन्धहेतुषु योगानामेव सत्त्वादिति स्पष्टार्थः । बन्धरहित एवेति, बन्धहेतूनां सर्वेषामभावादिति तात्पर्यार्थः ॥

वेदनाद्वारमाह—

**वेदनाद्वारे-सामायिकाद्याश्चत्वारोऽष्टौ कर्मप्रकृतीरनुभवन्ति । यथाख्यातस्तु निर्ग्रन्थावस्थायां मोहवर्जसप्तकर्मप्रकृतीनां वेदको मोहनीयस्योपशान्तत्वात्क्षीणत्वाद्वा । स्नातकावस्थायां घातिकर्मप्रकृतिक्षयाच्चतसृणां वेदक इति ॥**

**वेदनाद्वार** इति । अष्टाविति, नियमेनेति शेषः । मोहवर्जेति, तत्र हेतुमाह मोहनीयस्येति, उपशमश्रेण्या क्षपकश्रेण्येति भावः ॥

उदीरणाद्वारमाह—

**उदीरणाद्वारे-सामायिकछेदोपस्थापनीयपरिहारविशुद्धिका अष्टौ सप्त षड्वा कर्मप्रकृतीरुदीरयन्ति । सूक्ष्मसम्पराय आयुर्वेदनीयवर्जषट्कर्मप्रकृतीरायुर्वेदनीयमोहवर्जपञ्चकर्मप्रकृतीर्वोदीरयति । यथाख्यातस्तु द्वे वा पञ्च वा कर्मप्रकृतीरुदीरयति चतुर्दशगुणस्थाने त्वनुदीरक इति ॥**

**उदीरणाद्वार** इति । उदयावलिकातो बहिर्वर्त्तिनीनां स्थितीनां दलिकं कषायैस्सहितेनासहितेन वा योगसंज्ञकेन वीर्यविशेषेण समाकृष्योदयावलिकायां प्रवेशनमुदीरणा, तस्याः पञ्चस्थानानि, सप्ताष्टौ षट् पञ्च द्वे इति । अष्टाविति, प्रमत्तगुणस्थानं यावत्परिपूर्णा अष्टप्रकृतीरित्यर्थः । सप्तेति, केवलमनुभूयमानभवायुष्कावलिकावशेषे सत्यायुष आवलिकाप्रविष्टत्वेनोदीरणाया अभावादिति भावः । षड्वेति, अप्रमत्तापूर्वकरणानिवृत्तिबादरा वेदनीयायुर्वर्जानां षण्णां कर्मणामुदीरकाः, न तु वेदनीयायुषोः, तदुदीरणायोग्याध्यवसायाभावात् अतिविशुद्धत्वादिति भावः । सूक्ष्मसम्पराय इति, यावन्मोहनीयमावलिकाशेषं न भवति तावत् षण्णां, आवलिकाशेषे च मोहनीये तस्याप्युदीरणाया अभावात्पञ्चानामुदीरक इति

१. मोहनीयस्योदयेऽष्टानामुदय, मोहनीयवर्जाना त्रयाणा घातिकर्मणामुदयेऽष्टाना सप्ताना वा तत्राष्टाना सूक्ष्मसम्परायगुणस्थानं यावत् सप्तानामुपशान्तमोहे क्षीणमोहे वा, वेदनीयायुर्नामगोत्राणामुदयेऽष्टाना सप्ताना चतसृणा वोदय-, सूक्ष्मसम्परायं यावदष्टाना उपशान्तमोहे क्षीणमोहे वा सप्ताना चतसृणामेतासामेव वेदनीयादीना सयोगिकेवलिन्ययोगिकेवलिनि चेति ॥

भावः । द्वे वेति, क्षीणमोहे ज्ञानदर्शनावरणान्तरायेष्वावलिकामात्रावशिष्टेषु तेषामुदीरणाया अभावान्नामगोत्रलक्षणे द्वे एव कर्मणी उदीरयतीति भावः । पञ्च वेति, उपशान्तमोहे वेद्यमानस्यैवोदीरणानियमेन मोहनीयस्योदयाभावेनोदीरणाया अभावाद्वेदनीयायुषोश्च पूर्वोक्तकारणेनाभावात्, क्षीणमोहे मोहस्य क्षीणत्वाच्च पञ्चानां कर्मणामुदीरक इति भावः । अनुदीरक इति, उदीरणाया योगसव्यपेक्षत्वेन तत्र योगाभावादिति भावः ॥

उपसम्पद्धानद्वारमाचष्टे—

**उपसम्पद्धानद्वारे–सामायिकस्सामायिकत्वं त्यजन् छेदोपस्थापनीयत्वं सूक्ष्मसम्परायत्वमसंयतत्वं वा प्राप्नुयात् । छेदोपस्थापनीयत्वं त्यजन् सामायिकत्वं परिहारविशुद्धिकत्वं सूक्ष्मसम्परायत्वमसंयतत्वं वा प्राप्नुयात् । परिहारविशुद्धिकः परिहारविशुद्धिकत्वं त्यजन् पुनर्गच्छाद्याश्रयणाच्छेदोपस्थापनीयत्वं देवत्वोत्पत्तावसंयतत्वं वा भजेत् । सूक्ष्मसम्परायस्तत्त्वं श्रेणिप्रतिपातेन त्यजन् पूर्वं सामायिकश्चेत्तत्त्वं छेदोपस्थापनीयश्चेत्तत्त्वं श्रेणिसमारोहणतो यथाख्यातत्वं वा यायात् । यथाख्यातसंयतस्तु तत्त्वं त्यजन् श्रेणिप्रतिपाततो सूक्ष्मसम्परायत्वं असंयमं वा प्रतिपद्यते, उपशान्तमोहत्वे मरणाद्देवोत्पत्तिं स्नातकत्वे तु सिद्धिगतिं प्रतिपद्यत इति ॥**

उपसम्पद्धानद्वार इति । उपसम्पत् छेदोपस्थापनीयत्वादीनां सामायिकादेः प्राप्तिः, हानं तस्यैव सामायिकत्वादीनां त्यागस्ते अधिकृत्य विचार इत्यर्थः । छेदोपस्थापनीयत्वमिति चतुर्यामधर्मात्पञ्चयामधर्मसंक्रमे पार्श्वनाथशिष्यवत् तथा शिष्यको वा महाव्रतारोपण इति भावः । सूक्ष्मसम्परायत्वमिति, श्रेणिप्रतिपत्तित इति भावः । असंयतत्वमिति भावप्रतिपातादिति भावः । त्यजन्निति, यथाऽऽदिदेवतीर्थमाधुरजितस्वामितीर्थं प्रतिपद्यमानः, अजितस्वामिशासने छेदोपस्थापनीयत्वाभावादिति भावः । परिहारविशुद्धिकत्वमिति परिहारविशुद्धिकसंयमे हि छेदोपस्थापनीयसंयतस्यैव योग्यता, अत एव सामायिकस्य स्वस्वभावपरित्यागे परिहारविशुद्धिकत्वप्राप्तिर्मूले नोक्तेति भावः । सूक्ष्मसम्परायस्तं श्रेण्यारोहणाद्धावप्रतिपाताद्वासंयतत्वं संयतासंयतत्वं वा प्रतिपद्यत इत्याह सूक्ष्मसम्परायत्वमिति, स्पष्टं शिष्टम् । तत्त्वमिति, सूक्ष्मसम्परायत्वमित्यर्थः । श्रेणिप्रतिपातेनेति, अद्धाक्षयेण भवक्षयेण चोपशमश्रेणीतः प्रतिपातेनेत्यर्थः, येन संयमेन सूक्ष्मसम्परायत्वमाप्तः तत्त्वं पतन्प्रतीत्याशयेनाह पूर्वमिति । श्रेण्यां वर्द्धमानः सूक्ष्मसम्परायो यथाख्यातत्वमेवाप्नोति

श्रेणिसमारोहणत इति । तत्त्व त्यजन्निति, यथाख्यातत्व त्यजन्नित्यर्थः, श्रेणीप्रतिपातत इति उपशमश्रेणीत प्रतिपातादित्यर्थ । स्पष्टमन्यत् ॥

सञ्ज्ञाद्वारमाचष्टे—

**संज्ञाद्वारे--सामायिकछेदोपस्थापनीयपरिहारविशुद्धिकास्संज्ञोपयुक्ता नोसंज्ञोपयुक्ता भवन्ति, संज्ञोपयुक्ता आहारादिष्वासक्ताः, नोसंज्ञोपयुक्ता आहारादिष्वासक्तिरहिताः । सूक्ष्मसम्परायथाख्यातौ तु आहारादिकर्त्तृत्वेऽपि नोसंज्ञोपयुक्तौ स्यातामिति ॥**

संज्ञाद्वार इति । जीवस्सञ्ज्ञायतेऽनयेति सञ्ज्ञा, वेदनीयमोहोदयाश्रिता ज्ञानदर्शनावरणक्षयोपशमाश्रिता च विचित्राहाराद्यभिलापादिक्रिया, सा चोपाधिभेदाद्दशविधा, आहारभयपरिग्रहमैथुनक्रोधमानमायालोभौघलोकभेदात् । सामायिक इति, सञ्ज्ञोपयुक्ता इति वेदनीयमोहोदयादिनिमित्तसद्भावादिति भावः । नोसञ्ज्ञोपयुक्ता भवनिमित्तोपशमप्रभावादिति भावः । सरागत्वे निरभिष्वङ्गतायास्सर्वथाऽभाव इति नियमाभावादिति तात्पर्यम् । नोसञ्ज्ञोपयुक्ता इति, ज्ञानप्रधानोपयोगवन्त', आहाराद्युपभोगेऽपि तत्रानभिष्वक्ताः नीरागत्वादिति भावः । सञ्ज्ञोपयुक्तशब्दार्थमाह सञ्ज्ञोपयुक्ता इति, नोसञ्ज्ञोपयुक्तशब्दार्थमाह नोसञ्ज्ञोपयुक्ता इति, स्पष्टमवशिष्टम् ॥

आहारकद्वारमाह—

**आहारकद्वारे–सामायिकाश्चत्वार आहारका एव, यथाख्यातस्त्रयोदशगुणस्थानं यावदाहारकश्चतुर्दशगुणस्थाने केवलिसमुद्घाततृतीयचतुर्थपञ्चमसमयेष्वनाहारक इति ॥**

आहारकद्वार इति । औदारिकवैक्रियाहारकपुद्गलादानमाहारस्त करोतीत्याहारक' । तत्तद्भवयोग्यपुद्गलादानस्यावश्यकत्वात्सामायिकादीनामाहारकत्वमेवेत्यभिप्रायेणाह सामायिका इति, सामायिकत्वादिविशिष्टा इत्यर्थ , यथाख्यातस्सयोग्यन्तमाहारक एवेत्याह यथाख्यात इति । अष्टसामयिके समुद्घाते तृतीयचतुर्थपञ्चमसमयेषु केवलकार्मणयोगयुतत्वेनाहारग्रहणासम्भवादनाहारक , अयोगिनश्शैलेश्यवस्थाया ह्रस्वपञ्चस्वरोच्चारणप्रमाणमात्रमानायाश्च तथेति भाव ॥

---

१ तत्राहारसञ्ज्ञा वेदनीयोदयात् भयपरिग्रहमैथुनक्रोधमानमायालोभसञ्ज्ञा मोहोदयात् ओघसञ्ज्ञा ज्ञानावरणीयाल्पक्षयोपशमात् लोक स्वच्छन्दपरिकल्पितनिरूपरूप , लोकसञ्ज्ञा च ज्ञानावरणीयक्षयोपशमात् मोहोदयाच्च भवति ॥

भवद्वारमाह—

**भवद्वारे–सामायिको जघन्यतः एकं भवमुत्कृष्टतोऽष्टौ भवान् गृह्णीयात्। एवं छेदोपस्थापनीयोऽपि। परिहारविशुद्धिको जघन्यत एकमुत्कृष्टतस्त्रीन्। एवं यथाख्यातं यावदिति ॥**

भवद्वार इति। सामायिक उत्कृष्टपरिणामतो यदि क्षपकश्रेणिमारोहेत्तदा तस्मिन्नेव भवे सिद्ध्यतीत्याह जघन्यत इति। यदि तु श्रेणिमनारूढो जघन्येन सामायिकचारित्रं स्पृशेत्तदाऽष्टौ भवग्रहणानि तस्य स्युरित्याशयेनाहोत्कृष्टत इति। जघन्यत एकमिति, परिहारविशुद्धिकस्तत्त्वं विहाय छेदोपस्थापनीयत्वमवाप्य विशुद्धिविशेषेण क्षपकश्रेणिमारोहति चेत्तदेदमिति भावः। देवलोकगमनञ्चेद्भवेत्तदा मनुष्यो भूत्वा तेनैव भवेन सिद्ध्यतीत्याशयेनाहोत्कृष्टतस्त्रीनिति। एवमिति यथाख्यातस्तु तद्भाव एव मृत्वाऽनुत्तरदेवत्वविशेषमाप्य पुनर्मनुष्यो भूत्वा यदि सिद्ध्येत्तदा भवत्रयं बोध्यम् ॥

आकर्षद्वारमभिधत्ते—

**आकर्षद्वारे–सामायिक एकभवमाश्रित्य जघन्यत एकवारं, उत्कृष्टतश्शतपृथक्त्ववारं सामायिकसंयतत्वं प्राप्नोति। छेदोपस्थापनीयो जघन्यत एकवारमुत्कृष्टतो विंशतिपृथक्त्ववारं छेदोपस्थापनीयत्वं प्राप्नुयात्। परिहारविशुद्धिको जघन्यत एकवारमुत्कृष्टतस्त्रिवारं प्राप्नुयात्। सूक्ष्मसम्परायो जघन्यत एकवारमुत्कृष्टतश्चतुरो वारान् प्रतिपद्यते, यथाख्यातस्तु जघन्यत एकवारमुत्कृष्टतो द्विवारं यथाख्यातत्वं प्राप्नुयादिति ॥**

आकर्षद्वार इति। आकर्षणमाकर्षः प्रथमतया मुक्तस्य वा सामायिकत्वादेर्ग्रहणमित्यर्थः। स चैकं भवं नानाभवांश्चाश्रित्य विचार्यते तत्रैकभवाश्रयेण सामायिकस्य जघन्यत एक आकर्ष उत्कर्षेण चाकर्षाणां शतपृथक्त्वं भवति परतस्तु प्रतिपातोऽलाभो वेत्याशयेनाह सामायिक इति। पृथक्त्वं द्विप्रभृत्यानवभ्य उच्यते, शतपृथक्त्वमिति, शतद्वयादारभ्य यावन्नवशतमित्यर्थः। विंशतिपृथक्त्ववारमिति, पञ्चाशदादिविंशतय आकर्षाणां भवन्तीति भावः। त्रिवारमिति, एकस्मिन् भवे उत्कर्षेण वारत्रयमेव परिहारविशुद्धिकत्वोत्कर्षेति भावः। प्राप्नुयादिति परिहारविशुद्धिकत्वमित्यादिः। चतुरो वारानिति, एकभवे उपशमश्रेणिद्वयसम्भवे प्रत्येकं संक्लिश्यमानविशुद्ध्यमानलक्षणसूक्ष्मसम्परायद्वयभावाच्च चत्वार आकर्षास्तस्य

श्रेणिसमारोहणत इति । तत्त्व त्यजन्निति, यथाख्यातत्व त्यजन्नित्यर्थः, श्रेणीप्रतिपातत इति उपशमश्रेणीत. प्रतिपातादित्यर्थ । स्पष्टमन्यत् ॥

सञ्ज्ञाद्वारमाचष्टे—

**संज्ञाद्वारे–सामायिकछेदोपस्थापनीयपरिहारविशुद्धिकास्संज्ञोपयुक्ता नोसंज्ञोपयुक्ता भवन्ति, संज्ञोपयुक्ता आहारादिष्वासक्ताः, नोसंज्ञोपयुक्ता आहारादिष्वासक्तिरहिताः । सूक्ष्मसम्परायथाख्यातौ तु आहारादिकर्तृत्वेऽपि नोसंज्ञोपयुक्तौ स्यातामिति ॥**

संज्ञाद्वार इति । जीवस्सञ्ज्ञायतेऽनयेति सञ्ज्ञा, वेदनीयमोहोदयाश्रिता ज्ञानदर्शनावरणक्षयोपशमाश्रिता च विचित्राहाराद्यभिलापादिक्रिया, सा चोपाधिभेदाद्दशविधा, आहारभयपरिग्रहमैथुनक्रोधमानमायालोभौघलोकभेदात् । सामायिक इति, सञ्ज्ञोपयुक्ता इति वेदनीयमोहोदयादिनिमित्तसद्भावादिति भावः । नोसञ्ज्ञोपयुक्ता भवनिमित्तोपशमप्रभावादिति भावः । सरागत्वे निरभिष्वङ्गतायास्सर्वथाऽभाव इति नियमाभावादिति तात्पर्यम् । नोसञ्ज्ञोपयुक्ता इति, ज्ञानप्रधानोपयोगवन्तः, आहाराद्युपभोगेऽपि तत्रानभिष्वक्ताः नीरागत्वादिति भावः । सञ्ज्ञोपयुक्तशब्दार्थमाह सञ्ज्ञोपयुक्ता इति, नोसञ्ज्ञोपयुक्तशब्दार्थमाह नोसञ्ज्ञोपयुक्ता इति, स्पष्टमवशिष्टम् ॥

आहारकद्वारमाह—

**आहारकद्वारे–सामायिकाश्चत्वार आहारका एव, यथाख्यातस्त्रयोदशगुणस्थानं यावदाहारकश्चतुर्दशगुणस्थाने केवलिसमुद्घाततृतीयचतुर्थपञ्चमसमयेष्वनाहारक इति ॥**

आहारकद्वार इति । औदारिकवैक्रियाहारकपुद्गलादानमाहारस्त करोतीत्याहारकः । तत्तद्भवयोग्यपुद्गलादानस्यावश्यकत्वात्सामायिकादीनामाहारकत्वमेवेत्यभिप्रायेणाह सामायिका इति, सामायिकत्वादिविशिष्टा इत्यर्थ॰, यथाख्यातस्सयोग्यन्तमाहारक एवेत्याह यथाख्यात इति । अष्टसामयिके समुद्घाते तृतीयचतुर्थपञ्चमसमयेषु केवलकार्मणयोगयुतत्वेनाहारग्रहणासम्भवादनाहारक॰, अयोगिनश्शैलेश्यवस्थाया ह्रस्वपञ्चस्वरोच्चारणप्रमाणमात्रमानायाश्च तथेति भाव ॥

---

१. तत्राहारसञ्ज्ञा वेदनीयोदयात्, भयपरिग्रहमैथुनक्रोधमानमायालोभसञ्ज्ञा मोहोदयात् ओघसञ्ज्ञा ज्ञानावरणीयाल्पक्षयोपशमात् लोक स्वच्छन्दपरिकल्पितविकल्परूप, लोकसञ्ज्ञा च ज्ञानावरणीयक्षयोपशमात् मोहोदयाच्च भवति ॥

भवद्वारमाह—

**भवद्वारे-सामायिको जघन्यतः एकं भवमुत्कृष्टतोऽष्टौ भवान् गृह्णीयात्। एवं छेदोपस्थापनीयोऽपि। परिहारविशुद्धिको जघन्यत एकमुत्कृष्टतस्त्रीन्। एवं यथाख्यातं यावदिति ॥**

भवद्वार इति । सामायिक उत्कृष्टपरिणामतो यदि क्षपकश्रेणिमारोहेत्तदा तस्मिन्नेव भवे सिद्ध्यतीत्याह जघन्यत इति । यदि तु श्रेणिमनारूढो जघन्येन सामायिकचारित्रं स्पृशेत्तदाऽऽष्टौ भवग्रहणानि तस्य स्युरित्याशयेनाहोत्कृष्टत इति । जघन्यत एकमिति, परिहारविशुद्धिकस्तत्त्व विहाय छेदोपस्थापनीयत्वमवाप्य विशुद्धिविशेषेण क्षपकश्रेणिमारोहति चेत्तदेदमिति भावः । देवलोकगमनञ्चेद्भवेत्तदा मनुष्यो भूत्वा तेनैव भवेन सिद्ध्यतीत्याशयेनाहोत्कृष्टतस्त्रीनिति । एवमिति यथाख्यातस्तु तद्भाव एव मृत्वाऽनुत्तरदेवत्वविशेषमाप्य पुनर्मनुष्यो भूत्वा यदि सिद्ध्येत्तदा भवत्रयं बोध्यम् ॥

आकर्षद्वारमभिधत्ते—

**आकर्षद्वारे-सामायिक एकभवमाश्रित्य जघन्यत एकवारं, उत्कृष्टतश्शतपृथक्त्ववारं सामायिकसंयतत्वं प्राप्नोति। छेदोपस्थापनीयो जघन्यत एकवारमुत्कृष्टतो विंशतिपृथक्त्ववारं छेदोपस्थापनीयत्वं प्राप्नुयात् । परिहारविशुद्धिको जघन्यत एकवारमुत्कृष्टतस्त्रिवारं प्राप्नुयात्। सूक्ष्मसम्परायो जघन्यत एकवारमुत्कृष्टतश्चतुरो वारान् प्रतिपद्यते, यथाख्यातस्तु जघन्यत एकवारमुत्कृष्टतो द्विवारं यथाख्यातत्वं प्राप्नुयादिति ॥**

आकर्षद्वार इति । आकर्षणमाकर्षः प्रथमतया मुक्तस्य वा सामायिकत्वादेर्ग्रहणमित्यर्थः । स चैकं भवं नानाभवांश्चाश्रित्य विचार्यते तत्रैकभवाश्रयेण सामायिकस्य जघन्यत एक आकर्ष उत्कर्षेण चाकर्षाणां शतपृथक्त्वं भवति परन्तु प्रतिपातोऽत्राभो वेत्याशयेनाह सामायिक इति । पृथक्त्वं द्विप्रभृत्यानवभ्य उच्यते, शतपृथक्त्वमिति, शतद्वयादारभ्य यावन्नवशतमित्यर्थः । विंशतिपृथक्त्ववारमिति, पञ्चादिविंशतय आकर्षा भवन्तीति भावः । त्रिवारमिति, एकस्मिन् भवे उत्कर्षेण वारत्रयमेव परिहारविशुद्धिकत्वोत्करिति भावः । प्राप्नुयादिति परिहारविशुद्धिकत्वमित्यादिः । चतुरो वारानिति, एकभवे उपशमश्रेणिद्वयसम्भवे प्रत्येकं संक्लिश्यमानविशुद्ध्यमानसूक्ष्मसम्परायद्वयभावाच्च चत्वार आकर्षास्तस्य

सम्भवन्तीति भावः । प्रतिपद्यत इति सूक्ष्मसम्परायत्वमित्यादिः । द्विवारमिति, उपशमश्रेणिद्वयसम्भवादिति भावः ॥

अथ नानाभवावच्छेदेन विचारयति—

**अनेकभवाश्रयेण सामायिकस्य जघन्यतो द्विवारं उत्कृष्टतस्सहस्रपृथक्त्वमाकर्षा भवन्ति । छेदोपस्थापनीयस्य जघन्यतो द्विवारमुत्कृष्टतो नवशतादूर्ध्वं सहस्रावध्याकर्षा भवन्ति । परिहारविशुद्धिकस्य जघन्यतो द्विवारमुत्कृष्टतस्सप्ताकर्षाः, सूक्ष्मसम्परायस्य जघन्यतो द्विवारमुत्कृष्टतो नवाकर्षाः, यथाख्यातस्य जघन्यतो द्विवारमुत्कृष्टतः पञ्चाकर्षा भवन्तीति ॥**

अनेकभवाश्रयेणेति । अनेकभवत्वस्य प्रथमाधारभूतभवद्वये जघन्यतः प्रतिभवमेकस्यैवाकर्षस्योक्तत्वादनेकभवापेक्षया जघन्यतो द्वावेवाकर्षौ भवत इत्यभिप्रायेणाह जघन्यतो द्विवारमिति । सहस्रपृथक्त्वमिति सहस्रद्वयादारभ्य यावन्नवसहस्रं सहस्रपृथक्त्वमुच्यते । सामायिकस्य ह्येकभवे आकर्षाणा शतपृथक्त्वकथनात् भवानामुत्कृष्टतश्चाष्टत्वाच्छतपृथक्त्वेऽष्टभिर्गुणिते सहस्रपृथक्त्व भवतीति भावः । नवशतादूर्ध्वमिति । आकर्षाणा षड्विंशतिरेकभवेऽस्य भवति, भवाश्चास्योत्कर्षेणाष्टौ, तथा चाकर्षास्ता अष्टाभिर्गुणिताः षष्ट्यधिकनवशतानि भवन्ति । सभवमात्राश्रयणेनेदमुक्तम्, अन्यथा सामायिकस्य नवानां शतानामेकभवीयानामष्टभिर्गुणने शतद्वयाधिकसप्तसहस्राणि बोध्यान्येवमन्येषामपि ज्ञेयं । उत्कर्षतस्सप्तेति । भवैकावच्छेदेनाकर्षाणा त्रित्वात भवस्यापि त्रित्वादेकत्र तेषा त्रय द्वितीये द्वयं तृतीयेऽपि द्वयमित्येवं विकल्पनया सप्ताकर्षा इति भावः । नवाकर्षा इति । अस्यैकस्मिन् भवे आकर्षचतुष्कस्योक्तत्वाद्भवत्रयस्याभिधानाच्चैकत्र चत्वारो द्वितीयेऽपि चत्वारस्तृतीये चैक इति कृत्वा नवाऽऽकर्षा भवन्तीति भावः । पञ्चाकर्षा इति, अस्यैकत्र भवे द्वावाकर्षौ भवत्रयञ्चेत्यत एकत्र द्वौ द्वितीये द्वौ तृतीये चैक इति पञ्चाकर्षा इति भावः ॥

कालमानद्वारमाचष्टे—

**कालमानद्वारे—सामायिकस्य संयमकालमानं जघन्येनैकस्समयः । उत्कृष्टतो देशोननववर्षन्यूनपूर्वकोटिं यावत् । एवमेव छेदोपस्थापनीयस्य । परिहारविशुद्धिकस्य जघन्येनैकस्समयः, उत्कृष्टत एकोनत्रिंशद्वर्षन्यूनकोटिं यावत् । सूक्ष्मसम्परायस्य जघन्येनैकस्समयः । उत्कृष्टतोऽन्तर्मुहूर्त्तम् । यथाख्यातस्य तु सामायिकस्येव स्यादिति ॥**

**कालमानद्वार इति** । मानशब्देन पूर्वोदितकालद्वारापेक्षयाऽस्य वैलक्षण्यमादर्शितम् । एकसमय इति, सामायिकत्वप्राप्तिसमनन्तरं मरणसम्भवमभिप्रेत्येदमवसेयमेवमग्रेऽपि भाव्यम् । उत्कर्षेण देशोनेति, गर्भसमयान्तर्भावेणेदम् । तद्बहिर्भावेण जन्मसमयादारभ्य त्वष्टवर्षन्यूनपूर्वकोटिं यावत्स्यात् जन्मतोऽष्टवर्षान्ते चरणप्रतिपत्तेरिति भावः । सामायिकाच्छेदोपस्थापनीयस्याविशेषादाहैवमिति । एकोनत्रिंशद्वर्षन्यूनेति । देशोननववर्षजन्मपर्यायेण केनापि चारित्रं पूर्वकोट्यायुषा गृहीतं तस्य च विंशतिवर्षप्रव्रज्यापर्यायस्य दृष्टिवादोऽनुज्ञातस्ततश्चासौ परिहारविशुद्धिकं प्राप्तस्तच्चाष्टादशमासमानमप्यविच्छिन्नतत्परिणामेन तेनाजन्म पालितमित्येवमेकोनत्रिंशद्वर्षाणां पूर्वकोटिं यावत्तत्स्यादिति भावः । अन्तर्मुहूर्तमिति, तत्स्थानस्य तावत्प्रमाणत्वादिति भावः । क्षीणमोहापेक्षयोत्कर्षेण देशोननववर्षन्यूनपूर्वकोटिर्बोध्या । सर्वमिदमेकजीवापेक्षयाऽवसेयम् ॥

नानाजीवापेक्षया त्वाह—

**अनेकजीवापेक्षया तु सामायिकास्सर्वदा भवेयुः । छेदोपस्थापनीया जघन्यतस्सार्धद्विशतवर्षपर्यन्तमुत्कृष्टतः पञ्चाशल्लक्षकोटिसागरोपमं यावत्स्युः । परिहारविशुद्धिका जघन्येन किञ्चिदूनद्विशतवर्षकालमुत्कृष्टतः किञ्चिदूनद्विपूर्वकोटिकालपर्यन्तं स्युः ॥**

अनेकजीवापेक्षयेति । सर्वदा भवेयुरिति । प्रत्येकं तेषां बहुकालस्थितिकत्वात् महाविदेहापेक्षयैतदिति ज्ञेयम् । सार्धद्विशतवर्षपर्यन्तमिति । उत्सर्पिण्यामादितीर्थकरशासनस्य सार्धशतद्वयवर्षमानत्वेन तत्र छेदोपस्थापनीयसंयतस्य भावादिति भावः । पञ्चाशल्लक्षेति । अवसर्पिण्यामादितीर्थकरशासनस्य पञ्चाशल्लक्षकोटिसागरोपममानत्वेन तत्र छेदोपस्थापनीयसंयतसद्भावादिति भावः । जघन्येन किञ्चिदूनेति । उत्सर्पिण्यां प्रथमजिनसमीपे केनचिद्वर्षशतायुष्केण परिहारविशुद्धिकसंयमः परिगृहीतस्तज्जीवितान्ते तस्यान्तिकेऽपरेण वर्षशतायुष्केण स एव संयमो गृहीतस्ततश्च न परिहारविशुद्धिकस्य प्रतिपत्तिरस्ति, तीर्थकरस्य तीर्थकराद्गृहीतपरिहारविशुद्धिकसंयतस्य वाऽन्तिक एव तद्ग्रहीतुं शक्यत्वात् । ततश्च वर्षशतद्वयं जातं, तत्राप्येकोनत्रिंशद्वर्षेषु व्यतीतेष्वेवैतच्चारित्रप्रतिपत्त्या मेलनतोऽष्टपञ्चाशद्वर्षाणि जातानि, अतस्तन्न्यूनद्विशतवर्षकालं भवतीति भावः । किञ्चिदूनेति । अवसर्पिण्यामादिमजिनस्यान्तिके पूर्वकोट्यायुष्कः कश्चित्परिहारविशुद्धिकस्य प्रथमस्तस्यान्तिके च तज्जीवितान्ते तादृश एवान्यस्तत्प्रतिपन्नः पुनस्तदभावेन पूर्वकोटिद्वयं जातं, तत्र चैकोनत्रिंशद्युग्मस्य न्यूनताकरणे तथा

भावादिति भावः । सूक्ष्मसम्परायाणा जघन्येनैकसमय उत्कर्षेणाऽन्तर्मुहूर्त्तसमयो यथाख्यातानान्तु सामायिकवदेवाऽतस्तेषामेकजीवापेक्षयाऽत्र विशेषाभावान्मूले कण्ठतो नोक्ता. ॥

अन्तरद्वारमाह—

**अन्तरद्वारे—एकस्य संयमग्रहणानन्तरमन्यस्य संयमग्रहणे जघन्यत एकस्समय उत्कृष्टतस्संख्यातवर्षाण्यन्तरकालः । एवं यथाख्यातपर्यन्तं बोध्यः ॥**

अन्तरद्वार इति । स्पष्टोऽयं पाठ॰ । एकजीवमाश्रित्य तु विशेषोऽय सामायिकस्य सामायिकत्वं त्यक्त्वा पुनर्ग्रहणे जघन्यमन्तरमन्तर्मुहूर्त्तमुत्कृष्टतस्त्वनन्तकालमेव सर्वेषामपि ज्ञेयम् । इदमुत्कृष्टमन्तर तीर्थंकरगणधरादिमहापुरुषाणा घोराशातनया प्रवचनोड्डाहकाना भवतीति भाव्यम् ।

पृथक्त्वापेक्षया त्वाह—

**सामायिकैश्शून्यः कालो नास्त्येव । छेदोपस्थापनीयैश्शून्यः कालो जघन्येन त्रिषष्टिसहस्रवर्षाण्युत्कृष्टतोऽष्टादशकोटाकोटिसागरोपमः । परिहारविशुद्धिरहितः कालो जघन्येन चतुरशीतिसहस्रवर्षाण्युत्कृष्टतोऽष्टादशकोटाकोटिसागरोपमः । सूक्ष्मसम्परायरहितः कालो जघन्येनैकस्समय॰ । उत्कृष्टतष्षण्मासाः । यथाख्यातरहितः कालो नास्त्येवेति ॥**

सामायिकैरिति । त्रिषष्टिसहस्रवर्षाणीति । अवसर्पिण्या दुष्षमा यावच्छेदोपस्थापनीयसयम प्रवर्त्तते, ततस्तस्या एवैकविंशतिसहस्रवर्षमानायामेकान्तदु.षमायामुत्सर्पिण्या श्चैकान्तदु॰षमाया दुष्षमायाश्च तत्प्रमाणायामेव तदभावस्स्यादेवञ्चैकविंशतित्रयेण त्रिषष्टिवर्षसहस्राण्यन्तरमुक्तमिति भाव । अष्टादशकोटाकोटिसागरोपम इति । उत्सर्पिण्या चतुर्विंशतितमजिनतीर्थे छेदोपस्थापनीयस्य प्रवृत्तेस्ततोऽतीते च क्रमतो द्वित्रिचतुस्सागरोपमकोटीकोटिप्रमाणे सुषमदु षमादिसमात्रयेऽवसर्पिण्याश्चैकान्तसुषमादित्रये क्रमेण चतुस्त्रिद्विसागरोपमकोटीकोटिप्रमाणेऽतीतप्राये प्रथमजिनतीर्थे छेदोपस्थापनीयत्र प्रवर्त्तते इत्येव छेदोपस्थापनीयस्यान्तर भवति । चतुरशीतिवर्षसहस्राणीति । दुष्षमैकान्तदुष्षमयोरवसर्पिण्या एकान्तदु.षमादुष्षमयोरुत्सर्पिण्याश्च प्रत्येकमेकविंशतिवर्षसहस्रप्रमाणत्वेन चतुर्भिर्गुणिते च तावत्प्रमाणकालान्तर भवति, तत्र च परिहारविशुद्धिकस्याभावादिति भाव. । अष्टादशकोटा-

कोटिसागरोपम इति । छेदोपस्थापनीयस्योत्कृष्टवदयं बोध्यः, षण्मासा इति मुक्तिविरहकालस्य तावन्मात्रत्वादिति भावः ॥

समुद्घातद्वारं वक्ति—

**समुद्घातद्वारे—सामायिकछेदोपस्थापनीययोर्वेदनाकषायमरणवैक्रियतैजसाऽऽहारकाष्षट् समुद्घाता भवन्ति । परिहारविशुद्धिकस्य वेदनाकषायमरणात्मकास्त्रयः । सूक्ष्मसम्परायस्य न कोऽपि । यथाख्यातस्य केवलिसमुद्घात एव भवेदिति ॥**

समुद्घातद्वार इति । वेदनाद्यनुभवज्ञानेन सहैकत्वमापन्नो जीवः बहून् वेदनीयादिकर्मप्रदेशान् कालान्तरानुभवयोग्यानुदीरणाकरणेनाकृष्योदये प्रक्षिप्यानुभूय च तेषां स्वप्रदेशसश्लिष्टानां निर्जरणं समुद्घातः । स च सप्तविधो वेदनाकषायमरणवैक्रियतैजसाहारककेवलिभेदात् । ते च यथाक्रमं असातवेदनीयकषायाख्यचारित्रमोहनीयान्तर्मुहूर्त्तावशेषायुःकर्मवैक्रियतैजसाहारकशरीरनामसदसद्वेद्यशुभाशुभनामोच्चैर्नीचैर्गोत्रकर्माश्रयाः । आद्याष्षट् समुद्घाताः प्रत्येकमान्तर्मौहूर्त्तिकाः, अन्त्यस्त्वष्टसामयिकः, तत्रान्तिमं विहायाऽन्ये षट् सामायिकछेदोपस्थापनीययोस्सम्भवन्ति तन्निमित्तसम्भवादित्याशयेनाह सामायिकेति । स्पष्टमन्यत् ॥

क्षेत्रद्वारमाह—

**क्षेत्रद्वारे—सामायिकच्छेदोपस्थापनीयपरिहारविशुद्धिकसूक्ष्मसम्परायाः लोकस्याऽसंख्यातभागे स्युः । यथाख्यातस्त्वसंख्यातभागे, असंख्यातभागेषु केवलिसमुद्घातापेक्षया सर्वलोकव्यापश्च स्यादिति ॥**

क्षेत्रद्वार इति । क्षेत्रमवगाहनाक्षेत्रं तदाश्रयतो विचारे प्रवृत्ते सामायिकादिचतुर्णां

१. तत्र वेदनापीडितो जीवः स्वप्रदेशाननन्तानन्तकर्मस्कन्धवेष्टितान् शरीराद्बहिरपि विक्षिपति तैश्च प्रदेशैर्वदनजठरादिरन्ध्राणि कर्णस्कन्धाद्यन्तरालानि चापूर्याऽऽयामतो विस्तारतश्च शरीरमात्रं क्षेत्रमभिव्याप्यान्तर्मुहूर्तं यावदवतिष्ठते, तस्मिंश्चान्तर्मुहूर्ते प्रभूतासातवेदनीयकर्मपुद्गलपरिशाटं करोति । एवमेव कषायसमुद्घातोऽपि भाव्यः । मरणसमुद्घातगत आयुःकर्मपुद्गलान् परिशाटयति, वैक्रियलब्धिमांश्च तद्गत स्वप्रदेशान् शरीराद् बहिर्निष्काश्य शरीरविष्कम्भबाहल्यमानमायामेन सङ्ख्येययोजनप्रमाणं दण्डं निसृजति ततो यथास्थूलान् वैक्रियशरीरनामकर्मपुद्गलान् प्राग्बद्धान् शाटयति । एवं तैजसाहारकसमुद्घातौ भाव्यौ । केवलिसमुद्घातगतः केवली तु सदसद्वेद्यादिकर्मपुद्गलपरिशाटनं करोतीति ॥

लोकस्यासख्येयभागमात्रावगाहित्वादाहासख्यातभागे स्युरिति । तथाचासंख्येयभागेऽसख्येयेषु भागेषु भवेयुर्न सख्येयभागे नवा सख्येयेषु भागेषु नवा च सर्वलोक इति भावः । असख्यातभाग इति, तस्य दण्डकपाटकरणकाले लोकासख्येयभागवृत्तित्वं, तदवगाहस्य तावन्मात्रत्वादिति भावः । असख्यातभागेष्विति, मथिकरणकाले बहोर्लोकस्य व्याप्तत्वेन स्तोकस्य चाव्याप्ततयोक्तत्वाल्लोकस्यासख्येयेषु भागेषु वर्त्तत इति भावः । लोकाऽऽपूरणे च सर्वलोके वर्त्तत इत्याह केवलीति ॥

स्पर्शनाद्वारमाचष्टे—

**स्पर्शनाद्वारे—सामायिकादयो यावत्सु भागेषु लोकस्य स्युस्ते तावतो भागान् स्पृशेयुः । समीपतरवर्त्तिपार्श्वभागस्पर्शनेन च किञ्चिदधिकानपीति ॥**

स्पर्शनाद्वार इति । येषा यथावगाहना उक्तास्तथा तेषा स्पर्शना अपीत्याह सामायिकादय इति । तत्रापि किञ्चिद्विशेषमाह समीपतरेति । क्षेत्रमवगाहनाविषय स्पर्शना त्ववगाढक्षेत्रस्य तत्पार्श्वतरवर्त्तिनश्चेत्येतयोर्विशेषः ॥

भावद्वारमभिधत्ते—

**भावद्वारे—सामायिकाश्चत्वारः क्षायोपशमिकभावे स्युः । यथाख्यातस्त्वौपशमिके क्षायिके च स्यादिति ॥**

भावद्वार इति । यद्यपि परिहारविशुद्धिकेतरेषा केषाञ्चित् क्षपकश्रेणिसम्भवस्तथापि सञ्ज्वलनलोभस्य दशम यावद्भावान्न क्षायिको भाव इत्यत आह सामायिका इति । यथाख्यातस्त्विति, एकादशगुणस्थानापेक्षयौपशमिकत्व तदूर्ध्वगुणस्थानापेक्षया तु क्षायिकत्वमिति भावः ॥

परिमाणद्वारमाह—

**परिमाणद्वारे—सामायिकाः प्रतिपद्यमानापेक्षयैकस्मिन् काले कदाचिद्भवेयुः कदाचिच न । यदा भवेयुस्तदा जघन्येनैको द्वौ त्रयो वा, उत्कृष्टतो द्विसहस्राद्यावन्नवसहस्रम् । पूर्वप्रतिपन्नापेक्षया जघन्यत उत्कृष्टतश्च द्विसहस्रकोटीतो यावन्नवसहस्रकोटि भवेयुः । छेदोपस्थापनीयास्तु प्रतिपद्यमानापेक्षया कदापि स्युः कदापि न । यदा स्युस्तदा जघन्येनैको**

**द्वौ त्रयो वोत्कृष्टतो द्विशताद्यावन्नवशतम् । प्रतिपन्नापेक्षया तु क्वचिन्न स्युः क्वचिच्च जघन्येनोत्कृष्टतश्च द्विशताद्यावन्नवशतकोटि स्युः ॥**

**परिमाणद्वार इति** । यावन्नवसहस्रकोटीति, कोटीसहस्रपृथक्त्वमित्यर्थः । यद्यपि सर्वसंयतानामेतावन्मात्रमानत्वेनास्यैव तावन्मानत्वे इतरसंयतमानमादाय संयतानामाधिक्यशङ्का स्यात् तथापि कोटीसहस्रपृथक्त्वस्य द्वित्र्यादिकोटीसहस्ररूपं कल्पयित्वा इतरेषां संख्यायाः प्रवेशेनोक्तमानातिरेकसम्भवो व्युदसनीयः । द्विशतादिति, द्विशतकोटीतो यावन्नवशतकोटीत्यर्थः, कोटीशतपृथक्त्वमिति यावत् । इदञ्च छेदोपस्थापनीयसंयतपरिमाणमादिमतीर्थकरतीर्थान्याश्रित्य सम्भवति, जघन्यन्तु सम्यङ् नावगम्यते, यतो दुष्षमान्ते भरतादिषु दशसु क्षेत्रेषु प्रत्येकं तद्द्वयस्य भावाद्विंशतिरेव तेषां श्रूयते । केचित्पुनराहुः, इदमप्यादितीर्थकराणां यस्तीर्थकालस्तदपेक्षयैव समवसेयम्, कोटीशतपृथक्त्वञ्च जघन्यमल्पतरं उत्कृष्टञ्च बहुतरमिति ॥

परिहारविशुद्ध्यादीनां परिमाणं विचारयति—

**परिहारविशुद्धिका अप्येवमेव, किन्तु प्रतिपन्नापेक्षया जघन्येनैको द्वौ त्रयः, उत्कर्षेण च द्विसहस्राद्यावन्नवसहस्रम् । सूक्ष्मसम्परायाश्च क्वचिन्न स्युः क्वचिच्च जघन्येनैको द्वौ त्रयः, उत्कृष्टतः क्षपकश्रेण्यामष्टोत्तरशतमुपशमश्रेण्यां चतुःपञ्चाशत्स्युः । प्रतिपन्नापेक्षया क्वचिन्न स्युः क्वचिज्जघन्येनैको द्वौ त्रयः, उत्कृष्टतो द्विशतान्नवशतं यावत्स्युः, यथाख्यातास्तु सूक्ष्मसम्परायवत् । प्रतिपन्नापेक्षया तु जघन्येनोत्कृष्टतश्च द्विकोटीतो यावन्नवकोटि भवेयुरिति ॥**

परिहारविशुद्धिका इति । एवमेवेति, प्रतिपद्यमानकं प्रतीत्य स्यात्सन्ति स्यान्न सन्ति, यदि सन्ति तदा छेदोपस्थापनीयवज्जघन्यत एको द्वौ त्रयो वा, उत्कृष्टतश्शतपृथक्त्वम् । प्रतिपन्नापेक्षया त्वेषां वैशिष्ट्यमस्तीत्याह–किन्त्विति । सूक्ष्मसम्परायवदिति क्वचित्स्युः क्वचिन्न स्युः, यदि स्युस्तदा क्षपकश्रेण्यपेक्षयाऽष्टोत्तरशतं, उपशमश्रेण्यपेक्षया तु चतुःपञ्चाशत्स्युरिति भावः । प्रतिपन्नापेक्षया त्वाह प्रतिपन्नेति । कोटीपृथक्त्वमिति यावत् ॥

अथाऽल्पबहुत्वद्वारमाह—

**अल्पबहुत्वद्वारे–पञ्चसु संयतेषु सर्वेभ्योऽल्पास्सूक्ष्मसम्परायाः, तेभ्यः परिहारविशुद्धिकाः संख्यातगुणाः, तेभ्यो यथाख्यातास्संख्यातगुणाः,**

**तेभ्योऽपि छेदोपस्थापनीयास्संख्यातगुणाः, तेभ्योऽपि च सामायिकास्संख्यातगुणा बोध्या इति। इति षट्त्रिंशद् द्वाराणि। इति संवरतत्त्वम् ॥**

अल्पबहुत्वद्वार इति। सर्वेभ्योऽल्पा इति, तत्कालस्याऽल्पत्वात् शतपृथक्त्वप्रमाणत्वाच्चेति भावः। परिहारविशुद्धिका इति, तत्कालस्य सूक्ष्मसम्परायापेक्षया बहुत्वात् सहस्र पृथक्त्वमानत्वाच्चेति भावः। यथाख्याता इति। कोटीपृथक्त्वमानत्वादिति भावः। छेदोपस्थापनीया इति कोटीशतपृथक्त्वमानत्वादिति भावः। सामायिका इति, कोटीसहस्रपृथक्त्वमानत्वादिति भावः। इतीति सर्वत्रेतिशब्दस्तत्तद्वारसमाप्तिद्योतक इति बोध्यम्। इत्थं सामान्येन द्वाराणि वर्णितानीत्याहेतीति। एवमेव चास्रवदोषानवलेपसाधनः परिस्पन्दवतोऽपि चरणकुशलस्य प्रायः कर्मागमद्वारसंवरणरूपस्संवरो दिङ्मात्रेणोपपादित इत्याह इतीति ॥

इति तपोगच्छनभोमणिश्रीमद्विजयानन्दसूरीश्वरपट्टधरश्रीमद्विजयकमलसूरीश्वरचरणनलिनसम्यस्तारमभक्तिभरेण तत्पट्टधरेण विजयलब्धिसूरिणा विनिर्मितस्य तत्त्वन्यायविभाकरस्य स्वोपज्ञायां न्यायप्रकाशव्याख्यायां संवरनिरूपणं नाम सप्तमः किरणः ॥

## अथाष्टमः किरणः

अवसरसङ्गत्या संवरे सति निर्जरायाः फलवत्त्वेन प्रयोज्यतासङ्गत्या वा संवरनिरूपणानन्तरमभिधीयमानां निर्जरां लक्षयति—

**क्रमेण बद्धकर्मपुद्गलानां तपोविपाकान्यतरेण विध्वंसो निर्जरा ॥**

क्रमेणेति। तपो बाह्याऽभ्यन्तरतया द्विविधं, तेन हि नूतनकर्मणां प्रवेशाभावः पूर्वसञ्चितकर्मणां च परिक्षयो भवति, तत्राऽऽद्यस्संवररूपो द्वितीयश्च निर्जरारूपः, तस्मात्तप उभयस्याऽपि हेतुः। विपाको गतिनामादिकर्मणां नामानुगुणमुदयोऽनुभवः, ताभ्याञ्च जीवेन बद्धानां कर्मपुद्गलानां ज्ञानावरणादिरूपाणां विध्वंसः कर्मपरिणतेर्विगमो जायते, सैव निर्जरेत्यर्थः। अवस्थानहेत्वभावेन ह्यनुभूताः कर्मपुद्गला न पुनरावरणादिरूपेणाऽवतिष्ठन्ते, तथा च तपोविपाकान्यतरजन्यबद्धकर्मविध्वंसत्वं लक्षणम्। जन्यान्तन्तु तत्र कारणत्वप्रतिपादनपरमेव। तदपि कारणमसाधारणं विज्ञेयम् ॥

---

१. विवादाध्यासित- पुरुषो निर्जीर्णघातिचतुष्क- केवलज्ञानवत्त्वात् उभयवादिसिद्धतादृक्पुरुषवत् इत्यन्वयव्यतिरेकिण, अन्वयासिद्धौ वा यो न जीर्णघातिचतुष्को नासौ केवलज्ञानवान् यथाऽस्मदादिरिति केवलव्यतिरेकिणो वाऽनुमानात् निर्जराऽस्मदादिभिरवसीयते, आप्तागमाच्च। सर्वज्ञेन तु स्वानुभवप्रत्यक्षेणेति ॥
२. महाव्रतादिषु हेत्वन्तरेषु सत्स्वपि तपस एव प्रधानतया निर्जराङ्गत्वादिति भाव- ॥

विपाकजाविपाकजभेदेन तस्या द्वैविध्यमादर्शयति—

**विध्वंसोऽयं विपाकोदयेन प्रदेशोदयेन च द्विधा भवति । विपाकोदयश्च मिथ्यात्वादिहेतुककर्मपुद्गलानां जघन्योत्कृष्टस्थितितीव्रमन्दानुभावानां स्वभावेन करणविशेषेण वोदयावलिकाप्रविष्टानां रसोदयपूर्वकानुभवनम् । अनुदयप्राप्तकर्मप्रकृतिदलिकमुदयप्राप्तसमानकालीनसजातीयप्रकृतौ संक्रमय्यानुभवनं प्रदेशानुभवः ॥**

विध्वंसोऽयमिति । विपाकोदयेनेति, विपचनं उदयावलिकाप्रवेशो विपाकः, अप्रशस्तपरिणामानां कर्मणां तीव्रतया शुभपरिणामानाञ्च मन्दतया व्यत्ययेन वा नानाप्रकारः पाको वा विपाकः, स एवोदयस्तेनेत्यर्थः । प्रदेशोदयेन चेति, सङ्क्रमणेनेत्यर्थः । मिथ्यात्वादीति, मिथ्यादर्शनाविरतिकषाययोगैर्बद्धानां ज्ञानदर्शनावरणवेदनीयमोहनीयायुष्कनामगोत्रान्तरायात्मकानां कर्मपुद्गलानामित्यर्थः । जघन्येति, जघन्यस्थितिकानामुत्कृष्टस्थितिकानां मन्दानुभावानां तीव्रानुभावानामित्यर्थः । अध्यवसायादिवैचित्र्यत इयं विचित्रताऽवसेया । स्वभावेनेत्यादिनोदयावलिकाप्रवेशो हि शुद्धप्रायोगिकभेदेन द्विविधः, अबाधाकालक्षयेणोदयावलिकाप्रवेशश्शुद्धः, उदीरणाकरणेनोदयावलिकाप्रवेशः प्रायोगिक उच्यत इति सूचितम् । स्वभावेन, अबाधाकालक्षयेण करणविशेषेणोदीरणाकरणेन । रसोदयपूर्वकमनुभवनमिति, रससहितस्यानुसमयमिच्छयाऽनिच्छया वाऽनुभूतिरिति भावः । प्रदेशोदयस्वरूपमाहानुदयेति । यत्कर्माप्राप्तविपाककालमौपक्रमिकक्रियाविशेषसामर्थ्याद्दनुदीर्णं बलादुदयप्राप्तायां स्वसमानकालीनायां स्वसजातीयायाञ्च प्रकृतौ सङ्क्रमय्य वीर्यविशेषत आम्रपनसादिपाकवद्वेद्यते स प्रदेशोदय इत्यर्थः, नत्रापि रसोऽस्त्येवेति सूचयितुं प्रदेशोदय इत्यनुक्त्वा प्रदेशानुभव इत्युक्त, अनुभावो रसो ज्ञेय इत्युक्त्याऽनुभवशब्देन रसप्रतीतेः । स्वासमानकालीनायां प्रकृतौ सङ्क्रमो न सम्भवतीति सूचयितुं समानकालीनेति पदम्, भिन्नजातीयायाञ्च प्रकृतौ तन्न भवतीति सूचयितुं सजातीयेत्युक्त, साजात्यञ्च मूलप्रकृतिविभाजकतावच्छेदकधर्मेण । तेन कर्मत्वेन सजातीयत्वेऽपि ज्ञानावरणादौ दर्शनावरणादेर्न सङ्क्रम इति भावः ॥

उभयविधापि निर्जरा पुनरियं द्विविधेत्याह—

**सेयं सकामाकामभेदाभ्यां द्विधा । सम्यग्दृष्टिदेशविरतसर्वविरतानां साभिलाषं कर्मक्षयाय कृतप्रयत्नानां यः कर्मणां विध्वंसः सा सकामा ।**

**मिथ्यादृष्टीनामैहिकसुखाय कृतप्रयत्नानां तपस्यादिना कर्मणां विध्वंसोऽकामा ॥**

सेयमिति । सा तपोविपाकान्यतरजन्या, इय निर्जरा, कामनासहितत्वात्सकामा, तद्विशेषरहितत्वाच्चाकामेति द्विविधेति भावः । तत्र कामोऽभिलाषः, तपःपरीषहजयादिना कर्म क्षपयामीत्येव रूपो बुद्धिविशेष', तेन सहिता सकामा, साक्षात्परम्परया वा तपःपरीषहादिजन्यो विपाको मोक्षसाधनमिति भाव, तत्र देवेषु तावदिन्द्रसामानिकादिस्थानान्यवाप्नोति, मनुष्येषु च चक्रवर्तिबलदेवमहामण्डलिकादिपदानि लब्ध्वा तत' सुखपरम्परया मोक्षमवाप्स्यति, तप.परीषहकृतो निखिलकर्मक्षयस्वरूपो विपाकस्तु साक्षान्मोक्षायैव भवतीति । नास्ति कामो बुद्धिविशेषो जनकतया यस्यामित्यकामा, नरकतिर्यङ्मानुषदेवेषु ज्ञानावरणादिकर्मणः फलभूताद्विपच्यमानादाच्छादनादिरूपाद्या कर्मनिर्जरा साऽकामा, न हि नारकादिभिस्तपः परीषहो वाऽभिलषितस्तदर्थम् । तत्र सकामामाचष्टे सम्यग्दृष्टीति । सम्यग्दर्शनमात्रभाक्, शक्त्यनुगुण द्वादशविधधर्मस्यैकदेशेनाप्यनुष्ठाता सम्यग्दर्शनभाक्च देशविरतः । ससम्यक्त्वः साधुधर्मानुष्ठायी यावज्जीव सर्वेभ्यः प्राणातिपातादिभ्यो विरतस्सर्वविरत', तेषामित्यर्थः । साभिलाष बुद्धिविशेषपूर्वकमित्यर्थः । कर्मक्षयाय कृतप्रयत्नानामिति, आनुषङ्गिकदेवत्वादौ नि.स्पृहतया मुख्याय कर्मक्षयाय प्रवर्त्तमानानामिति भाव. । सम्यग्दृष्ट्यादीना निर्जरा न समा, अपि तु यथोत्तरमसङ्ख्येयगुणा इति भाव्यम् ॥ अकामामाख्याति, मिथ्यादृष्टीनामिति, सम्यग्दृष्टिविरहितानामित्यर्थः, ऐहिकसुखाय कृतप्रयत्नानामिति, ये केचन मिथ्यादृष्टिविशेषास्स्वर्गाद्यर्थं वयं तपस्याम इत्यभिसन्धिमन्तोऽपि प्रवर्त्तन्ते तेषामपीति भावः । तादृशाभिसन्धेरज्ञानरूपत्वादकामत्वमेव, तपस्यादिनेति, तपस्त्वादिरूपेण तेषामभिमतेनेत्यर्थः ॥

निर्जरेयं कर्मपुद्गलद्रव्यध्वसरूपत्वाद्द्रव्यनिर्जरेत्युच्यते, तन्निमित्तात्माध्यवसायो भावनिर्जरेत्युच्यत इत्याह—

**आत्मप्रदेशेभ्यः कर्मणां निर्जरणं द्रव्यनिर्जरा, निर्जरानिमित्तशुभाध्यवसायो भावनिर्जरा ॥**

आत्मप्रदेशेभ्य इति । विश्लेषावधौ पञ्चमी, निर्जरणं पृथक्करणम्, न तु विध्वसः, पञ्चम्यनुपपत्ते' । आत्मप्रदेशेषु कर्मसम्बन्धाभाव इति भावः ॥

---

१. निर्जरात्वेनैकविधापि साऽष्टविधकर्मापेक्षयाऽष्टविधाऽपि । द्वादशविधतपोजनितत्वेन च द्वादशविधाऽपि, अकामक्षुत्पिपासाशीतातपदंशमशकसहनब्रह्मचर्यधारणाद्यनेकविधकारणजनितत्वेनानेकविधापि, दृश्यतो

ननु तपसा निर्जरा भवतीत्युक्तं तत्र किन्तप इत्यत्राह—

**शरीरवृत्तिरसादिधातुकर्मान्यतरसन्तपनं तपः ॥**

शरीरवृत्तीति । तप्यन्तेऽनेन बाह्याभ्यन्तरभेदभिन्नानशनप्रायश्चित्तादिना यानि शरीरनिष्ठानि रसासृङ्मांसमेदोऽस्थिमज्जाशुक्राणि मिथ्यादर्शनाद्यर्जितकर्माणि चेति तपोऽनशनादि, तथा च शरीरनिष्ठरसादिकर्मान्यतरसन्तापप्रयोजकप्रवृत्तित्वं लक्षणम् । शरीरवृत्तिरसादीनि कर्माणि च सन्तप्यन्ते नीरसीक्रियन्तेऽनेनेति व्युत्पत्तेः, विपाकस्य नीरसीकरणप्रयोजकत्वेऽपि प्रवृत्तिरूपत्वाभावान्नातिप्रसक्तिः, साक्षात्कर्मसन्तापकस्य धातुक्षयपूर्वकं संगत्यागशरीरलाघवेन्द्रियविजयसंयमरक्षणादिद्वारा कर्मसन्तापकस्य च संग्रहायान्यतरेत्युक्तम् । न चालब्धवृत्तीनां कर्मणां तपसा क्षयाभ्युपगमे तेषां निष्फलत्वं स्यात्, अनुपभुक्तानां क्षयानुपपत्तिश्च, उपपत्तौ वोपभुज्यमानानामपि क्षयापातादिति वाच्यम्, कारणस्य नियमेन कार्यजनकत्वानभ्युपगमात्, अन्यथा कुशूलस्थादपि बीजादङ्कुरोत्पत्तिप्रसङ्गात् । मण्यादिसमवहितवह्निना दाहापाताच्च किन्तु सहकारिवैकल्यशक्तिप्रतिबन्धादिना कारणस्य कार्याजनकत्वेन कर्मणामपि द्रव्यक्षेत्रादिसहकारिविरहात् प्रबलकर्मान्तरेण शक्तिप्रतिबन्धाद्वा वृत्त्यलाभः । तादृशानाञ्च कर्मणां तपसा क्षय इति न कोऽपि दोषः । भोगेन कर्मणः क्षय इति तूत्सर्गः, स च तपसस्तत्त्वज्ञानाद्वा कचित् कथञ्चित् क्षयाभ्युपगमेनापोद्यत इति नासम्भवो लक्षणस्येति दिक् ॥

तत्र तपसो बाह्याभ्यन्तररूपेण द्वैविध्यस्य प्रदर्शितत्वादधुना बाह्यं तद्विभजते—

**तत्र बाह्यतपांसि अनशनोनोदरिकावृत्तिसंक्षेपरसत्यागकायक्लेशसंलीनतारूपेण षड्विधानि ॥**

तत्रेति । अनशनादिरूपे तपसि बाह्यत्वं अन्नादिबाह्यद्रव्यनिमित्तकत्वात् परप्रत्यक्षविषयत्वात् प्रायो बाह्यशरीरतापकत्वात् तीर्थिकगृहस्थानुष्ठेयत्वाच्चेति विज्ञेयम् ॥

सम्प्रत्यनशनं लक्षयति—

**इत्वरं यावज्जीवं वाऽऽहारपरित्यागोऽनशनम् ॥**

---

बद्ध देशतः कर्मणामेव द्विविधाऽपि सा । ननु निर्जरामोक्षयोः कः प्रतिविशेषः ? उच्यते देशतः कर्मक्षयो निर्जरा, सर्वतस्तु मोक्ष इति ॥ २. यथा महातडागस्य नवीनजलागमनमार्गे निरुद्धे विद्यमाने जले अरघट्टादिना निष्कासिते रविकिरणादिना क्रमेण शोषणं भवेत् तथा प्रतिनिरुद्धाश्रवस्य कर्मणां निरोधे संवरस्य [illegible] द्वादशविधेन तपसा भवकोटिसंचितं कर्म निर्जीर्यते इति भावः ॥

इत्वरमिति । इत्वर परिमितकाल यथा नमस्कारसहितादि षण्मासपर्यन्तं महावीरस्वामितीर्थे, सवत्सरपर्यन्त श्रीनाभेयतीर्थे, यावदष्टौ मासान् द्वाविंशतिमध्यमतीर्थकरतीर्थेषु । [1]पादपोपगमनेङ्गिनीभक्तप्रत्याख्यानभेदतो यावज्जीवमनशनं त्रिविधम् । अत्राद्यमपि निर्व्याघातसव्याघातभेदेन द्विविधम् । प्रव्रज्याशिक्षापदादिक्रमतो जराजर्जरितशरीरस्य चतुर्विधाहारप्रत्याख्यानपूर्वक जन्तुशून्यस्थण्डिलमाश्रित्य निपत्यैकस्मिन्नेव पार्श्वे प्रशस्तध्यान कृत्वा परिस्पन्दशून्यतया जीवोत्क्रमणं यावद्वर्त्तनं निर्व्याघातम् । आयुस्सद्भावेऽपि समुपजातव्याधिनोत्पन्नमहावेदनेन यदुपक्रान्तिः क्रियते तत्सव्याघातम् । श्रुतविहितक्रियाविशेषविशिष्ट मरणमिङ्गिनी, इयञ्च यः प्रव्रज्यादिप्रतिपत्तिक्रमेणैवाऽऽयुषः परिहाणिमवबुध्याऽऽत्तनिजोपकरणः स्थावरजङ्गमप्राणिविवर्जितस्थण्डिलशायी एकाकीकृतचतुर्विधप्रत्याख्यानश्छायाया उष्णमुष्णाच्छाया सक्रामन् सचेष्टः सम्यग्ज्ञानपरायणः प्राणाञ्जहाति तस्य बोध्यम् । गच्छान्तर्वर्त्ती सन् कदाचित्त्रिविधस्य कदाचिच्चतुर्विधस्य पर्यन्ते च सर्वथाऽऽहारप्रत्याख्यान कुर्वन् समाश्रितमृदुसस्तारक उत्सृष्टशरीरोपकरणममत्वस्स्वयमेवोद्ग्राहितनमस्कारो निकटवर्त्तिसाधुदत्तनमस्कारो वोद्वर्त्तनपरिवर्त्तनादिक कुर्वाणस्समाधिना यत्काल करोति तद्भक्तप्रत्याख्यानम्, एवमेवाऽनशनं विविच्य शास्त्रोक्त विज्ञेयम्, तथा चेत्वरयावज्जीवान्यतरस्वरूपाहारपरित्यागोऽनशनमिति भावः ॥

ऊनोदरिकामाचष्टे—

**स्वाहारपरिमाणादल्पाहारपरिग्रहणमूनोदरिका ॥**

स्वाहारेति । यस्य पुरुषस्य यावदाहारपरिमाणं ततोऽल्पस्याऽऽहारस्य ग्रहणं, उत्कृष्टावकृष्टपरिमाणकौ वर्जयित्वा मध्यमेन कवलेन पुंसो द्वात्रिंशत्कवलके स्त्रियोऽष्टाविंशतिकवल प्रमाणे आहारेऽष्टसख्याकेन, द्वादशसख्याकेन षोडशकेन चतुर्विंशतिकेन, एकेनापि न्यूनेन वा वर्त्तनमूनोदरिकेति भाव. । अत्राऽनशनादौ च सम्यक्त्व विशेषणीयं तच्च यथागमात्मक,

१. पादपोपगमनमविचार इङ्गिनीभक्तप्रत्याख्याने सविचारे, चेष्टात्मकेन कायसम्बन्धिना वर्तमानत्वात्सविचार तद्विपरीतमविचार, इङ्गिनीभक्तप्रत्याख्याने सपरिकर्म स्थानान्तरवदनत्वग्वर्त्तनादिना विश्रामणादिना च वर्त्तमानत्वात् एकत्र स्वयमन्येन वा कृतस्य अन्यत्र तु स्वय विहितस्योद्वर्त्तनादिचेष्टात्मक परिकर्मणोऽनुज्ञानात् । अपरिकर्म पादपोपगमन निष्प्रतिकर्मताया एव तत्राभिधानात् ॥ २. अथ भाव एककवलादारभ्य यावदष्टौ कवला जघन्यमध्यमोत्कृष्टविशिष्टा अल्पाहारोनोदरिका नवभ्य कवलेभ्य आरभ्य यावद्द्वादशकवलास्तादृशा अपार्धोनोदरिका, त्रयोदशभ्य आरभ्य यावत् षोडशकवलास्तादृशा त्रिभागोनोदरिका, सप्तदशभ्यो यावच्चतुर्विंशतिकवला प्राप्तोनोदरिका पञ्चविंशतेरारभ्य यावदेकत्रिंशत्कवला किञ्चिदूनोदरिका उच्यन्ते, एव स्त्रीणामपि पुरुषानुसारेण भाव्यमिति ॥

तेन नृपशत्रुतस्करादिकृताहारनिरोधादेर्व्यवच्छेदः, उपहतभावस्य हि पुंसोऽनशनादिकं न संयमरक्षणाय न वा कर्मनिर्जरायै समर्थम् ॥

अथ वृत्तिसंक्षेपमाह—

**नानाविधाभिग्रहधारणेन भिक्षावृत्तेः प्रतिरोधनं वृत्तिसंक्षेपः ॥**

**नानाविधेति ।** अभिग्रहो नियमस्स चागमविहितः, अनेकविधा येऽभिग्रहास्तेषां धारणेनावलम्बनेनेत्यर्थः, नियमाश्च भिक्षाविषयाः उत्क्षिप्तनिक्षिप्तान्तप्रान्तचर्यादिरूपा द्रव्यक्षेत्रकालभावप्रविभक्ताः । यथा पटलकादिक कडुच्छकादिनोपकरणेन दानयोग्यतया दायकेनोत्क्षिप्तं यदि लप्स्ये तदा ग्रहीष्यामीत्यादिरूपाः, तानवलम्ब्यापरभिक्षाया यत्प्रतिरोधनं स वृत्तिसंक्षेपः, दत्तीना नियमेन एका दत्तिमद्य ग्रहीष्यामि द्वे वा तिस्रो वेत्यादिरूपेणेतरासां दत्तीनां प्रतिरोधोऽपि वृत्तिसंक्षेपस्तत्र दत्तिः पात्रकादौ पटलकादीनां यदेकमुखेन प्रक्षेपः सा । हस्तेन कडुच्छकेनोदङ्किकया वा यदुत्क्षिप्य ददाति सा भिक्षेति विशेषः ॥

रसत्यागस्वरूपं वक्ति—

**रसवत्पदार्थेषु द्वित्र्यादीनां त्यागपुरस्सरं विरसरूक्षाद्याहारग्रहणं रसत्यागः ॥**

**रसवदिति ।** गुणविशेषवाचिनो रसत्यागपदघटितरसशब्दस्यात्र गुणिपरत्वमेव, रसवत्पदार्थपरित्यागस्यैवाभिमतत्वात्, शुक्लः पट इत्यादिवदतो रसत्याग इति लक्ष्यनिर्देशो द्रव्यत्यागपुरस्कारेणैव रसपरित्याग इति सूचयितु रसवत्पदार्थेष्वित्युक्त, न सर्वेषामेव रसवतां परित्यागो रसत्यागोऽपि तु द्वित्र्यादीनामपीत्याशयेनाह द्वित्र्यादीनामिति, अनशनेऽपि द्वित्र्यादिपदार्थपरित्यागोऽस्त्येव, तस्य सर्वपदार्थपरित्यागरूपत्वादित्याशंकायामाह विरसरूक्षादीति । न च रूपरसगन्धस्पर्शवन्तः पुद्गला इति नियमेन सर्वेषामेव पदार्थानां रसवत्त्वाद्विरसेति कथमिति वाच्यम्, प्रकृष्टरसशून्यताया एव विवक्षितत्वादिति भाव. । निरस विकृतिभिरसस्पृष्ट, रूक्ष प्रकृष्टरसशून्यम् । चित्तविकारहेतुभूता हि पदार्था मद्यमांसमधुनवनीतात्मकाः क्षीरदधिघृततैलगुडावगाह्याश्च विकृतिरूपाः । मद्य हि गुडपिष्टद्राक्षाखर्जूरादिसम्भवं गणनातीतजीवोत्पत्तिस्थान जीवस्यास्वातंत्र्य विधत्ते, तेन चाक्रान्तः कृत्याकृत्यविवेकभ्रष्टो विनष्टस्मृतिसंस्कारो गर्हितमाचरत्येव । मास प्राणिशरीरावयवरूपमनन्तजन्तुप्रसवनिदानं प्राणव्यपरोपणमन्तरा, दुष्प्रापं, प्राणातिपातश्चातिदुःखप्रदत्वेन कृतकारितानु-

मतिभिस्सर्वथा परिहरणीयम् । मांसश्च वृष्यतमत्वादवश्यं गार्ध्यहेतुत्वात्त्याज्य एव । अन्नादयस्तु न तादृशाः । मधु च माक्षिककौतिकभ्रामररूपं त्रिविधमपि विना प्राणातिपातेन न सम्भवतीति तदपि त्याज्यमेव । गोमहिष्यजाविकसम्बन्धिनवनीतमपि वृष्यत्वात्परिहार्यमिति, प्रत्याख्यानमेतेषां द्रव्यक्षेत्रकालभावापेक्षया विवक्षितम् । गोमहिष्यजाविकोष्ट्री सम्बन्धित्वेन क्षीरविकृतिरपि पञ्चधा । दधिविकृतिस्तु करभीवर्जा चतुःप्रकारा । घृतविकृतिरपि दधिविकृतिवच्चतुर्धा । तिलातसीसिद्धार्थककुसुम्भकाख्यानि तैलानि । इक्षुविकारात्मिका गुडविकृतिः खण्डशर्करावर्जा । घृताद्यवगाहनिष्पन्नाश्शष्कुलीप्रभृतयोऽवगाह्याः, एतासां रसविकृतीनां प्रत्याख्यानं तपः, तत्रापि मांसादिचतुर्णां सर्वथा परित्यागः कार्य एव, क्षीरादिविकृतिषु सर्वेषां परित्यागस्तपस्तत्रासामर्थ्ये द्वित्र्यादिपरिग्रहेऽपि न तपो व्याहन्यते, तत्तायःपिण्डप्रक्षिप्तघृतादिबिन्दुवदित्येतत्सूचनाय द्वित्र्यादीनां त्यागपुरस्सरमित्युक्तमिति बोध्यम् । न चानशनोनोदरिकारसत्यागानां वृत्तिपरिसङ्ख्यानावरुद्धत्वेन पृथङ् निर्देशोऽनुचितो भिक्षाचरणे नियमकारित्वस्य सर्वत्राविशेषादिति वाच्यम्, विशेषात्, भिक्षाचरणे प्रवर्त्तमानो हि साधुरेतावत्क्षेत्रविषयां कायचेष्टां कुर्वीत, कदाचिद्यथाशक्ति विषयगणनार्थं वृत्तिपरिसङ्ख्यानं क्रियते । अनशनन्त्वभ्यवहर्त्तव्यनिवृत्तिः, ऊनोदरिकारसपरित्यागावभ्यवहर्त्तव्यैकदेशनिवृत्तिपरावतो महान्भेद इति ध्येयम् ॥

सम्प्रति कायक्लेशं लक्षयति—

## केशोल्लुञ्चनादिक्लेशसहनं कायक्लेशः ॥

**केशेति ।** कायसम्बन्धी क्लेशः कायक्लेशः, सोऽपि यथातथारूपो न कायक्लेशात्मकं तपोऽत उक्तं केशोल्लुञ्चनादीति । आदिना कायोत्सर्गवीरोत्कटुकासनैकपार्श्वदण्डायतशयनातापनाऽप्रावृतादीनां ग्रहणम्, तथा चागमानुसारिकेशोल्लुञ्चनादिजन्यक्लेशसहनत्वं लक्षणम् । संसार्यवस्थायां हि शरीरात्मनोरन्योन्यानुगतत्वेनाभेदात् सति कायक्लेशे तद्द्वाराऽऽत्मनोऽपि क्लेशोत्पत्त्या कर्मनिर्जरणादेषां तपोरूपत्वं, विनैकत्वपरिणतिमात्मनस्सुखदुःखासम्भवात् । स्वमात्रकृतकायक्लेशरूपत्वाद्बुद्धिपूर्वकत्वाच्चास्य स्वपरनिमित्तकात् यादृच्छिकोपनताच्च क्षुधादितो विशेषोऽवसेयः ॥

१. सर्वज्ञप्रणीतागमानुसारिकेशोल्लुञ्चनाऽऽतापनानशनादिकायक्लेशो विशिष्टेष्टफलसाधकः, आगमोदितत्वे सति कायक्लेशत्वात् वृक्षमूलादिसेवनवीरासननिष्प्रतिक्रियादिवदित्यनुमानेन केशोल्लुञ्चनादिकायक्लेशस्य कर्मविच्छेदहेतुत्व सिद्ध्यतीत्याशयेनाह संसार्यवस्थायामिति ॥

अथ संलीनतामाचष्टे—

**इन्द्रिययोगकषायादीन्नियम्य विविक्तस्थानासेवनं संलीनता, सा चतुर्विधा इन्द्रियकषाययोगविविक्तचर्याभेदात् ॥**

इन्द्रियेति । विविक्तं–विजनं–बाधाविवर्जितं स्थानं प्रतिश्रयशय्याफलकासनपीठादिकं तस्याऽऽसेवनं । शरीरोपघातकरैः स्थूलसूक्ष्मजन्तुमहितैः स्त्रीपशुपण्डकादियुतैश्च प्रतिश्रयादिभिस्सम्यक्त्वादीनां बाधा स्यादतस्तद्रहितस्थानाऽऽसेवनमित्यर्थः । तदप्यासेवनं स्वान्तानीन्द्रियाणि संयम्य योगान्निष्फलेभ्यः क्रोधादिकषायकदम्बकं चोदयनिरोधप्राप्तोदयवैफल्यकरणाभ्याञ्च विज्ञेयमिति भावः । सा च संलीनता ज्ञानदर्शनचारित्रसंस्थापिका इन्द्रियकषाययोगनियमनपूर्वकत्वाद्विविक्तस्थानसम्बन्धित्वाच्च चतुर्विधा भवतीत्याशयेनाह सेति ॥

ता एव क्रमतो लक्षयति—

**प्राप्तेन्द्रियविषयेष्वरक्तद्विष्टताभावः इन्द्रियसंलीनता। अनुदितक्रोधस्योदयनिरोधः प्राप्तोदयस्य नैष्फल्यकरणं कषायसंलीनता। कुशलाकुशलयोगानां प्रवृत्तिनिवृत्ती योगसंलीनता। शून्यागारादौ निर्बाधे स्त्र्यादिवर्जिते स्थाने स्थितिर्विविक्तचर्यासंलीनता ॥**

प्राप्तेन्द्रियेति । विशद मूलं व्याख्यातप्रायञ्च । षड्विधादप्यस्माद्बाह्यतपसो बाह्याभ्यन्तरोपधिषु निर्ममत्व प्रत्यहमल्पाहारोपयोगात्प्रणीताहारवर्जनाच्च शरीरलाघवं, उन्मादानुद्रेकादिन्द्रियजयः, चर्याजनितजन्तूपरोधाभावात्संयमरक्षणं निस्सङ्गतादिगुणयोगादनशनादितपोऽनुतिष्ठतश्शुभध्यानव्यवस्थितस्य कर्मनिर्जरणञ्चावश्यं जायत इति बोध्यम् ॥

अथातिशयेन कर्मनिर्दहनक्षमं क्रमिकं स्वप्रत्यक्षभूतमन्तःकरणव्यापारप्रधान प्रधानतो बहिर्द्रव्यानपेक्षमितरतीर्थिकानभ्यस्तमनशनादिभ्योऽन्तरङ्गभूतमान्तरं तपो विभजते—

**प्रायश्चित्तविनयवैयावृत्त्यस्वाध्यायध्यानोत्सर्गाष्षडाभ्यन्तरतपांसि ॥**

प्रायश्चित्तेति । आभ्यन्तरतपांसीति । मोक्षप्राप्तावन्तरङ्गाणि आभ्यन्तरकर्मतापकानि आभ्यन्तरैरेवान्तर्मुखैर्भगवद्भिर्ज्ञायमानानीमानि तपांसीति भावः ॥

अथ प्रत्येकं परिज्ञापयितुं प्रायश्चित्तं निरूपयति—

**अतिचारविशुद्धिजनकानुष्ठानं प्रायश्चित्तम्। तच्चाऽऽलोचनप्रतिक्र-**

**मणमिश्रविवेकव्युत्सर्गतपश्छेदमूलानवस्थाप्यपाराञ्चितभेदाद्दशविधम् ॥**

अतिचारेति । प्रायस्साधुलोकः, यस्मिन् कर्मणि तस्य चित्तं तत्प्रायश्चित्तं, प्रायो वाऽपराधः, तस्य चित्तं शुद्धिः यस्मादनुष्ठितात्तत्प्रायश्चित्तमपराधविशुद्धिफलकानुष्ठानमित्यर्थः, तदेव तस्य स्वरूपमित्याशयेनोक्तमतिचारेति, अतिचारविशुद्धिजनकत्वे सत्यनुष्ठानत्वं लक्षणं, प्रमादजन्यो मूलोत्तरगुणविषयको हि दोषोऽतिचारस्सोऽयमल्पोऽपि चित्तमालिन्यं विदधात्येव, अतस्तच्छुद्धौ प्रायश्चित्तमभिमतमिति भावः । यद्यप्यतिचारस्य कस्यचिद्भवति निवृत्तिः प्रकाशनमात्रादपि, यथा श्रुतोपदिष्टव्यापारानुयायिनो मोक्षार्थं यतमानस्यावश्यकरणीयेष्वत्यन्तोपयुक्तस्य व्यस्तस्थूलातिचारस्य सूक्ष्मास्रवप्रमादक्रियाणाम् । तत्रानुष्ठानत्वाभावादव्याप्तिप्रसङ्गस्तथापि मानसानुष्ठानरूपत्वात्तस्य न दोषः, एवमेव पश्चात्तापादावपि विज्ञेयम्, तद्विभागमाह तथेति । तत्त्वार्थे तु मूलानवस्थाप्यपाराञ्चितानां स्थाने परिहारोपस्थापने पठित्वा नवविधत्वं प्रायश्चित्तस्य दृश्यते ॥

अथाऽऽलोचनमाचष्टे—

**गुर्वभिमुखं समर्यादं स्वापराधप्रकटनमालोचनम् ॥**

गुर्वभिमुखमिति । मर्यादया मायामदादिदोषरहितेन कार्यमकार्यञ्च सत्यतया भणता बालेनेव स्वापराधस्य स्वेनाऽऽसेवितक्रमेणाऽऽलोचनार्हाय गुरवे प्रकटनमालोचनाप्रायश्चित्तमित्यर्थः । गुरुणाऽनुज्ञातस्स्वयोग्यभिक्षावस्त्रपात्रशय्यासंस्तारकपादप्रोञ्छनादीनि आचार्योपाध्यायस्थविरबालग्लानशैक्षकक्षपकासमर्थप्रायोग्यवस्त्रपात्रभक्तपानौषधादीनि वा गृहीत्वा, उच्चारभूमेर्विहाराद्वा, चैत्यवन्दननिमित्तं, पूर्वगृहीतपीठफलकादिप्रत्यर्पणनिमित्तं, बहुश्रुतापूर्वसंविग्नवन्दनप्रत्ययं, संशयव्यवच्छेदाय, श्राद्धस्वज्ञात्यवसन्नविहाराणां श्रद्धावृद्ध्यर्थं, साधर्मिकाणां संयमोत्साहनिमित्तं हस्तशतात् परं दूरमासन्नं वा गत्वा च समागतो यथाविधि गुरुसमक्षमालोचयेदिति भावः । आलोचना चेयमावश्यकेषु यातायातेषु सूपयुक्तस्यादुष्टभावत्वादतिचारविधुरस्याप्रमत्तस्य छद्मस्थस्य यतेर्द्रष्टव्या, सातिचारस्य त्वन्यप्रायश्चित्तसम्भवात् । केवलज्ञानिनश्च कृतकृत्यत्वेनालोचनाया अयोगात् । छद्मस्थस्याप्रमत्तस्य तु यथाशास्त्र

१. विहायायोग्यवस्थां सर्वासु सरागवीतरागाद्यवस्थासु भवस्थजीवानां कर्मबन्धवैचित्र्यं सूरय आहु केचिदायुर्वर्जसप्तविधकर्मोपार्जकाः केचिन्मोहायुर्वर्जषड्विधकर्मार्जकाः केचिच्च द्विसमयस्थितिकैकविधकर्मबन्धका इति, तथाच विराधनायास्सम्भवेन भिक्षाटनादिविहितानुष्ठानमपि आलोचनाप्रतिक्रमणादिप्रायश्चित्तसमन्वितं भवतीति भावः ॥ २. तत्र परिहारशब्देन मूलप्रायश्चित्तमुपलक्षितम्, उपस्थापनपदेन चानवस्थाप्यपाराञ्चिके सङ्गृहीते, परिहारश्च मासादिकः षण्मासान्त इति ॥

प्रवृत्त्या निरतिचारत्वेऽपि चेष्टासूक्ष्मप्रमादनिमित्तसूक्ष्माश्रवसम्भवेन तच्छुद्ध्यर्थमालोचनाऽऽवश्यकीति विज्ञेया ॥

प्रतिक्रमणमाह—

## अतिचारात्प्रतिनिवर्त्तनं प्रतिक्रमणम् ॥

अतिचारादिति । यन्मिथ्यादुष्कृतिमात्रेणैव शुद्धिमासादयति न च गुरुसमक्षमालोच्यते तदर्हं प्रायश्चित्तं प्रतिक्रमणम् । यथा सहसाऽनुपयुक्तेन यदि श्लेष्मादि प्रक्षिप्यते न च हिंसादिका दोषा आपद्यन्ते तदालोचनामन्तरेणापि मिथ्यादुष्कृतप्रदानेन शुद्ध्यति, तत्प्रतिक्रमणमिति भावः । समितिप्रमुखाणां सहसाऽनाभोगतो वा कथमपि प्रमादे सति अन्यथाकरणे प्रतिक्रमणं मिथ्यादुष्कृतप्रदानलक्षणं प्रायश्चित्तं क्रियत इति तात्पर्यम् ॥

मिश्रमाचष्टे—

## उभयात्मकं मिश्रम् ॥

उभयात्मकमिति । आलोचनविशिष्टप्रतिक्रमणमित्यर्थः । यस्मिन् पुनः प्रतिसेविते यदि गुरुसमक्षमालोचयति आलोच्य गुरुसन्दिष्टः प्रतिक्रामति—पश्चाच्च मिथ्यादुष्कृतमिति ब्रूते तदा शुद्ध्यति तदालोचनप्रतिक्रमणलक्षणोभयार्हत्वान्मिश्रं, नानाप्रकारान् शब्दादीनिन्द्रियविषयीभूतान् विषयाननुभूय कस्यचिदेवं संशयस्स्याद्यथा शब्दादिषु विषयेषु रागद्वेषौ गतोऽहं नवेति ततस्तस्मिन् संशयविषये पूर्वं गुरूणां पुरत आलोचनं तदनन्तरं गुरुसमादेशेन मिथ्यादुष्कृतदानमित्येवंरूपं प्रायश्चित्तं भावयतो मिश्रं प्रतिपद्यते, यदि हि निश्चित भवति यथाऽमुकेषु शब्दादिषु विषयेषु रागं द्वेषं वा गत इति, तत्र तपोऽर्हं प्रायश्चित्तं, अथैवं निश्चयो न गतो रागं द्वेषं वेति तत्र स शुद्ध एव न प्रायश्चित्तविषय इति भावः ॥

विवेकं व्याख्याति—

## गृहीतवस्तुनोऽवगतदोषत्वे परित्यजनं विवेकः ॥

---

१. सहसाकारतो वाऽनाभोगतो वा यदि मनसा दुश्चिन्तितं वचसा दुर्भाषितं कायेन दुश्चेष्टितं यदीयायां कथां कथयन् मनेत्, भाषायामपि यदि गृहस्थभाषया ढड्ढरस्वरेण वा भाषेत, एषणायां भक्तपानगवेषणवेलायामनुपयुक्तो भाण्डोपकरणस्यादाने निक्षेपे वाऽप्रमार्जितानाऽप्रत्युपेक्षिते स्थण्डिले उच्चारादीनां परिष्ठापयिता च न च हिंसादिदोषमापन्नः, तथा यदा कन्दर्पो हासो वा बीभत्सस्त्रीजनस्य कथाकरणे वा क्रोधमानमायालोभेषु गमनं विषयेषु वा शब्दादिष्वनुपयुक्तो ज्ञानदर्शनचारित्रप्रतिरूपविनयाकरणे च तदा प्रतिक्रमणं प्रायश्चित्तमिति भावः ॥

गृहीतेति । यथाऽऽधाकर्मणि गृहीते परित्याग एव कृते शुद्धिमासादयति नाऽन्यथा, सोऽयं परित्यागो विवेकात्मकं प्रायश्चित्तमित्यर्थः । अशठभावेन साधुना सवितुरुद्गतादिभ्रमतो गृहीतमशनादिकं ततो भ्रमेऽपगते शठभावेनाऽशठभावेन वाऽर्धयोजनातिक्रमेण नीते आनीते वाऽशनादिके तत्र विवेक एव प्रायश्चित्तमिति भावः, अत्र शठ इन्द्रियमायाविकथाक्रीडादिभिः कर्म कुर्वन्, ग्लानभयादिकारणतस्त्वशठः ॥

व्युत्सर्गमभिधत्ते—

**गमनागमनादिषु विशिष्टचित्तैकाग्र्यपूर्वकं योगव्यापारपरित्यागो व्युत्सर्गः ॥**

गमनागमनादिष्विति । विशिष्टचित्तैकाग्रतापूर्वकं योगव्यापारनिरोधः कायोत्सर्गापरनामा यः प्रायश्चित्तविशेषः प्राणातिपातादिमावद्यबहुले गमनागमनदुःस्वप्ननौसन्तरणादिविषये भवति स व्युत्सर्ग इति भावः ॥

तपो निरूपयति—

**छेदग्रन्थजीतकल्पान्यतरानुसारेण गुर्वनुशिष्टानुष्ठानविशेषस्तपः ॥**

छेदग्रन्थेति । सचित्तपृथिवीकायादिसङ्घट्टने समापतिते छेदग्रन्थानुसारेण जीतकल्पानुसारेण वा षण्मासान्तानो निर्विकृतिकादिको यस्तपोविशेषो दीयते तत्तपःप्रायश्चित्तमित्यर्थः ॥

छेदमाह—

**तपसा दुर्भेद्यस्य दिवसमासादिक्रमेण श्रमणपर्यायापनयनं छेदः ॥**

तपसेति । विशोधयितु तपसा मुनेरशक्यस्य यन्महाव्रतारोपणकालादारभ्याहोरात्रपञ्चकादिना क्रमेण श्रामण्यपर्यायछेदन क्रियते स छेदः, तपोदुर्दमश्च षण्मासक्षपकोऽन्यो

---

१ रात्रिंदिवपञ्चकादारभ्य रात्रिंदिवपञ्चकादिवृद्ध्या तावज्ज्ञेय यावत् षण्मासम् । उत्सारक शास्त्र छेदग्रन्थ स च षड्विध निशीथ महानिशीथ दशाश्रुतस्कन्धो बृहत्कल्पो व्यवहार पञ्चकल्पश्चेति । जीतमाचरित तस्य कल्पो वर्णना जीतकल्प तत्प्रतिपादक जिनभद्रगणिक्षमाश्रमणरचितोऽष्टपञ्चाशद्गाथात्मक छेदश्रुतविशेष ॥

२. व्रतपर्यायच्छेदनमात्र छेद सर्वपर्यायच्छेदस्तु न भवति तथात्वे च मूलमेव स्यात् । यथा शेषाङ्गरक्षार्थं व्याधिदूषितमङ्ग छिद्यते एव व्रतशेषपर्यायरक्षार्थं अतिचाराद्युमानन दूषित पर्याय एव छिद्यत इति भाव ॥

वा विकृष्टतपःकरणसमर्थस्तपसा गर्वितो भवति किमनेन तपसा ममेत्यभिसन्धिमान् तपःकरणासमर्थो वा ग्लानासहबालवृद्धादिस्तथाविधतपःश्रद्धानरहितो वा निष्कारणतोऽपवादरुचिर्वेति ध्येयम् ॥

मूलमाह—

**प्रारम्भतः पुनर्महाव्रतारोपणं मूलम् ॥**

**प्रारम्भत इति ।** यस्मिन् समापतिते निरवशेषपर्यायोच्छेदमाधाय पुनर्महाव्रतारोपणं क्रियते तादृशं प्रायश्चित्तं मूलमित्यर्थः । आकुट्या पञ्चेन्द्रियवधे विहिते दर्पेण मैथुने सेविते मृषावादादत्तादानपरिग्रहेषु प्रतिसेवितेषूत्कृष्टेषु अनाकुट्या पुनः पुनस्सेवितेषु वा मूलाभिधानमेतत्प्रायश्चित्तं भवतीति भावः ॥

अनवस्थाप्यमाचष्टे—

**अकृततपोविशेषस्य दुष्टतरस्य कियत्कालं व्रतानारोपणमनवस्थाप्यम् ॥**

**अकृतेति ।** येन पुनः प्रतिसेवितेनोत्थापनाया अप्ययोग्यो न स्थाप्यते व्रतेषु कञ्चित्कालं, यावन्नाद्यापि प्रतिविशिष्टं तपश्चीर्णं भवति पश्चाच्च चीर्णतपास्तद्दोषोपरतो व्रतेषु स्थाप्यते तदनवस्थाप्यं प्रायश्चित्तमित्यर्थः । मुष्टियष्टिप्रभृतिभिस्स्वस्य परस्य स्वपरपक्षगतस्य वा घोरपरिणामतः प्रहरणेनातिसङ्क्लिष्टचित्ताध्यवसायो न स्थाप्यते व्रतेषु यावदुचितं तपो न कृतं स्यात्, उचितश्च तपः कर्म उत्थाननिषदनाद्यशक्तिपर्यन्तं, स हि यदोत्थानाद्यपि कर्तुमशक्तस्तदाऽन्यान् प्रार्थयते, आर्याः ! उत्थातुमिच्छामीत्यादि, ते तु तदा तेन सह संभाषणमकुर्वाणास्तत्कृत्यं कुर्वन्ति, एतावति तपसि कृते तस्योपस्थापना क्रियत इति बोध्यम् ॥

अथ पाराञ्चितमाह—

**राजवधादितीर्थकराद्याशातनाकरणेन यावद् द्वादशवर्षमतिचारपारगमनतो राजप्रतिबोधादिप्रवचनप्रभावनया पुनः प्रव्राजनं पाराञ्चितम् ॥**

---

१. एवं मूलोत्तरगुणभङ्गमर्के वान्तदर्शनचारित्रे स्वपदशासिगमामावादीरुते नारीर्गर्भितादिषु च मूलं प्रायश्चित्तं बोध्यम् । नवमदशमप्रायश्चित्तापत्तावपि शिष्योर्मूलमेव प्रायश्चित्तं, अकृतकरणस्याचार्यस्य कृतकरणस्योपाध्यायस्य चानवस्थाप्यं प्रायश्चित्तमिति ॥

राजवधादीति । यस्मिन् प्रतिसेविते लिङ्गक्षेत्रकालतपसा पारमञ्चति तत्पाराञ्चितं, पारमन्त प्रायश्चित्तानां तत उत्कृष्टतरप्रायश्चित्ताभावादपराधानां वा पारमञ्चति गच्छतीत्येव शीलं पाराञ्चि, तदेव पाराञ्चिकमिति नामान्तरम् । राजवधस्वलिङ्गिघातादिसेवनाभिरिदं प्रायश्चित्तमापद्यते, एतच्चाचार्याणामेव जघन्यत षण्मासानुत्कृष्टतो द्वादशवर्षाणि यावद्भवति ततश्चाऽतिचारपारगमनानन्तरं प्रव्राज्यते । प्रव्राजनञ्च राजप्रतिबोधादिप्रवचनप्रभावेण तस्य भवतीति भावार्थः । तद्दशविधं प्रायश्चित्तं देशं कालं शक्तिं संहननं संयमविराधनाञ्च कायेन्द्रियजातिगुणोत्कर्षाञ्च प्राप्य विशुद्ध्यर्थं यथार्हं दीयते चाचर्यते च । तत्रोपाध्यायस्य पाराञ्चिकयोग्यापराधसम्भवेऽपि अनवस्थाप्यमेव प्रायश्चित्तं न तु पाराञ्चितं, अनवस्थाप्यान्तस्यैवोपाध्यायस्य शास्त्रे प्रतिपादनात् सामान्यसाधूनामपि अनवस्थाप्यपाराञ्चितयोग्यापराधसम्भवे मूलान्तमेव प्रायश्चित्तं, तत्रानवस्थाप्यमाशातनानवस्थाप्यमाश्रित्य जघन्यतो यावत् षण्मासान् वर्षमुत्कर्षेण प्रतिसेवनानवस्थाप्यापेक्षया तु जघन्यतो वर्षमुत्कृष्टतो द्वादशवर्षाणि भवति । तीर्थकरप्रवचनगणधराद्यधिक्षेपकारी—आशातनानवस्थाप्य , हस्तताडनसाधर्मिकान्यधार्मिकस्तैन्यकारी प्रतिसेवनानवस्थाप्य इति ॥

अधुना विनयं निरूपयति—

**ज्ञानदर्शनचारित्रोपचारान्यतमो विनयः, तत्र नम्रतापूर्वकं ज्ञानाभ्यासो ज्ञानविनयः । जिनेन्द्रोक्तपदार्थेषु निश्शङ्कितत्वं दर्शनविनयः । श्रद्धयाऽनुष्ठानेन च चारित्रप्ररूपणं चारित्रविनयः, गुणाधिकेष्वभ्युत्थानाद्यनुष्ठानमुपचारविनयः ॥**

ज्ञानदर्शनेति । अनाशातनाभक्तिबहुमानकीर्तिप्रकाशनात्मको विनयः कर्मरजोहारकत्वात् स च ज्ञानाद्यात्मकविषयभेदाच्चतुर्विधः तथा च ज्ञानदर्शनचारित्रोपचारान्यतमविषयकानाशातनादिमत्त्वं विनयस्य लक्षणम् । ज्ञानलाभायाऽऽचारविशुद्धये सम्यगाराधनाय च विनयो भवति । ज्ञानविनयमाह—तत्रेति, अनलसेन शुद्धमनसा देशकालादिविशुद्धिविधान-

---

१. मूले राजवधादीत्यनेन प्रतिसेवनापाराञ्चिकं तीर्थकरादीत्यनेनाशातनापाराञ्चिकञ्च सूचितं । आद्येनादिनामात्यप्राकृतगृहस्थादीनां वधः सङ्गृहः द्वितीयेन च सङ्घश्रुताचार्यगणधरमहातपस्विनाम् ॥ २ जघन्यमिदमाशातना पाराञ्चिकस्य अस्योत्कर्षो द्वादशमासाः । प्रतिसेवनापाराञ्चिकस्य तु जघन्यं संवत्सरकालं उत्कर्षतस्तु द्वादशवर्षाणीति ॥ ३ अनाशातना तीर्थकरादीनां सर्वथाऽहेलना तेष्वेवोचितोपचाररूपा भक्तिः तेष्वेवान्तरभवप्रतिबन्धो बहुमानं तेषामेव सद्भूतगुणोत्कीर्त्तना कीर्तिप्रकाशनम् । तीर्थकरसिद्धकुलगणसङ्घक्रियाधर्मध्यानज्ञानज्ञान्याचार्यस्थविरोपाध्यायगणिनां सम्बन्धीनीति विनयपदानि त्रयोदश तेषां अनाशातनाद्युपाधिभेदेन चतुर्भिर्गुणनात् द्विपञ्चाशद्भेदा भवन्तीति ॥

विचक्षणेन सबहुमानं यथाशक्ति सेव्यमाना ये मत्यादयस्तेषु योऽभ्यासः ग्रहणधारणस्मरणादिर्ज्ञानविनय इति भावः। दर्शनविनयमाह–जिनेन्द्रोक्तेति, भगवद्भिरुपदिष्टाः पदार्था यथालक्षणा एव वर्त्तन्ते नान्यथावादिनो जिना इति निःसंशयता, तथाऽर्हत्प्रणीतस्य धर्मस्याचार्योपाध्यायस्थविरकुलगणसङ्घसाधुसमनोज्ञाना चानाशातना प्रशमसंवेगनिर्वेदानुकम्पाऽऽस्तिक्यानि च दर्शनविनय इति भावः। चारित्रविनयमाह–श्रद्धयेति। सामायिकादिपञ्चविधचारित्रेषु श्रद्धा तत्पूर्वकमनुष्ठानं यथावत्तत्प्ररूपणञ्च चारित्रविनय इत्यर्थः। उपचारविनयमाह–गुणाधिकेष्विति। उपचरणमुपचारः श्रद्धामहितो व्यवहारो नैकविधस्तैः, प्रत्यक्षेष्वाचार्यादिषु अभ्युत्थानाभिगमनाञ्जलिकरणवन्दनानुगमनादिरात्मानुरूप परोक्षेष्वपि कायवाङ्मनोभिरञ्जलिक्रियागुणसंकीर्त्तनानुस्मरणादिरूप उपचारविनयः। गुणैः सम्यग्ज्ञानदर्शनैर्दशविधसामाचारीसम्पद्भिश्चाधिका ये तेष्वित्यर्थः। शिष्टजनाचरिता विशिष्टक्रिया *सामाचारी स्वार्थिकष्यञन्तेन सामाचार्यशब्देन स्त्रीत्वविवक्षायां निष्पन्नोऽयं शब्दः।* सा च प्रतिलेखनाप्रमार्जनभिक्षेर्याऽऽलोचनभोजनपात्रकधावनविचारस्थण्डिलावश्यकभेदतः प्रतिदिनप्रभवा दशविधा भवतीति दिक् ॥

सम्प्रति वैयावृत्त्यमाह—

**प्रभुसिद्धान्तोदितसेवाद्यनुष्ठानप्रवृत्तिमत्त्वं वैयावृत्त्यम्। तच्चाचार्योपाध्यायतपस्विशैक्षकग्लानकुलगणसंघसाधुसमनोज्ञभेदाद्दशविधम्। एतल्लक्षणान्यग्रे वक्ष्यन्ते ॥**

प्रभ्विति। कामचेष्टाया द्रव्यान्तराद्वा व्यावृत्तस्य प्रवचनप्रेरितक्रियाविशेषानुष्ठानपरस्य भावः तथापरिणामः कर्म वा वैयावृत्त्यम्। प्रवचनेषु कथितानि यानि सेवादिरूपाण्यनुष्ठानानि तत्र या प्रवृत्तिस्तथाविधपरिणामस्तद्वत्त्वमित्यर्थः। सेवा च क्षेत्रवसतिप्रत्यवेक्षणभक्तपानवस्त्रपात्रभेषजशरीरशुश्रूषणतदादेशगमनविद्यामन्त्रप्रयोगादिविषया, समाध्याधानविचिकित्साभावप्रवचनवात्सल्यसनाथत्वादिफलवती च। *वैयावृत्त्यस्याप्याऽऽचार्यादिविषयकत्वाद्दशविधत्वमिति ज्ञापनायाऽऽह–तच्चेति, वैयावृत्त्यमपीत्यर्थः, समनोज्ञभेदादिति,* समनोज्ञाना भेदादिति विग्रहः, तथाचाऽऽचार्यादीनां भेदाद् वैयावृत्त्यमपि दशविधमित्यर्थः, वैयावृत्त्ययोग्यानां दशविधत्वाद्वैयावृत्त्यमपि दशविधमिति भावार्थः, इदञ्च क्रियायाः प्राधान्य-

१. आचार्यादिविषयकदशविधोदितानुयायि [illegible] वैयावृत्त्यम् [illegible]

पक्षे । क्रियाक्रियावतोरभेदपक्षे यथाश्रुतमपि सम्यगेव । तत्र किंरूपा आचार्यादय इत्यत्राह एतदिति, लक्षणानि स्वरूपाणि अग्रे सम्यक्चरणनिरूपणे ॥

स्वाध्यायमाह—

**कालादिमर्यादयाऽध्ययनं स्वाध्यायः ॥**

कालादीति । आ मर्यादया शास्त्रप्रतिपादितयाध्ययनं पठनं आध्यायः सुष्ठु शोभन आध्यायः स्वाध्याय', तत्र हि अस्वाध्यायिकं संयमघात्युत्पातनिमित्तदेवताप्रयुक्तसंग्रामशारीररूपेण पञ्चविधं परसमुत्थं, एषु स्वाध्यायं विदधतस्साधोस्तीर्थकृदाज्ञाभङ्गादयो दोषा भवन्ति । अत ईदृशं कालं विहाय उचितकालेषु अध्ययनं स्वाध्याय उच्यते । आदिना पौरुष्यपेक्षा ग्राह्या, तथाच कालवेलापरिहारेण पौरुष्यपेक्षयाऽध्ययनं स्वाध्याय इत्यर्थः । स च वाचनाप्रच्छनापुनरावर्त्तनाऽनुप्रेक्षाधर्मकथाभेदतः पञ्चविधः, शिष्येभ्यः कालिकस्योत्कालिकस्य वाऽऽलापकप्रदानं निरवद्यग्रन्थार्थोभयप्रदानं वा वाचना, गृहीतवाचनेनापि शिष्येण सति संशये पुनः प्रष्टव्यमिति पूर्वाधीतसूत्रादेश्शङ्कितादौ प्रश्नः प्रच्छना, स्वोन्नतिपरातिसन्धानोपहासससंघोपप्रहसनादिभिर्वर्जितः संशयोन्मूलनाय निश्चयदार्ढ्याय वा पर प्रत्यनुयोग इति भावः । प्रच्छनया विशोधितस्य सूत्रादेर्विस्मरणं मा भूदिति तस्य द्रुतविलम्बितादिदोषशून्यं घोषादिविशुद्धं गणनं परावर्त्तना, सूत्रवदर्थेऽपि विस्मरणसंभवेन तस्य मनसा विचिन्तनमनुप्रेक्षा, इत्थमभ्यस्तश्रुतेन कृतं धर्मस्य श्रुतरूपस्य व्याख्यानं धर्मकथा । प्रज्ञातिशयप्रशस्ताध्यवसायप्रवचनस्थितिसंशयोच्छेदपरवादिशंकानिरासपरमसंवेगतपोवृद्ध्यतिचारविशुद्ध्यादयोऽस्य फलमिति ॥

अधुना ध्यानस्वरूपमभिधत्ते—

**चेतसो योगनिरोधपूर्वकैकविषयस्थिरतापादनं ध्यानं, योगनिरोधः केवलिनां ध्यानम् ॥**

चेतस इति । ध्यानशब्दो विवक्षाभेदेन भावकर्त्तृकरणसाधनः, तत्र ध्येयं प्रत्यव्यापृतस्य भावमात्रेणाभिधाने ध्यातिर्ध्यानमिति भावसाधनः, ध्यायतीति ध्यानं बाहुलकाल्ल्युट्

---

क्रियावतोरत्र [illegible] भेदो वा ?, क्रियाया अन्यत्वेऽप्यभेदो वाच्यम् । यदा तु तादृश[illegible] [illegible] क्रिया [illegible] तदाऽऽचार्यादय एव वैयावृत्त्यरूपा इति यथाश्रुत आचार्यादिरूपतया वैयावृत्त्यकथन सम्यगेवेति भाव ॥

प्रत्ययेन कर्त्तृसाधनः । करणप्रशंसापरायामभिधानप्रवृत्तौ समीक्षितायां यथा साध्वसिः छिनत्तीति प्रयोक्तृनिर्वर्त्त्ययोस्सतोरप्युद्यमननिपतनतंत्रत्वाच्छेदनस्यासौ कर्त्तृधर्माध्यारोपः क्रियते तथा दिध्यासोरप्यात्मनः ज्ञानावरणवीर्यान्तरायक्षयोपशमविशेषतंत्रत्वाद् ध्यानादिपरिणामस्य कर्त्तृत्वं युज्यते, पर्यायपर्यायिणोर्भेदाच्चास्य करणत्वमपि । एकविषयस्थिरतापादनमिति । "एकोऽन्यार्थेऽसहाये च प्रथमे केवले तथे" ति कोशादेकशब्दस्य बह्वर्थत्वेऽपि संख्यावाच्यत्रैकशब्दः । वीर्यविशेषाद्धि निराबाधे स्थाने प्रज्वालिता दीपशिखेव चेतस एकस्मिन्विषये स्थिरतापादनं अनियतक्रियार्थस्य नियतक्रियाविशेषकर्त्तृत्वेनावस्थापनम्, तत्र वाक्काययोरपि निरोध एवेति प्रोक्तं योगनिरोधपूर्वकेति वाक्कायनिरोधपूर्वकेत्यर्थः, अथवा मनोवाक्कायनिरोधपूर्वकेति तदर्थः, चेतश्शब्दस्य चिन्तापरपर्यायस्य ज्ञानमर्थः, तस्यैव ह्येकस्मिन्नर्थे स्थापनं ध्यानमुच्यते व्यग्रत्वे च तस्य ज्ञानत्वमेव नतु ध्यानत्वं, तथा च योगत्रयनिरोधपूर्वकं ज्ञानस्यैकविषयस्थिरतापादनं ध्यानमिति फलितार्थः । व्यापकमिदं लक्षणं छद्मस्थानां केवलिनाञ्च ध्यानेष्विति सूचयितुमुक्तं योगनिरोध इति, योगनिरोधात्मकं केवलिनां ध्यानमप्येतादृशमेवेत्यर्थः । तत्रापि योगत्रयनिरोधपूर्वकं ज्ञानस्यैकविषयस्थिरतापादनस्य सत्त्वात् । नन्वेकस्मिन्नर्थे चित्तस्यैकक्रियाकर्तृत्वेन यदवस्थापनत्वस्यैव ध्यानत्वं तर्ह्यर्थव्यञ्जनयोगसंक्रान्तिषु अर्थसङ्क्रमे द्रव्यात्पर्याये पर्यायाच्च द्रव्ये सङ्क्रमरूपे शुक्लध्यानविशेषेऽव्याप्तमेकविषयकत्वाभावादिति चेन्मैवम्, एकशब्दस्य प्राधान्यवाचित्वात्, अस्ति हि सङ्क्रमे तस्य तस्य प्राधान्यम् । तदिदं ध्यानमान्तर्मौहूर्तिकमेव, न दिवसमासादिपरिमाणं, ततःपरं दुर्ध्यानत्वाद् इन्द्रियोपघातप्रसङ्गात् अत एव न प्राणापानविनिग्रहो ध्यानं, तदुद्भूतवेदनाप्रकर्षेण शरीरपातप्रसङ्गात्, नापि मात्राकालपरिगणनं ध्यानं, वैयग्र्येण ध्यानस्वरूपहानिप्रसङ्गात् । ध्यानञ्चेदं गुप्त्यादिभिर्भवति । अन्यसंहननिनां तावत्कालमध्यवसायधारणसामर्थ्याभावादुत्तमसंहननवानेवाधिकारी, उत्तमसंहननानि वज्रर्षभनाराचवज्रनाराचनाराचार्धनाराचरूपाणीति ॥

नन्वनेन ध्यानेनाऽऽर्त्तादयस्संगृहीता नवेति शङ्कायां सामान्येनोक्तं ध्यानं विभजमानस्सर्वानुस्यूतत्वं लक्षणस्याऽऽविष्करोति—

## तदार्त्तरौद्रधर्मशुक्लभेदेन चतुर्विधम् ॥

---

१. तथाच मनएकाग्रमनालम्बनं ध्यानं, ध्यानाभ्यासक्रिया भावना उक्तप्रकारद्वयरहिता या मनश्चेष्टा सा चिन्तेति सूच्यते । २. योगनिरोध एव केवलिनो ध्यानं न तु छद्मस्थानां, चित्तस्यैवाभावात् योगार्थौदारिकादिशरीरसंयोगसमुत्था आत्मपरिणामविशेषव्यापारा एव । ३. गतागतातिलत्रप्रमाण कालविशेषा मुहूर्तं तदन्तर एवध्यानं छद्मस्थानां, ततपरतो भावना चिन्ता वा भवेत् बहुवस्तुसंक्रमे सति सुचिरमपि ध्यानप्रवाहो वा भवेत् तदेव ध्यानं दिवसादिमानं भवेदिति भाव ॥

तदिति । ध्यानमित्यर्थ. शोकाक्रन्दनविलापादिलक्षणमार्त्तम् । उत्सन्नबद्धादिलक्षणं रौद्रम् । जिनप्रणीतभावश्रद्धानादिलिङ्गं धर्म्यम् । अबाधाऽसम्मोहनादिलक्षणं शुक्लमिति, विस्तरस्तु यथाऽऽगममिति ॥

अथाऽऽर्त्तं लक्षयति—

**इष्टानिष्टवियोगसंयोगरोगनिदानान्यतमविषयकं सोद्वेगचिन्तनमार्त्तम् । षष्ठगुणस्थानं यावदिदं भवति ॥**

इष्टानिष्टेति । ऋतं दुःखं शारीरं मानसञ्चाऽनेकप्रकारं, अथवाऽर्दनमार्त्तिस्तत्र भवमार्त्तम् । तद्धि चतुर्विधं, तत्र प्रथममिष्टानां मनोहराणां विषयाणां वियोगे सति तत्प्राप्त्यर्थं सोद्वेगचिन्तनं अर्थान्तरचिन्तनाद्व्यधिरूयेन प्रकृतेऽवरोध, ते कथं नाम मे स्युरित्येवं विचिन्तनरूपम् । द्वितीयं, अनिष्टानां शब्दस्पर्शरसगन्धानां विषयाणां संयोगे—इन्द्रियसम्बद्धे सोद्वेगचिन्तनं तद्वियोगाय, कथमहमेभ्यो विमुच्येयेति चेतसो निश्चलीकरणम् । तृतीयं, रोगस्य प्रकुपितानां पवनपित्तश्लेष्मणां सन्निपातेन सञ्जातस्य शूलज्वरादिरूपस्य प्रतिचिकीर्षा प्रत्यागूर्णस्यानवस्थितमनसः धैर्योपरमात् सोद्वेगचिन्तनम् । चतुर्थं पुन. निदानं कारणं मोक्षसुखं विरहय्य पुनर्भवविषयकसुखाय हेतुभूतं कामोपहतचेतसा तद्विषयकं सोद्वेगचिन्तनमिति । चतुर्विधमपीदमार्त्तं कृष्णनीलकापोतलेश्याबलाधानमज्ञानप्रभवं पौरुषेयपरिणामसमुत्थं पापप्रयोगाधिष्ठितं परिभोगप्रसङ्गं नानासङ्कल्पासङ्गं धर्माश्रयपरित्यागि कषायाश्रयोपस्थानमनुपशमप्रवर्धनं प्रमादमूलमकुशलकर्मादानं कटुकविपाकासद्वेद्यं तिर्यग्भयगमनपर्यवसानं क्रन्दनशोचनपरिदेवनताडनादिलिङ्गगम्यं विज्ञेयम् । ध्यानस्यास्य ध्यातारं दर्शयति षष्ठेति, अविरतास्संयतासंयता. प्रमत्तसंयताश्चाऽस्य ध्यातार· केचित्प्रमत्तसंयता निदानं वर्जयित्वा प्रमादोदयोद्रेकादार्त्तत्रयं विदधति नाप्रमत्तसंयतादयोऽस्य ध्यातार इति भाव· ॥

अथ रौद्रमाह—

**हिंसाऽसत्यस्तेयसंरक्षणान्यतमानुबन्धिचिन्तनं रौद्रम् । आपञ्चममेतत् ॥**

---

१ अमनोज्ञवस्तुसम्बन्धेन सम्बद्धस्य तद्वियोगाय स्मृतिः मनोज्ञवस्तुसंयोगेन सम्बद्धस्यामनोज्ञवियोगार्थं स्मृतिः प्रथमो भेदः शूलशिरोरोगादिवेदनाया वियोगप्रणिधानं तदनागतवेदनाया अभावेऽपि असम्प्रयोगचिन्ता द्वितीयो भेदः इष्टवस्तूनामिष्टवेदनाया अवियोगाध्यवसानं तृतीयो भेदः, निषेवितकामभोगसम्प्रयोगसम्प्रयुक्तस्य तदविप्रयोगस्मृतिसमन्वाहारश्चतुर्थो भेदः स्थाने कथितः ॥

हिंसेति । रोदयतीति रुद्रः क्रूरस्तस्येदं कर्म रौद्रं तत्र भवं वा । तदपि चतुर्विकल्पं, हिंसानुबन्धिचिन्तनं—हिंसानिमित्तं चिन्तनमाद्यं, असत्यनिमित्तं द्वितीयं, स्तेयनिमित्तं तृतीयं, चतुर्थन्तु संरक्षणानुबन्धि विषयाणां शब्दादीनां तदानीं मनसः परितोषकराणां पश्चाच्च भृशं भीकरफलानां तत्साधनभूतानाञ्च धनधान्यादीनां संरक्षणानुबन्धिध्यानमित्यर्थः । तदिदं अतिकृष्णनीलकापोतलेश्याबलाधानं प्रमादाधिष्ठानं, नरकगतिफलावसानं मारणाभिलाप-मरणेहाऽपरव्यसनप्रमत्तता निर्दयत्वपरक्लेशकारित्वादिलिङ्गगम्यं, तीव्रतरबन्धसंक्लिष्टाध्यवसाय-प्रसवमवसेयम् । अथ ध्यातारमाचष्टे आपञ्चममेतदिति । देशविरतं यावदित्यर्थः । आर्त्त-रौद्रे ध्याने प्रकृष्टतमरागद्वेषानुगतत्वात् नरकादिचतुर्गतिकसंसारस्यैव हेतू भवतो न जातुचिन्मुक्तिहेतू इत्यवधेयम् ॥

सम्प्रति धर्मध्यानमाह—

**आज्ञापायविपाकसंस्थानान्यतमविषयकं पर्यालोचनं धर्मध्यानम् । अप्रमत्ततः क्षीणमोहं यावत् ॥**

आज्ञेति, धर्मः क्षमादिदशलक्षणकः, तत्सम्बन्धिध्यानं धर्मध्यानम् । तच्चतुर्विधं, आज्ञाविषयकपर्यालोचनं, अपायविषयकपर्यालोचनं, विपाकविषयकपर्यालोचनं, संस्थानविषयकपर्यालोचनञ्चेति । तत्रोपदेष्टुरभावेऽपि मन्दबुद्धित्वेऽपि कर्मोदयात्सूक्ष्मत्वाच्च वस्तूनां लिङ्गनिदर्शनालाभेऽपि अवितथवादिनः क्षीणरागद्वेषास्सर्वज्ञा अन्यथामन्तमन्यथा न जानन्त्येव न भाषन्ते च तत्कारणाभावात् अतस्सर्वथा सत्यमिदं तच्छासनं संसार-सागरोत्तारकञ्चेत्याज्ञां प्रमाणीकृत्यार्थावधारणमाज्ञाविषयकं पर्यालोचनरूपं प्रथमं धर्मध्या-नम् । रागद्वेषकषायेन्द्रियवशीभूतानां प्राणिनां शारीरमानसदुःखचिन्तनं द्वितीयम्, रागद्वेषा-

१. एकेन्द्रियादीनां वधवेधबन्धनदहनाङ्कनमारणादिप्रणिधानं, पिशुनासभ्यासद्भूतघातादिवचनप्रणिधानं, परलोकापायनिरपेक्षपरद्रव्यहरणप्रणिधानं, शब्दादिविषयसाधनपरिग्रहसंरक्षणप्रणिधानमिति चतुर्विधं रौद्रध्यानमिति भाव ॥ २. आज्ञापायविपाकसंस्थानविचयाय स्मृतिसमन्वाहारो धर्मध्यानं [illegible] । [illegible] दोषपरिवर्जनाय कुशलप्रवृत्तिरपायविचयम् । [illegible] । धर्मं [illegible] । [illegible] ॥

दिभिः प्रदुष्टान्तःकरणा जन्तवो मूलोत्तरप्रकृतिविभागसम्भूतजन्मजरामरणगहनविपिनपरिभ्रमणपरिश्रमप्रभवप्रभूतदुःखाकुलास्सांसारिकसुखस्पृहयालवश्शरीरेन्द्रियाद्याश्रवद्वारप्रवाहपतिता मिथ्यात्वाज्ञानाविरतिपरिणता यथायोगमार्त्तरौद्रध्यानविशेषाभ्यां पर्याप्तं कर्मजालमादाय दीर्घकालं नरकादिगतिष्वपायैर्युज्यन्ते । केचिदिहापि कृतवैरानुबन्धाः परस्परमाक्रोशवधबन्धाद्याक्रोशभाजः क्लिश्यन्त इत्येवं प्रत्यवायप्रायेऽस्मिन् संसारे उद्वेगार्थमपायानां विचिन्तनं द्वितीयं धर्मध्यानम् । विपाकः कर्मफलानुभवस्तद्विवेकं प्रति प्रणिधानं विपाकविषयकपर्यालोचनं, तत्र ज्ञानावरणाद्यष्टविधं कर्म प्रकृतिस्थित्यनुभावप्रदेशभेदभिन्नमिष्टानिष्टविपाकपरिणामं जघन्यमध्यमोत्कृष्टस्थितिकं नरकादिविविधविपाकं, तद्यथा ज्ञानावरणाद्दुर्मेधस्त्वं, दर्शनावरणाच्चक्षुरादिवैकल्यं निद्राद्युद्भवश्च, असद्वेद्याद् दुःखं सद्वेद्यात्सुखानुभवः, मोहनीयाद्विपरीतग्राहिता चारित्रविनिवृत्तिश्च, आयुषोऽनेकभवप्रादुर्भावः, नाम्नोऽशुभप्रशस्तदेहादिनिर्वृत्तिर्गोत्रादुच्चनीचकुलोत्पत्तिः, अन्तरायादलाभ इति, एवं निरुद्धचेतसः कर्मविपाकानुस्मरणं तृतीयं धर्मध्यानं । लोकद्रव्यसंस्थानस्वभावावधानं संस्थानविषयकपर्यालोचनम्, लोकस्य द्रव्यस्य च संस्थानमाकारविशेषः, लोकस्याधोमुखमल्लसंस्थानमधोलोकः, तदुर्ध्वं झल्लर्याकृतिस्तिर्यग्लोकः, स च ज्योतिर्व्यन्तराकुलोऽसङ्ख्येयद्वीपसमुद्रपरिवेष्टितः ऊर्ध्वलोक ऊर्ध्वीकृतमृदङ्गाकृतिरुत्कृष्टशुभपरिणामोपेतः कल्पोपपन्नकल्पातीतदेवव्याप्त इत्येवं विचारणा, द्रव्याणां तावद् धर्माधर्मौ लोकाकारौ गतिस्थितिहेतू, आकाशमवगाहलक्षणं, आत्मान उपयोगलक्षणाश्शरीरादर्थान्तरभूता अरूपाः कर्तार उपभोक्तारो निजकर्मणां शरीराकारा मुक्तौ त्रिभागहीनाकाराः, कालो वर्त्तनादिपरिणामी समयात्मकः, पुद्गलद्रव्यं शरीरादिकार्यं, द्रव्यञ्चोत्पादव्ययध्रौव्ययुक्तमनन्तधर्मात्मकं नित्यानित्यैकानेकभेदाभेदसदसदादिस्वरूपमित्येवं प्रणिधानं चतुर्थं धर्मध्यानमित्यर्थः, ननु भावनानां धर्मध्यानेऽन्तर्भावस्तज्जातीयत्वादिति चेन्न, अनित्यादिविषयविचिन्तनस्य ज्ञानरूपत्वे भावनाव्यपदेशात्, एकाग्रचिन्तानिरोधरूपत्वे धर्मध्यानत्वादित्येवं प्रवृत्तिनिमित्तभेदात्। ध्यानोपरमकालभावित्वाच्च भावनानां ततोऽर्थान्तरत्वात् । अस्य ध्यातारमाहाप्रमत्तेति, सर्वप्रमादै रहिता अप्रमत्तास्तेभ्य आरभ्य क्षीणमोहपर्यन्तवर्त्तिनोऽस्य ध्यातारः, अत्र लक्षणघटकतया ध्यानकारणभूतो ध्यातव्यवस्तुनिर्देशो धर्मध्यानावान्तरभेदः, अप्रमत्तेत्यादिना ध्यातारश्च प्रदर्शिता उपलक्षकतया । तेन ज्ञानदर्शनचारित्रवैराग्यविषया भावनाः, योग्यदेशकालाऽऽसनविशेषा वाचनाद्यालम्बनं मनोनिरोधादिक्रमः, अनित्यत्वादिभावनाः लेश्याविशेषः श्रद्धानादिलिङ्गं सुरलोकादिफलं च गृह्यते । सदा हि ज्ञानविषयकोऽभ्यासोऽशुभव्यापारनिरोधेन चेतस एकस्मिन् विषयेऽवस्थापको विशुद्धिकृद् भवनिर्वेदकृच्च भवति, एवं च ज्ञानेन ज्ञातपरमार्थो निष्प्रकम्पं

ध्यायति । शङ्कादिदोषरहितत्वात्प्रशमस्थैर्यादिगुणगणोपेतः तत्त्वान्तरेऽभ्रान्तचित्तो दर्शनशुद्ध्या ध्यानाय प्रवर्त्तते, चारित्रभावनयोपात्तकर्मक्षपणमनुपात्ताशुभानादानं सम्यक्त्वादिशुभकर्मादानमयत्नेन ध्यानञ्च प्राप्नोति, जगत्तत्त्वस्य सम्यग्ज्ञानाद्विषयस्नेहसङ्गाभावादिह लोकादिसप्तभयराहित्यादिहपरलोकाकांक्षावैधुर्यात् तथाविधक्रोधादिराहित्याच्च वैराग्यभावितमना ध्याने निश्चलो भवति, अपरिणतयोगादीनां युवत्यादिव्यतिरिक्तापेक्षया विजनो देशो ध्यानयोग्यदेशः, युवत्यादियुतदेशस्तु सर्वदा वर्ज्य एव । परिणतयोगानां सुनिश्चलमनसां तु जनाकीर्णो जनशून्यो वा देशो ध्यानाय कल्पते । यत्र काले मनोयोगादिस्वास्थ्यमुत्तमं लभते स एव ध्यानकालो न तु दिवसनिशावेलाविशेषः । या काचिन्निषण्णतादिरूपा देहावस्था प्रकृतध्यानानुपरोधिनी स एवाऽऽसनविशेषो ग्राह्यो न त्विदमेवासनं कार्यमिति नियमः । श्रुतधर्मानुगतानां वाचनप्रच्छनपरिवर्त्तनानुचिन्तनादीनां चारित्रधर्मानुगतानां सामायिकादिसामाचारीणां सम्यगासेवनया वरं धर्मध्यानं समारोहति, योगनिरोधक्रमस्तु धर्मध्याने न नियमितः परन्तु यथा स्वास्थ्यं भवेत्तथा कार्यः । धर्मध्यानोपरमेऽपि सदा साधुनाऽनित्याशरणैकत्वसंसारभावनाः सचित्तादिष्वनभिष्वङ्गभवनिर्वेदादिस्थिरतायै भावनीयाः । अत्र स्थितस्य क्रमविशुद्धाः पीतपद्मशुक्ललेश्यास्तीव्रमन्दादिभेदा अनुकूला भवन्ति । आगमोपदेशाऽऽज्ञानिसर्गतस्तीर्थंकरप्ररूपितानां द्रव्यादिपदार्थानां श्रद्धानमस्य लिङ्गं, सूत्रमागमः, तदनुसारेण कथनमुपदेशः, अर्थ आज्ञा, निसर्गः स्वभावः । तथा जिनसाधुगुणोत्कीर्त्तनप्रशंसादानविनयसम्पन्नः श्रुतशीलसंयमरतो धर्मध्यायीति निश्चीयते, तथैवं ध्यायतस्सुरलोकादिकं भवतीति धर्मध्याने निमित्तानि विज्ञेयानि । क्षीणमोह यावदिति, उपशान्तमोहक्षीणमोहयोस्तु शुक्ले ध्याने वक्ष्यमाणे प्राथमिकद्विभेदे अपि भवत इत्यपि बोध्यम् ॥

अथान्तिमं शुक्लध्यानमाह—

**आज्ञाद्यविषयकं निर्मलं प्रणिधानं शुक्लम् । तच्च पृथक्त्ववितर्कैकत्ववितर्कसूक्ष्मक्रियव्युपरतक्रियभेदेन चतुर्विधम् ॥**

आज्ञादीति । आज्ञापायाद्यविषयकनिर्मलप्रणिधानत्वं लक्षणं आर्त्तादिवारणाय निर्मलेति, धर्मध्यानव्यावृत्तये आज्ञाद्यविषयकेति, तादृशज्ञानवारणाय प्रणिधानमिति । लक्षणेनास्य भेदाप्राप्तेः कण्ठतस्तमाह तच्चेति । पृथक्त्ववितर्कमाद्यं, पृथक्त्वेन भेदेन—विस्तीर्णभावेन वितर्कः श्रुतं यस्मिंस्तत्पृथक्त्ववितर्कं, एकत्ववितर्कं द्वितीयं, एकत्वेनाभेदेन वितर्को व्यञ्जनरूपोऽर्थरूपो वा यस्य तदेकत्ववितर्कं, सूक्ष्मक्रियं तृतीयं, सूक्ष्मा क्रिया यस्मिंस्तत्सूक्ष्मक्रियं, अत्रोच्छ्वासनिश्वासादिकायक्रिया सूक्ष्मा भवति, व्युपरतक्रियं तुर्यं, व्युपरता योगाभावात् क्रिया यस्य तद्व्युपरतक्रियमिति विग्रहः ॥

अथ प्रत्येकं तेषां भावमाह—

**पूर्वविदां पूर्वश्रुतानुसारतोऽन्येषां तमन्तरेणार्थव्यञ्जनयोगान्तरसङ्क्रान्तिसहितमेकद्रव्य उत्पादादिपर्यायाणामनेकनयैरनुचिन्तनं पृथक्त्ववितर्कम् । इदं सविचारम् ॥**

पूर्वविदामिति । एकस्मिन् द्रव्ये पुद्गलात्मादिरूप उत्पादव्ययध्रौव्यमूर्त्तामूर्त्तनित्यानित्यादियथायोग्यपर्यायाणां नानानयैर्द्रव्यास्तिकादिभिरनुचिन्तनं स्मरणं, कथमित्यत्राह पूर्वविदां पूर्वश्रुतानुसारेण, अन्येषां मरुदेव्यादीनां तमन्तरेणापि स्त्रियः पूर्वश्रुतानधिकारात् । एतेन पूर्वज्ञानस्यैकान्तनियमो नास्तीति सूचितम्, पूर्वं प्रणयनात् पूर्वाणि चतुर्दश, तद्विदः पूर्वविदस्तेषां पूर्वविदां, पुनः कथंभूतं चिन्तनमित्यत्राहार्थव्यञ्जनयोगान्तरसङ्क्रान्तिसहितमिति । अर्थो ध्येयः—द्रव्यं पर्यायो वा, व्यञ्जनं तस्य वाचकं वचनं, योगः कायवाङ्मनःकर्मलक्षणः, अन्यो योगो योगान्तरं तेषां सङ्क्रान्तिः परिवर्त्तनं द्रव्यं विहाय पर्यायं पर्यायं विहाय द्रव्यं यदुपैति साऽर्थसङ्क्रान्तिः, एकं श्रुतवचनमुपादाय वचनान्तरमालम्बते तदपि विहायान्यदिति व्यञ्जनसङ्क्रान्तिः, काययोगं त्यक्त्वा योगान्तरं गृह्णाति तच्च त्यक्त्वाऽन्ययोगमिति योगसङ्क्रान्तिः, अर्थव्यञ्जनयोगान्तरसहितत्वादिदं ध्यानं सविचारमुच्यत इत्याशयेनाहेदमिति । सविचारमिति, सह विचारेणार्थव्यञ्जनयोगान्तरसङ्क्रान्त्या वर्त्तत इति सविचारम् । योगान्तरसङ्क्रान्तिरूपत्वादस्य ध्यानस्य योगत्रयव्यापारवतस्सम्भव इत्यपि पदेनानेन सूच्यते ॥

अथ द्वितीयप्रकारभावमाह—

**पूर्वविदां पूर्वश्रुतानुसारेणाऽन्येषां तद्भिन्नश्रुतानुसारेणाऽर्थव्यञ्जनयोगान्तरसङ्क्रान्तिरहितमेकद्रव्ये एकपर्यायविषयानुचिन्तनमेकत्ववितर्कम् । इदन्त्वविचारम् ॥**

पूर्वविदामिति । व्याख्यातोऽर्थः, तद्भिन्नश्रुतानुसारेणेति, अत्र मरुदेव्यादीनां द्रव्यश्रुताभावेऽपि यत्किञ्चित् श्रुतमस्त्येवेति—सूचयितुं तमन्तरेणेत्यनुक्त्वा तद्भिन्नश्रुतानुसारेणेत्युक्तम् । अर्थव्यञ्जनयोगान्तरसङ्क्रान्तिरत्र नास्तीत्याहार्थव्यञ्जनयोगान्तरसङ्क्रान्तिरहितमिति, एकद्रव्य इति, अभेदेनेति शेषः, अभेदेनैकद्रव्ये पर्यायविषयकालोचनमित्यर्थः, द्रव्याभिन्नपर्यायविषयकं पर्यायाभिन्नद्रव्यविषयकं वेति यावत् । अर्थव्यञ्जनयोगान्तरसङ्क्रान्तिरहितत्वादेवेदं ध्यानमविचारमुच्यत इत्याहेदन्त्विति ॥

अथ सूक्ष्मक्रियमाह—

**सूक्ष्मकायक्रियाप्रतिरुद्धसूक्ष्मवाङ्मनःक्रियस्य सूक्ष्मपरिस्पन्दात्मकक्रियावद्ध्यानं सूक्ष्मक्रियम् । इदमप्रतिपाति, प्रतिपाताभावात् ॥**

सूक्ष्मकायक्रियेति । मोक्षगमनप्रत्यासन्नसमये केवलिनो मनोवाग्योगद्वये निरुद्धे सत्यर्धनिरुद्धकाययोगस्योच्छ्वासनिःश्वासलक्षणा तन्वी क्रियैव यत्र तथाविधं सूक्ष्मक्रियात्मकं ध्यानमित्यर्थः । प्रथमं मनोयोगनिग्रहे ततो वाग्योगनिग्रहे ध्यानमिदं भवति । ध्यातुरस्य परिणामविशेषस्य प्रवर्धमानत्वेनेदं ध्यानमप्रतिपातीत्युच्यते, इत्याहेदमिति, हेतुमाह प्रतिपाताभावादिति, परिणामविशेषस्येत्यादिः ॥

अथ व्युपरतक्रियमाचष्टे—

**निरुद्धसूक्ष्मकायपरिस्पन्दात्मकक्रियस्य ध्यानं व्युपरतक्रियम् इदमप्यप्रतिपाति । आद्ये द्वे एकादशद्वादशगुणस्थानयोरन्त्ये द्वे केवलिन एव त्रयोदशचतुर्दशगुणस्थानक्रमेण ॥**

निरुद्धेति । शैलेश्यवस्थावस्थितानां मनोवाक्काययोगत्रयरहितानां यद्ध्यानं तद्व्युपरतक्रियमुच्यते । ननु शुक्लध्यानस्यान्तिमभेदद्वये मनसोऽभावेन मनोविशेषरूपध्यानत्वं कथमस्तीति चेन्न मनोमात्रस्य ध्यानरूपत्वाभावात् किन्तु सुनिश्चलस्यैव योगस्य तथात्वात् तस्य केवलिनस्सयोगिनस्सूक्ष्मक्रियात्मके ध्यानेऽक्षतेः, कायात्मकयोगस्य सुनिश्चलत्वात् न च तथाऽप्ययोगिनो ध्याने चतुर्थे योगस्यापि कायस्याभावेन तत्राऽनुपपत्तिस्तादवस्थ्यमिति वाच्यम्, कुलालचक्रभ्रमणवन्मनःप्रभृतियोगोपरमेऽपि पूर्वप्रयोगाद्ध्यानोपपत्तेः, द्रव्यमनसोऽभावेऽपि भावमनसस्सत्त्वेन ध्यानसम्भवात्, चेतसो ज्ञानरूपत्वेनैकविषयस्थिरीभूतज्ञानपरिणामरूपध्यानस्याप्यक्षतत्वाच्च ॥ प्रवर्धमानपरिणामविशेषवत्त्वादिदमप्यप्रतिपातीत्याहेदमपीति । शुक्लध्यानस्याधिकारिणमाहाद्ये इति । पृथक्त्ववितर्कैकत्ववितर्के इत्यर्थः, एकादशद्वादशगुणस्थानयोरिति । यथाक्रममिति शेषः, तथाच पृथक्त्ववितर्कमेकादशे, एकत्ववितर्कं द्वादश इत्यर्थः । अन्तिमावधिप्रदर्शनपरमिदं, नाग्रिमगुणस्थानवर्तिनी इमे भवत इति भावः । तेन पृथक्त्ववितर्कस्याऽपूर्वगुणस्थानादिवर्तिनस्सम्भवेऽपि न क्षतिः । एकत्ववितर्कन्तु द्वादशगुणस्थान एव । अपूर्वगुणस्थानाद्द्वादशमित्यर्वाग्वर्तीति केचित् । अन्त्ये द्वे इति सूक्ष्मक्रिय-

व्युपरतक्रिये इत्यर्थं, सूक्ष्मक्रियं सयोगिनो व्युपरतक्रियमयोगिन इति तात्पर्यम् । अत्र भावनादेशकालासनविशेषा धर्मध्यानवत् । ध्यातव्या अवान्तरभेदा ध्यातारश्च मूल एव प्रदर्शिता॰, क्षान्तिमार्दवार्जवादीन्यालम्बनानि, मनोयोगनिग्रहस्ततो वाग्योगनिग्रहस्तत॰ काययोगनिग्रह इति भवान्तकाले केवलिन आश्रित्य योगनिग्रहक्रमः, छद्मस्थस्त्रिभुवनविषयमन्तःकरण प्रतिवस्तु त्यागलक्षणक्रमेण सकोच्याणौ विधायाऽतीव निश्चलश्शुक्लं ध्यायति, जिनस्तु चरमद्वयध्याता ततोऽपि प्रयत्नविशेषान्मनोऽपनीयाचिन्त्यमानान्तःकरणो भवति । तत्राऽपि शैलेशीमप्राप्तोऽन्तर्मुहूर्तेनाऽथ शैलेश्याञ्च द्वितीयं ध्यायति । आश्रवद्वारापायान् ससाराशुभानुभाव अनन्तभवसन्तान वस्तुविपरिणामञ्च चिन्तयतीति भावना, आद्यद्वयभेदापेक्षयाऽस्य भावना, शुक्ललेश्या प्रथमत्रयभेदेऽन्तिमे च लेश्याविरहो बोध्य. । अवधासमोहविवेकव्युत्सर्गा लिङ्गानि । शुभाऽऽस्रवनिर्जरानुत्तरामरसुखानि द्वयोश्शुक्लयो, अन्त्ययोस्तु परमनिर्वाणं फलमिति बोध्यम् ॥

अत्र ध्याने षोडशपादात्मक एकेन्द्रियविकलेन्द्रियस्थावरसञ्ज्यसञ्ज्ञिमनुजगतित्रसकायपञ्चेन्द्रिययोगत्रयकषायचतुष्टयाहारकानाहारकोपशमक्षयोपशमक्षायिकसम्यक्त्ववेदत्रिकज्ञान–त्रिकदर्शनत्रिकभव्याभव्यमिथ्यात्वसास्वादनमिश्राविरतिदेशविरतिसर्वविरतिज्ञानत्रिकलेश्या–षट्ककेवलज्ञानदर्शनसामायिकछेदोपस्थापनीयपरिहारविशुद्धिसूक्ष्मसम्परायययथाख्यातमनःपर्यवान् षट्त्रिंशद्विधानाश्रित्य विचार्यमाणे, एकेन्द्रियविकलेन्द्रियस्थावरासञ्ज्ञिना मनसोऽभावेन नैकविधमपि ध्यान सम्भवति, मनुजगतित्रसकायपञ्चेन्द्रियक्षायिकसम्यक्त्वभव्येषु प्रत्येकं षोडशविधध्यानस्य सम्भव, योगत्रयाहारकत्वयो पञ्चदशविधध्यानसामानाधिकरण्यस्य सम्भव, व्युपरतक्रियात्मकध्यानविशेषसामानाधिकरण्यासम्भवात् । उपशमसम्यक्त्वकषायचतुष्टयवेदत्रिकेषु त्रयोदशविधध्यानसहचारित्वस्य सम्भव., क्षीणमोहादिगुणस्थानेष्वेषामसम्भवेन तत्स्थानभाव्येकत्ववितर्कसूक्ष्मक्रियव्युपरतक्रियैस्सहचारित्वासम्भवात् । ज्ञानत्रिकदर्शनत्रिकसञ्ज्ञित्वेषु चतुर्दशविधध्यानसहवृत्तित्वसम्भव, मनोविरहकालभाविसूक्ष्मक्रियव्युपरतक्रियध्यानविशेषसहवृत्तित्वासम्भवात् । अनाहारकत्वकेवलज्ञानदर्शनेषु सूक्ष्मक्रियव्युपरतक्रियध्यानविशेषसामानाधिकरण्यमेव । त्रयोदशचतुर्दशगुणस्थानभावित्वात्तेषाम् । इतरध्यानाना मनोविषयकत्वाच्च । पञ्चसु लेश्यासु क्षायोपशमिकसम्यक्त्वे च द्वादशध्यानसह-

१ काययोग एव सूक्ष्मक्रियस्य भावात् एकत्ववितर्कस्य कायवाङ्मनोऽन्यतमयोग एव भावात् पृथक्त्व वितर्कस्य ॥ मनोवाक्काययोगव्यापारवत एव भावादिति भेदो विज्ञेय ॥ २ अणोरपीत्यर्थ ॥ ३ भावि नारकाद्यपेक्षयेति भाव ॥

चारित्वं, शुक्लध्यानसामानाधिकरण्याभावात् । शुक्ललेश्यायाश्च व्युपरतक्रियातिरिक्तध्यानविशिष्टत्वं, अयोगिनि लेश्यावैधुर्यात्। सामायिकछेदोपस्थापनीययोर्निदानातिरिक्तार्त्तभेदत्रयं धर्मध्यानचतुष्टयं पृथक्त्ववितर्कञ्च भवति । परिहारविशुद्धिकस्याऽनन्तरोक्तानि पृथक्त्ववितर्कविरहितानि भवन्ति श्रेणिप्राप्त्यभावात् । सूक्ष्मसम्परायस्य पृथक्त्ववितर्कं धर्मचतुष्टयं वा । दशमगुणस्थानमात्रवृत्तित्वात्तस्य यथाख्यातस्य चतुर्विधं शुक्लध्यानं धर्मध्यानं वा । मनःपर्यवज्ञानिनो निदानातिरिक्तमार्त्तत्रयं धर्मचतुष्टयं शुक्लस्याद्यद्वयञ्च भवति । गतित्रिकाज्ञानत्रिकाविरतिदेशविरत्यभव्यतामिथ्यात्वसास्वादनमिश्रभावानां ध्यानाष्टकसाहचर्यं, धर्मशुक्लाभावादिति दिक् ॥

अथाऽभ्यन्तरतपोभेदस्यावान्तरमन्तिमं व्युत्सर्गमाह—

**अनेषणीयस्य संसक्तस्य वाऽन्नादेः कायकषायाणाञ्च परित्यजनमुत्सर्गः॥**

इति निर्जरातत्त्वम् ॥

अनेषणीयस्येति । विविधस्योत्सर्गो व्युत्सर्गः, व्युत्सर्जनं व्युत्सर्गः । स द्विविधः, बाह्य आभ्यन्तरश्चेति । अनेषणीयस्य संसक्तस्यान्नपानोपध्यादेर्बाह्यद्रव्यस्य शास्त्रोदितविधिना परित्यागो बाह्यव्युत्सर्गः । आभ्यन्तरस्तु पर्यन्तकाले कायस्य संसारपरिभ्रामककषायाणां करणत्रिकैः कृतकारितानुमतिभिश्च परित्यागः, तदेतदभिप्रायेण मनसिकृत्य तत्स्वरूपमाहानेषणीयस्येति । न चाऽपरिग्रहाख्यस्य गतार्थत्वमिति वाच्यम्, तस्य धनहिरण्यादिमूर्च्छाविषयकत्वात् । नच प्रायश्चित्तान्तर्गतोऽयमिति वाच्यम्, तस्य प्रतिद्वन्द्व्यतिचारसापेक्षत्वात्, अस्य तु निरपेक्षत्वात् । नचाऽनेकत्रास्य वचनमनर्थकमिति वाच्यम् क्वचित्सावद्यप्रत्याख्यानात्, क्वचिन्निरवद्यस्यापि नियतकालं प्रत्याख्यानात् क्वचिच्चाऽनियतकालमिति निवृत्तिधर्मस्य पुरुषशक्त्यपेक्षत्वादुत्तरोत्तरगुणप्रकर्षादुत्साहोत्पादनार्थत्वाच्च न पौनरुक्त्यमितिभावः । अथ निर्जरां निगमयतीतीति ॥

इति तपोगच्छनभोमणि-श्रीमद्विजयानंदसूरीश्वरपट्टधर-श्रीमद्विजयकमलसूरीश्वरचरणनलिनसन्न्यस्तात्मभक्तिभरेण तत्पट्टधरेण विजयलब्धिसूरिणा विनिर्मितस्य तत्त्वन्यायविभाकरस्य स्वोपज्ञायां न्यायप्रकाशव्याख्यायां निर्जरानिरूपणं नामाष्टमःकिरणः॥

१. भवितव्यविशेषापेक्षणरहितत्वात्, सामान्येन निर्जरार्थत्वादिति भावः ॥

अथोक्त आगन्तुककर्मनिरोधकस्संवरो बद्धकर्मविध्वंसिका निर्जरा च, तत्र किमात्मकः कर्मणां बन्धः केन वा स इत्याकांक्षायामुपोद्घातसङ्गत्या बद्धकर्मणामित्यादिनिर्जरालक्षणेन बन्धस्य स्मृतत्वात्प्रसङ्गसङ्गत्याऽवसरसङ्गत्या वा बन्धं निरूपयितुकामः प्रथमं बन्धं लक्षयति—

**आत्मप्रदेशैश्शुभाशुभकर्मसम्बन्धो बन्धः ॥**

आत्मप्रदेशैरिति । सहार्थे तृतीया, आत्मप्रदेशैस्सह शुभानां पुण्यरूपाणामशुभानां पापात्मकानाञ्च कर्मणां पुद्गलविशेषाणां सम्बन्धो नीरक्षीरवत्परस्पराश्लेषः कथञ्चिद्भेदाभेदरूपस्तद्व्यतिरिक्तसम्बन्धाभावात् सम्बन्धनरूपत्वाद्बन्ध इत्यर्थः । आत्मना सहैव सम्बद्धानां कर्मपुद्गलानां सम्बन्धो बन्ध उच्यते न घटादिनां पुद्गलसम्बन्धस्येति सूचयितुमात्मेत्युक्तं, प्रदेशेन सहाऽपि बन्ध इति सूचयितुं प्रदेशैरिति । अत्र शुभाशुभकर्मसम्बन्धस्यैव बन्धरूपत्वं विवक्षितं, न तु शुभाशुभात्मककर्मवर्गणानामित्यभिप्रायं सूचयितुं शुभाशुभकर्मसम्बन्ध इति, अत एव पुण्यपापाभ्यां बन्धस्य पृथगुपादानं कृतम् । वस्तुतः कर्मणश्शुभरूपत्वमशुभरूपत्वञ्चेति द्वैविध्यमेव, उभयविधेनाऽपि कर्मणा सम्बन्धो बन्धो भवतीति सूचयितुं शुभाशुभेति, कर्मपदेन कर्मयोग्यपुद्गला ग्राह्याः, जीवग्रहणपूर्वं तेषां कर्मपरिणामाभावात् । शुभाशुभकर्मपदेनोत्तरप्रकृतिबोधात्तस्यैव बन्धो लक्षितो न मूलप्रकृतिबन्धस्तथा चाऽव्याप्तिस्तन्निवारणायात्मप्रदेशैः कर्मसम्बन्धो बन्ध इत्येव लक्षणशरीरं विज्ञेयम् । अयञ्च भावबन्ध उच्यते । यस्तु प्रयोगबन्धो विस्रसाबन्धश्च द्रव्यबन्धरूपस्स नेह विवक्षितोऽप्रकृतत्वात् । आत्मप्रदेशैः पुद्गलसम्बन्धस्य न बन्धत्वं, मुक्तात्मना जीवेन सह पुद्गलसम्बन्धसत्त्वात्, पुद्गलानां व्यापकत्वात् लोकस्याञ्जनचूर्णपूर्णसमुद्गकवत्पुद्गलैः परिपूर्णत्वात् कर्मपदोपादाने च कर्मयोग्यपुद्गलानामेव ग्रहेण तत्सम्बन्धस्य तत्र विरहान्न क्षतिः, रागादिगुणयोगाद्धि जीवः कायादियोगेन कर्मवर्गणायोग्यपुद्गलस्कन्धानादाय कर्मरूपतया परिणमय्याऽऽत्मसात्करोति नान्य इति, आत्मप्रदेशैरित्यनेन जीवस्स्वप्रदेशावगाढमेव दलिकं गृह्णाति न त्वनन्तरपरम्परप्रदेशावगाढं, तत्राऽपि एकस्मिन् जीवप्रदेशे यदवगाढं ग्रहणप्रायोग्यं दलिकं तदेकमपि सर्वैरेवात्मप्रदेशैर्गृह्णाति तस्य सर्वप्रदेशानां शृंखलावयवानामिव परस्परं सम्बद्धत्वात्, व्याप्रियमाणे चैकप्रदेशेऽनन्तरपरम्परतया तद्व्यग्रहणाय सर्वप्रदेशानामपि व्याप्रियमाणत्वात्तथा सर्वत्रापि सर्वप्रदेशेष्वपि सर्वान् ग्रहणप्रायोग्यानवगाढान् स्कन्धान्सर्वैरेवाऽऽत्मप्रदेशैर्गृह्णातीत्यप्यर्थस्सूचितः । ननु कर्मैव नास्ति कुतस्तस्य जीवप्रदेशैस्सम्बन्ध इति चेन्न, आत्मा स्वरूपेण शश्वज्ज्ञानवान् तत्स्वभावत्वात्, यो

---

१. प्रयोगेण भावबन्धो द्रव्यबन्धश्च भवति तत्र प्रयोगबन्धो द्रव्यबन्धो नेह विवक्षितस्तेन भावबन्धस्य प्रयोगजन्यत्वेऽपि न क्षतिरितिभावः ॥

यत्स्वभावस्स शश्वत्तद्वान् यथोष्णस्वभावो वह्निश्शश्वदौष्ण्यवान् ज्ञानस्वभावश्चाऽऽत्मा-ततस्सोऽपि शश्वत्तद्वानित्यनुमानेन शश्वज्ज्ञानवतः स्वगोचरज्ञानप्रतिबन्धदर्शनेन तत्प्रतिबन्धकज्ञानावरणादिकर्मसिद्धेः, भूताविष्टपुरुषस्य स्वज्ञानप्रतिबन्धकभूतवत् । तच्च कर्म-पौद्गलिकमेव, नात्मगुणरूपं, अमूर्त्तेरनुग्रहोपघाताभावात् आकाशं ह्यमूर्त्तं दिगादीनाममूर्त्तानां नानुग्राहकं न वोपघातकञ्च दृष्टं तथैवामूर्त्तं कर्म कथममूर्त्तस्यात्मनोऽनुग्रहोपघातयोर्हेतुर्भवेत् । न च तथापि कथं मूर्त्तेन कर्मणाऽमूर्त्तस्यात्मनो बन्धो नहि पुद्गलेनामूर्त्तेन अमूर्त्तानामाकाशादीनामनुग्रहोपघातौ दृष्टाविति वाच्यम्, आत्मनः कर्मसम्बन्धस्यानादित्वेनैकान्तिकामूर्त्तत्वासिद्धेः । अत एवामूर्त्तस्य ज्ञानस्य कथं मूर्त्तेन ज्ञानावरणीयेन प्रतिबन्ध इति शंकापि परास्ता कथञ्चिन्मूर्त्तादात्मनो ज्ञानस्य सर्वथा भेदाभावेन तस्याऽपि कथञ्चिन्मूर्त्तत्वात् । एवञ्च निखिलकर्मात्मकस्य कर्माधारभूतस्य सर्वेषामौदारिकादिशरीराणां कारणभूतस्य प्रवाहतोऽनादिरूपस्य आमोक्षं जीवाविनाभूतस्य कार्मणशरीरस्य मिथ्यात्वादिप्रसूतस्य सिद्धौ तच्छरीरयुक्तो जीवः कर्मप्रायोग्यवर्गणा औदारिकादिवर्गणाश्च गृह्णन् योगवान् कषायस्नेहानुलिप्तः कर्मरजोभिरौदारिकादिशरीरैश्च कथञ्चिदभेदेन सम्बध्यते, अत एव च तदवच्छिन्नस्यात्मनस्सुखदुःखानुभवः, स्ववीर्येणौदारिकादिपुद्गलानां चेतनतया परिणमितत्वात् । अन्यथा शरीरस्य जीवादत्यन्तभेदात्तदवच्छेदेन तस्य सुखदुःखसंवेदनं न स्यादिति । न च कार्मणशरीरस्य मूर्त्तत्वे औदारिकादिशरीरवत्तस्येन्द्रियकत्वप्रसङ्ग इति वाच्यम्, मूर्त्तमात्रस्यैन्द्रियकत्वमिति नियमाभावात्, अत्यन्तसूक्ष्मतया परिणतत्वेन तस्य वैक्रियादिशरीरस्येव चर्मचक्षुषामतीन्द्रियत्वोपपत्तेः । कार्मणशरीरवत्त्व एव जीवो भवान्तरं प्राप्नोति, नान्यथा, औदारिकादिशरीरस्य तद्भव एव त्यागात् शरीरान्तरस्य चाभावात् । न चाऽशरीरस्यैव भवान्तरप्राप्तिरिति वाच्यम्, सदेहस्यैव तस्याऽत्र गमनदर्शनेनाऽन्यत्राऽपि तथाऽनुमानात्, अत एव पूर्वप्रयोगादेवाशरीरस्य मुक्तस्य गमनमुक्तं, न चाऽचेतनस्य कथं देशान्तरप्रापणसामर्थ्यमिति वाच्यम् चेतनाधिष्ठितस्याचेतनस्याऽपि पोतादेरिव देशान्तरप्रापणसामर्थ्यो-

---

१. अखिलज्ञेयज्ञातृस्वभावस्यात्मनो ज्ञानं सप्रतिबन्धकं, स्वगोचरज्ञानप्रतिबन्धदर्शनात् भूताविष्टपुरुषज्ञानवत् इत्यनुमाने तेन भूताविष्टपुरुषज्ञानप्रतिबन्धकभूतवत् निखिलज्ञेयज्ञातृस्वभावस्यात्मनोऽपि ज्ञानस्य प्रतिबन्धकं कर्म सिद्ध्यति तेन च कार्मणशरीरमारभ्यते, तदभावे औदारिकादिशरीरसम्बन्धासिद्धेः, न हि मूर्त्तामूर्त्तयोर्घटाकाशयोरिवौदारिकादिशरीरात्मनो परस्परानुप्रवेशस्सम्भवति । न च कथं कार्मणशरीरस्यात्मनामूर्त्तेन सम्बन्धः, अनादिकालादात्मना कथञ्चित्तादात्म्यस्याभ्युपगम्यमानत्वेन तत्र पर्यनुयोगासम्भवात् । जीवकर्मसंयोगस्यानादित्वेऽपि बीजाङ्कुरयोरिवाप्रतिनिवर्तितकार्यस्य वस्तुविनाशः तन्मय ननाद्यवन् तपस्संयमादुपायात् व्यवच्छिद्यत इति बोध्यम् ॥

पलम्भात् । तस्मात्कार्मणशरीरेणानादिसम्बद्धस्याऽऽत्मनस्संसारिण औदारिकादिशरीरसम्बन्धाद्बन्धसिद्धिरिति ॥

ननु कारणमन्तरेण न कापि कार्यं दृष्टं, बन्धश्च कार्यं तेनापि सकारणेन भवितव्यं, यद्यकस्मात्स तर्हि मोक्षोऽपि तथैव स्यात् न च तौ तथा, तदर्थं क्रियायाः विरोधप्रसङ्गात् अतो बन्धकारणनिर्देशोऽवश्यं वाच्य इति तत्कारणान्याह—

## स च मिथ्यात्वाविरतिकषाययोगैर्यथायोगं समुत्पद्यते ।

स चेति । बन्धश्चेत्यर्थः । ननु बन्धकारणता मिथ्यात्वादीनां समुदाये वा स्यादवयवे वा स्यादित्याशङ्कायामाह यथायोगमिति । तथाच न सर्वेषामेव हेतुत्वमपि तु मिथ्यादृष्टेश्चत्वारः समुदिता बन्धहेतवः, सास्वादनसम्यग्दृष्टिसम्यङ्मिथ्यादृष्ट्यसंयतसम्यग्दृष्टीनामविरत्यादयस्त्रयः, संयतासंयतस्याविरतिमिश्रौ कषाययोगौ च, प्रमत्तसंयतस्य, अप्रमत्तादीनां चतुर्णां च कषाययोगौ, शान्तक्षीणकषायसयोगकेवलिनां योग एव, अयोगकेवलिनां न बन्धहेतुः । तत्रापि मिथ्यात्वादीनि अवान्तरभेदविशिष्टानि प्रत्येकं बन्धकारणानि, नहि सर्वाणि मिथ्यात्वादीनि एकत्र जीवे युगपत्सम्भवन्ति नाऽपि हिंसादयः सर्वे परिणामा इति यथायोगशब्दरहस्यार्थः । यद्यपि तत्त्वार्थे प्रमादमपि गृहीत्वा पञ्चहेतुकत्वं बन्धस्योक्तं, तथाऽप्यत्र कर्मग्रन्थानुसारेण चातुर्विध्यमुक्तम्, तत्र प्रकर्षेण माद्यत्यनेनेति प्रमादः, विषयक्रीडाभिष्वङ्गः, यत्नारब्धेऽप्यनुत्थानशीलता वा । प्रचुरकर्मेन्धनप्रभवनिरन्तराविध्यातशारीरमानसानेकदुःखहुतवहज्वालाकलापपरीतमशेषमेव संसारवासगृहं पश्यंस्तन्मध्यवर्त्यपि, सति च तन्निर्गमनोपाये वीतरागप्रणीतधर्मचिन्तामणौ यस्माद्विचित्रकर्मोदयसाचिव्यजनितात्परिणामविशेषादपश्यन्निव तदुभयमविगणय्य विशिष्टपरलोकक्रियाविमुख एवाऽऽस्ते जीवस्स खलु प्रमादस्तत्र हेतवोऽष्टौ, अज्ञानं—मूढतारूपम्, किमेवं स्यादन्यथावेत्याविरूपस्संशयः, विपर्यस्ततप्रतिपत्तिरूपं मिथ्याज्ञानं, रागो द्वेषो विस्मरणशीलता लक्षणस्स्मृतिभ्रंशः, अर्हत्प्रणीतधर्मानादरात्मकोऽनुद्यमः, मनोवाक्कायानां दुष्टताकरणमिति, प्रमादोऽयं मद्यविषयकषायादिभिर्जायत इति मिथ्यात्वादिचतुर्विधेष्वेव यथायथमन्तर्भाव इति कृत्वा लाघवार्थिना मूलकारेण पृथङ्नोक्त इत्यवधेयम् । एते चत्वारो बन्धस्य सामान्यहेतवो विशेषहेतवस्तु प्रदोषनिह्नवादयोऽग्र आवेदयिष्यन्ते इति दिक् ॥

तत्र मिथ्यात्वादीनामवान्तरभेदापेक्षया बन्धस्य सप्तपञ्चाशद्विधत्वात्तानाख्यातुमादौ मिथ्यात्वं निर्वक्ति—

**तत्रायथार्थश्रद्धानं मिथ्यात्वम् । तच्चाऽऽभिग्रहिकानाभिग्रहिकाऽऽभिनिवेशिकसांशयिकानाभोगिकभेदेन पञ्चविधम् ॥**

तत्रेति । मिथ्यात्वादिचतुष्टय इत्यर्थे । यथार्थश्रद्धा हि सम्यग्दर्शनं, तद्विपरीतं मिथ्यात्वं, तत्त्वार्थश्रद्धानाभावोऽतत्त्वाध्यवसायरूपः, न तु विपर्यस्तश्रद्धानं विवक्षितं, सांशयिकादावसम्बध्यमानत्वात् तथा च तेषामसम्यग्रूपतया सम्यग्दर्शनविपरीतत्वान्नासङ्गहः । तद्विभजते तच्चेति ॥

अथाऽऽभिग्रहिकमाचष्टे—

**कुदर्शने सद्दर्शनजन्यं श्रद्धानमाभिग्रहिकम् ॥**

कुदर्शन इति । कुदेवकुगुरुकुधर्ममये दर्शने सद्दर्शनमिति मान्यता । इदमेव दर्शनं समीचीनं नान्यदित्येवं या यच्छ्रद्धानं, दर्शनाभासे तस्मिन् माहात्म्यमतिस्तदभिग्रह आग्रहस्तन्निर्वृत्तत्वादाभिग्रहिकं मिथ्यात्वमुच्यत इति भावः । कुदर्शनविशेष्यकसद्दर्शनत्वप्रकारकज्ञानजन्यश्रद्धानत्वं लक्षणम् । सद्दर्शने सद्दर्शनत्वप्रकारकज्ञानजन्यश्रद्धानवारणाय कुदर्शनविशेष्यकेति । कुदर्शनं दर्शनमितिश्रद्धानस्य मिथ्यारूपत्वाभावात्सदिति, कुदर्शनं तुच्छमिति ज्ञानजन्यस्वदर्शनश्रद्धानेऽतिप्रसक्तिनिवारणाय सद्दर्शनत्वप्रकारकेति । अर्हद्दर्शनं सत्यमन्यद्वेति सांशयिकमिथ्यात्वे व्यभिचारवारणाय जन्यश्रद्धानमिति । एवमग्रेऽपि यथासम्भवमूह्यम् ॥

अनाभिग्रहिकमभिधत्ते—

**सर्वदर्शनविशेष्यकसमत्वप्रकारकप्रतिपत्तिप्रयोजकं श्रद्धानमनाभिग्रहिकम् ॥**

सर्वदर्शनेति । सर्वाणि दर्शनानि समीचीनान्येवेति मन्वानस्सर्वत्र साम्यतया श्रद्धां विदधाति सा श्रद्धा अनाभिग्रहिकमिथ्यात्वमिति भावः । तथा मन्वानो यदा सन्देग्धि तदा सांशयिकं मिथ्यात्वं भवति तद्वारणाय श्रद्धानपदम् । अत्र तादृशप्रतिपत्तिजन्यं श्रद्धानं

---

१. सम्यग्मिथ्यारूपत्वं तेन सद्दर्शनप्रतिकुदर्शनप्रकारकज्ञानविषयश्रद्धानत्वमनाऽऽदि पक्षद । दर्शनसन्दोहशब्देन देवगुरुधर्मा गृह्यन्ते तेषां दर्शनं एवेति न न्यूनता बोध्या ॥

२. एवं देवगुरुधर्मेष्वपि सदृश विशेषम् ॥

जनकमप्यनाभिग्रहिकं भवतीति सूचयितुं पूर्वत्र जन्यतयाऽत्र च जनकतया लक्षणमभिहितमिति ध्येयम् ॥

आभिनिवेशिकमाख्याति—

**तत्त्ववेत्तृत्वेऽप्यतदर्थेषु तदर्थताऽभिग्रह आभिनिवेशिकं ॥**

तत्त्ववेत्तृत्वेऽपीति । शास्त्रतात्पर्यबाधप्रतिसन्धानत्वेऽपीत्यर्थः । तेन श्रीजिनभद्रसिद्धसेनादिप्रावचनिकप्रधानविप्रतिपत्तिविषयके पक्षद्वयेऽप्यन्यतरस्य वस्तुनः शास्त्रबाधितत्वात् तदन्यतरश्रद्धानवतो नाभिनिवेशित्वप्रसङ्गः । तेषां स्वाभ्युपगतार्थे शास्त्रतात्पर्यबाधप्रतिसन्धानेऽपि पक्षपातेन तत्प्रतिसन्धानाभावात् किन्त्वविच्छिन्नप्रावचनिकपरम्परया स्वाभ्युपगतार्थानुकूलत्वेन शास्त्रतात्पर्यस्यैव प्रतिसन्धानात् । अतदर्थेषु अतथाभूतेष्वर्थेषु, तदर्थताभिग्रहः—दुष्टाभिनिवेशेन तथाश्रद्धानमित्यर्थः, गोष्ठामहिलादयो हि दुरभिनिवेशविप्लावितधियश्शास्त्रतात्पर्यबाधं प्रतिसन्धायैवान्यथा श्रद्दधते । अभिनिवेशे दुष्टत्वञ्च सम्यग्वक्तृवचनानिवर्त्तनीयत्वं, तेन सम्यग्दृष्टेरपि अनाभोगात्प्रज्ञापकदोषाद्वा अन्यथा श्रद्धानसम्भवेऽपि नाभिनिवेशिकत्वम्, तेषामभिनिवेशस्य सम्यग्वक्तृवचननिवर्त्तनीयत्वादिति भावः ॥

सांशयिकं वक्ति—

**अर्हत्तत्त्वधर्मिकसत्यत्वसंशयजनकं मिथ्यात्वं सांशयिकम् ॥**

अर्हत्तत्त्वेति । भगवत्प्रोक्तानि जीवादितत्त्वानि सत्यानि नवेत्येवंरूपस्य संशयस्य जनकं तज्जन्यं वा यन्मिथ्यात्वं तत्सांशयिकमित्यर्थः । अन्यप्रोक्ततत्त्वेषु सत्यत्वसंशयस्य जनकं न तादृङ्मिथ्यात्वमित्यतोऽर्हदिति यद्यपि सूक्ष्मार्थादिविषयस्संशयस्साधूनामपि सम्भवति तथापि स आगमोदितभगवद्वचनप्रामाण्यपुरस्कारेण निवर्त्तते, स्वरसवाहितयाऽनिवर्त्तमानश्च स सांशयिकमिथ्यात्वरूपस्सम्यगाचारापादक एव, अत एवाकाङ्क्षामोहोदयादाकर्षप्रसिद्धिरिति ॥

अथानाभोगिकमिथ्यात्वमाह—

**दार्शनिकोपयोगशून्यजीवानां मिथ्यात्वमनाभोगिकम् ॥**

दार्शनिकेति । विशेषज्ञानविकलानामित्यर्थः, ते च विचारशून्या एकेन्द्रियादयो वा, अन्ततस्स्पर्शोपयोगस्यैकेन्द्रियादावपि सत्त्वादुपयोगशून्यजीवाप्रसिद्धिमयुक्तामम्भवन्यथाप्य दार्शनिकेति । तत्राऽऽभिग्रहिकाभिनिवेशिके विपर्यासरूपत्वेन सानुबन्धक्लेशमूलत्वाद्गरीयसी,

शेषाणि च त्रीणि नात्यन्तानर्थसम्पादकानि विपरीतावधारणरूपत्वाभावेन सुप्रतीकारत्वात् इति ॥

*अविरतिमाख्याति—*

**हिंसाद्यव्रतेभ्यः करणैर्योगैश्चाऽविरमणमविरतिः । तस्याश्च मनः पञ्चेन्द्रियाणां स्वस्वविषयेभ्यः पृथिव्यप्तेजोवायुवनस्पतित्रसरूपषड्विधजीवहिंसातश्चाप्रतिनिवर्त्तनरूपत्वाद्द्वादशविधत्वम् ॥**

हिंसाद्यव्रतेभ्य इति । अविरमणमविरतिः, केभ्यः, अव्रतेभ्यः, तथाचाऽव्रतेभ्योऽविरमणमविरतिः । अकरणं हि विरतिः करणञ्चाऽविरतिस्तथा च कैः करणमितिकरणाकांक्षा जायते, तत्राऽऽह–करणैर्योगैश्चेति । इन्द्रियैर्मनोवाक्कायरूपयोगैश्चेत्यर्थः, यदि कायेनैवेन्द्रियाणामपि ग्रहणं भवतीत्युच्यते तदा करणैः कृतकारितानुमतिभिरित्यर्थः । अव्रतानि कानीत्यत्राह हिंसादीति । आदिनाऽसत्यस्तेयाऽब्रह्मपरिग्रहाणां ग्रहणम्, यद्यपि हिंसादिभ्योऽविरमणमेवाव्रतं तथापि हिंसादीनामपि अविरतिं प्रत्यनुकूलतयाऽव्रतत्वोक्तिः, न च हिंसादयो व्रतरूपा अपि स्युस्तद्विषयकविरमणरूपत्वाद्व्रतस्येति वाच्यम्, अत्यन्तप्रतिकूलतया विरतिं प्रति तथाकथनस्यानुचितत्वात् एवञ्च हिंसाद्यव्रतेभ्यः कृतकारितानुमतिमनोवाक्कायान्यतमेनाविरमणमविरतिरिति भावः । हिंसाद्यन्यतमस्य कृतकारितानुमतिमनोवाक्कायान्यतमेन करणमितियावत् । तस्या द्वादशविधत्वं द्वादशस्थानप्रदर्शनद्वारा प्रकटयति तस्याश्चेति, अविरतेश्चेत्यर्थो द्वादशविधत्वमित्यनेनाऽस्य सम्बन्धः । कथं द्वादशविधत्वमित्यत्राह मन इति । मनसस्स्वस्वविषयेभ्योऽप्रतिनिवर्त्तनमित्येका पञ्चेन्द्रियाणां घ्राणरसनचक्षुश्श्रोत्रस्पर्शानां स्वस्वविषयेभ्योऽप्रतिनिवर्त्तनानीति पञ्च, षड्विधजीवहिंसादिभ्योऽप्रतिनिवर्त्तनानीति षट् मिलित्वा च द्वादशविधत्वमिति भावः ॥

*कषायमाह—*

**कषायः पूर्वोदितपञ्चविंशतिविधः । वेदत्रयहास्यषट्कात्मकनोकषायः कषायसहगामित्वात्कषायपदवाच्यः ॥**

कषाय इति । पूर्वोदितेति पापनिरूपणोदितेत्यर्थः । तथाचाऽनन्तानुबन्धिक्रोधमानमायालोभाः, अप्रत्याख्यानक्रोधमानमायालोभाः, प्रत्याख्यानक्रोधमानमायालोभाः, सञ्ज्वलनक्रोधमानमायालोभा इति षोडशविधः कषायः । पुंस्त्रीनपुंसकहास्यरत्यरतिशोकभयजुगु-

प्सारूपो नवविधो नोकषाय इति मेलनतः कषायः पञ्चविंशतिविध इति भावः । ननु नवविधनोकषायस्य कथं कषायत्वमित्यत्राह वेदत्रयेति पुंस्त्रीनपुंसकेतिवेदत्रयेत्यर्थः, हास्यषट्केति, हास्यरत्यरतिभयशोकजुगुप्साषट्केत्यर्थः । कषायसहगामित्वादिति कषायेण सहैव वर्त्तमानत्वादित्यर्थः, दिग्दर्शनमिदं, तेन यद्दोषो यः कषायस्तत्सहचारिणां हास्यादीनामपि तद्दोषत्वेन तत्कार्यकारित्वात्कषायत्वं तत्राप्यल्पकार्यकारित्वाच्च नोकषायत्वमितिबोध्यम् ॥

चतुर्थं योगमाचष्टे—

**योगो मनोवाक्कायव्यापारः । तत्र सत्यासत्यमिश्रव्यवहारविषयकमनोवाग्व्यापारा अष्टौ, तथौदारिकौदारिकमिश्रवैक्रियवैक्रियमिश्राऽऽहारकाऽऽहारकमिश्रकार्मणशरीरजन्यव्यापारास्सप्तेति पञ्चदशयोगाः ॥**

योग इति । युज्यतेऽनेनेतियोगः, तत्र यद्यपि बन्धेऽभीप्सितालब्धवस्तुलाभे मेलने संयोगे शब्दादीनां प्रयोगे समुदायशब्दस्यावयवार्थसम्बन्धे द्रव्यतो बाह्ये मनोवाक्कायव्यापारे भावतोऽध्यवसायविशेषे च योगशब्दो वर्त्तते तथापि प्रकृतोपयोगिनं तदर्थं सूचयितुं मनोवाक्कायव्यापार इत्युक्तत्वान्मनोवाक्कायव्यापार एवात्र विवक्षितः । सोऽयं योगो द्विविधः, द्रव्ययोगो भावयोगश्चेति । जीवेनागृहीतानि गृहीतानि वा स्वव्यापाराप्रवृत्तानि मनोवागादिद्रव्याणि द्रव्ययोगः । जीवस्य परिणामविशेषो वीर्यस्थामादिशब्दवाच्यो भावयोगः । अयमपि द्विधा प्रशस्तोऽप्रशस्तश्चेति । तत्र प्रशस्तस्सम्यक्त्वादिरात्मनोऽपवर्गेण योजनात्, अप्रशस्तो मिथ्यात्वादिरष्टविधकर्मभिर्योजनात् । यद्वा मनोवाक्कायप्रवर्त्तकानि द्रव्याणि मनोवाक्कायपरिस्पन्दात्मको योगश्च द्रव्ययोगः, एतदुभययोगहेतुरध्यवसायो भावयोगः । तत्र द्रव्ययोगश्शुभोऽशुभो शुभाशुभश्च व्यवहारनयमात्रापेक्षया विधिमतिक्रम्य दानादिवितरणचिन्तनात्मकमनोयोगस्तथैव दानादिधर्मोपदेशात्मकवाग्योगस्तथैव जिनपूजावन्दनादिकायपरिस्पन्दात्मककाययोगश्च शुभाशुभो भवति । भावयोगस्तु शुभो वाऽशुभो वा न शुभाशुभरूपः, आगमे शुभाशुभात्मकाध्यवसायस्थानस्य तृतीयस्यानुक्तत्वात् । तदेव योगा अनुपयुक्तस्य कर्मबन्धायोपयुक्तस्य च कर्मनिर्जराकारिणो भवन्ति । सोऽयं योगः स्वरूपेणैकोऽपि मनोवाक्कायलक्षणसहकारिभेदात्त्रिविधः, मनसा करणेन योगो मनोयोगो वाचा करणेन योगो वाग्योगः कायेन करणेन योगः काययोग इति । स वीर्ययोगो वीर्यान्तरायक्षयक्षयोपशमसमुत्थलब्धिविशेषप्रत्ययोऽभिसन्ध्यनभिसन्धिपूर्वकत्वात्सकरणः, अकरणश्च भवति । तत्रालेश्यस्य केवलिनः कृत्स्नयोर्ज्ञेयदृश्ययोरर्थयोः केवलज्ञानं केवलदर्शनञ्चोपयुञ्जानस्य योऽसावपरिस्पन्दोऽप्रतिघो वीर्यविशेषः सोऽकरणः । स च नेहाधिक्रियते वीर्या-

न्तरायक्षयोपशमजन्यवीर्यविशेषस्यैव सकरणस्य कर्मबन्धकस्याधिकृतत्वात्। तत्रौदारिकादिशरीरस्यात्मनोवीर्यपरिणतिविशेषः काययोगः, औदारिकवैक्रियाऽऽहारकशरीरव्यापाराहृतवाग्द्रव्यपुञ्जसाचिव्याज्जीवव्यापारो वाग्योगः, मनसा करणेन युक्तस्य जीवस्य योगो जीवपर्यायो दुर्बलस्य यष्टिकाद्रव्यवदुपष्टम्भकरो मनोयोगः । सोऽयं मनोव्यापारो वाग्व्यापारश्च प्रत्येकं सत्यमृषासत्यमृषाऽसत्यमृषाभेदेन चतुर्विधत्वादुभयमेलनेनाष्टविधमनोवाग्जन्यो योग इत्याशयेनाह *सत्यासत्येति* । *मिश्रः सत्यमृषारूपो व्यवहारोऽसत्यमृषारूपः* । काययोगस्य भेदमाह *तथेति* तत्र शुद्धा औदारिकवैक्रियाऽऽहारककार्मणशब्दा व्याख्याता औदारिकमिश्रस्तूच्यते औदारिक एवापरिपूर्णो मिश्र इति, यथा गुडमिश्रं दधि न गुडतया नापि दधितया व्यपदिश्यते ताभ्यामपरिपूर्णत्वादपितु मिश्र इति तद्वदत्रापि औदारिकमिश्रमौदारिकत्वेन कार्मणत्वेन वा न व्यपदिश्यते किन्तु औदारिकमिश्रतयेति, एवं वैक्रियाऽऽहारकमिश्रावपि । यद्वा शुद्धा औदारिकाद्यास्तत्पर्याप्तकस्य *मिश्रास्त्वपर्याप्तकस्येति* । *तत्रोत्पत्तावौदारिककायः* कार्मणेन, औदारिकशरीरिणश्च वैक्रियाऽऽहारककरणकाले च वैक्रियाहारकाभ्यां मिश्रो भवतीत्यौदारिकमिश्रः । देवाद्युत्पत्तौ कार्मणेन वैक्रियमिश्रः कृतवैक्रियस्य चौदारिकप्रवेशाद्वायामौदारिकेण । आहारकमिश्रस्तु साधिताऽऽहारककायप्रयोजनः पुनरौदारिकप्रवेशे औदारिकेणेति । कार्मणस्तु विग्रहे केवलिसमुद्घाते चेति । एतेभ्यो जन्या *व्यापारा सप्त कायव्यापारा इतिमिलित्वा पञ्चदशयोगा भवन्तीतिभावः* । ननु मनोवाग्योगाः काययोगविशेषा एव, शरीरिणा कस्याञ्चिदप्यवस्थाया काययोगस्यानिवृत्तेः, अशरीरिणामेव तन्निवृत्त्यभ्युपगमात् तथा च मनोवाग्योगास्तद्भिन्ना न सन्तीति चेदुच्यते, एकस्यैव काययोगस्योपाधिभेदात्तथाव्यवहारात् । येन काययोगेन हि मनोवाग्द्रव्याणामुपादानं करोति स काययोगः, येन सरम्भेण वचोद्रव्याणि मुञ्चति स वाग्योगः, येन तु मनोद्रव्याणि चिन्तायां व्यापारयति स मनोयोग इति । तथाच मनोवाग्योगौ काययोग एव, कायेनैव तद्द्रव्यग्रहणात्, प्राणापानवत् यथाहि प्राणापानव्यापारः कायेनैव तद्द्रव्यग्रहणात्कायिकयोगान्न भिद्यते तथा मनोवाग्योगावपि, न चेत्तथा, प्राणापानयोगोऽपि योगान्तरं स्यान्न चैतदिष्टं, तस्मात्काययोग एवाऽयं तद्वदिमावपि । न च मनोवाग्योगवत्प्राणापानव्यापारः किमिति नोक्तः, काययोगत्वस्याविशेषात्, अन्यथा प्राणापानव्यापारवत्तौ पृथग् न वाच्यावुपाधिभेदेनापि, उपाधिभेदेन योगचतुष्टयस्यैव वक्तव्यत्वौचित्यादितिवाच्यम् लोकलोकोत्तररूढस्य व्यवहारस्य सिद्ध्यर्थं तावेवोक्तत्वात् कायव्यापारातिरिक्ततया हि वाग्व्यापारो मनोव्यापारश्च स्पष्टतया दृश्यते लोके, यथा वाचः स्वाध्यायाचरण परप्रबोधनादिकं मनसश्च धर्मध्यानादिकं व्यापारः, नैवं प्राणापानयोस्तयोस्तनुयोगान्तर्वर्तितयैव व्यवहारात् न च जीवय-

दसारूपो नवविधो नोकषाय इति मेलनतः कषायः पञ्चविंशतिविध इति भावः । ननु नवविधनोकषायस्य कथं कषायत्वमित्यत्राह वेदत्रयेति पुंस्त्रीनपुंसकेतिवेदत्रयेत्यर्थः, हास्यषट्केति, हास्यरत्यरतिभयशोकजुगुप्साषट्केत्यर्थः । कषायसहगामित्वादिति कषायेण सहैव वर्त्तमानत्वादित्यर्थः, दिग्दर्शनमिदं, तेन यद्दोषो यः कषायस्तत्सहचारिणां हास्यादीनामपि तद्दोषत्वेन तत्कार्यकारित्वात्कषायत्वं तत्राप्यल्पकार्यकारित्वाच्च नोकषायत्वमितिबोध्यम् ॥

चतुर्थं योगमाचष्टे—

**योगो मनोवाक्कायव्यापारः । तत्र सत्यासत्यमिश्रव्यवहारविषयकमनोवाग्व्यापारा अष्टौ, तथौदारिकौदारिकमिश्रवैक्रियवैक्रियमिश्राऽऽहारकाऽऽहारकमिश्रकार्मणशरीरजन्यव्यापारास्सप्तेति पञ्चदशयोगाः ॥**

**योग इति** । युज्यतेऽनेनेतियोगः, तत्र यद्यपि बन्धेऽभीप्सितालब्धवस्तुलाभे मेलने संयोगे शब्दादीनां प्रयोगे समुदायशब्दस्यावयवार्थसम्बन्धे द्रव्यतो बाह्ये मनोवाक्कायव्यापारे भावतोऽध्यवसायविशेषे च योगशब्दो वर्त्तते तथापि प्रकृतोपयोगिनं तदर्थं सूचयितुं मनोवाक्कायव्यापार इत्युक्तत्वान्मनोवाक्कायव्यापार एवात्र विवक्षितः । सोऽयं योगो द्विविधः, द्रव्ययोगो भावयोगश्चेति । जीवेनागृहीतानि गृहीतानि वा स्वव्यापाराप्रवृत्तानि मनोवागादिद्रव्याणि द्रव्ययोगः । जीवस्य परिणामविशेषो वीर्यस्थामादिशब्दवाच्यो भावयोगः । अयमपि द्विधा प्रशस्तोऽप्रशस्तश्चेति । तत्र प्रशस्तस्सम्यक्त्वादिरात्मनोऽपवर्गेण योजनात्, अप्रशस्तो मिथ्यात्वादिरष्टविधकर्मभिर्योजनात् । यद्वा मनोवाक्कायप्रवर्त्तकानि द्रव्याणि मनोवाक्कायपरिस्पन्दात्मको योगश्च द्रव्ययोगः, एतदुभययोगहेतुरध्यवसायो भावयोगः । तत्र द्रव्ययोगश्शुभोऽशुभो शुभाशुभश्च व्यवहारनयमात्रापेक्षया विधिमतिक्रम्य दानादिवितरणचिन्तनात्मकमनोयोगस्तथैव दानादिधर्मोपदेशात्मकवाग्योगस्तथैव जिनपूजावन्दनादिकायपरिस्पन्दात्मककाययोगश्च शुभाशुभो भवति । भावयोगस्तु शुभो वाऽशुभो वा न शुभाशुभरूपः, आगमे शुभाशुभात्मकाध्यवसायस्थानस्य तृतीयस्यानुक्तत्वात् । तदेव योगा अनुपयुक्तस्य कर्मबन्धायोपयुक्तस्य च कर्मनिर्जराकारिणो भवन्ति । सोऽयं योगः स्वरूपेणैकोऽपि मनोवाक्कायलक्षणसहकारिभेदात्त्रिविधः, मनसा करणेन योगो मनोयोगो वाचा करणेन योगो वाग्योगः कायेन करणेन योगः काययोग इति । स वीर्ययोगो वीर्यान्तरायक्षयक्षयोपशमसमुत्थलब्धिविशेषप्रत्ययोऽभिसन्ध्यनभिसन्धिपूर्वकत्वात्मकरणः, अकरणश्च भवति । तत्रालेश्यस्य केवलिनः कृत्स्नयोर्ज्ञेयदृश्ययोरर्थयो. केवलज्ञानं केवलदर्शनञ्चोपयुञ्जानस्य योऽसावपरिस्पन्दोऽप्रतिघो वीर्यविशेषः सोऽकरणः । स च नेहाधिक्रियते वीर्या-

न्तरायक्षयोपशमजन्यवीर्यविशेषस्यैव सकरणस्य कर्मसम्बन्धकस्याधिकृतत्वात्। तत्रौदारिकादि शरीरस्यात्मनोवीर्यपरिणतिविशेषः काययोगः, औदारिकवैक्रियाऽऽहारकशरीरव्यापाराहृत-वाग्द्रव्यपुञ्जसाचिव्याज्जीवव्यापारो वाग्योगः, मनसा करणेन युक्तस्य जीवस्य योगो जीव-पर्यायो दुर्बलस्य यष्टिकाद्रव्यवदुपष्टम्भकरो मनोयोगः। सोऽयं मनोव्यापारो वाग्व्यापारश्च प्रत्येकं सत्यमृषासत्यमृषाऽसत्यमृषाभेदेन चतुर्विधत्वादुभयमेलनेनाष्टविधमनोवाग्जन्यो योग इत्याशयेनाह सत्यासत्येति। मिश्रः सत्यमृषारूपो व्यवहारोऽसत्यमृषारूपः। काययोगस्य भेदमाह तथेति तत्र शुद्धा औदारिकवैक्रियाऽऽहारककार्मणशब्दा व्याख्याता औदारिकमिश्र-स्तूच्यते औदारिक एवापरिपूर्णो मिश्र इति, यथा गुडमिश्रं दधि न गुडतया नापि दधितया व्यपदिश्यते ताभ्यामपरिपूर्णत्वादपितु मिश्र इति तद्वदत्रापि औदारिकमिश्रमौदारिकत्वेन कार्मणत्वेन वा न व्यपदिश्यते किन्तु औदारिकमिश्रतयेति, एवं वैक्रियाऽऽहारकमिश्रावपि। यद्वा शुद्धा औदारिकाद्यास्तत्पर्याप्तकस्य मिश्रास्त्वपर्याप्तकस्येति। तत्रोत्पत्तावौदारिककायः कार्मणेन, औदारिकशरीरिणश्च वैक्रियाऽऽहारककरणकाले च वैक्रियाहारकाभ्यां मिश्रो भवतीत्यौदारिकमिश्रः। देवाद्युत्पत्तौ कार्मणेन वैक्रियमिश्रः कृतवैक्रियस्य चौदारिक-प्रवेशाद्वायामौदारिकेण। आहारकमिश्रस्तु साधिताऽऽहारककायप्रयोजनः पुनरौदारिक-प्रवेशे औदारिकेणेति। कार्मणस्तु विग्रहे केवलिसमुद्घाते चेति। एतेभ्यो जन्या व्यापारा सप्त कायव्यापारा इतिमिलित्वा पञ्चदशयोगा भवन्तीतिभावः। ननु मनोवाग्योगाः काययोगविशेषा एव, शरीरिणां कस्याञ्चिदप्यवस्थायां काययोगस्यानिवृत्तेः, अशरीरिणामेव तन्निवृत्त्यभ्युपगमात् तथा च मनोवाग्योगास्तद्भिन्ना न सन्तीति चेदुच्यते, एकस्यैव काय-योगस्योपाधिभेदात्तथाव्यवहारात्। येन काययोगेन हि मनोवाग्द्रव्याणामुपादानं करोति स काययोगः, येन सरम्भेण वचोद्रव्याणि मुञ्चति स वाग्योगः, येन तु मनोद्रव्याणि चिन्तायां व्यापारयति स मनोयोग इति। तथाच मनोवाग्योगौ काययोग एव, कायेनैव तद्द्रव्यग्रहणात्, प्राणापानवत् यथाहि प्राणापानव्यापारः कायेनैव तद्द्रव्यग्रहणात्कायिकयो-गान्न भिद्यते तथा मनोवाग्योगावपि, न चेत्तथा, प्राणापानयोगोऽपि योगान्तरं स्यान्न चैत-दिष्टं, तस्मात्काययोग एवाऽयं तद्वदिमावपि। न च मनोवाग्योगवत्प्राणापानव्यापारः किमिति-नोक्तः, काययोगत्वस्याविशेषात्, अन्यथा प्राणापानव्यापारवत्तौ पृथग् न वाच्यावुपाधि-भेदेनापि, उपाधिभेदेन योगचतुष्टयस्यैव वक्तव्यत्वौचित्यादितिवाच्यम् लोकलोकोत्तररूढस्य व्यवहारस्य सिद्ध्यर्थं तावेवोक्तवान् कायव्यापारातिरिक्ततया हि वाग्व्यापारो मनोव्यापा-रश्च स्पष्टतया दृश्यते लोके, यथा वाचः स्वाध्यायाचरणं परप्रबोधनादिकं मनसश्च धर्मध्या-नादिकं व्यापारः, नैवं प्राणापानयोस्तयो स्तनुयोगान्तर्वर्तितयैव व्यवहारात् न च जीवय-

त्यसाविति प्रतीतिजननादिकं प्राणापानफलमस्तीति वाच्यम्, एवंविधप्रयोजनमात्रस्य सर्वत्र विद्यमानत्वेन धावनवल्गनादिव्यापाराणामपि योगत्वप्रसङ्गात् तस्माद्विशिष्टव्यवहाराङ्गभूतपरप्रत्ययनादिफलत्वाद् वाङ्मनोयोगावेव पृथग्वाच्यौ तदेवं तनुयोगो वाङ्निसर्गविषये व्याप्रियमाणो वाग्योगो मनने व्याप्रियमाणो मनोयोगो भवति वाग्विषयो योगो वाग्योगः मनोविषयो योगो मनोयोग इतिव्युत्पत्तेः। यद्वा काययोगगृहीतवाग्द्रव्यसमूहसाचिव्यात्तन्निसर्गार्थं यो जीवव्यापारविशेषस्स वाग्योगो वाचा सहकारिकारणभूतया जीवस्य योगो वाग्योग इति व्युत्पत्तेः, काययोगगृहीतमनोद्रव्यसमूहसहकारेण वस्तुचिन्तनाय योऽयं जीवस्य व्यापारः स मनोयोगो मनसा सहकारिकारणभूतेन जीवस्य योगो मनोयोग इति व्युत्पत्तेः, अस्मिन् पक्षे च मनोवाग्योगौ काययोगाद्भिन्नावेव, वाङ्मनोद्रव्यनिसर्गचिन्तनादिकाले सतोऽपि काययोगस्याविवक्षणादितिदिक्॥

तदेवं सप्रभेदान् बन्धहेतूनभिधाय प्रकृतिस्थित्यनुभागप्रदेशरूपेण चातुर्विध्यस्य बन्धस्य पूर्वोक्तस्वरूपस्य प्रथमं प्रकृतिबन्धमधुना लक्षयति—

**रक्तद्विष्टात्मसम्बद्धानां कार्मणस्कन्धानां परिणामविशेषेण स्वस्वयोग्यकार्यव्यवस्थापनं प्रकृतिबन्धः ॥**

**रक्तद्विष्टेति** । रागो मायालोभकषायलक्षणः, द्वेषः क्रोधमानकषायलक्षणस्ताभ्यां केवलयोगेन वा युक्तेनात्मना सम्बद्धानां गृहीतानामित्यर्थः, अत एव रक्तद्विष्टसंबद्धानामित्यनुक्त्वा रक्तद्विष्टात्मसंबद्धानामित्युक्तं तेनाकषायिबन्धस्यापि संग्रहः। अनेनात्मनि कर्मसम्बन्धे हेतुरुदर्शितः, रागादिस्नेहगुणयोगादात्मनि कर्मपुद्गलद्रव्यं लगतीति । कार्मणस्कन्धानामिति, कर्मयोग्यस्कन्धानामित्यर्थः । एतेन क्षेत्रान्तरावगाढाः कर्मपुद्गला न ग्रहणयोग्या भिन्नदेशस्थानां ग्रहणयोग्यत्वाभावादिति सूचितम्, यत्राकाशे जीवोऽवगाढस्तत्र य आकाशप्रदेशा आत्मन्याश्रितास्तत्र ये कर्मपुद्गला रागादिस्नेहयोगत आत्मनि लगन्ति त एव कर्मपुद्गला जीवानां सङ्ग्रहयोग्या इति गूढार्थः। परि-

---

१. विशिष्टो हेतुरुदर्शित, तेन मिथ्यादर्शनाविरत्यादीनां कर्मबन्धहेतुत्वेऽपि न क्षति, उक्तञ्च 'यदतिदुःखं लोके यच्च सुखमुत्तमं त्रिभुवने । तज्जानीहि कषायाणां वृद्धिक्षयहेतुकं सर्वं' मिति । तत्र रागद्वेषहेतुकोबन्धस्स साम्परायिकबन्ध उच्यते, केवलयोगहेतुको बन्ध ईर्यापथिकबन्ध उच्यते, स चोपशान्तक्षीणमोहसयोगिकेवलिनां भवति, वेदनीयस्यैकस्यैव च स बन्धो विज्ञेय इति । २. अनाश्रितानां तद्भावपरिणामाभावादिति भावः । ३. न तु गतिसमापन्ना इत्यर्थः, गतिपरिणता हि ते वेगवत्त्वात् गच्छेयुरेव, नत्वात्मनि श्लिष्यन्त इति भावः ॥

णामविशेषेणेति, अध्यवसायविशेषेणेत्यर्थः । आत्मा हि सर्वप्रकृतिप्रायोग्यपुद्गलान् सामान्येनादाय तानध्यवसायविशेषेण ज्ञानावरणीयत्वादिरूपेण परिणमयति तथापरिणमने हेतुरध्यवसायविशेष उक्त । स्वस्वयोग्यकार्यव्यवस्थापनमिति । तेषां पुद्गलानां स्वस्वयोग्यकार्यकरणसमर्थतयाऽऽरचनमित्यर्थः । केषाञ्चित्पुद्गलानां ज्ञानावरणसमर्थत्वेन केषाञ्चिद्दर्शनावरणसमर्थत्वेन केषाञ्चित्सुखदुःखानुभवसमर्थतया केषाञ्चिद्दर्शनचारित्रमोहकतया केषाञ्चिदायुष्ट्वेन केषाञ्चिद्गतिशरीराद्याकारेण केषाञ्चिद्गोत्रत्वेन केषाञ्चिद्दानान्तरायत्वेन व्यवस्थापनमितिभाव । स्थित्यनुभागप्रदेशबन्धानां यस्समुदायस्स प्रकृतिबन्ध इत्यपि लक्षणं कषायप्रयुक्तप्रकृतिबन्धे सङ्गच्छते न तूपशान्तमोहादौ केवलयोगवशाद्बध्यमाने प्रकृतिबन्धे तत्र स्थित्यनुभागाभावात् यदि तु तत्रापि समयद्वयस्थितिः कश्चनानुभागोऽपि विद्यत इति विभाव्यते तदा लक्षणमिदं युज्यत एवेति बोध्यम् ॥

अधुना स्थितिबन्धमाह—

**प्रविभक्तानां कर्मस्कन्धानां विशिष्टमर्यादया स्थितिकालनियमनं स्थितिबन्धः ॥**

प्रविभक्तानामिति । ज्ञानावरणीयत्वादिरूपेण प्रविभक्तानामित्यर्थः, विशिष्टमर्यादयेति, यथा ज्ञानावरणदर्शनावरणान्तरायवेदनीयानां त्रयस्त्रिंशत्सागरोपमकोटीकोट्यः सप्ततिर्मोहनीयस्य नामगोत्रयोर्विंशतिरायुषस्त्रयस्त्रिंशत्सागरोपमाणि परास्थितिर्जघन्या च द्वादशमुहूर्त्ता वेदनीयस्य नामगोत्रयोरष्टौ शेषाणामन्तर्मुहूर्त्तमित्येवं रूपेणेति भावः, इत्थं यत्स्थितिकालस्य नियमनं स स्थितिबन्ध इत्यर्थः । स्थितिरियं द्विधा कर्मत्वेनावस्थितिरूपाऽनुभवयोग्या चेति, तत्राद्यभेदमधिकृत्य जघन्योत्कृष्टप्रमाणमभिहितं, द्वितीया चाबाधाकालहीना येषां कर्मणां यावत्यस्सागरोपमकोटीकोट्यस्तेषां तावन्तिवर्षशतान्यबाधाकालः तत्र च स्वोदयतः कर्म काञ्चिदपि बाधां जीवस्य नोत्पादयति, नवा तत्र वेद्यदलिकनिक्षेपः किन्तु तत ऊर्ध्वमेव, तथाचाबाधाकालहीनाऽनुभवयोग्या स्थितिरिति भाव्यम्, विशेषप्रकृतीनां स्थितिस्तु तत्तन्निरूपण एवोक्तेति ॥

अथ रसबन्धमाचष्टे—

**परिपाकमुपयातानां विशिष्टकर्मस्कन्धानां शुभाशुभविपाकानुभवनयोग्यावस्था रसबन्धः ॥**

परिपाकेति । रसबन्धोऽनुभावबन्धोऽनुभागबन्ध इति पर्यायाः । परिपाकमुपयातानां

फलं दातुमभिमुखीभूतानां विशिष्टकर्मस्कन्धानां ज्ञानावरणीयत्वादिना व्यवस्थापितकर्मस्कन्धानां शुभाशुभविपाकानुभवनयोग्यावस्था रसबन्ध इत्यर्थः, विपाकानुभावो हि द्विविधः शुभोऽशुभश्चेति शुभप्रकृतीनां शुभो रसः शुभाध्यवसायनिष्पन्नत्वात्, अशुभप्रकृतीनाञ्चाशुभोऽशुभाध्यवसायनिष्पन्नत्वात्, तत्राशुभप्रकृतीनां तादृशतादृशकषायनिष्पाद्यः कटुकः कटुकतरः कटुकतमोऽतिकटुकतमः शुभप्रकृतीनाञ्च मधुरो मधुरतरो मधुरतमोऽतिमधुरतरश्च रसो यथासङ्ख्यमेकद्वित्रिचतुस्स्थानिको भवति, निम्बरसवदिक्षुरसवच्च, निम्बादीनामिक्ष्वादीनां हि सहजोऽक्वथित. कटुको मधुरश्च रस एकस्थानिक उच्यते स एव भागद्वयप्रमाणस्थाल्यां क्वथितोऽर्धावर्त्तितः कटुकतरो मधुरतरश्च द्विस्थानिको भवति, भागत्रयप्रमाणश्च क्वथितः कटुकतमो मधुरतमस्त्रिस्थानिको भागचतुष्टयप्रमाणो विभिन्नस्थाने क्वथितश्चतुर्थभागान्तोऽतिकटुकतमोऽतिमधुरतमश्च भवति, एवं कर्मापि । इयमुपमा सर्वजघन्यस्पर्धकरसस्य जघन्यात्मिका विज्ञेया । स्पर्धकान्यसङ्ख्यानि भवन्ति, उत्तरोत्तरस्पर्धकानि चानन्तगुणरसानि, अशुभानां निम्बोपमवीर्यो य एकस्थानिको रसस्तस्मादनन्तगुणवीर्यो द्विस्थानिकस्ततोऽप्यनन्तगुणवीर्यस्त्रिस्थानिकस्तस्मादप्यनन्तगुणवीर्यश्चतुस्स्थानिकः । शुभप्रकृतीनां सर्वासां पुनरेकस्थानिको रसो नास्त्येव, इतिपञ्चसमहाभिप्रायः, दानलाभभोगोपभोगवीर्यान्तरायाणां पञ्चानां मतिश्रुतावधिमनःपर्यवज्ञानावरणानां चतुर्णां चक्षुरचक्षुरवधिदर्शनावरणानां त्रयाणां पुंवेदसज्वलनक्रोधमानमायालोभानां मेलनया सप्तदशविधानां कर्मणामेवैकस्थानिकरसबन्धः तद्भिन्नाशुभप्रकृतीनामपि एकस्थानिको रसो न भवति, अनिवृत्तिबादरासङ्ख्येयभागेभ्यः परत एव तत्प्राप्तिसम्भवेन तत्र च सप्तदशप्रकृतीर्विना शिष्टानां बन्धस्यैवाभावात् केवलज्ञानदर्शनावरणयोस्तत्र बन्धेऽपि सर्वघातित्वेन तयोर्द्विस्थानिकरसबन्धस्यैव निर्वर्त्तनात् । शुभानामेकस्थानिकरसाभावे कारणन्तु सङ्क्लेशस्थानानि विशोधिस्थानानि च प्रत्येकमसङ्ख्येयलोकाकाशप्रदेशप्रमाणानि, प्रासादमारोहतामारोहणे सोपानस्थानानि यावन्ति, तावन्त्येव यथाऽवतरतामपि, तथा यान्येव क्षपकभिन्नो विशुद्धिसङ्क्लेशस्थानान्यारोहति सङ्क्लिश्यमानस्तावत्स्थानान्यवरोहति तेष्वेवावतारात् विशुद्धिस्थानानि तु विशेषाधिकानि क्षपकश्रेणिकामारोहतः क्षपकस्य विशुद्धिस्थानेषु पुनस्सङ्क्लेशाभावतो निवर्त्तनाभावात् अतस्तानि विशुद्धिस्थानान्येव, न तु सङ्क्लेशस्थानानि तस्माद्विशुद्धिस्थानानामधिकत्वं तथाचात्यन्तविशुद्धौ वर्त्तमानश्शुभप्रकृतीनां चतुस्स्थानिकं रसमभिनिर्वर्त्तयति, अत्यन्तसङ्क्लेशे वर्त्तमानस्य शुभप्रकृतयो बन्ध एव नागच्छन्ति । या अपि वैक्रियतैजसकार्मणाद्याश्शुभा नरकप्रायोग्यास्सङ्क्लिष्टोऽपि बध्नाति तासामपि स्वभावतस्सर्वसङ्क्लिष्टोऽपि द्विस्थानिकमेव रसं विदधाति । येषु मध्यमाध्यवसायस्थानेषु शुभप्रकृतयो बध्यन्ते तेषु तासां द्विस्थानिकपर्यन्त एव रसो बध्यते नैकस्थानिको मध्यमपरिणामत्वादेव ।

तत्र गिरिरेखासदृशैरनन्तानुबन्धिभि कपायैरशुभप्रकृतीनां चतुःस्थानिकरसबन्धः, आतपशोषिततडागमहीरेखासदृशैरप्रत्याख्यानावरणैस्त्रिस्थानिकरसबन्धः, वालुकारेखासदृशैः प्रत्याख्यानावरणैर्द्विस्थानिकरसबन्ध , जलरेखासदृशैस्सञ्ज्वलनाभिधैः कपायैः पूर्वोदितसप्तदशाशुभप्रकृतीनामेकस्थानिकरसबन्धः । शुभानान्तु वालुकाजलरेखासदृशैः कपायैश्चतुस्स्थानिकरसबन्धः, महीरेखासदृशैस्त्रिस्थानिको रसबन्धः, गिरिरेखासदृशैर्द्विस्थानिको रसबन्धः, आसामेकस्थानिकरसबन्धो नास्त्येव । तत्रानुभागो रागद्वेषपरिणामवशेन जीवेन कर्मरूपतया परिणमितस्याऽऽत्मप्रदेशैस्सश्लेषमुपगतस्य पुनरप्यावेष्टनपरिवेष्टनरूपतयाऽतिगाढतरबद्धस्याऽबाधाकालातिक्रमेणोत्तरकालवेदनयोग्यतया सचितस्योत्तरोत्तरस्थितिषु प्रदेशहान्या रसवृद्ध्याऽवस्थापितस्य समानजातीयप्रकृत्यन्तरदलिककर्मणोपचयं नीतस्येषत्पाकाभिमुखीभूतस्य विशिष्टपाकमुपागतस्यातएव फलं दातुमभिमुखीभूतस्य सामग्रीवशादुदयप्राप्तस्य बद्धेन जीवेन निष्पादितस्याऽनाभोगिकवीर्येण बन्धसमय एव ज्ञानावरणीयादितया व्यवस्थापितस्य प्रदोषनिह्नवादिविशेषप्रत्ययैरुत्तरोत्तरं परिणामं प्रापितस्य परनिरपेक्षमुदयप्राप्तस्य परेण वोदयमुपनीतस्य स्वपररूपेण वोदयमुपनीयमानस्य कर्मण. काञ्चित्स्थितिं स्थितिं भव वा प्राप्य स्वयं, परं वा पुद्गलपरिणामं प्राप्य भवति, तत्र ज्ञानावरणीयस्य दर्शविधः, दर्शनावरणीयस्य नवविधः, वेदनीयस्याष्टविध., मोहनीयस्य पञ्चविधः, आयुषश्चतुर्विधः शुभाशुभनामकर्मणश्चतुर्दशविध , गोत्रस्याष्टविध॰, अन्तरायस्य पञ्चविध इति । तदेव कृतस्थितिकस्य स्वस्मिन् काले परिपाकमितस्य या शुभाशुभाकारेणानुभूयमानावस्था स रसबन्ध इति दिक् ॥

अथ प्रदेशबन्धमाह—

**प्रकृत्यादित्रयनिरपेक्षं दलिकसंख्याप्राधान्येन कर्मपुद्गलानां ग्रहणं प्रदेशबन्धः ॥**

प्रकृत्यादीति । तत्राष्टविधबन्धकेनैकाध्यवसायेन गृहीतस्याष्टौ भागा. सप्तविधबन्धकस्य सप्तभागा. षड्विधबन्धकस्य षड्भागा , एकविधबन्धकस्यैको भाग इति दलिकाना भागा., तत्र

---

१. [illegible] ज्ञानावरणं [illegible] विषयक्षयोपशम [illegible] ज्ञानावरणं [illegible] दर्शनोपयोगावरणरूपेण दर्शनावरणं [illegible] । निद्रा निद्रानिद्रा प्रचला प्रचलाप्रचला स्त्यानर्द्धिश्चक्षुर्दर्शनावरणमचक्षुर्दर्शनावरणम् अवधिदर्शनावरणं केवलदर्शनावरणमिति नवविध । [illegible] वेदनीयं [illegible] । २ [illegible] इदमत्र [illegible] ।

हि जीवो यदाऽऽयुषो बन्धकालेऽष्टविधबन्धको भवति, तदाऽनन्तस्कन्धात्मकस्य शेषकर्मापेक्षया आयुषोऽल्पस्थितिकत्वेन गृहीतस्य कर्मद्रव्यस्य सर्वस्तोको भाग आयुष्कतयापरिणमति । तत आयुष्कभागापेक्षयाधिकस्स्वस्थाने तुल्यस्थितिकत्वेन तुल्यो नामगोत्रयोर्भागः, ततस्तयोरपेक्षया विशेषाधिकस्स्वस्थाने तुल्यस्थितिकत्वेन तुल्योऽन्तरायावरणयोर्भागः, ततस्तयोरधिको मोहनीयस्य भागः, ततो वेदनीयस्याधिकः, सुखदुःखजननस्वभावस्य वेदनीयस्य तद्भावपरिणतपुद्गलानामाधिक्यत एव स्वकार्यजननसमर्थत्वात् शेषाणान्तु स्वल्पत्वेऽपि तत्सम्भवात् । वेदनीयाच्छेषकर्मणा भागस्य हीनाधिकत्वे स्थितिविशेष एव निबन्धनम्, यथा नामगोत्रादेरायुष्काद्यपेक्षया स्थितेराधिक्ये तयोर्भागस्याधिकत्व हीनत्वे च हीनत्वमिति । यद्यपि स्थित्यनुरोधेन भागो भवन्नायुषस्सकाशान्नामगोत्रयोर्भागस्य सख्यातगुणत्व स्यात्तथापि गत्यादिनिखिलकर्मकलापानामायुष्कोदयमूलत्वेनायुषः प्रधानत्वाद् बहुपुद्गलद्रव्यं तत । तयोर्भागस्य विशेषाधिकत्वन्तु नामगोत्रयोस्सततबन्धित्वेन, आयुष्क हि कादाचित्कबन्धि, ततोऽल्पद्रव्यम् । यद्यपि च ज्ञानावरणाद्यपेक्षया मोहनीयभागस्य सख्यातगुणस्थितिकत्वेन सख्यातगुणत्वं प्राप्तं न विशेषाधिकत्व तथापि चारित्रमोहनीयस्य कषायलक्षणस्य चत्वारिंशत्सागरोपमकोटीकोटीस्थितिकत्वेनैतदपेक्षया तद्भागस्यविशेषाधिकत्वमुक्त, दर्शनमोहनीयद्रव्यं तु सर्वघातित्वेन चारित्रमोहनीयदलिकादनन्तभाग एव वर्तत इति न किञ्चित्तेन वर्धत इति । तत्राल्पतरप्रकृतिबन्धस्सर्वोत्कृष्टयोगव्यापारवान् पर्याप्तस्सञ्ज्ञीजीव उत्कृष्टप्रदेशबन्धं करोति, बहुतरप्रकृतिबन्धको मन्दयोगोऽपर्याप्तकोऽसञ्ज्ञी जघन्यप्रदेशबन्ध विधत्ते । तथा प्रदेशबन्धश्चतुर्विध उत्कृष्टोऽनुत्कृष्टो जघन्योऽजघन्यश्चेति । सर्वबहवः कर्मस्कन्धा यदा गृह्यन्ते स उत्कृष्टः प्रदेशबन्धः, ततस्स्कन्धहानिमाश्रित्य यावत्सर्वस्तोककर्मस्कन्धग्रहणं तावत्सर्वोऽप्यनुत्कृष्टः, यदा सर्वस्तोककर्मस्कन्धग्रहणं स जघन्यः, तत एकस्कन्धवृद्धिमाश्रित्य यावत्सर्वबहुस्कन्धग्रहण तावत्सर्वोऽप्यजघन्यः । तत्र ज्ञानदर्शनावरणवेदनीयनामगोत्रान्तरायलक्षणमूलप्रकृतिषट्केऽनुत्कृष्ट एव प्रदेशबन्धः साद्यनादिध्रुवाध्रुवरूपेण चतुर्विधः, प्रकृतिषट्कस्योत्कृष्टप्रदेशबन्ध क्षपकस्योपशमकस्य वा सूक्ष्मसम्परायस्य सर्वोत्कृष्टयोगे वर्तमानस्यैकं द्वौ वा समयौ यावत्प्राप्यते, मोहनीयायु कर्मद्वयस्याबन्धकत्वात्तस्य, उत्कृष्टयोगेनैवोत्कृष्टप्रदेशबन्धलाभादुत्कृष्टयोगस्य, उत्कृष्टयोगावस्थानकालस्य तावन्मात्रत्वादेकद्विसमयस्यात्रग्रहणम् । तथाचोत्कृष्टप्रदेशबन्धं विधायोपशान्तमोहावस्थामारुह्य पुनः प्रतिपत्योत्कृष्टयोगाद्वाऽस्मादेव प्रतिपत्य यदा पुनरनुत्कृष्टप्रदेशबन्धं करोति तदाऽसौ सादिः । एतत्स्थानमप्राप्तपूर्वाणामनादिर्निरन्तर बध्यमानत्वात् । ध्रुवोऽभव्यानां भव्यानां त्वध्रुव इति । जघन्येऽजघन्ये उत्कृष्टे च साद्यध्रुवलक्षणो द्विप्रकारो बन्धः । उपरि वर्णितसूक्ष्मसम्पराय उत्कृष्टप्रदेशबन्धस्सादिस्तत्प्रथमतया बध्यमा-

नत्वात्। उपशान्ताद्यवस्थायां पुनरनुत्कृष्टबन्धगमने च स नावश्यं भवतीत्यध्रुवः। जघन्यः पुनरमीषां षट्कर्मणां प्रदेशबन्धोऽपर्याप्तस्य सर्वमन्दवीर्यलब्धिकस्य सप्तविधबन्धकस्य सूक्ष्मनिगोदस्य भवाद्यसमये लभ्यते, द्वितीयादिसमये त्वसङ्ख्येयगुणवृद्धेन वीर्येणास्य वर्धमानत्वात्, द्वितीयादिसमयेष्वयमप्यजघन्यं बध्नाति, पुनस्संख्यातेनासंख्यातेन वा कालेन पूर्वोक्तजघन्ययोगं प्राप्य स एव जघन्यप्रदेशबन्धं करोति पुनरप्यजघन्यमित्येवं जघन्याजघन्ययोः प्रदेशबन्धयोस्संसरतामसुमतां द्वावपि साद्यध्रुवौ भवतः। मोहे आयुषि च चतुर्विधे प्रदेशबन्धे साद्यध्रुवलक्षणो द्विविधो बन्धो भवति। मिथ्यादृष्टिस्सम्यग्दृष्टिर्वाऽनिवृत्तिबादरान्तस्सप्तविधबन्धकाल उत्कृष्टयोगे वर्त्तमानो मोहनीयस्योत्कृष्टप्रदेशबन्ध, पुनरनुत्कृष्टयोगं प्राप्यानुत्कृष्टं प्रदेशबन्धं करोति पुनरुत्कृष्टं पुनरप्यनुत्कृष्टमित्येवमुत्कृष्टानुत्कृष्टप्रदेशयोस्ससरतां जन्तूनां द्वावपि बन्धौ साद्यध्रुवौ भवतः, जघन्याजघन्यौ त्वेतत्प्रदेशबन्धौ सूक्ष्मनिगोदादिषु संसरतामसुमतां कर्मषट्कनिरूपण उपर्येव भावितौ तद्वदेवात्रापि। आयुष्कस्य त्वध्रुवबंधित्वादेव तत्प्रदेशबन्ध उत्कृष्टादिचतुर्विकल्पोऽपि साद्यध्रुव एव भवतीति, एवंरूपेण कर्मपुद्गलानामेव प्रकृतिस्थितिरसनिरपेक्षं दलिकसङ्ख्याप्राधान्येनैव यद्ग्रहणं करोति स प्रदेशबन्धो विज्ञेयः। तत्र योगस्थानानि कारणं प्रकृतयः प्रदेशाश्च तत्कार्यं, स्थितिबन्धाध्यवसायस्थानानि कारणं स्थितिविशेषास्तत्कार्यं, अनुभागबन्धाध्यवसायस्थानानि कारणमनुभागस्थानानि तत्कार्यं, तथा प्रकृतिप्रदेशबन्धयोर्योग एव प्रधान कारणं, मिथ्यात्वाविरतिकषायाणामभावेऽपि उपशान्तमोहादिगुणस्थानेषु वेदनीयस्य प्रकृतिप्रदेशबन्धसद्भावात्। स्थित्यनुभागबन्धयोस्तु कषायजनितजीवाध्यवसायविशेषः कारणं तदभावे उपशान्तमोहादिषु तयोरभावात् मिथ्यात्वाविरत्यभावेऽपि प्रमत्तादौ कषायसद्भावेन तयोस्सत्त्वाच्च। मिथ्यादृष्टिगुणस्थानवर्त्ती मिथ्यात्वादिचतुःप्रत्ययैर्ज्ञानावरणादिकर्म सास्वादनमिश्राविरतिदेशविरतिलक्षणेषु मिथ्यात्ववर्जैस्त्रिभिः, प्रमत्ताप्रमत्तापूर्वकरणानिवृत्तिबादरसूक्ष्मसम्परायेषु कषाययोगाभ्यां, उपशान्तमोहक्षीणमोहसयोगिषु योगेन यथायोग बध्नाति। इति मूलप्रकृत्याश्रयेण सामान्येन बन्धा उक्ताः, उत्तरप्रकृत्याश्रयेण तु कर्मप्रकृत्यादितोऽवसेया इति दिक्॥

ननु जीवो रागाद्याविष्टो यत्कर्म बध्नाति तदध्यवसायविशेषेण, तत्र किं चतुर्विधमपि बन्धमेकेनैवाध्यवसायेन बध्नाति, उत भिन्नभिन्नेन, तत्र यद्येकेन तर्हि कथमेकेन बन्धवैचित्र्यं, यदि त्वनेकेन तर्हि तादृशतादृशाध्यवसायविगमे तादृशतादृशबन्धाभावप्रसक्त्या कदाचिद्रागिणोऽपि प्रकृतिबन्धमात्रं कदाचित्स्थितियन्धमहितं, कदाचित्त्रयं कदाचिच्चतुष्टयमपि स्यान्नतु चतुष्टयनियमो न चैतदिष्टमित्याशंकायामाह—

**बन्धाश्चैते चत्वार एकविधाध्यवसायविशेषेण जायन्ते सङ्क्रमोद्वर्त्तनादिकरणविशेषाश्च ॥**

बन्धाश्चैत इति । एकविधेति, तथाचैकेनैवाध्यवसायेन चतुर्विधो बन्धो युगपज्जायत इत्यर्थः, न च कथं कार्यवैचित्र्यमिति वाच्यम्, योगस्य प्रकृतिप्रदेशबन्धयोः कषायस्य स्थितिरसबन्धयोर्निमित्तत्वेन विचित्रैकाध्यवसायेन विचित्रकार्योत्पत्तौ बाधकाभावात् तथाच योगेन कषायेण च सामान्येन गृहीतानां कर्मपुद्गलानां विचित्राध्यवसायविशेषादेकविधाज्ज्ञानावरणीयत्वादिभेदेन स्थितिमत्त्वेन रसवत्त्वेन प्रदेशवत्त्वेन च परिणमनं जायत इति भावः । न केवल बन्धा एवैते एकविधाध्यवसायेन जायन्ते किन्तु करणविशेषा अपीत्याह सङ्क्रमेति ॥

कियन्ति करणानीत्यत्राह—

**करणविशेषाश्च बन्धनसङ्क्रमोद्वर्त्तनापवर्त्तनोदीरणोपशमनानिधत्तिनिकाचनाभेदादष्टविधाः ॥**

करणविशेषाश्चेति । दात्रादिद्रव्यकरणे क्षेत्रकरणे कालकरणे भावकरणे निष्पादने संयमव्यापारे समाचरणे करणकारणानुमोदनरूपे करणत्रिके जीववीर्यविशेषेऽपि च करणशब्दप्रवृत्तेरत्र जीववीर्यविशेषग्रहणाय विशेषपदमुक्तम् । बध्यते येन, संक्रम्यन्ते येन, उद्वर्त्यंते यया, अपवर्त्यंते यया, उदीर्यंते यया, उपशम्यते यया, निधीयते यया, निकाच्यते ययाऽऽत्मपरिणत्याऽध्यवसायरूपयेति तत्तच्छब्दव्युत्पत्तिरवसेया । तत्र बन्धनकरणाध्यवसायास्सर्वस्तोकास्तेभ्य उदीरणाध्यवसाया असंख्येयगुणास्ततोऽपि संक्रमाध्यवसाया असंख्येयगुणा उद्वर्त्तनापवर्त्तने सङ्क्रमभेदावतस्तत्रान्तर्भावः । तत उपशान्तोपशमनाध्यवसाया असंख्येयगुणास्ततोऽपि निधत्त्यध्यवसायास्ततोऽपि निकाचनाध्यवसाया इति ॥

अथ करणस्वरूपमादर्शयति—

**तत्र बद्धात्मनो वीर्यपरिणामविशेषः करणं । वीर्यश्चात्र योगकषायरूपं विवक्षितम् ॥**

तत्रेति । बद्धात्मन इति, सलेश्यस्येत्यर्थः, तेनायोगिनां सिद्धानाञ्च व्यावृत्तिस्तद्वीर्यस्य बन्धाद्यहेतुत्वात् । वीर्यपरिणामविशेष इति । क्षायिकक्षायोपशमिकरूपवीर्यलब्धिजन्यो वीर्यविशेष इत्यर्थः, अयञ्च छद्मस्थानां सयोगिनाञ्च भवति, उभयेषामपि स बुद्ध्यबुद्धिपूर्वकत्वाभ्यां द्विविधः, धावनवल्गनादिक्रियासु नियुज्यमानो बुद्धिपूर्वकः, भुक्ताहारस्य धातु-

मलत्वादिपरिणामापादक एकेन्द्रियादीनां तत्तत्क्रियाप्रयोजकश्चाबुद्धिपूर्वकः, तत्रापि क्षायोपशमिकवीर्यलब्धिजन्यं छाद्मस्थिक वीर्यमकषायिसकषायिभेदतो द्विविधमुपशान्तमोहक्षीणमोहानामकषायिकं सूक्ष्मसम्परायान्तानाञ्च सकषायिकं विज्ञेयं, तथाच बन्धाद्यनुकूलतया मनोवाक्कायसहकृतः कषायसहकृतश्च स्थूलसूक्ष्मपरिस्पन्दो वीर्यपरिणामविशेष उच्यते इति भावः । तत्तत्क्रियासहितानां मनोवाक्कायानान्तु योगात्मकत्वमितरस्य कषायात्मकत्वमेतौ कषाययोगौ च वीर्यमुच्यत इत्याशयेनाह–वीर्यञ्चेति । अत्र बन्धादिप्रकरणे, योगः परिणामालम्बनग्रहणसाधनं प्रकृतिप्रदेशबन्धयोर्निमित्तं, कषायस्थितिरसबन्धहेतुः कषायाः क्रोधमानमायालोभास्तज्जनितो जीवस्याध्यवसायविशेषः कषायशब्देनेहोच्यते । एतस्य वीर्यविशेषस्य योगस्य विषयेऽविभागवर्गणास्पर्धकान्तरस्थानानन्तरोपनिधापरम्परोपनिधावृद्धिसमयजीवाल्पबहुत्वप्ररूपणाः कर्मप्रकृत्यादितोऽवसेयाः ॥

अथ करणविशेषान् लक्षयितुमुपक्रमते—

**कर्मणामात्मप्रदेशैस्सहान्योऽन्यानुगमनप्रयोजकवीर्यपरिणामो बन्धनकरणम् । अत्र योगात्मकवीर्येण प्रकृतिप्रदेशयोः कषायैश्च स्थित्यनुभागयोर्बन्धो जायते ॥**

कर्मणामिति । जीवप्रदेशैस्सहान्योऽन्यानुगतीक्रियतेऽष्टप्रकारं कर्म येन वीर्यविशेषेण तद्बन्धनकरणमित्यर्थः । जीवो हि योगेनौदारिकादिशरीरयोग्यान् पुद्गलस्कन्धान् गृह्णाति, तत्र योगानां जघन्यमध्यमोत्कृष्टत्वे पुद्गलानामपि स्तोकमध्यमप्रभूतानां ग्रहणं जायते, ग्रहणयोग्याः पुद्गलस्कन्धा अन्यतो विज्ञेयाः । स्वप्रदेशावगाढं ग्रहणयोग्यं दलिकमेकमपि सर्वैरेवात्मप्रदेशैः शृङ्खलावयवानामिव परस्परं सम्बद्धैर्गृह्णाति पुद्गलद्रव्याणाञ्च परस्परं सम्बन्धस्स्नेहतो विज्ञेयः । तथाच बन्धनकरणसामर्थ्योद्बध्यमानानां मूलोत्तरप्रकृतीनां ज्ञानावारकत्वादिस्वभाववैचित्र्याद्भेदो भवति । दृष्टश्चैतत्तृणदुग्धादीनां स्वभावभेदाद्वस्तुभेदस्तथात्रापि कर्मत्वेन तुल्यत्वेऽपि स्वभावभेदाद्भेदः । अयञ्च प्रकृतिबन्धः, कर्मणां ज्ञानावारकत्वादिस्वभावस्यैव प्रकृतित्वात्, यथा मोदकस्य वातविनाशकत्वादिस्वभावः प्रकृतिः । तथाचाविवक्षितस्थितिरसप्रदेशः प्रकृतिबन्धोऽविवक्षितरसप्रकृतिप्रदेशः स्थितिबन्धोऽविवक्षितप्रकृतिस्थितिप्रदेशो रसबन्धोऽविवक्षितप्रकृतिस्थितिरसः प्रदेशबन्ध इत्यपि बन्धच-

१. आत्मप्रदेशावगाढक्षेत्रस्थेषु सर्वप्रकृतिपुद्गला बध्यन्ते एकैकोऽप्यात्मप्रदेशोऽनन्तैर्ज्ञानावरणादिकर्मस्कन्धैर्बद्धः । अनन्तानन्तप्रदेशाः कर्मवर्गणार्हाः पुद्गला बध्यन्ते । न संख्येयप्रदेशा नवाऽसंख्येयप्रदेशा नाप्यनन्तप्रदेशाः । अनन्ते राशौ पुनरनन्तपुद्गलप्रक्षेपादनन्तानन्ता इति व्यवहार इति ॥

तुष्टयलक्षणमूह्यम् । कर्मणां स्थितिश्च मोदकस्य द्वित्रिदिनावस्थानरूपेव प्रतिनियतकालावस्थानरूपा, तस्य स्निग्धमधुरादिरसवत्कर्मणोऽपि रसः शुभाशुभादिः, तथा तस्य प्रदेशा यथैकद्विप्रसृत्यादिप्रमाणास्तथा कर्मणोऽपि बहुतरबहुतमादिरूपा अवसेयाः । तत्र प्रकृतिप्रदेशबन्धौ योगतः स्थितिरसबन्धौ कषायत इत्याहात्रेति । युक्तिः पूर्वमेवोक्ता । प्रकृतिबन्धः पूर्वमादर्शितः साद्यध्रुवादिश्च । प्रदेशबन्धोऽपि जन्तुनाष्टविधबन्धकेन यदेकेनाध्यवसायेन विचित्रतारमेण गृहीतं दलिकं तस्याष्टौ भागा भवन्ति, सप्तविधबन्धकस्य सप्तभागाः, षड्विधबन्धकस्य षड्भागा एकविधबन्धकस्य त्वेको भाग इति मूलप्रकृतिभागविभागा उक्ताः, तत्रोत्तरप्रकृतीनान्तु ज्ञानावरणीयस्य स्थित्यनुसारेण पूर्वोदितरूपेण यो मूलभाग आभजति तस्यानन्ततमो भागः केवलज्ञानावरणाय दीयते, तस्यैव भागस्य सर्वघातिप्रकृतियोग्यत्वात्, शेषस्य भागचतुष्टयं विधाय मतिश्रुतावधिमनःपर्यवज्ञानावरणेभ्य एकैको भागो दीयते । दर्शनावरणस्यापि यो मूलभागः प्राप्तस्तस्यानन्ततमं भागं षोढा विधाय सर्वघातिभ्यां निद्रापञ्चककेवलदर्शनावरणाभ्यां दीयते, शेषस्य भागत्रयं विधाय चक्षुरचक्षुरवधिदर्शनावरणेभ्य एकैको भागो दीयते । अन्तरायस्य प्राप्तं मूलभागं निखिलमपि पञ्चधा कृत्वा दानान्तरायादिभ्यो दीयते, सर्वघात्यवान्तरभेदाभावात् । मोहनीयस्य लब्धभागेऽनन्ततमं सर्वघातिप्रकृतियोग्यं द्विधा कृत्वा दर्शनमोहनीयचारित्रमोहनीयाभ्यां प्रयच्छति । दर्शनमोहनीयस्य प्राप्तो भागस्सर्वोऽपि मिथ्यात्वमोहनीयस्यैव भवति चारित्रमोहनीयभागन्तु द्वादशधा विभज्याद्यद्वादश कषायेभ्यो दीयते । मोहनीयशेषभागं द्विधा कृत्वा कषायमोहनीयाय नोकषायमोहनीयाय च दीयते । कषायमोहनीयभागं चतुर्धा विधाय सञ्ज्वलनक्रोधादिभ्यः, नोकषायमोहनीयभागं पञ्चधा कृत्वा बध्यमानवेदाय बध्यमानहास्यादियुगलाय भयजुगुप्साभ्याञ्च दीयते, नान्येभ्यो बन्धाभावात् । तथा वेदनीयायुर्गोत्रेषु यो मूलभाग आभजति स एषां स्वस्वैकप्रकृतेर्बध्यमानाया उपढौकते द्विप्रभृतीनाममीषां युगपद्बन्धाभावात् । नाम्नो भागस्तु यदा यदा यावत्यो बन्धमायान्ति तावतीभ्यस्तदा तदा समानतया विभज्य दीयते । विस्तरोऽन्यत्र ॥ अनुभागस्य कारणं काषायिका अध्यवसायाः, ते च द्विधाः, शुभा अशुभाश्च, शुभैः क्षीरखण्डरसोपमाह्लादजनकभाग कर्मपुद्गलानामाधत्ते निम्बकोशातकीरसोपमञ्चाशुभैः, ते च शुभा अशुभा वाऽध्यवसायाः प्रत्येकमसङ्ख्येय-

---

१. मिथ्यात्वादिचतुष्टयस्य सामान्येन कर्मबन्धहेतुत्वेऽपि प्राथमिककारणत्रयाभावेऽप्युपशान्तमोहादिगुणस्थानेषु योगबलतो वेदनीयस्य बन्धात् योगाभावेनायोगिगुणस्थाने बन्धाभावाच्च प्रकृतिप्रदेशबन्धयोर्योग एव प्रधान कारणमवसीयते, कर्मणो जघन्योत्कृष्टरूपतया स्थितिर्बन्धोत्तरकालीनस्थितिरसवत्त्वमनुभवनञ्च क्रोधादिरूपकषायजनितजीवाध्यवसायविशेषात्मककषायमूलकमिति भाव ॥

लोकाकाशप्रदेशप्रमाणाः शुभाः केवलं विशेषाधिकाः । यानेव ह्यनुभागबन्धाध्यवसायान् क्रमिकान् संक्लिश्यमानः क्रमेणाधोऽध आस्कन्दति तानेव विशुध्यमानः क्रमेणोर्ध्वमूर्ध्वमारोहतीति सोपानारोहणावतरणतुल्यानामुभयेषां साम्येऽपि क्षपकस्याध्यवसायविशेषे वर्त्तमानस्य श्रेणिमारोहतस्तेभ्यः प्रतिपाताभावेन शुभानामशुभापेक्षया विशेषत आधिक्यम् । एवञ्च येन केनाप्यध्यवसायेनानुभागनिमित्तेन जीवो योग्यपुद्गलादानसमये कर्मपरमाणौ प्रत्येकं रसस्य निर्विभागान् भागान् सर्वजीवेभ्योऽनन्तगुणानुत्पादयति, कर्मवर्गणान्तःपातिनः कर्मपरमाणवो हि जीवग्रहणपूर्वं प्रायो नीरसा एकस्वरूपा आसन् यदा तु जीवेन गृह्यन्ते ते तदानीं ग्रहणसमय एव काषायिकाध्यवसायेन तादृशतादृशरसा विभागा ज्ञानावारकत्वादिविचित्रस्वभावा आपद्यन्ते, जीवानां पुद्गलानाञ्च शक्तेरचिन्त्यत्वात्, न चेदमसम्भवि, गोगृहीतशुष्कतृणादिपरमाणूनामत्यन्तनीरसानामपि क्षीरादिरूपत्वेन सप्तधातुत्वेन च परिणामदर्शनात्, ते च रसा विभागाः कर्मपरमाणुषु क्वचित्स्तोकाः, क्वचित्तेभ्यः प्रभूताः, क्वचिच्च प्रभूततमा भवन्ति, अत्र वर्गणास्पर्धकादिविचाराः कर्मग्रन्थेभ्यो द्रष्टव्याः । स्थितिबन्धेऽपि संक्लेशस्थानानि विशोधिस्थानान्यपि सर्वत्रासंख्येयगुणतया पूर्ववदेव भाव्यानि, तत्र मूलप्रकृतीनां जघन्योत्कृष्टा च स्थितिरग्रेऽस्माभिर्वक्ष्यते मूल एव सा च कर्मरूपतयाऽवस्थानस्वरूपा विज्ञेया, अनुभवप्रायोग्या तु सैवाबाधाकालहीना, येषां कर्मणां यावत्यस्सागरोपमकोटीकोट्यस्तेषां तावन्ति वर्षशतान्यबाधाकालो विज्ञेयः । अबाधाकालहीनश्च कर्मदलिकनिषेकः, जघन्यस्त्वबाधाकालोन्तर्मुहूर्त्तम् । बन्धकानाश्रित्य जघन्योत्कृष्टस्थितिविवेचना कर्मप्रकृत्यादितः कार्या । एवं स्थितिस्थानादिप्ररूपणान्यपि । इत्येवं बन्धनकरणविचारो दिशा दर्शित इति ॥

अथ सङ्क्रमणकरणं स्वरूपयति—

**अन्यकर्मरूपतया व्यवस्थितानां प्रकृतिस्थित्यनुभागप्रदेशानामन्यकर्मरूपतया व्यवस्थापनहेतुर्वीर्यविशेषस्संक्रमणम् ॥**

अन्यकर्मेति । तथा तथा बध्यबन्धकभावे जीवकर्मणोर्हि परस्परं सव्यपेक्षत्वम् । जीवाध्यवसायविशेषमाश्रित्य कर्मवर्गणान्तःपातिनो जीवस्वप्रदेशागाढाः पुद्गला ज्ञानावरणीयादिकर्मरूपतया परिणमन्ते, जीवोऽपि स्वप्रदेशावगाढतथाविधकर्मविपाकोदयात्तथापरिणमते । तत्र सङ्क्लेशसञ्ज्ञितेन विशोधिसञ्ज्ञितेन वा येन वीर्यविशेषेणान्यकर्मरूपतया व्यवस्थितानां—विवक्षितबध्यमानप्रकृत्यादिव्यतिरिक्ततया स्थितानां प्रकृत्यादीनां—अन्यकर्मरूपतया—बध्यमानासु प्रकृत्यादिषु मध्येऽबध्यमानप्रकृत्यादिदलिकं प्रक्षिप्य बध्यमानप्रकृतिरूपतया, बध्य-

मानानां वा प्रकृतीनामितरेतररूपतया परिणमयति स वीर्यविशेषस्सङ्क्रमणमित्यर्थः। यथा बध्यमानसातवेदनीयेऽबध्यमानासातवेदनीयस्य, उच्चैर्गोत्रे वा तादृशे नीचैर्गोत्रस्य तादृशस्येत्यादि। तथा बध्यमाने मतिज्ञानावरणीये बध्यमानस्यैव श्रुतज्ञानावरणीयस्य श्रुतज्ञानावरणीये वा तादृशे तादृशमतिज्ञानावरणीयस्येत्यादि। सोऽयं सङ्क्रमः प्रकृतिस्थित्यनुभागप्रदेशरूपविषयभेदाच्चतुर्विध इति सूचयितुं प्रकृतिस्थित्यनुभागप्रदेशानामित्युक्तम्। दर्शनत्रिकस्य बन्धं विनापि सङ्क्रमाद् बन्धघटितं सङ्क्रमलक्षणं नोक्तम्। मिथ्यात्वस्यैव हि बन्धो न सम्यक्त्वसम्यङ्मिथ्यात्वयोः, विशुद्धसम्यग्दृष्टिः सम्यक्त्वसम्यङ्मिथ्यात्वयोः, पतद्ग्रहरूपबन्धाभावेऽपि मिथ्यात्वं सङ्क्रमयति, सम्यक्त्वे च सम्यङ्मिथ्यात्वम्। सङ्क्रम्यमाणप्रकृतेराधारभूता प्रकृतिः पतद्ग्रह उच्यते, किन्तु कृतेऽन्तरकरणे प्रथमस्थितौ समयोनावलिकात्रिकशेषायां बध्यमानेष्वपि सज्वलनेषु चतुर्ष्वपि प्रकृत्यन्तरदलिकसंक्रमाभावात्तदानीं न तेषां पतद्ग्रहत्वं, तथान्तरकरणे कृते द्वयोरावलिकयोः प्रथमस्थितिसत्कयोः पुंवेदस्य प्रकृत्यन्तरसङ्क्रमाभावेन न पतद्ग्रहत्वं, मिथ्यात्वे क्षपिते सम्यङ्मिथ्यात्वस्य सम्यङ्मिथ्यात्वयोश्च क्षपितयोस्सम्यक्त्वस्योद्वलितयोस्तु सम्यक्त्वसम्यङ्मिथ्यात्वयोर्मिथ्यात्वस्य न पतद्ग्रहत्वमित्यादिकं विभावनीयम्। दर्शनमोहनीयचारित्रमोहनीययोरायुषां मूलप्रकृतीनाञ्च परस्परं न सङ्क्रमः। यो यस्मिन् दर्शनमोहनीये वर्तते न तस्यान्यत्र संक्रमोऽविशुद्धदृष्टित्वात्। तथा परप्रकृतिषु सङ्क्रान्तं दलिकमावलिकामात्रकालं बन्धावलिकागतमुदयावलिकागतमुद्वर्त्तनावलिकागतञ्चोद्वर्त्तनादिसकलकरणायोग्यम्, दर्शनमोहनीयत्रिकवर्जमुपशान्तमोहनीयं सकलकरणायोग्यं द्रष्टव्यम्। तत्र सम्यक्त्वसम्यङ्मिथ्यात्वनरकद्विकमनुजद्विकदेवद्विकवैक्रियसप्तकाहारकसप्तकतीर्थकरोच्चैर्गोत्ररूपाश्चतुर्विंशतिप्रकृतय आयुश्चतुष्टयञ्चाध्रुवसत्ताकम्। शेषं पुनस्त्रिंशदुत्तरं प्रकृतिशतं ध्रुवसत्कर्म, ततोऽपि सातासातवेदनीयनीचैर्गोत्रमिथ्यात्वरूपं प्रकृतिचतुष्टयमपसार्यैते, ततोऽवशिष्टास्सर्वा ध्रुवसत्कर्मप्रकृतयः षड्विंशत्युत्तरशतसंख्यास्सङ्क्रममधिकृत्य साद्यादिरूपतया चतुर्विधा अपि भवन्ति। आसां हि सङ्क्रमस्सङ्क्रमविषयप्रकृतिबन्धव्यवच्छेदे न भवति, तासां पुनर्बन्धारम्भे भवत्यतोऽसौ सादिः। तत्तद्बन्धव्यवच्छेदस्थानमप्राप्तस्य पुनरनादिः, अभव्यस्य कदाचिदपि व्यवच्छेदाभावेन ध्रुवः। कालान्तरे व्यवच्छेदसम्भवेन भव्यस्याध्रुवः। अध्रुवसत्कर्मणामध्रुवसत्कर्मत्वादेव सङ्क्रमस्साद्यध्रुवः सातासातवेदनीयनीचैर्गोत्राणान्तु परावर्त्तमानत्वात्साद्यध्रुवोऽवसेयः, बध्यमाने सातेऽसातस्य, असाते वा तादृशे सातस्य, उच्चैर्गोत्रे तथाविधे नीचैर्गोत्रस्य, नीचैर्गोत्रे तादृशे उच्चैर्गोत्रस्य सङ्क्रमो नान्यदाऽत

---

१. बद्धमिथ्यात्वपुद्गलानां मदनकोद्रवस्थानीयानामौपशमिकसम्यक्त्वानुगुणेन विशोधिस्थानेन शुद्धार्धविशुद्धाविशुद्धकरणादिति भावः ॥

एवा सक्रमस्य सादित्वमध्रुवत्वञ्च । मिथ्यात्वस्य तु सक्रमो विशुद्धसम्यग्दृष्टेर्भवति, विशुद्धसम्यग्दृष्टित्वञ्च कादाचित्कमतस्तस्य सक्रमो साद्यध्रुव एवेति । मिथ्यादृष्ट्यादिप्रमत्तान्तास्सातवेदनीयस्य सक्रामका., परतस्सक्रम्यमाणप्रकृत्याधारभूतासातवेदनीयस्य बन्धाभावान्नेतरे तत्सक्रामका , अपि तु तत्र साते बध्यमानेऽसातस्यैव सक्रम । अनन्तानुबन्धिना मिथ्यादृष्ट्यादयोऽप्रमत्तसंयतान्तास्सङ्क्रामका न परे, परतस्तेषामुपशमनात्क्षयाद्वा । मिथ्यादृष्ट्यादयोऽपूर्वकरणान्ता यश.कीर्तेस्सङ्क्रामका नेतरे, परत केवलायास्तस्या एव बन्धेन पतद्ग्रहाभावात् । अनन्तानुबन्धिवर्जद्वादशकषायाणा नोकषायाणाञ्च मिथ्यादृष्ट्यादयो निवृत्तिबादरसम्परायान्तास्सङ्क्रामका न परे, परतस्तेषामुपशमात्क्षयाद्वा । मिथ्यात्वसम्यङ्मिथ्यात्वयोरविरतसम्यग्दृष्ट्यादय उपशान्तमोहपर्यवसानास्सक्रामका., न परे, परतस्तयोस्सत्ताया अभावात्। सम्यङ्मिथ्यात्व पुनर्मिथ्यादृष्टिरपि सक्रमयति, सम्यक्त्वस्य मिथ्यादृष्टिरेव सङ्क्रामको नान्ये, मिथ्यात्वे वर्तमानस्यैव सक्रामकत्वात्। उच्चैर्गोत्रस्य मिथ्यादृष्टिसास्वादनौ, अन्येषा नीचैर्गोत्राबन्धकत्वात् । इतरासा मतिज्ञानावरणीयादिप्रकृतीना सूक्ष्मसम्परायपर्यवसाना मिथ्यादृष्ट्यादयस्सङ्क्रामका न परे परतो बन्धाभावेन पतद्ग्रहाभावादिति । एवं ज्ञानावरणपञ्चकदर्शनावरणनवकषोडशकषायभयजुगुप्सातैजससप्तकवर्णादिविंशतिनिर्माणागुरुलघूपघातान्तरायपञ्चकलक्षणा. पतद्ग्रहा ध्रुवबन्धिन्यस्सप्तषष्टिप्रकृतयस्साद्यनादिध्रुवाध्रुवरूपचतुर्भेदा. । अभव्यभव्यापेक्षया ध्रुवाध्रुवत्वे, स्वस्वबन्धव्यवच्छेदे पतद्ग्रहत्वाभावेन तत्र सक्रमासभवाद्बन्धारम्भे च हेतुत पतद्ग्रहत्वेन सादित्व तत्तद्बन्धव्यवच्छेदस्थानमप्राप्तस्यानादित्व, शेषास्त्वध्रुवबन्धिन्योऽष्टाशीतिसख्या. प्रकृतयोऽध्रुवबन्धित्वादेव पतद्ग्रहत्वमधिकृत्य साद्यध्रुवा भावनीया । मिथ्यात्वस्य पुनर्ध्रुवबन्धित्वेऽपि यस्य सम्यक्त्वमिथ्यात्वे विद्येते स एव ते तत्र सक्रमयति नान्य इति तस्य साद्यध्रुवपतद्ग्रहत्वं भाव्यम्, विशेषोऽत्र कर्मप्रकृत्यादितोऽवसेय । अष्टमूलप्रकृतीनामष्टपञ्चाशदधिकशतसख्याकोत्तरप्रकृतीनाञ्च या स्थितिर्ह्रस्वीभूता[1] सती दीर्घीकृता दीर्घीभूता सती ह्रस्वीकृता पतद्ग्रहप्रकृतिस्थितिषु वा मध्ये नीत्वा निवेशिता स स्थितिसक्रम उच्यते, तत्र स्थितीनामन्यत्र निवेशन न साक्षादशक्यत्वादपितु स्थितियुक्तपरमाणुद्वारैव, ततो मूलप्रकृतीना परस्पर सक्रमाभावात् तासा प्रकृत्यन्तरनयनलक्षणस्थितिसङ्क्रमो न भवति किन्तु द्वावेवोद्वर्त्तनापवर्त्तनालक्षणौ सङ्क्रमौ, ह्रस्वीभूतस्य दीर्घीकरण-

---

१. तथाच कर्मपरमाणूना ह्रस्वस्थितिकालतामपहाय दीर्घस्थितिकालतया व्यवस्थापन तेषामेव दीर्घस्थितिकालतामपहाय ह्रस्वस्थितिकालतया व्यवस्थापन पुन सक्रम्यमाणप्रकृतिस्थितीनां पतद्ग्रहप्रकृतौ नीत्वा निवेशनमिति भाव्यम् ॥

मुद्वर्तना, दीर्घीभूतस्य ह्रस्वीकरणमपवर्त्तनेति । एवमनुभागसङ्क्रमोऽपि मूलोत्तरप्रकृतिविषयः, लक्षणन्तु यत्तासां रसो ह्रस्वीभूतस्सन् दीर्घीकृतो दीर्घीभूतस्सन् ह्रस्वीकृतोऽन्यप्रकृतिस्वभावेन परिणमितो वा स सर्वोऽप्यनुभागसंक्रमः, परन्तु मूलप्रकृतीनां परस्परं सङ्क्रमाभावेनान्यप्रकृतिस्वभावपरिणामरूपरससङ्क्रमो न भवति । एवं यत्संक्रमप्रायोग्यं कर्मदलिकमन्यप्रकृतिरूपतया परिणम्यते स प्रदेशसङ्क्रमः, स चोद्वलनाविध्यातयथाप्रवृत्तगुणसर्वसङ्क्रमभेदेन पञ्चविधः, घनदलान्वितस्याल्पदलस्योत्किरणमुद्वलनं, यासां प्रकृतीनां गुणप्रत्ययतो भवप्रत्ययतो वा बन्धो न भवति तासां सङ्क्रमकरणं विध्यातसङ्क्रमः । अपूर्वकरणप्रभृतयोऽबध्यमानाशुभप्रकृतीनां सम्बन्धिकर्मदलिकं प्रतिसमयमसंङ्ख्येयगुणतया बध्यमानासु प्रकृतिषु यत्प्रक्षिपन्ति स गुणसङ्क्रमः । सर्वेषामपि संसारस्थानां जीवानां ध्रुवबन्धिनीनां बन्धे परावर्त्तमानप्रकृतीनान्तु स्वस्वभवबन्धयोग्यानां बन्धेऽबन्धे वा यत्सङ्क्रमः प्रवर्त्तते स यथाप्रवृत्तसङ्क्रमः । चरमसमये यत्परप्रकृतिषु प्रक्षिप्यते दलिकं स सर्वसङ्क्रम उच्यते । अत्र सर्वेषां विशेषः कर्मप्रकृत्यादितो विज्ञेय इति दिक् ॥

अधुनोद्वर्तनामाचष्टे—

**कर्मस्थित्यनुभागयोः प्रभूतीकरणप्रयोजकवीर्यपरिणतिरुद्वर्त्तना ॥**

कर्मेति । स्थित्यनुभागमात्रविषयेयमुद्वर्त्तनेतिसूचनाय कर्मस्थित्यनुभागयोरित्युक्तमेवमेवोत्तरलक्षणे विज्ञेयम् । उदयावलिकातो बहिर्वर्त्तिनीनां स्थितीनामुद्वर्त्तना भवति उदयावलिकागतास्तु सकलकरणायोग्या. । तथाऽबाधाकालादुपरितन्य एव स्थितयः उद्वर्त्यन्ते, बध्यमानप्रकृत्यबाधया समाना हीना वा या पूर्वबद्धप्रकृतीनां स्थितिस्साऽबाधाकालान्तः प्रविष्टत्वान्नोद्वर्त्यते । तथाचाबाधान्तःप्रविष्टा निखिला अपि स्थितय उद्वर्त्तनापेक्षया परित्याज्या भवन्ति, तत्रोत्कृष्टाऽबाधोत्कृष्टातीत्थापनेत्युच्यते, अतीत्थापना उल्लंघनीया । समयेनोना योत्कृष्टाऽबाधा समयोनोत्कृष्टातीत्थापना भवति, द्विसमयेनोना सा द्विसमयोनोत्कृष्टातीत्थापना, एवं प्रतिसमयहान्या तावदतीत्थापना भवन्ति यावज्जघन्याऽबाधाऽन्तर्मुहूर्त्तप्रमाणा, ततोऽपि जघन्यतराऽतीत्थापना यावदुदयावलिका तावद्वाच्या, उदयावलिकागतानां तु स्थितीनामनुद्वर्त्तनीयत्वात् । कर्मदलिकनिक्षेपविचारस्तु कर्मप्रकृत्यादितो बोध्य इति दिक् ॥

---

१. उद्वर्त्तनापवर्त्तनारूपौ संक्रमौ तु भवत इति भावः । २. यथाऽनन्तानुबन्धिचतुष्टयसम्यक्त्वमिथ्यात्ववेदद्विकनरकद्विकवैक्रियसप्ताहारकसप्तकमनुजद्विकोच्चैर्गोत्राणां पल्योपमासङ्ख्येयभागमात्रमन्तर्मुहूर्त्तेन कालेन स्थितिखण्डमुत्किरति पुनस्तथैव द्वितीयं प्रथमखण्डाद्विशेषहीनं, एवमेव पूर्वस्मात्पूर्वस्माद्विशेषतो हीनानि स्थितिखण्डानि यावद् द्विचरमस्थितिखण्डमन्तर्मुहूर्त्तकालेनोत्कीर्यन्त इति ॥

अथापवर्त्तनामाह—

**कर्मस्थित्यनुभागयोर्ह्रस्वीकरणप्रयोजकवीर्यविशेषोऽपवर्त्तना ॥**

**कर्मस्थितीति ।** कर्मपरमाणूनां दीर्घस्थित्यनुभागवतां दीर्घस्थित्यनुभागावपहृत्य ह्रस्वस्थितिरसवत्तया व्यवस्थापने प्रयोजकीभूतवीर्यविशेष इत्यर्थः । उदयावलिकाया बाह्यान् समयमात्रद्विसमयमात्रादिस्थितिभेदानपवर्त्तयति । उदयवतीनामनुदयवतीनां प्रकृतीनामुदयसमयादारभ्यावलिकामात्रा स्थितिरुदयावलिकेति विज्ञेया । ते चापवर्त्त्यमानाःस्थितिविशेषा यावद्बन्धावलिकाहीना सर्वा कर्मस्थितिस्तावल्लभ्यन्ते । उदयावलिकाया उपरितनी या समयमात्रा स्थितिस्तस्या दलिकमपवर्त्तयन्नुदयावलिकाया उपरितनौ द्वौ त्रिभागौ समयोनावतिक्रम्याधस्तने समयाधिके तृतीये भागे निक्षिपति, एष जघन्यो निक्षेपो जघन्या चातीत्थापना, यदा चोदयावलिकाया उपरितनी द्वितीया स्थितिरपवर्त्यते तदातीत्थापना प्रागुक्तप्रमाणा समयाधिका भवति निक्षेपस्तु तावन्मात्र एव । एवं तृतीया यदापवर्त्यते तदा प्रागुक्तमानाऽतीत्थापना द्विसमयाधिका भवति निक्षेपस्तु तावानेव । एवमतीत्थापना प्रतिसमयं तावद्वर्धयितव्या यावदावलिका परिपूर्यते निक्षेपविषयाणां स्थितीनाञ्च समयाधिक आवलिकात्रिभाग एवानुवर्त्तते, ततः परमतीत्थापना सर्वत्र तावन्मात्रैव प्रवर्त्तते, निक्षेपस्तु यावद्बन्धावलिकातीत्थापनाऽवलिकारहिताऽपवर्त्यमानस्थितिसमयरहिता च सकलापि कर्मस्थितिस्तावद्वर्धते । इत्येष निर्व्याघातापवर्त्तना विज्ञेया । सव्याघाताऽपवर्त्तनोद्वर्त्तनापवर्त्तनयोस्सयोगेनाल्पबहुत्वं कर्मप्रकृत्यादिभ्यो विज्ञेयम् । एवमनुभागोद्वर्त्तनापवर्त्तनाविकमपि तत एवाऽवगन्तव्यम् । उद्वर्त्तनापवर्त्तने सङ्क्रमभेदावेव स्थित्यनुभागाश्रये इत्यलं विस्तरेण ॥

सम्प्रत्युदीरणामाह—

**अनुदितकर्मदलिकस्योदयावलिकाप्रवेशनिदानमात्मवीर्यमुदीरणा ॥**

**अनुदितेति ।** येन योगसञ्ज्ञकवीर्यविशेषेण कषायसहितेन तद्रहितेन वोदयावलिकाबहिर्वर्त्तिनीभ्यस्स्थितिभ्यः परमाण्वात्मकं दलिकमपकृष्योदयावलिकायां प्रक्षिप्यते स एव वीर्यविशेष उदीरणेत्यर्थः । सापि प्रकृतिस्थित्यनुभागप्रदेशभेदतश्चतुर्धा । प्रत्येकमपि मूलोत्तरप्रकृतिविषयत्वाद्द्विविधम् । अष्टधा च मूलप्रकृतिविषया, बन्धनादीनां पृथगविवक्षि-

१ अपवर्त्तना च स्थित्यनुभागविषयव, न प्रकृतिप्रदेशविषयेत्याशयेनोक्तं स्थित्यनुभागवतामिति । के ते स्थितिविशेषा यानपवर्त्तयतीत्यत्राहोदयावलिकाया इति उदयावलिकागतास्तु निखिलकरणायोग्यत्वेनापवर्त्तनानर्हत्वात् बाह्यानिति ॥

तत्त्वे द्वाविंशत्यधिकशतमुदयमकक्षतयोत्तरप्रकृतीनां भवति, पृथक् तद्विवक्षायान्तु अष्टपञ्चाशदधिकशतभेदास्तेषाम् । ज्ञानावरणदर्शनावरणनामगोत्रान्तरायाणां मूलप्रकृतीनां अनादित्वं ध्रुवत्वमध्रुवत्वञ्च । वेदनीयमोहनीययोश्चतुर्विधत्वमपि । तत्र ज्ञानावरणदर्शनावरणान्तरायाणां यावत्क्षीणमोहगुणस्थानकस्य समयाधिकावलिकाशेषो न भवति तावत्सर्वजीवानामुदीरणाया अवश्यभावेन, नामगोत्रयोश्च यावत्सयोगिचरमसमयं तावत्सर्वेषामवश्यंभावेनानादित्वं, ध्रुवत्वमभव्यापेक्षयाऽध्रुवत्वञ्च भव्यापेक्षयेति । वेदनीयस्य यावत्प्रमत्तगुणस्थानकं मोहनीयस्य सूक्ष्मसम्परायगुणस्थानकं यावदुदीरणाया भावेनाप्रमत्तादिगुणस्थानकेभ्यः प्रतिपततो वेदनीयस्योपशान्तमोहगुणस्थानकाच्च प्रतिपततो मोहनीयस्योदीरणाया सादित्वं, तत्स्थानमप्राप्तस्यानादित्वं, ध्रुवत्वाध्रुवत्वे पूर्ववत् । आयुरुदीरणायास्सादित्वमध्रुवत्वञ्च । पर्यन्तावलिकायामायुषो नियमेनोदीरणाया अभावादध्रुवत्वं पुनरपि भवोत्पत्तिप्रथमसमये प्रवर्त्तमानत्वाच्च सादित्वं। उत्तरप्रकृतीनान्तु कर्मप्रकृत्यादिभ्यो ज्ञातव्याः । ज्ञानावरणदर्शनावरणान्तरायाणां क्षीणमोहान्तास्सर्वेऽप्युदीरकाः । मोहनीयस्य सूक्ष्मसम्परायान्ता उदीरकाः । वेदनीयस्य प्रमत्तगुणस्थानकपर्यन्तास्सर्वेऽप्युदीरकाः । आयुषोऽचरमावलिकप्रमत्तान्ता उदीरकाः, नामगोत्रयोस्तु सयोगिकेवलिपर्यवसानास्सर्वेऽप्युदीरका इति । अधिकमन्यत्र द्रष्टव्यम् । तथा ज्ञानावरणवेदनीयायुर्गोत्रान्तरायाणामेकैकमुदीरणास्थानं, यथा ज्ञानावरणान्तराययोः पञ्चप्रकृत्यात्मकमेकैकं, वेदनीयायुर्गोत्राणां वेद्यमानैकप्रकृत्यात्मकं, नैतासां[1] द्व्यादिकाः प्रकृतयो युगपदुदीर्यन्ते युगपदुदयाभावात् । दर्शनावरणीये चक्षुर्दर्शनावरणादीनां पञ्चानां चतसृणां वा प्रकृतीनां युगपदुदीरणा भवति । मोहनीये एकस्या द्वयोश्चतसृणां पञ्चानां षण्णामष्टानां नवानां दशानां वा । नामकर्मणो दशोदीरणास्थानानि एकचत्वारिंशत्–द्विचत्वारिंशत्–पञ्चाशत्–एकपञ्चाशत्–द्विपञ्चाशत्–त्रिपञ्चाशत्–चतुःपञ्चाशत् पञ्चपञ्चाशत् षट्पञ्चाशत्–सप्तपञ्चाशच्चेति । विशेषस्त्वन्यतो द्रष्टव्य इति प्रकृत्युदीरणा । स्थित्युदीरणाया प्रथमं लक्षणमुच्यते, उदयो हि द्विविधः, सम्प्राप्त्यसम्प्राप्तिभेदात् कालक्रमेण कर्मदलिकस्योदयहेतुद्रव्यक्षेत्रादिसामग्रीसम्प्राप्तौ य उदयस्स सम्प्राप्त्युदयः, अकालप्राप्तं कर्मदलिकमुदीरणाप्रयोगेण वीर्यविशेषसहितेन समाकृष्य कालप्राप्तेन दलिकेन सहानुभूयते सोऽसम्प्राप्त्युदयः, तथाचासम्प्राप्त्युदय एवोदीरणा या स्थितिरप्राप्तकालापि सती उदीरणाप्रयोगेण सम्प्राप्त्युदये प्रक्षिप्ता दृश्यते केवलचक्षुषा सा स्थित्युदीरणेति । भेदादिकमन्यतो द्रष्टव्यम् । अनुभागोदीरणाया सज्ञाद्विभेदा, स्थानघातिभेदात् स्थानं चतुर्विधं एकद्वित्रिचतुस्स्थानभेदात्

---

१. वेदनीयायुर्गोत्रप्रकृतीनामित्यर्थः ।

एतच्च पूर्वमुपदर्शितम् घातिसंज्ञा तु सर्वघातिदेशघात्यघातिभेदतस्त्रिविधा । तथा शुभकर्मणामनुभागः क्षीरखण्डरसोपमः, अशुभकर्मणान्त्वशुभो घोषातकीनिम्बरसोपमः । स्वविषयं याः पूर्णतया घ्नन्ति तास्सर्वघातिन्यः, केवलज्ञानदर्शनावरणमाद्यद्वादशकषाया मिथ्यात्वं निद्रापञ्चकञ्चेति विंशतिः । एता हि प्रकृतयो यथायोगमात्मघात्यं गुणं सम्यक्त्वं ज्ञानं दर्शनं चारित्रं वा सर्वात्मना घातयन्ति । मतिश्रुतावधिमनःपर्यवज्ञानावरणानि चक्षुरचक्षुरवधिदर्शनावरणानि सज्वलनकषाया नोकषाया अन्तरायाश्च पञ्चविंशतिप्रकृतयो देशघातिन्यः । ज्ञानादिगुणैकदेशविघातित्वात् । केवलज्ञानदर्शनावरणीयाभ्यामावृतयोरपि केवलज्ञानदर्शनयोर्मन्दमन्दतरादिविशिष्टप्रकाशरूपाणां मतिज्ञानादिचक्षुर्दर्शनादीनां ज्ञानदर्शनैकदेशरूपाणां विघातकत्वात् आद्यद्वादशकषायक्षयोपशमसमुत्थचारित्रलब्धेरतिचारसम्पादकतया देशतो विघातकत्वात् सर्वद्रव्यैकदेशविषयकदानादिविघातकारित्वाच्च । नामगोत्रवेदनीयायुरन्तर्गतास्तु प्रकृतयो हन्तव्याभावान्न किमपि घ्नन्तीति वा अघातिन्यः ।[1] सर्वघातिनीनां रसो हि ताम्रभाजनवन्निश्छिद्रो घृतवदतिस्निग्धो द्राक्षावत्तनुप्रदेशोपचितः स्फटिकाभ्रवन्निर्मलः सकलस्वविषयघातित्वेन सर्वघाती । देशघातिनीनान्तु रसः कश्चिद्वंशदलनिर्मापितकटवदतिस्थूलच्छिद्रशतसङ्कुलः, कश्चित्कम्बलवन्मध्यमविवरशतसंकुलः, कोऽपि मसृणवासोवदतिसूक्ष्मविवरसम्भृतोऽल्पस्नेहो विमलश्च स्वविषयैकदेशघातित्वाद्देशघाती भवति । अघातिनीनां रस उभयविलक्षणः । विपाकोऽपि पुद्गलक्षेत्रभवजीवविपाकभेदाच्चतुर्विधः । पुद्गलानधिकृत्य यस्य रसस्य फलदानाभिमुख्यं स पुद्गलविपाकः । स च संस्थानषट्कसंहननषट्कातपशरीरपञ्चकाङ्गोपाङ्गत्रयोद्योतनिर्माणस्थिरास्थिरवर्णादिचतुष्कागुरुलघुशुभाशुभपराघातोपघातप्रत्येकसाधारणनाम्ना षट्त्रिंशत्प्रकृतीनाम् । क्षेत्रे गत्यन्तरसङ्क्रमणहेतुनभःपथे यस्य रसस्य फलदानाभिमुख्यं स रसः क्षेत्रविपाको यथा चतसृणामानुपूर्वीणाम् । भवे नरकादिरूपे स्वयोग्ये यस्य रसस्य फलदानाभिमुखता स भवविपाको यथा चत्वार्यायूंषि परभवे सङ्क्रमेणाप्युदयाभावात् । गतीनान्तु परभवे सङ्क्रमादुदयेन स्वभवव्य-

---

१. अघातिन्यो न कञ्चन ज्ञानादिगुणं घातयन्ति केवलं सर्वघातिनीभिस्सह वेद्यमानास्सर्वघातिरसं विपाकं दर्शयन्ति देशघातिनीभिश्चसह वेद्यमाना देशघातिरसं, चौरैस्सह वर्त्तमानोऽचौरो यथा चौर इवाभासते तद्वदितिभावः ॥ २. शरीरतया परिणतेषु पुद्गलेषु यासां विपाकस्ताः पुद्गलविपाकिन्य इतिभावः ॥ ३. ननु विग्रहगत्यभावेऽपि सङ्क्रमकरणेनानुपूर्वीणामुदयो विद्यत इति कथं क्षेत्रविपाकिन्यस्ताः, ■ गतिवज्जीवविपाकिन्य इति चेदुच्यते विद्यमानेऽपि सङ्क्रमे यथा तासां क्षेत्रप्राधान्येन स्वकीयो विपाकोदयो न तथाऽन्यासामिति क्षेत्रविपाकिन्य एवेति ॥ ४. यथा मोक्षगामिनोऽशेषा गतयो मनुष्यभवे क्षयं यान्तीति भवं प्रति गतीनां न नैयत्यमितिभावः ॥

भिचारित्वान्न भवविपाकित्वम् । जीवमेवाधिकृत्य यो रसोऽनुग्रहोपघातादिसम्पादनाभिमुखो भवति स जीवविपाकः । यथा ज्ञानावरणपञ्चकं दर्शनावरणनवकं वेदनीयद्वयं दर्शनमोहनीयत्रिकं पञ्चविंशतिमोहनीयप्रकृतयोऽन्तरायपञ्चकं गतिचतुष्टयं जातिपञ्चकं विहायोगतिद्विकं त्रसत्रिकं स्थावरत्रिकं सुस्वरदुस्स्वरसुभगदुर्भगादेयानादेययशःकीर्त्ययशःकीर्त्तितीर्थकरोच्छ्वासनामानि गोत्रद्वयञ्चेत्यष्टसप्ततिप्रकृतयः । उदययोग्यतापेक्षयाऽष्टसप्ततिरिति, बन्धयोग्यतामाश्रित्य तु सम्यक्त्वसम्यङ्मिथ्यात्वपरिहारेण षट्सप्ततिर्बोध्या । प्रत्ययसाधनादिस्वामित्वप्ररूपणा अन्यतो विज्ञेया[1] । एवं साधनादिस्वामित्वप्ररूपणात्मिकाप्रदेशोदीरणापि ॥

अथुनोपशमनामाख्याति—

**कर्मणामुदयोदीरणानिधत्तिनिकाचनाकरणायोग्यत्वेन व्यवस्थापनाहेतुर्वीर्यपरिणतिरुपशमना । उदयश्च यथास्थितियद्धानां कर्मपुद्गलानामबाधाकालक्षयात्संक्रमापवर्त्तनादिकरणविशेषाद्वोदयसमयप्राप्तानामनुभवनम् ॥**

कर्मणामिति । यादृशवीर्यविशेषतः कर्मणामुदयस्योदीरणानिधत्तिनिकाचनानामयोग्यतया व्यवस्थापनं भवति तादृशवीर्यपरिणतिरुपशमनेत्यर्थः । कर्मणामुपशमना द्विविधा, कृतकरणाऽकृतकरणा चेति, यथाप्रवृत्त्यपूर्वानिवृत्तिकरणसाध्यक्रियाविशेषकृता करणकृता, यथाप्रवृत्त्यादिकरणक्रियाविशेषमन्तरेणापि वेदनानुभवनादिकारणैर्योपशमना साऽकृतकरणेत्यर्थः, द्वैविध्यमिदं देशोपशमनाया एव, न सर्वोपशमनायास्तस्या करणेभ्य एव भावात् । अकरणकृतोपशमनाया अकरणाऽनुदीर्णरूपभेदभिन्नायास्सम्प्रत्यनुयोगस्य व्यवच्छिन्नत्वेन कृतकरणोपशमनाऽत्र किञ्चिद्विचार्यते कृतकरणोपशमना देशसर्वविषयभेदतो द्विविधा, सर्वविषयोपशमना गुणोपशमना प्रशस्तोपशमनेति नामद्वयवती देशविषयोपशमना अगुणोपशमनाऽप्रशस्तोपशमना चेति नामद्वयवती । तत्र सर्वोपशमना मोहनीयस्यैव, शेषकर्मणान्तु देशोपशमना । पञ्चेन्द्रियस्संज्ञी सर्वपर्याप्तः उपशमलब्ध्युपदेशश्रवणलब्धिकरणत्रयहेतुप्रकृष्टयोगलब्धित्रिकयुक्तो वा करणकालात्प्रागपि यावदन्तर्मुहूर्त्तं प्रतिसमयमनन्तगुणवृद्धया विशुद्धयाऽवदायमानचित्तसन्ततिरभव्यसिद्धिकविशोधिमतिक्रम्य वर्त्तमानो मतिश्रुताज्ञानविभङ्गज्ञानानामन्यतमस्मिन् साकारोपयोगे वर्त्तमानो मनोवाक्कायान्यतमयोगे वा वर्त्तमानो विशुद्धलेश्यान्यतमयुक्तः कृतान्तस्सागरोपमकोटीकोटिप्रमाणस्थितिकायुर्वर्जसप्तकर्मा चतुरस्था-

---

१. यद्यपि सर्वा एव प्रकृतयः परमार्थतस्साक्षात्परम्परया वा जीवस्यैवानुग्रहमुपघातं च कुर्वन्तीति जीवविपाकित्व एव तथापि मुख्यतया क्षेत्रभवपुद्गलेषु तद्विपाकस्य विवक्षितत्वात् तथा प्रोक्त इति ॥

नकाशुभकर्मानुभागस्य द्विस्थानककारी द्विस्थानकशुभकर्मानुभागस्य च चतुस्स्थानककारी ज्ञानावरणीयादिसप्तचत्वारिंशद्ध्रुवप्रकृतीस्स्वस्वभवप्रायोग्याः परावर्त्तमानमध्यस्था अतिविशुद्धपरिणामत्वेनायुर्वर्जाश्शुभा एव बध्नन् बध्यमानप्रकृतीनां स्थितिमन्तस्सागरोपमकोटीकोटिमात्रप्रमाणां बध्नन् जघन्यमध्यमोत्कृष्टयोगवशतः प्रदेशाग्रं जघन्यमध्यमोत्कृष्टरूपेण बध्नन् परिपूर्णे च स्थितिबन्धे पूर्वस्थितिबन्धापेक्षयापल्योपमासंख्येयभागन्यूनमन्यं स्थितिबन्धं कुर्वन् तथैवान्यमन्यं स्थितिबन्धं विदधत् बध्यमानानां प्रकृतीनामनुभागमशुभानां द्विस्थानकं प्रतिसमयमनन्तगुणहीनं बध्नन् शुभानाञ्च चतुस्स्थानकं प्रतिसमयमनन्तगुणवृद्धं कुर्वन्नेवमेवमेव यावदन्तर्मुहूर्त्तपरिसमाप्ति व्याप्रुतः परिणामविशेषाणि प्रत्येकमान्तर्मौहूर्त्तिकानि समुदायेनाप्यान्तर्मौहूर्त्तिकानि त्रीणि यथाप्रवृत्तापूर्वानिवृत्तिकरणानि विधायान्तर्मौहूर्त्तिकीमुपशमाद्धामवाप्नोति । करणत्रयनिरूपणा अन्यतोऽवगन्तव्या, अनिवृत्तिकरणाद्धायास्संख्येयेषु भागेषु गतेषु संख्येयतम एकस्मिंश्च भागेऽवशेषेऽन्तर्मुहूर्त्तमात्रमधो मुक्त्वा मिथ्यात्वस्यान्तरकरणं करोति, अन्तरकरणं नामोदयक्षणादुपरि मिथ्यात्वस्थितिमन्तर्मुहूर्त्तमानामतिक्रम्योपरितनीञ्च विष्कम्भयित्वा मध्येऽन्तर्मुहूर्त्तमानं तत्प्रदेशवेद्यदलिकाभावकरणं, तन्निष्पादनकालोऽप्यन्तरकरणकाल एव, सोऽप्यन्तर्मुहूर्त्तप्रमाणः प्रथमस्थितेः किञ्चिन्न्यूनोऽभिनवस्थितिबन्धाद्धया समानः। तथा हि प्रथमस्थित्यन्तरकरणे द्वे अपि अन्तर्मुहूर्त्तप्रमाणे युगपदारभते, अन्तरकरणप्रथमसमय एव चान्यं स्थितिबन्धं मिथ्यात्वस्यारभते स्थितिबन्धान्तरकरणे च युगपत् समापयति। अन्तरकरणे च क्रियमाणे गुणश्रेणेस्संख्येयतमं भागमन्तरकरणदलिकेनोत्किरति,उत्कीर्यमाणञ्च दलिकं प्रथमस्थितौ द्वितीयस्थितौ च प्रक्षिपति । अन्तरकरणादधस्तनी स्थितिः प्रथमोपरितनी च द्वितीयेत्युच्यते, तत उदयोदीरणाभ्यां प्रथमस्थितिमनुभवन् तावद्गतो यावदावलिकाद्विकं शेषम् । तत्र स्थितस्य पूर्वप्रवृत्तो द्वितीयस्थितेस्सकाशादुदीरणाप्रयोगेण दलिकं समाकृष्योदये प्रक्षेपरूप आगालोऽत्र न भवति किन्तु केवलमुदीरणैव । साऽपि तावदेव यावदावलिकाशेषो न भवति । ततस्सापि निवर्त्तते ततः केवलेनैवोदयेन तामावलिकामनुभवति तस्यामप्यपगतायां मिथ्यात्वस्योदयोऽपि निवर्त्तते तद्दलिकाभावात् तस्मिंश्चापगते उपशान्ताद्धासमागमस्तत्र प्रथमसमय एव चोपशमसम्यक्त्वं लभते । अत्रोदयोदीरणादीनां निवृत्तेरीदृशोपशमनाकरणाध्यवसाय एवोपशमनेत्युच्यते । परं तत्रौपशमिकलाभप्रथमसमयादारभ्य मिथ्यात्वदलिकं प्रतिसमयं यावदन्तर्मुहूर्त्तं सम्यक्त्वसम्यङ्मिथ्यात्वयोरसक्रमयति, प्रथमस्थितिचरमसमये द्वितीयस्थितिगतदलिकस्यानुभागभेदेन शुद्धमिश्राशुद्धतया विभक्तत्वात् । अयं गुणसक्रम उच्यतेऽन्तरकरणस्थितेनौपशमिकसम्यक्त्वलक्षणप्रशस्तगुणान्वितेन क्रियमाणत्वात् । इत्येवं सम्यक्त्वोत्पादो निरूपितः । ईदृशौपशमिकसम्य-

क्त्वयुतो न चारित्रमोहोपशमाय यतते किन्तु वेदकसम्यग्दृष्टिः क्षायोपशमिकसम्यग्दृष्ट्यपरनामा, स चाविरतो देशविरतस्सर्वविरतो वा विशोध्यद्धाया वर्त्तमान एव, सक्लेशाद्धाया वर्तमानस्तु न चारित्रमोहनीयोपशमनाय प्रवर्त्तते। तत्राविरतो यथाप्रवृत्त्यपूर्वकरणे विधाय देशविरतस्सर्वविरतो वा भवति देशविरतस्तु करणद्वयं कृत्वा सर्वविरतिमवाप्स्यति, अनयोः प्रतिपत्त्यनन्तर यावदन्तर्मुहूर्त्तं वर्धमानपरिणामनियमात तावन्माना उदयावलिकाया उपरि गुणश्रेणिं प्रतिसमय दलिकरचनापेक्षयानन्तगुणवृद्धामारचयति तत पर कोऽपि वर्धमानपरिणामः कोऽपि च हीयमानपरिणामः कोऽप्यवस्थितपरिणामश्च भवति। वर्धमानपरिणाम ऊर्ध्वमपि वर्धमाना गुणश्रेणिं करोति हीयमानो हीयमानामवस्थितोऽवस्थिता। परिणामह्रासेन देशसर्वविरतिपरिणामात् आभोगमन्तरेण परिभ्रष्टास्सन्त· पुन पूर्वप्रतिपन्ना देशविरतिं सर्वविरतिं वा प्रतिपद्यमाना अकृतकरणा एव प्रतिपद्यन्ते, ये त्वाभोगेनैव मिथ्यात्वं गताः पुनस्तत्प्रपित्सवः करणपुरस्सरमेव प्रतिपद्यन्ते तदेव कृतकरणाकृतकरणदेशविरतिसर्वविरतिलाभो विज्ञेयः। एव चारित्रमोहोपशमनाऽन्यैन द्रष्टव्या। *एवमुपशान्तमोहनीयप्रकृतयस्सक्रमणोद्वर्त्तनापवर्त्तनोदीरणानिधत्तिनिकाचनाकरणा*नामयोग्या भवन्ति, दर्शनमोहनीयत्रिके तूपशान्तेऽपि सङ्क्रमापवर्त्तने भवतः, तत्र सम्यक्त्वे मिथ्यात्वसम्यङ्मिथ्यात्वयोः सङ्क्रमः, अपवर्त्तना तु त्रयाणामपि। यद्यप्युपशान्ते मोहे सक्रमणोद्वर्त्तनापवर्त्तनान्यपि करणानि न भवन्ति ततो लक्षणे तदनभिधानान्न्यूनता तथापि *सर्वविधोपशमनासमहायैतानि विहाय लक्षणमाचरितमन्यथा देशोपशमनासङ्ग्रहो न* स्यादिति। इति सर्वोपशमना सक्षेपत आदर्शिता। यथाप्रवृत्तापूर्वकरणाभ्या प्रकृत्यादीना देशोपशमना प्रकृतिस्थित्यनुभागप्रदेशदेशोपशमनारूपेण प्रत्येक मूलप्रकृत्युत्तरप्रकृतिविषयकत्वभेदभिन्नेन चतुर्विधा। देशोपशमना सर्वेषा कर्मणा भवति, एकद्वित्रिचतुरिन्द्रियासज्ञिसंज्ञिपञ्चेन्द्रियतिर्यङ्नारकदेवा मनुष्याश्च यथासभवमपूर्वकरणगुणस्थानपर्यवसाना देशोपशमनया मूलप्रकृतिमुत्तरप्रकृतिं चोपशमयितु समर्थाः। देशोपशमनयोपशमिताना कर्मणामुद्वर्त्तनापवर्त्तनासम्क्रमणरूपाणि करणानि प्रवर्त्तन्ते नान्यानि। दर्शनत्रिकोपशमका विरतास्त्वापूर्वकरणान्तसमय यावद्देशोपशमना कुर्वन्ति, अनन्तानुबन्धिना विस-

---

१. केनत्र कथञ्चित्परिणामह्रासाद्देशविरतोऽविरतिं सर्वविरतो वा देशविरतिं प्रतिपन्नस्तत्र भूयोऽपि पूर्वं प्रतिपन्ना देशविरतिं सर्वविरतिं वा करणरहितोऽपि प्रतिपद्यते एवमकृतकरणोऽनेकशो गमागम करोतीति भाव ॥ २. यस्त्वाभोगप्रतिपत्त्या नष्टकरणो देशविरतेस्सर्वविरतेर्वा परिभ्रष्टो मिथ्यात्वमुपगतस्स भूयोऽपि जघन्येनान्तर्मुहूर्त्तकालेन उत्कर्षेण प्रभूतेन कालेन पूर्वप्रतिपन्नामपि देशविरतिं सर्वविरतिंवा करणद्वयपुरस्सरमेव प्रतिपद्यत इतिभाव ॥ ३. गुणस्थानग्रन्थे पूर्वांकि ॥

योजने चातुर्गतिका अपि स्वापूर्वकरणान्तिमसमय यावद्देशोपशमका । शेषचारित्रमोहनीयप्रकृतीनामुपशमनायां क्षपणाया वा यावदपूर्वकरणगुणस्थानचरमसमयं तावद्देशोपशमना । शेषप्रकृतीनाञ्च सर्वोपशमना न भवत्येव किंतु देशोपशमनैव सापि चाऽपूर्वकरणगुणस्थानं यावत् । अधिक कर्मप्रकृत्यादिभ्यो विज्ञेयमितिदिक् ॥ लक्षणान्तर्गतोदीरणादीना करणविशेषत्वेन ज्ञातत्वादुदयपदार्थं निर्वक्ति–उदयश्चेति । स्थितिक्षयेण प्रयोगेण वा द्विविधोदयो भवति, उदयहेतूनां द्रव्यक्षेत्रकालभवभावरूपाणा प्राप्तौ स्थितेरबाधाकालरूपाया नाशे सति च यः कर्मपुद्गलानां स्वभावत उदयः प्रवर्त्तते स स्थितिक्षयेणोदयः । यः पुनरुदयेऽन्यस्य प्रवर्त्तमाने करणविशेषरूपप्रयोगेणोदयो भवति स प्रयोगेणोदय इत्याशयेनोक्त कर्मपुद्गलानामित्यादिना । प्रायो यत्रोदयस्तत्रोदीरणा यत्रोदीरणा तत्रोदय इति, उदयस्योदीरणासहभावित्वाज्ज्ञानावरणपञ्चकदर्शनावरणचतुष्टयान्तरायपञ्चकसञ्ज्वलनलोभवेदत्रयसम्यक्त्वसम्यङ्मिथ्यात्वरूपविंशतिप्रकृतिं मुक्त्वा शेषाणां उदीरणावदेव साद्यनादिकं भवति । एतासान्तु स्वस्वोदयपर्यवसान उदीरणामन्तरेणापि केवलेनोदयेनावलिकाकालमात्रमनुभवन भवति । विशेषोऽत्रान्यतोविलोकनीय इति ॥

अथ निधत्तिमाह—

**कर्मणामुद्वर्त्तनापवर्त्तनान्यकरणायोग्यत्वेन व्यवस्थापनानुकूलवीर्यविशेषो निधत्तिः ॥**

**कर्मणामिति** । येन वीर्यविशेषेण कर्मणामुद्वर्त्तनापवर्त्तनाभिन्नानि करणानि न प्रवर्त्तन्ते प्रवर्त्तेते च ते तादृशो वीर्यविशेषो निधत्तिनामेत्यर्थः । देशोपशमनावद्वेदस्वामिनावस्थापि । यत्रगुणश्रेणिस्तत्र प्रायो देशोपशमनानिधत्तिनिकाचनायथाप्रवृत्तसङ्क्रमा अपि सम्भवन्ति, तत्र गुणप्रदेशाग्र स्तोकं ततो देशोपशमनाया असङ्ख्येयगुण ततो निधत्तमसङ्ख्येयगुण ततो निकाचितमसङ्ख्येयगुण ततोऽपि यथाप्रवृत्तसङ्क्रमेण सङ्क्रान्तमसङ्ख्येयगुणं भवति । स्वामिनस्तु सर्वेऽप्येकद्वित्रिचतुरिन्द्रियासञ्ज्ञिसञ्ज्ञिपञ्चेन्द्रियतिर्यङ्नारकदेवा मनुष्याश्च यथासम्भवमपूर्वकरणपर्यवसानास्सर्वकर्मणा देशोपशमनास्वामिनः । अथ प्रसङ्गाद्देशोपशमना किञ्चिद्विचार्यते । देशोपशमना मूलप्रकृतीनामष्टानामपूर्वगुणस्थानकादूर्ध्वं गत्वा पतता प्रवर्त्तमाना सादिः, तत्स्थानमप्राप्तानामनादिः, ध्रुवाऽभव्याना, भव्याना त्वध्रुवा देशो-

---

१. मूलोत्तरप्रकृतिविषयउदयो ध्रुवाध्रुवसाद्यनादिरूपतश्चतुर्विधं ज्ञानदर्शनावरणान्तरायाणामुदय क्षीण मोहान्तसमय यावत् मोहस्योपशान्तमोहगुणस्थानक यावत् वेदनीयनामगोत्रायुषा सयोग्यन्तसमय यावज्ज्ञाप्य , तत्र स्थित्युदयमधिकृत्याह स्थितिक्षयणेति । अनुभागमधिकृत्याह प्रायो यत्रेति ॥

पशमनामधिकृत्य मोहनीयस्य चतुःपञ्चषट्सप्ताष्टैकविंशतिभेदेन षट्प्रकृतिस्थानानि, शेषाणि तु अनिवृत्तिबादरे प्राप्यमाणत्वादत्र न सम्भवन्ति । मिथ्यादृष्टिसास्वादनसम्यङ्मिथ्यादृष्टिवेदकसम्यग्दृष्टीनामष्टाविंशतिस्थानं, उद्वलितसम्यक्त्वस्य मिथ्यादृष्टेः सम्यङ्मिथ्यादृष्टेर्वा सप्तविंशतिस्थानम् । उद्वलितसम्यक्त्वसम्यङ्मिथ्यात्वस्यानादिमिथ्यादृष्टेर्वा षड्विंशतिस्थानं, षड्विंशतिसत्कर्मणो मिथ्यादृष्टेस्सम्यक्त्वमुत्पादयतोऽपूर्वकरणात्परतः पञ्चविंशतिस्थानं वेदितव्यं मिथ्यात्वप्रदेशोपशमनाया अभावात् । तथानन्तानुबन्धिनामुद्वलनेऽपूर्वकरणात्परतो विद्यमानस्य चतुर्विंशतिस्थानं, चतुर्विंशतिसत्कर्मणो वा चतुर्विंशतिस्थानं । क्षपितसप्तकस्यैकविंशतिस्थानमिति । नामकर्मणस्तु त्र्युत्तरशतं द्व्युत्तरशतं पण्णवतिः पञ्चनवतिः, त्रिनवतिः, चतुरशीतिर्द्व्यशीतिश्चेति देशोपशमनायोग्यानि । तत्रादिमानि चत्वारि यावदपूर्वकरणगुणस्थानकचरमसमयं तावद्वेदितव्यानि न परतः, शेषाणि त्रीणि एकेन्द्रियाणां भवन्ति श्रेणिं प्रतिपद्यमानानान्तु न सम्भवन्ति शेषाणि स्थानानि अपूर्वकरणगुणस्थानकात्परतो लभ्यन्त इति तानि देशोपशमनाऽयोग्यानि । ज्ञानावरणदर्शनावरणवेदनीयान्तरायाणामेकैकं प्रकृतिस्थानं देशोपशमनायोग्यं तत्र ज्ञानावरणान्तराययोः पञ्चप्रकृत्यात्मकं, दर्शनावरणस्य नवप्रकृत्यात्मकं, वेदनीयस्य द्विप्रकृत्यात्मकं आयुषो द्वे प्रकृतिस्थाने द्वे प्रकृती एका च, तत्राबद्धपरभवायुष्कस्यैका, बद्धपरभवायुषस्तु द्वे, गोत्रस्य द्वे प्रकृतिस्थाने देशोपशमनायोग्ये, एका द्वे चेति, अनुद्वलितोच्चैर्गोत्रस्य द्वे, उद्वलितोच्चैर्गोत्रस्यैकेति ॥

एवं स्थित्यनुभागप्रदेशदेशोपशमनास्थित्यनुभागप्रदेशसंक्रमवत्प्रायो भवत्यतस्साऽन्यत्र द्रष्टव्या ॥

अथ निकाचनामाह—

**करणसामान्यायोग्यत्वेनावश्यवेद्यतया व्यवस्थापनाप्रयोजकवीर्यविशेषो निकाचना ॥**

करणेति । येन वीर्यविशेषेण कर्माणि सकलकरणायोग्यत्वेनावश्यवेद्यतया च व्यवस्थापयति स वीर्यविशेषो निकाचनेत्यर्थः । इयमपि भेदादितो देशोपशमनातुल्यैवावसेयेति ॥

इत्येवं चतुर्विधं बन्धं करणानि च लक्षयित्वाऽथ मूलोत्तरभेदभिन्नं प्रकृतिबन्धं पुण्यपापनिरूपणे निरूपितोत्तरभेदं सम्प्रति मूलभेदप्रदर्शनेन साङ्गं विदधातुकाम आह—

**तत्र मूलप्रकृतिबन्धश्च ज्ञानदर्शनावरणवेदनीयमोहनीयायुर्नामगोत्रान्तरायभेदेनाष्टविधः ॥**

तत्रेति। ज्ञानदर्शनयोर्द्वन्द्वोत्तरमावरणशब्देन तत्पुरुषस्ततस्सर्वेषां द्वन्द्वः। ज्ञानं दर्शनं हि जीवस्य स्वतत्त्वभूतं तदभावे जीवत्वस्यैवायोगात् चेतनालक्षणत्वाज्जीवस्य, ज्ञानदर्शनयोरपि मध्ये ज्ञानं प्रधानं, तद्वशादेव सकलशास्त्रादिविचारसन्ततिप्रवृत्तेः। किञ्च सर्वा अपि लब्धयो जीवस्य साकारोपयुक्तस्य जायन्ते न दर्शनोपयोगयुक्तस्य। अपिच यस्मिन् समये सकलकर्मविमुक्तो जीवस्सजायते तस्मिन् समये ज्ञानोपयोगयुक्त एव, न दर्शनोपयोगयुक्तः, दर्शनोपयोगस्य द्वितीयसमये भावात्। ततो ज्ञान पधानं तदावरण ज्ञानावरणं कर्म, ततस्तत्प्रथममुक्तं। तदनन्तर च दर्शनावरणं, ज्ञानोपयोगाच्च्युतस्य दर्शनोपयोगात्। एते च ज्ञानदर्शनावरणे स्वविपाकमुपदर्शयती यथायोगमवश्य सुखदुःखरूपवेदनीयकर्मविपाकोदयनिमित्ते भवतः, तथा हि ज्ञानावरणमुपचयोत्कर्षप्राप्त विपाकतोऽनुभवन् सूक्ष्मसूक्ष्मतरवस्तुविचारासमर्थमात्मानं जानानः खिद्यते भूरिलोकः, ज्ञानावरणकर्मक्षयोपशमपाटवोपेतश्च सूक्ष्मसूक्ष्मतराणि वस्तूनि निजप्रज्ञया विन्दानो बहुजनातिशायिनमात्मान पश्यन् सुख वेदयते। तथाऽतिनिबिडदर्शनावरणविपाकोदये जात्यन्धादिरनुभवति दु.खसम्मोह वचनगोचरातिक्रान्त, दर्शनावरणक्षयोपशमपटिष्ठतापरिकरितश्च स्पष्टचक्षुराद्युपेतो यथावद्वस्तुनिकुरुम्ब सम्यगवलोकमानो वेदयतेऽमन्दमानन्दसन्दोहम्। तत एतदर्थप्रतिपत्त्यर्थं दर्शनावरणानन्तर वेदनीयग्रहणम्। वेदनीयञ्च सुखदु खे जनयतीत्यभीष्टानभीष्टविषयसम्बन्धे चावश्यं ससारिणा रागद्वेषौ, तौ च मोहनीयहेतुकौ, तत एतदर्थप्रतिपत्तये वेदनीयानन्तर मोहनीयग्रहणं, मोहनीयमूढाश्च जन्तवो बह्वारम्भाः परिग्रहप्रभृतिकर्मोदानासक्ता नरकाद्यायुष्कमारचयन्ति, ततो मोहनीयानन्तरमायुर्ग्रहणम्। नरकाद्यायुष्कोदये चावश्यं नरकगत्यादिनामान्युदयमायान्ति, तत आयुरनन्तरं नामग्रहणम्। नामकर्मोदये च नियमादुच्चनीचान्यतरगोत्रकर्मविपाकोदयेन भवितव्यमतो नामग्रहणानन्तर गोत्रग्रहणम्। गोत्रोदयेन चोच्चैःकुलोत्पन्नस्य प्रायो दानलाभान्तरायादिक्षयोपशमो भवति राजप्रभृतीना प्राचुर्येण दानलाभादिदर्शनात्। नीचै.कुलोत्पन्नस्य तु दानलाभान्तरायाद्युदयो नीचजातीना तथा दर्शनात्, तत एतदर्थप्रतिपत्त्यर्थं गोत्रानन्तरमन्तरायग्रहणमिति। यस्य ज्ञानावरणीय तस्य नियमेन दर्शनावरणीयमस्ति यस्य दर्शनावरणीयमस्ति तस्यापि नियमेन ज्ञानावरणीयमस्ति। यस्य ज्ञानावरणीयं तस्य नियमेन वेदनीयमस्ति, यस्य वेदनीयमस्ति तस्य केवल्यपेक्षया ज्ञानावरणीयं नास्ति, तद्भिन्नापेक्षया चास्ति तत्। मोहक्षये सति यावदनुत्पन्नकेवलज्ञानं तस्य क्षपकस्य ज्ञानावरणीयमस्ति मोहनीयञ्च नास्ति, अक्षपकस्य तूभयमस्ति। मोहनीयसत्त्वे ज्ञानावरणस्यावश्यम्भावनियमात्। ज्ञानावरणेन सह वेदनीयवदायुर्नामगोत्राणामपि भाव्यम्। अन्तरायस्य तु दर्शनावरणीयव-

स्परस्परं व्याप्यव्यापकभावो विज्ञेयः । दर्शनावरणीयेन समं शेषकर्मणां भावाभावविचारो ज्ञानावरणीयवदेव । वेदनीयेन सहाक्षीणमोहापेक्षया नियमेन मोहनीयमस्ति क्षीणमोहापेक्षया तु मोहनीयं नास्ति, यस्य तु मोहनीयमस्ति तस्य नियमेन वेदनीयमस्ति । एवं वेदनीयेन सहायुर्नामगोत्राणां परस्परं व्याप्यव्यापकभावो विज्ञेयः । अन्तरायस्तु वेदनीयसत्त्वेऽकेवलिना नियमेनास्ति, केवलिनान्तु नास्ति । अन्तरायसत्त्वे च वेदनीयं नियमेन वर्त्तते । यस्य मोहनीयमस्ति तस्य नियमेनायुरस्ति यस्यायुरस्ति तस्याक्षीणमोहस्य मोहनीयमस्ति क्षीणमोहस्य तु नास्ति । एवमेव यस्य मोहनीयं तस्य नामगोत्रान्तरायाणि नियमात्सन्ति, यस्य तु तानि सन्ति तस्याक्षीणमोहस्य मोहनीयमस्ति परस्य नास्ति । यस्यायुरस्ति तस्य नियमेन नामगोत्रे यस्य नामगोत्रे तस्य नियमेनायुरस्ति। यस्य त्वायुस्तस्यान्तरायः केवल्यपेक्षया नास्ति, अकेवल्यपेक्षयात्वस्ति । नामगोत्रयोश्च परस्परं व्याप्यव्यापकभावनियमः, नामसत्त्वेऽन्तरायस्तु क्वचित् स्यात्क्वचिन्न स्यात् । अन्तरायसत्त्वे तु नामावश्यमस्ति । एवं गोत्रान्तराययोरपि भाव्यमिति ॥

ज्ञानावरणीयादीनामवान्तरभेदा एव प्रकृतिबन्धस्योत्तरभेदा विंशतियुतशतरूपा इत्याह–

**एषामवान्तरभेदा विंशत्युत्तरशतात्मका बोध्याः । विवृताश्चैते पुण्यपापतत्त्वयोः । उदये च सम्यक्त्वमोहनीयमिश्रमोहनीयसहिता द्वाविंशत्युत्तरशतभेदा भवन्ति । सत्तायान्त्वष्टपञ्चाशदुत्तरशतभेदाः स्युः । विवृताश्चैते सर्वे कर्मग्रन्थे ॥**

एषामिति । ज्ञानावरणीयादिकर्मणामित्यर्थः । के ते भेदा इत्यत्राह विवृता इति, एते–भेदाः, उदये कियन्तो भेदा इत्यत्राहोदये चेति । अयं भावः, बन्धोदययोश्चिन्त्यमानयोर्बन्धननामानि सङ्घातननामानि च स्वस्वशरीरान्तर्गततया विवक्ष्यन्ते, न तु पृथक्तया, तथा वर्णचतुष्टयस्योत्तरभेदाः क्रमेण पञ्चद्विपञ्चाष्टसंख्याका बन्धोदययोर्न पृथक् विवक्षणीयाः, परन्तु वर्णगन्धरसस्पर्शाश्चत्वार एव । बन्धे चिन्त्यमाने च सम्यक्त्वसम्यङ्मिथ्यात्वे न गृह्येते तयोर्बन्धाभावात् । तथा च बन्धचिन्तने बन्धनपञ्चकसङ्घातनपञ्चकवर्णादिषोडशकानि सत्तागतनाम्नस्त्रिनवतेरपनीयन्ते शेषाः सप्तषष्टिर्गृह्यन्ते, मोहनीयप्रकृतयश्च सम्यक्त्वसम्यङ्मिथ्यात्वहीनाः षड्विंशतिस्ततस्सर्वप्रकृतिसंख्यायोगे बन्धे विंशत्युत्तरशतं प्रकृतयो भवन्ति । उदये च चिन्त्यमाने सम्यक्त्वमिश्रे अप्युदयमायात इति ते अपि परिगृह्येते, तस्मादुदये द्वाविंशशतमित्यभिप्रायेणोक्तं सम्यक्त्वेत्यादि । सत्तायां कियन्त इत्यत्राह

सत्तायामित्विति । सत्तायान्तु चिन्त्यमानायां बन्धनपञ्चकसंघातनपञ्चकवर्णादिषोडशकञ्च संयोज्य प्रकृतीनामष्टचत्वारिंशं शतं विज्ञेयम् । यदा तु पुनर्गर्गर्षिशिवशर्मप्रभृत्याचार्याणां मतेनाष्टपञ्चाशदधिकं प्रकृतिशतं सत्तायामधिक्रियते तदा बन्धनानि पञ्चदश विवक्ष्यन्ते ततोऽष्टचत्वारिंशदधिकस्य प्रकृतिशतस्योपरि बन्धनगततादृशप्रकृतयोऽधिकाः प्राप्यन्ते तदा भवत्यष्टपञ्चाशदुत्तरं प्रकृतिशतमितिभावः । तदेतत्सर्वं कर्मग्रन्थादौ दर्शितमित्याह विवृता इति, श्रीविजयदेवेन्द्रसूरिमहर्षिकृते, कर्मग्रन्थे–कर्मविपाकादिग्रन्थपट्ट इतिभावः ॥

अथ ज्ञानावरणस्वरूपमाह—

## आत्मनो विशेषबोधावरणकारणं कर्म ज्ञानावरणम् ॥

आत्मन इति । सामान्यविशेषात्मके वस्तुनि विशेषग्रहणात्मको यो बोधस्तज्ज्ञानं तदावरणकारणं यत्कर्म तज्ज्ञानावरणमित्यर्थः । सामान्यविशेषात्मकवस्तुनिष्ठविशेषविषयकबोधावरणकारणत्वे सति कर्मत्वं लक्षणं, अत्र सामान्यविशेषात्मकेति विशेषणं वस्तुनस्सामान्यविशेषात्मकत्वमिति दर्शयितुं । तेन सामान्यरूपत्वमेव विशेषरूपत्वमेव वा वस्तुनस्स्वरूपमिति पक्षो निरस्तो दर्शनावरणवारणाय वस्तुनिष्ठविशेषविषयकेतिपदम् । अत्र विशेषहेतवो ज्ञानस्य ज्ञानवतां ज्ञानसाधनानाञ्च प्रदोषो निह्नवो मात्सर्यमन्तराय आसादनमुपघातश्च । मत्यादिज्ञानपञ्चकं मोक्षं प्रति मूलसाधनमित्युक्तौ कस्यचिदनभिव्याहारो योऽन्तर्दौर्जन्यपरिणामः स प्रदोषः । यत्किञ्चित् परनिमित्तमभिसन्धाय ज्ञानिनो ज्ञानस्य वाऽपलापो निह्नवः । दानयोग्याय दानार्हमपि भावितं ज्ञानं यस्मान्न दीयते तन्मात्सर्यम् । कालुष्यादिना ज्ञानस्य व्यवच्छेदकरणमन्तरायः । मनसा वचसा कायेन वा ज्ञानस्य ज्ञानिनो वाऽनादर आसादनम्, प्रशस्तज्ञानदूषणमुपघात इति । इत्थमेव च दर्शनविषया हेतवो दर्शनपदप्रक्षेपेणैत एव भाव्याः ॥

अथ दर्शनावरणस्वरूपमाह—

## आत्मनस्सामान्यबोधावरणसाधनं कर्म दर्शनावरणम् ॥

आत्मन इति । सामान्यविशेषात्मके वस्तुनि सामान्यग्रहणात्मको यो बोधो दर्शनं

---

१. ज्ञानदर्शनयोस्तद्वत्तद्धेतूनाञ्च ये किल विघ्ननिह्नवपैशुन्याऽऽशातनाघातमत्सराः, ते ज्ञानदर्शनावरण कर्महेतव आस्रवाः ॥ इति ॥

तदावरणकारण कर्मेत्यर्थः । वस्तुनिष्ठसामान्यविषयकबोधावरणकारणत्वे सति कर्मत्वं लक्षणम् ॥ ज्ञानदर्शनावरणयोरालस्यस्वपनशीलतानिद्रादरप्राणातिपातादयोऽपि हेतवोऽवसेयाः ॥

वेदनीयं लक्षयति—

**सुखदुःखानुभवप्रयोजकं कर्म वेदनीयम् ।**

सुखेति । यद्यपि वेदनीयत्वमनुभवयोग्यत्वं तच्च सर्वकर्मणा तथापि पङ्कजादिशब्दवदस्य शब्दस्य रूढिविषयत्वात्सातासातरूपमेव कर्म वेदनीयमुच्यते शास्त्रव्यवहारात् । अत एव चानुभवप्रयोजकमित्यनुक्त्वा सुखदुःखानुभवप्रयोजकमित्युक्तम् । तत्र दुःखशोकतापाक्रन्दनवधपरिदेवनानि स्वपरोभयस्थान्यसद्वेद्यस्य भूतव्रत्यनुकम्पादानसरागसंयमादियोगक्षान्तिशौचानि सद्वेद्यस्य हेतवः । विरोधिद्रव्योपनिपातादभिलषितवियोगादनिष्टश्रवणान्निष्ठुरश्रवणादात्मनः पीडालक्षणः परिणामो दुःखम् । अनुग्राहकबान्धवादिसम्बन्धविच्छेदे वैक्लव्यविशेषः शोकः । परीवादपरिभवपरुषवचनादिश्रवणनिमित्तापेक्षः कलुषान्तःकरणस्य तीव्रानुशयपरिणामस्तापः । परितापजन्याश्रुपातप्रचुरविलापाङ्गविकाराद्यभिव्यङ्ग्यमाक्रन्दनम् । प्राणिप्राणवियोजनं वधः । सङ्क्लेशप्रवणं स्वपरानुग्रहाभिलाषविषयमनुकम्पाप्रचुरं परिदेवनम् । यद्यपि शोकादयस्सर्वे दुःखजातीया एव तथापि यथा गौरित्युक्ते अनिर्ज्ञातविशेषे तत्प्रतिपादनाय खण्डमुण्डशुक्लाद्युपादानं क्रियते तथा दुःखमित्युक्ते विशेषाज्ञानात्कतिपयविशेषप्रदर्शनेन तद्विवेकप्रतिपत्तये शोकादीनामुक्तिर्बोध्या । एतानि च दुःखादीनि कदाचित् क्रोधाद्याविष्टेनात्मना स्वस्मिन् कषायवशात्कदाचित्परस्मिन् जनयति कदाचिच्चाधमर्णसमवाये सत्युत्तमर्णस्य तन्निरोधपरस्य भुजिक्रियानिवृत्तावुभयत्र क्षुत्कृतानि दुःखादीनि सम्भवन्ति । आयुर्नामगोत्रोदयवशाद्भवन्तीति भूतानि प्राणिनः, अहिंसादिव्रताभिसम्बद्धाः व्रतिनस्तेष्वनुग्रहार्द्रीकृतचेतसोऽनुकम्पनमनुकम्पा । परानुग्रहबुद्ध्याऽऽत्मीयवस्त्वतिसर्जनं दानम् । सञ्ज्वलनकषायसहवर्त्तिनः पुरुषस्य प्राणिवधाद्युपरतिस्सरागसंयमः, आदिना संयमासंयमाकामनिर्जराबालतपोयोगा ग्राह्याः । अनात्यन्तिकी विरतिस्संयमासंयमः । विषयनिवृत्तिमात्माभिप्रायेणाकुर्वतः पारतन्त्र्याद्भोगनिरोधोऽकामनिर्जरा । यथार्थप्रतिपत्त्यभावादज्ञानिनस्तपो बालतपः । लोकाभिमतनिरवद्यक्रियानुष्ठानं योगः । मनोवाक्कायैर्धर्मप्रणिधानात्क्रोधनिवृत्तिः क्षान्तिः । लोभतृष्णादिभिरुपरमश्शौचमित्येवं कारणैस्सद्वेद्यं भवतीति ॥

१ दुःखशोकवधास्तापक्रन्दने परिदेवनम् । स्वान्योभयस्था स्युरसद्वेद्यस्यामी हेतवः ॥ २. देवपूजागुरूपास्तिपात्रदानदयाक्षमा । सरागसंयमो देशसंयमोऽकामनिर्जरा । शौचं बालतपश्चेति सद्वेद्यस्य स्युराश्रवाः ॥

मोहनीयं कर्म स्वरूपयति—

**रागद्वेषादिजनकं कर्म मोहनीयम् ॥**

**रागेति** । मोहयति सदसद्विकलं करोत्यात्मानमिति मोहनीयम् । मोहाय–हेयोपादेयविवेकाभावाय चित्तव्याकुलतायै मिथ्यात्वकषायविषयाभिलाषाय वा योग्यं मोहनीयम् । अत एवात्मा रक्तो द्विष्टश्च भवतीत्याशयेन रागद्वेषादिजनकत्वे सति कर्मत्व लक्षणमुक्तं, यावदेव हि मोहनीयं तावद्दोषाः, तत्क्षये चावश्यम्भावी कर्मक्षयोऽतो रागद्वेषयोः प्रधानं कारणमिदम् । आदिना कामगुणा ग्राह्याः, वेदस्य मोहनीयान्त पतितत्वात् । केवलिनां श्रुतस्य सङ्घस्य धर्मस्य देवानाञ्चावर्णवादा दर्शनमोहनीयस्य हेतवः । केवलिनां विषयेऽवास्तविकदोषोद्भावनं, असभ्यवाक्प्रयोगो निन्दाप्रकटनमित्यादय' केवल्यवर्णवादाः । तीर्थकरोपदिष्टयथास्थितज्ञेयानुसारिणि साङ्गोपाङ्गे श्रुतेऽविदग्धप्राकृतभाषाप्रचुरमिदं व्रतकायप्रायश्चित्तप्रमादोपदेशपुनरुक्तताबहुलं कुत्सितापवादप्रायमित्यादिभाषणं श्रुतावर्णवादः । चतुर्विधे सघे सयतादिविषये सचित्तादिव्यवहारपरायणाः परिपेलवशाह्यशौचाचारा जन्मान्तरकृतकर्मोदयजन्यक्लेशोल्लुञ्चनातापनादिदुःखानुभविनः कलहकारिणोऽसहिष्णवः प्रागदत्तदाना भूयोऽपि दुःखिता एव भविष्यन्तीत्येवरूपा अवर्णवादाः, एवमेव श्रावकप्रभृतिसघादिषु भाव्यम् । क्रोधादिकषायोदयादात्मनश्शब्दादिविषयेषु गार्ध्योदयस्तीव्रपरिणामाश्चारित्रमोहनीयस्य हेतवो भाव्याः ॥

अथायुषस्स्वरूपमाह—

**गतिचतुष्टयस्थितिप्रयोजकं कर्म आयुः ॥**

---

१. वीतरागे श्रुते सघे धर्मे सर्वसुरेषु च । अवर्णवादिता तीव्रमिथ्यात्वपरिणामिता । सर्वज्ञसिद्धदेवापह्नवो धार्मिकदूषणम् । उन्मार्गदर्शनानर्थाऽऽग्रहोऽसयतपूजनम् । असमीक्षितकारित्व गुर्वादिष्ववमानना । इत्यादयो दृष्टिमोहस्याश्रवा परिकीर्तिता ॥ २. कषायोदयतस्तीव्र परिणामो य आत्मन । चारित्रमोहनीयस्य स आश्रव उदीरित ॥ उत्प्रासन सकन्दर्पोपहासोहासशीलता, बहुप्रलापो दैन्योक्तिर्हास्यस्यामी स्युराश्रवा, देशादिदर्शनोत्सुक्य चित्रे रमणखल्ने । परचित्तावर्जना चेत्याश्रवा कीर्तिता रते ॥ असूयापापशीलत्व परेषा रतिनाशनम् । अकुशलप्रोत्सहन चारतेराश्रवा अमी ॥ परशोकाविष्करण स्वशोकोत्पादशोचने । रोदनादिप्रसक्तिश्च शोकस्यैते स्युराश्रवा ॥ स्वय भयपरीणाम परेषामथ भापनम् । त्रासन निर्दयत्व च भय प्रत्याश्रवा अमी ॥ चतुर्वर्णस्य सघस्य परिवादजुगुप्सने । सदाचारजुगुप्सा च जुगुप्साया स्युराश्रवा ॥ ईर्ष्याविषादगार्ध्ये च मृषावादोऽतिवक्रता । परदाररतासक्ति स्त्रीवेदस्याश्रवा इमे ॥ स्वदारमात्रसतोषोऽनीर्ष्या मन्दकषायता । अवक्राचारशीलत्व पुवेदस्याश्रवा इति ॥ स्त्रीपुमानङ्गसेवोग्रा कषायास्तीव्रकामना । पाखडिस्त्रीव्रतभंग षंढवेदाश्रवा अमी ॥ साधूना गर्हणा धर्मोन्मुखता विघ्नकारिता । मधुमासविरतानामविरत्यभिवर्णनम् ॥ विरताविरताना चान्तरायकरण मुहु । अचारित्रगुणाख्यान तथा चारित्रदूषणम् ॥ कषायनोकषायाणामन्यस्थानामुदीरणम् । चारित्रमोहनीयस्य सामान्येनाश्रवा अमी ॥

**गतिचतुष्टयेति ।** देवतिर्यङ्मनुजनरकरूपगतिचतुष्टयेत्यर्थः । स्वस्वकृतकर्मभिः प्राप्तनारकादिगतितो निर्गन्तुमिच्छतोऽपि जन्तोः प्रतिबन्धकतया यदा गच्छति न [illegible] निष्क्रमणायावकाशं ददाति स्थितिपर्यन्तञ्च तत्रैव तं स्थापयति तदायुःकर्मेत्यर्थः । गतिचतुष्टयस्थितिप्रयोजकत्वे सति कर्मत्वं लक्षणम् । प्रभूतप्राणिप्राणव्यपरोपणमनवरतखण्डनीपेषणीचुल्ल्युदकुम्भप्रमार्जनीव्यापारो बाह्याभ्यन्तरवस्तुषु ममत्वं कुणपाहाराभ्यवहारित्वं कषायोदयात्तीव्रपरिणामो मिथ्यादर्शनश्लिष्टाचारत्वमुत्कृष्टमानत्वं शैलभेदसदृशरोषतातीव्रलोभानुरागपरपरितापप्रणिधानवधबन्धनाभिनिवेशानृतवचनप्रस्वादनाविरतमैथुनोपसेवास्थिरवैरावशेन्द्रियनिरनुग्रहस्वभावकृष्णलेश्यापरिणामरौद्रध्यानादयो नरकायुषो हेतवः । मनोवाक्कायशठत्वमिथ्यात्वावष्टम्भाधर्मदेशनाकूटकर्मनीलकापोतलेश्यापरिणामार्त्तध्यानादयस्तिर्यगायुषो हेतवः । अल्पारम्भपरिग्रहस्वभावमार्दवार्जवमिथ्यादर्शनालिङ्गिताविनीतता वालुकाराजिसदृशरोषस्वागताद्यभिलापलोकयात्राऽनुग्रहौदासीन्यगुरुदेवतातिथिपूजासंविभागशीलताकापोतलेश्यापरिणामधर्मध्यानादयो मनुष्यायुषो हेतवः । सरागसंयमो देशविरतिरकामनिर्जराबालतपःकल्याणमित्रसम्पर्कधर्मश्रवणतपोभावनापात्रदानतपनलेश्यापरिणामाव्यक्तसामायिकाविराधितसम्यग्दर्शनादयो दैवायुषो हेतव इति ॥

सम्प्रति नामकर्माऽऽचष्टे—

**नरकगत्यादिनानापर्यायप्रयोजकं कर्म नामकर्म ॥**

**नरकेति ।** यद्धि जीवं नारकोऽयं तिर्यग्योनिकोऽयं मनुजोऽयं देवोऽयं एकेन्द्रियोऽयं द्वीन्द्रियोऽयं त्रीन्द्रियोऽयं चतुरिन्द्रियोऽयं औदारिकोऽयं वैक्रियोऽयं हृस्ववानयं पादवानयमित्यादिव्यपदेशैरनेकधा नामयति–करोति तन्नामकर्मेत्यर्थः । कायवाङ्मनःकौटिल्यं

---

१. पंचेन्द्रियप्राणिवधो बह्वारंभपरिग्रहो । निरनुग्रहता मांसभोजने स्थिरवैरता ॥ रौद्रध्यानं मिथ्यात्वानन्तानुबन्धिकषायता । कृष्णनीलकपोताश्च लेश्या अनृतभाषणम् ॥ परद्रव्यापहरणं मुहुर्मैथुनसेवनम् । अवशेन्द्रियता चेति नरकायुष आश्रवाः ॥ उन्मार्गदेशना मार्गप्रणाशो गूढचित्तता । आर्त्तध्यानं सशल्यत्वं मायारंभपरिग्रहौ ॥ शीलव्रते सातिचारो नीलकापोतलेश्यता । अप्रत्याख्यानकषायास्तिर्यगायुष आश्रवाः ॥ अल्पौ परिग्रहारंभौ सहजे मार्दवार्जवे । कापोतपीतलेश्यात्वं धर्मध्यानानुरागिता । प्रत्याख्यानकषायत्वं परिणामश्च मध्यमः । संविभागविधायित्वं देवतागुरुपूजनम ॥ पूर्वालापप्रियालापौ ज्ञानप्रज्ञापनीयता । लोकयात्रासु माध्यस्थं मानुषायुष आश्रवाः ॥ सरागसंयमो देशसंयमोऽकामनिर्जरा कल्याणमित्रसंपर्को धर्मश्रवणशीलता ॥ पात्रे दानं तपः श्रद्धा रत्नत्रयाविराधना । मृत्युकाले परीणामो लेश्ययोः पद्मपीतयोः ॥ बालं तपोऽग्नितोयादि साधनोद्बन्धनानि च । अव्यक्तसामायिकतालं देवस्यायुष आश्रवाः ॥

विसंवादो मिथ्यादर्शनं मायाप्रयोगो पिशुनताऽस्थिरचित्ततादयश्चाशुभस्य हेतवः । कायवाङ्मनोऋजुत्वमविप्रलम्भो धार्मिकदर्शनसम्भ्रमस्ससारभीरुता प्रमादवर्जनं सद्भावार्पणं सम्यक्त्वमार्जवादयश्च शुभस्य हेतव इति ॥

अथ गोत्रमाख्याति—

**उच्चनीचजातिव्यवहारहेतुः कर्म गोत्रम् ॥**

**उच्चेति** । गूयते सशब्द्यत उच्चावचैश्शब्दैर्यत् तद्गोत्रं, उच्चनीचकुलोत्पत्तिलक्षणपर्यायविशेषवेद्य कर्म, पूज्योऽयमपूज्योऽयमित्याद्व्यपदेशरूपां गा त्रायतेऽर्थाविसंवादेन पालयति यत्तद् गोत्रम् । तथाचोच्चनीचान्यतरविषयकव्यवहारासाधारणकारणत्वे सति कर्मत्वं लक्षणम् । उभयगोत्रसङ्ग्रहायान्यतरेति । तिर्यग्गत्यादावतिव्याप्तिवारणायासाधारणेति । तत्र परनिष्ठयथार्थायथार्थान्यतरदोषोद्भावनेच्छा, स्वनिष्ठयथार्थायथार्थान्यतरगुणोद्भावनाभिप्रायः, सदसद्गुणच्छादनोद्भावने जातिकुलरूपबलश्रुताज्ञैश्वर्यतपोमदपरावज्ञानोत्प्रासनकुत्सनादयो नीचैर्गोत्रस्य कारणानि । आत्मनिन्दापरप्रशंसे गुणोत्कृष्टेषु विनयेन वृत्तिर्विज्ञानादिभिरुत्कृष्टस्यापि सततस्तत्कृतमदविरहो जातिकुलरूपबलवीर्यज्ञानैश्वर्यतपोविशेषवतोऽपि स्वोत्कर्षाप्रणिधान परावज्ञानौद्धत्यनिन्दासूयोपहासपरपरिवादनिवृत्तिरित्यादय उच्चैर्गोत्रस्य हेतवः ॥

अथाष्टममन्तरायकर्म लक्षयति—

**आत्मनो वीर्यादिप्रतिबन्धकं कर्मान्तरायकर्म ॥**

**आत्मन इति** । दातृप्रतिगृहीत्रोरन्तर्मध्ये एत्योदयद्वीर्थं प्रत्युत्पन्नं वस्तु यदुपहन्यते आगामिनो वा लब्धव्यस्य मार्गं उपहन्यते च तदन्तरायं कर्मेत्यर्थः । आदिना भोगोपभोगदानलाभा गृह्यन्ते । वीर्यादीनां विघ्नकरण ज्ञानप्रतिषेधसत्कारोपघातादयोऽस्य हेतवः । अत्र प्रदोषादयो विशेषहेतवो ज्ञानावरणादीनां प्रदेशबन्ध एव हेतव इति न नियम, एभि-

१. मनोवाक्कायवक्रत्व परस्य विप्रतारणम् । मायाप्रयोगोमिथ्यात्व पैशुन्य चलचित्तता ॥ सुवर्णादि प्रतिच्छन्दकरण कूटसाक्षिता । वर्णगन्धरसस्पर्शान्यथोत्पादनानि च । अङ्गोपाङ्गच्यावनानि यन्त्रपञ्जरकर्म च । कूटमानतुलाकर्मान्यनिन्दाऽत्मप्रशंसनम् ॥ हिंसानृतस्तेयाब्रह्ममहारम्भपरिग्रहा ॥ परुषासभ्यवचनशुचिवेषादि नामद ॥ मौखर्याक्रोशौ सौभाग्योपघाता कार्मणक्रिया । परकौतूहलोत्पाद परहास्यविडम्बने ॥ वेश्यादीनामलङ्कारदान दावाग्निदीपनम् । देवादिव्याजाद्गन्धादिचौर्यंतीव्रकषायता ॥ चैत्यप्रतिश्रयारामप्रतिमाना विनाशनम् । अङ्गारादिक्रिया चेत्यशुभस्य नाम्न आश्रव । एतएवान्यथाल्पास्तथा संसारभीरुता । प्रमादहान सद्भावार्पण क्षान्त्यादयोऽपि च ॥ दर्शने धार्मिकाणाश्च संभ्रम स्वागतक्रिया । परोपकारसारत्वमाश्रवा शुभनामनि ॥
२. परस्य निन्दावज्ञोपहासास्सद्गुणलोपनम् । सदसद्दोषकथनम त्मनस्तु प्रशंसनम् ॥ सदसद्गुणशंसा च स्वदोषाच्छादन तथा । जात्यादिभिर्मदश्चेति नीचैर्गोत्राश्रवा अमी ॥ नीचैर्गोत्राश्रवविपर्यासो विगतगर्वता । वाक्कायचित्तैर्विनय उच्चैर्गोत्राश्रवा अमी ॥

ज्ञानावरणे बध्यमाने युगपदितरेषामपि कर्मणां बन्धात्तथापि अनुभागविशेषे नियमेन हेतुतया विशिष्य हेतवो दर्शिताः ॥

अथ मूलकारो मूलप्रकृतीनां स्थितिमाह—

**ज्ञानदर्शनावरणवेदनीयान्तरायाणां त्रिंशत्सागरोपमकोटीकोटिकालं यावत्, मोहनीयस्य सप्ततिसागरोपमकोटीकोटिकालं यावत्, विंशतिसागरोपमकोटीकोटिकालं यावन्नामगोत्रयोः, आयुषश्च त्रयस्त्रिंशत्सागरोपमकालं यावत्परास्थितिर्बोध्या। एवमेव वेदनीयस्य द्वादशमुहूर्त्ता, नामगोत्रयोरष्टमुहूर्त्ता, शेषाणाञ्चान्तर्मुहूर्त्तमपरा स्थितिरिति ॥**

॥ इतिबन्धतत्त्वम् ॥

ज्ञानेति । त्रिंशदिति । उत्कृष्टसङ्क्लेशे स्थितस्य मिथ्यादृष्टेरियं परास्थितिः । सप्ततिसागरोपमेति । मिथ्यात्वापेक्षयेयम् । सम्यक्त्वमिथ्यात्वयोरुत्कर्षतोऽप्यन्तर्मुहूर्त्तमानत्वात्, कषायस्य चत्वारिंशत्सागरोपमकोटिकोटिप्रमाणत्वात् । नोकषायाणाञ्च विंशतिसागरोपमकोटीकोटिप्रमाणत्वात् । विंशतीति । नरकतिर्यग्गत्येकेन्द्रियादिजात्यपेक्षयेयम् । नीचैर्गोत्रापेक्षया च गोत्रस्य तावती स्थितिः । त्रयस्त्रिंशदिति । देवनरकायुषोऽपेक्षयेयम् । तत्र ज्ञानावरणादिचतुर्णामबाधाकालश्च त्रीणि वर्षसहस्राणि; एतद्धीना कर्मस्थितिरनुभवयोग्या–कर्मदलिकनिषेकः, ज्ञानावरणीयादिकं हि कर्म उत्कृष्टस्थितिकं बद्धं सद्बन्धसमयादारभ्य त्रीणि वर्षसहस्राणि यावन्न किञ्चिदपि जीवस्य बाधां स्वोदयत उत्पादयति, तावत्कालमध्ये दलिकनिषेकस्याभावात् तत ऊर्ध्वं हि दलिकनिषेकः, निषेको नाम कर्मपुद्गलानामनुभागरचना, स निषेकः प्रथमस्थितौ प्रभूतो द्वितीयस्थितौ विशेषहीन इत्येवं क्रमेण यावच्चरमसमयं रचना । द्वादशमुहूर्त्ता इति, सातवेदनीयस्य सकषायस्येदं, इतरस्य तु प्रथमसमये बन्धो द्वितीयसमये वेदनं तृतीयसमये त्वकर्मीभवनमिति, अष्टमुहूर्त्ता इति, यशःकीर्त्युच्चैर्गोत्रापेक्षयेदम् । शेषाणामिति ज्ञानावरणदर्शनावरणमोहनीयायुरन्तरायाणामित्यर्थः । पञ्चानां ज्ञानावरणानां चक्षुर्दर्शनावरणादीनां चतुर्णां दर्शनावरणानां उदयापेक्षया सम्यक्त्वसम्यङ्मिथ्यात्वयोस्संज्वलनलोभस्य पञ्चानामन्तरायप्रकृतीनां तिर्यगायुषश्चापेक्षयेयं स्थितिरिति । इतरासान्तु प्रकृतीनां जघन्योत्कृष्टस्थितयस्तत्तत्प्रकृतिनिरूपण एवोक्ता इति दिक् । अथ बन्धतत्त्वं निगमयतीतीति ॥

इति तपोगच्छनभोमणिश्रीमद्विजयानन्दसूरीश्वरपट्टालङ्कारश्रीमद्विजयकमलसूरीश्वरचरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण लब्धिसूरिणा विनिर्मितस्य तत्त्वन्यायविभाकरस्य स्वोपज्ञायां न्यायप्रकाशव्याख्यायां बन्धनिरूपणनामा

॥ नवमः किरणः समाप्तः ॥

## अथ दशमः किरणः ॥

तदेवं बन्धविगमोपायभूतसंवरनिर्जरानिरूपणोत्तरकालं बन्धं प्ररूप्य तत्प्रतिद्वन्द्विभूतमवसरप्राप्तमोक्षतत्त्वं निरूपयति—

**कृत्स्नकर्मविमुक्त्याऽऽत्मनः स्वात्मन्यवस्थानं मोक्षः ॥**

कृत्स्नेति । कृत्स्नं निखिलं यत्कर्म मूलोत्तरप्रकृतिभेदभिन्नं तस्य या विमुक्तिरात्मप्रदेशेभ्योऽत्यन्तमपगमस्तयाऽऽत्मनो यत्स्वात्मन्यवस्थानं स्वस्वभावेन वर्त्तनं स मोक्ष इत्यर्थः । विमुक्तिपदेन कृत्स्नस्य कर्मपुद्गलस्य कर्मत्वेन रूपेण क्षयोऽत्र विवक्षितो न द्रव्यत्वेन, तन्मुखेन तस्य नित्यत्वात्, कर्मत्वेनैव तस्य नाशात्, कर्मयोग्यपुद्गलेष्वात्मना परिगृहीतेष्वेव कर्मत्वपर्यायोत्पादेन तस्मादत्यन्तमपगतेषु तेषु तत्पर्यायनाशेन तद्रूपेण तेषामपि नाशात् । ननु पौद्गलिककर्मप्रकृतीनामेव किं निरासो मोक्षः, उतौपशमिकक्षायोपशमिकौदयिकक्षायिकपारिणामिकानां भावानामपीत्याशङ्कायामाहाऽऽत्मन इति, तथा च स्वस्य यत्स्वरूपं तस्मिन्नवस्थानं वर्त्तनमित्यर्थः, तेन केवलसम्यक्त्वज्ञानदर्शनानि जीवस्य स्वरूपं तद्रूपेणाऽऽत्मनोऽवस्थानं मोक्षः, एते च भावाः क्षायिकाः, औपशमिकक्षायोपशमिकौदयिकानान्तु सर्वथा अभाव एवेति सूचितम्, कथमेषामभाव इत्यत्राह विमुक्त्येति, कर्मत्वेन पुद्गलसत्त्वे ह्युपशमादयः सम्भवन्ति, तस्यैव विमुक्त्या तदाधाराणां तेषां सम्भव एव नास्ति, यस्तु न तदाधारः क्षायिकादिर्भावस्सोऽस्त्येव त्रिविधदर्शनमोहनीयादीनामात्यन्तिकक्षयेणैव केवलसम्यक्त्वादीनां भावादिति भावः । एतेन सर्वथाऽऽत्माभावो मोक्ष इति निरस्तं मोक्षाधारपदार्थस्याऽऽवश्यकत्वात् । न च केवलसम्यक्त्वज्ञानदर्शनानामेव यदि सत्त्वं तर्ह्यनन्तवीर्यसुखादीनामपि निवृत्तिप्रसङ्ग इति वाच्यम् । तदविनाभावित्वेन तेषामत्रैवाऽन्तर्गतत्वात्, अनन्तसामर्थ्याभावे हि नानन्तावबोधस्सम्भवति, सुखमपि च न ज्ञानातिरिक्तं किञ्चिदपि तु ज्ञानविशेषरूपमेव, एवं सिद्धत्वास्तित्वादिभावा अपि तदविनाभाविन एव, भव्यत्वन्तु केवलसम्यक्त्वादिनिष्पत्तिविनाशित्वेन तदुत्पत्तौ नास्त्येवेति भावः । नन्वात्माभाव एव मोक्षः, यथा हि संसारो नारकतिर्यङ्मनुष्यदेवत्वमेव, नान्यः, नारकादिपर्यायभिन्नश्च न कोऽपि जीवः, कदाचिदपि तद्भिन्नत्वेन जीवस्यानुपलब्धेः, ततो नारकादिभावनाशे जीवस्य स्वस्वरूपनाशात्सर्वथा जीवाभाव एव प्राप्त इति चेन्न, पर्यायमात्रनाशे पर्यायिणस्सर्वथा नाशस्यानिष्टत्वात्, नहि कनककुण्डलादिपर्यायनाशे स्वर्णस्य

१. धर्मिणमात्मानं विना सदनुष्ठानमोक्षादीनां विचारायोग्यत्वात् नहि वन्ध्यासुतस्याभावे तन्निष्ठगुरुत्वसुरूपत्वादीन् कश्चिदारभते चिन्तयितुमिति भावः ॥

नाशः कस्यापीष्टः । न च संसारः कर्मकृतः, ततस्तन्नाशे संसारो नश्यति तथा तन्नाशे च जीवस्यापि नाश एवेति वाच्यम्, कारणव्यापकयोरेव कार्यव्याप्यनिवर्त्तकत्वात् संसारश्च कर्मकार्यमतस्तन्नाशे तन्नाशो युक्तः, जीवस्तु तु न कर्मकृतः, अनादिकालप्रवृत्तत्वात् अतः कर्मनाशे न तस्य नाशः । विकारानुपलम्भाच्च न सर्वथा विनाशधर्मा, दृश्यन्ते हि मुद्गरादिना ध्वस्तस्य घटस्य कपाललक्षणा विनाशधर्माः, न तथा जीवस्यातो नित्यत्वं तद्धर्मत्वाच्च मोक्षस्यापि नित्यत्वम् ॥ ननु स्वात्मन्यवस्थानमित्यनेन ज्ञानादिमत्त्वं मुक्तस्योक्तं तन्न सङ्गच्छते ज्ञानकारणाभावात्, ज्ञाने हि शरीरेन्द्रियादिकं कारणं मुक्तस्य तदभावान्न ज्ञानं भवितुमर्हतीति चेन्न व्याप्त्यसिद्धेः, न हि शरीरेन्द्रियादीनि ज्ञानस्य कारणं व्यापकं वा, येन तन्निवृत्तौ तस्यापि निवृत्तिः स्यात्, ज्ञानस्यात्मस्वभावत्वेन शरीरादिनिवृत्तावपि न तन्निवृत्तिः, तस्मादस्ति मुक्तो जीवस्स च ज्ञानरहित इति विरुद्धं वचनमेव । स्वात्मनि देहे प्रत्यक्षानुभवादेव जीवस्य ज्ञानस्वरूपत्वसिद्धेः, इन्द्रियव्यापारोपरमेऽपि तद्व्यापारोपलब्धार्थानुस्मरणादिन्द्रियसत्त्वेऽपि चान्यमनस्कतायामनुपलम्भात् । अदृष्टाश्रुतानामप्यर्थानां तथाविधक्षयोपशमपाटवाद्व्याख्यानाद्यवस्थायां कदाचित्स्फुरणाच्च तस्मात्सर्वदा प्रकाशमय एव जीवः, परं संसार्यवस्थायां छद्मस्थः किञ्चिन्मात्रमवभासयति क्षीणाक्षीणावरणच्छिद्रैश्चावभासनात्, सच्छिद्रकुड्याद्यन्तरितप्रदीपवत् । मुक्तावस्थायाञ्च सर्वावरणक्षयात्सर्वमर्थं प्रकाशयति, विगतकुड्याद्यावरणप्रदीपवत्, न तु जीवस्य तदानीं प्रकाशाभावः, इति सिद्धं तदानीं ज्ञानस्वरूपत्वम् । एवं सुखादिस्वरूपत्वमपि भाव्यम् ॥ अत्र कृत्स्नकर्मविमुक्त्याऽऽत्मनस्स्वात्मन्यवस्थानमित्यनेन सङ्ग्रहनयेन मुक्तिरुक्ता, तेन ह्यावरणोच्छित्त्या व्यङ्ग्यं सुखं मुक्तिरिष्यते, संसारदशायां जीवस्वभावस्य सेन्द्रियदेहाद्यपेक्षाकारणस्वरूपावरणेनाच्छाद्यमानत्वात् प्रदीपस्यापवरकावस्थितपदार्थप्रकाशकत्वस्वभावस्येव तदावारकबृहच्छरावादिना । तदपगमे तु प्रदीपस्येव जीवस्यापि विशिष्टप्रकाशस्वभावोऽयत्नसिद्ध एवेति । न च शरीराद्यभावे ज्ञानसुखादीनामभानप्रसङ्ग इति वाच्यमप्रयोजकत्वात्, अन्यथा शरावाद्यभावे प्रदीपादेरभानप्रसङ्गस्स्यात्, न च शरावादेः प्रदीपाद-

---

१. आत्मा हि सामान्यतो निखिललोकालोकवर्त्तिपदार्थानां सम्यक् परिच्छेदनिपुणः, परं च कर्मपटलावृततज्ज्ञानस्वादस्मदादीनां विषयेषु संशयाऽज्ञानविपर्यया अतीतादिविप्रकृष्टादिपदार्थेष्वसम्यक्प्रतीतिश्चाविर्भवति, निःशेषतया ज्ञानावरणादिकर्ममलापगमे च प्रतिबन्धकाभावेन निखिलपदार्थज्ञानस्वभावतया न कोऽपि विरोध इति भावः ॥ २. एवं सुखस्वरूपोऽप्यात्मा, यथा संसारिणः सुखदुःखे परस्परानुषक्ते न तथा मुक्तात्मनः, दुःखमूलस्य शरीरस्याभावात्, आत्मस्वरूपत्वाच्च सुखस्य । न चेदं सुखं दुःखाभावरूपम्, मुख्ये बाधकाभावात् रोगान्मुक्तोऽहं सुखी जात इत्यादौ सुखीति पदस्य पौनरुक्त्यापत्तेः ईदृशजडरूपात्मतत्त्वस्य मोक्षस्य पुमामुपादेयत्वासम्भवात् सांसारिकसुखस्य दुःखरूपत्वादेवात्यन्तिकसुखविशेषलिप्सयैव मुमुक्षूणां प्रवृत्तेरित्यभिप्रायेणाह—एवं सुखादिस्वरूपत्वमपि भाव्यमिति ॥

जनकत्वान्न दोष इति वाच्यम्, तथाभूतप्रदीपपरिणत्यजनकत्वे शरावादेस्तदनावारकत्वप्रसङ्गात् । व्यवहारनयेन तु स्वीकृतपुंस्त्रीशरीरस्यात्मनस्सम्यग्ज्ञानक्रियाभ्यां साध्यः कर्मणां क्षयो मुक्तिरिष्यते, अन्वयव्यतिरेकाभ्यां तयोस्तं प्रति कारणत्वात्, न च कर्मक्षयस्य मुक्तित्वेऽपुमर्थत्वं स्यादिति वाच्यम्, मुक्तेरसाक्षात् दुःखहेतुनाशोपायेच्छाविषयत्वेन परमपुरुषार्थत्वाविरोधात् । दुःखे हि द्वेषे तद्धेतून् नियमेन द्वेष्टि ततस्तन्नाशहेतुषु ज्ञानादिषु प्रवर्त्तते, ततो नाशोपायेच्छा जायत इति । न च सम्यग्ज्ञानक्रियाभ्यामित्युक्तं तन्न युक्तं सम्यग्दर्शनस्यापि हेतुत्वादिति वाच्यम् द्वयोरप्यनयोर्ज्ञानदर्शनयोस्सहचारित्वात् । ननु स्वीकृतपुंस्त्रीशरीरस्यात्मन इत्युक्तं तत्र स्वीकृतपुंशरीरस्य तु सम्यग्ज्ञानक्रियासम्भवाद्युक्तं मोक्षाधिकारित्वं स्त्रीणान्तु न तथा, तासां ज्ञानदर्शनयोस्सम्भवेऽपि चारित्रासंभवात्, वस्त्रपरिभोगस्यावश्यकत्वात्, अन्यथा विवृताङ्गचस्ताः पुरुषाणामभिभवनीया लोके गर्हणीयाश्च भवेयुः, वस्त्रपरिभोगे च परिग्रहवत्त्वेन संयमाभाव एव स्यादिति चेन्न, वस्त्रसंसर्गमात्रस्य परिग्रहत्वासंभवात्, मूर्च्छाविशिष्टस्यैव तादृशस्य परिग्रहत्वात्, अन्यथा भरतचक्रवर्त्तिनो निष्परिग्रहत्ववर्णनं केवलोत्पादश्चासङ्गतं स्यात्, जिनकल्पप्रतिपन्नस्य कस्यचित् साधोस्तुषारकणानुषक्ते शीते पतति सति केनाप्यविपश्चिताद्य शीतमिति विचिन्त्य तस्य शिरसि वस्त्रे प्रक्षिप्ते परिग्रहत्वापातप्रसङ्गात्, तासामपि सम्यग्दर्शनादिप्रकर्षसम्भवाच्चेति दिक् । स च सम्यग्ज्ञानक्रियाभ्यां भवति, क्रियारहितस्य ज्ञानस्य तद्रहितायाः क्रियाया वाऽसमर्थत्वात्, न च प्रत्येकं कारणताविरहे कथं समुदाये कारणत्वमिति वाच्यम्, प्रत्येकं देशोपकारित्वात्तु समुदायस्य तु सम्पूर्णोपकारित्वादिति दिक् ॥

ननु धर्माधर्मयोर्मुक्तौ तावदात्यन्तिकी निवृत्तिर्युक्ता, अन्यथा तदनुपपत्तेः, तन्निवृत्तौ च तत्फलभूतानां बुद्ध्यादीनामपि निवृत्तिरावश्यकी निमित्तापाये नैमित्तिकस्याप्यपायात्, मुक्तस्यात्मनोऽन्तःकरणसंयोगाभावेन न तत्कार्यस्य बुद्ध्यादेरुत्पत्तिः, तथाचाशेषविशेषगुणनिवृत्तिर्मुक्तौ सिद्ध्यत्येवेति चेदिष्टापत्तेः, को हि निवारयति मुक्तावदृष्टहेतुकानां आत्मान्तः-

१. ननु ज्ञानमेव प्रधानं मोक्षकारणं न क्रिया, तस्या अपि ज्ञानकार्यत्वात् ज्ञानं हि मोक्षं प्रति कारणं, तद्व्यापारत्वाभाविना सर्वसंयमक्रियादीनामपि, तस्मात्तदेव मोक्षं प्रति प्रधानं कारणमिति चेन्न ज्ञानस्य परम्परयोपकारकत्वे क्रियायाः एवानन्तर्येण प्रधानकारणतापत्तेः, अथवाऽनेन यदुपाख्यं तस्यैव प्रधानकारणत्वम्, युगपत्कार्यान्तरा द्वयोरप्यनुकूलत्वे द्वयोरपि प्राधान्यमेवेति निर्णयः अत्रान्यवादे भवतस्तु अपि क्रियाया मोक्षसाधनत्वं केवलज्ञानमोक्षापत्तेः, अकारणस्याकार्यजनकत्वात् । द्वयोरपि सहकारित्वं च प्रधानं ज्ञानं कारणं मोक्षे क्रिया, न च क्रियैव कारणं भवतु न ज्ञानमिति वाच्यम् तथात्वे अज्ञानादिविशिष्टोऽपि मोक्षापत्तेः, तस्माज्ज्ञानक्रियोभयात् मुक्तिरिति भाव ॥

करणसंयोगजानाञ्च बुद्ध्यादीनां निवृत्तिम्, किन्तु कर्मक्षयहेतुकानां प्रशमसुखानन्तज्ञानादीनां निवृत्तिमेव निवारयामः, तथा च मुक्तौ कथञ्चिद् बुद्ध्यादिविशेषगुणानां निवृत्तिः कथञ्चिदनिवृत्तिर्व्यवतिष्ठते । न च ज्ञानत्वावच्छिन्न एवादृष्टान्तःकरणादिहेतुत्वान्मुक्तौ तज्जन्यज्ञानाद्यनुपपत्तिरिति वक्तुं युक्तम्, परैरीश्वरज्ञानादिव्यावृत्तये जन्यत्वस्य कार्यतावच्छेदककोटौ दानात्, तस्य च ध्वंसप्रतियोगिरूपत्वेन । ध्वंसाप्रतियोगिज्ञानादीनां मुक्तावनुपपत्त्यभावात् । न च जन्यत्वेन ज्ञानादीनां मुक्तावपि ध्वंस आवश्यक इति वाच्यम् । जन्यत्वेन ध्वंसहेतुत्वे मानाभावात्, प्रतियोगिनो विशिष्य हेतुत्वेऽपि मुक्तज्ञानादीनां ध्वंसाहेतुत्वकल्पन एव लाघवात् । न चोपयोगस्य संसारदशायामन्तर्मुहूर्त्तादिकालनाश्यत्वदर्शनान्मुक्तावपि कालान्नाशप्रसङ्ग इति वाच्यम् । केवलज्ञानादीनां कालानाश्यत्वादुपयोगस्य क्षणिकत्वेऽपि प्रवाहतस्तदानन्त्यस्य च सिद्धान्तसिद्धत्वात् । वस्तुतस्तु अदृष्टान्तःकरणसंयोगकर्मक्षयादयो न ज्ञानोत्पत्तौ निमित्तभूताः । अपि तु आविर्भावतिरोभावावेति पूर्वमेवोक्तम् । न चात्मनो बुद्ध्यादिगुणाः कदाचिदुच्छिद्यन्ते, सन्तानरूपेण जायमानत्वात् प्रदीपवत्, अमीषां जन्मनो निरन्तरं सर्वानुभवसिद्धत्वान्नासिद्धिः, साध्यविपर्ययेण व्याप्तेरसिद्धया न विरुद्धः, विपक्षे गगनादौ हेतोरसत्त्वेन च नानैकान्तिक इति वाच्यम् । विकल्पासहत्वात्, सन्तानपदेन पितृपुत्रपौत्रादिक्रमेण पुरुषसम्प्रदायो गोत्राद्यपरनामा सन्तानो विवक्षितः, उत उपादानोपादेयभावेनोत्तरोत्तरकार्यपरम्परोत्पादः, अथवा सामान्येन सजातीयकार्यकारणप्रवाह इति, तत्र नाद्यस्तस्य पुरुषेष्वेव प्रसिद्धया गुणादौ तदसम्भवात् । न द्वितीय, तेषामात्मोपादेयत्वेन स्वीकृततया परस्परमुपादानोपादेयभावानङ्गीकारात् । नान्त्यो बुद्ध्यादिभ्यो विजातीयानामिच्छादीनामप्युत्पत्तिदर्शनेन सजातीयकार्यकारणोत्पत्त्यभावात् । स्मृत्यादीनाञ्च भवदभिप्रायेणाप्रमाणतया विजातीयानामपि सम्यग्ज्ञानादिभ्यस्संस्कारोद्बोधद्वारेणोत्पत्तेः । पाकजपरमाणुरूपादीनाञ्चैवंविधसन्तानरूपेणोत्पत्तावपि भवताऽत्यन्तोच्छेदानभ्युपगमात्, संसारस्य चैवंरूपस्याप्यत्यन्तोच्छेदाभावेन व्यभिचारात्, मुक्तावनित्यबुद्ध्यादीनामत्यन्तोच्छेदस्यास्माभिरपि स्वीकृतत्वेन सिद्धसाधनाच्च ॥ तथा स्वस्वरूपे चैतन्यमात्रेऽवस्थानमात्मनो मोक्ष इति कपिलमतमपि प्रमाणबाधितं, चैतन्यविशेषेऽनन्तज्ञानादौ स्वरूपेऽवस्थानस्य मोक्षत्वसाधनात् । न ह्यनन्तज्ञानादिकमात्मनोऽस्वरूपं सर्वज्ञत्वादिविरोधात् । प्रधानस्य सर्वज्ञत्वादिस्वरूपं नात्मन इति चेन्न, तस्याचेतनत्वादाकाशादिवत्, ज्ञानादेरप्यचेतनत्वादचेतनप्रधानस्वभावत्व युक्तमेवेति चेत्कुतस्तदचेतनत्वसिद्धिः, अचेतना ज्ञानादय उत्पत्तिमत्त्वाद् घटवदित्यनुमानादिति चेन्न, हेतोर्बुद्धिनिष्ठप्रतिबिम्बहेतुबिम्बचैतन्यलक्षणेनानुभवेन व्यभिचारात्, तस्य चेतनत्वेऽप्युत्पत्तिमत्त्वात् । न च कथमुत्पत्तिमाननुभव इति वाच्यम्, बुद्ध्यादिवत्परापेक्ष-

त्वात् । परापेक्षो ह्यसौ बुद्ध्यध्यवसायापेक्षत्वात्, बुद्धिप्रतिविम्बितमर्थं पुरुषश्चेतयत इति वचनात् । बुद्ध्यध्यवसितार्थानपेक्षत्वेऽनुभवस्य सर्वत्र सर्वदा सर्वस्य पुंसोऽनुभवप्रसङ्गात्, सर्वदा सर्वदर्शित्वापत्तेस्तदुपायानुष्ठानवैयर्थ्यमेव स्यात्, यदि पुनरनुभवसामान्यमात्मनो नित्यमनुत्पत्तिमदेवेति मतं तदा ज्ञानादिसामान्यमपि नित्यत्वादनुत्पत्तिमद्भवेदिति तव हेतुरसिद्धः । न च ज्ञानादिविशेषाणामुत्पत्तिमत्त्वान्नासिद्ध इति वाच्यम्, तर्ह्यनुभवविशेषाणामप्युत्पत्तिमत्त्वाद्व्यभिचारापत्तेः । न चानुभवस्य न विशेषास्सन्तीति वाच्यं, वस्तुत्वविरोधात् । सकलविशेषरहितत्वे हि खरविषाणवदनुभवोऽवस्त्वेव भवेत् । न चात्मनानेकान्तः, तस्यापि सामान्यविशेषात्मकत्वादन्यथाऽवस्तुत्वापत्तेः । कालात्ययापदिष्टश्चोत्पत्तिमत्त्वहेतुः, ज्ञानादीनां स्वसंवेदनप्रत्यक्षत्वाच्चेतनत्वप्रसिद्धेः, न च चेतनसंसर्गादचेतनस्यापि ज्ञानादेश्चेतनत्वप्रतीतिः प्रत्यक्षतो भ्रान्तैवेति वाच्यम्, शरीरादेरपि चेतनत्वप्रतीतिप्रसङ्गात् चेतनसंसर्गाविशेषात् । न च शरीराद्यसम्भवी बुद्ध्यादेरात्मना संसर्गविशेष इति वाच्यम्, कथञ्चित्तादात्म्यातिरिक्तस्य संसर्गस्याभावात् । ततो नाचेतना ज्ञानादयः स्वसंविदितत्वात्, अनुभववत्, ते स्वसंविदिताः परसंवेदनान्यथानुपपत्तेः, तथाप्यात्मस्वभावा ज्ञानादयः चेतनत्वादनुभववत्, इति न चैतन्यमात्रेऽवस्थानं मोक्षः, अनन्तज्ञानादिचैतन्यविशेषेऽवस्थानस्य मोक्षत्वप्रतीतेरिति ॥ नन्वत्यन्तज्ञानसन्तानोच्छेद एव मोक्षः, तथाहि बद्धस्य संसारिणो मोक्ष इति वक्तव्यं बन्धश्च रागादिभिः, स चैकान्तनित्य आत्मनि न सम्भवति विकारापत्तेः, तस्मान्नात्मनो बन्धो नवा मोक्षस्तयोरनुपपत्त्या च तादृशात्मनोऽभाव एव युक्तः, ज्ञानस्य कार्यतया विकारित्वेन रागादियोगेन बन्धसम्भवात् कथञ्चिद्भावनाबलेन तद्विगमाच्च मोक्ष उपपद्यते, अयमेव च तस्य मोक्षो यद्विनाश इति चेन्न, ज्ञानस्य क्षणिकत्वादुत्पत्त्यनन्तरं विनापि विनाशकं तद्विनाशात्, न च रागादिभिर्ज्ञानक्षणस्य बन्ध आपादयितुं शक्यते, एकान्तनित्यस्येव एकान्तानित्यस्याप्यविकार्यतया रागादियोगवियोगासम्भवात् । ततो बन्धाभावात्कथं मोक्षः । ननु ज्ञानस्य तदसम्भवेऽपि तत्सन्तानस्यैकत्वादक्षणिकत्वाच्च रागादियोगाद्बन्धो भावनातिशयाच्च सन्तानानुत्पत्तिलक्षणो मोक्षश्च सम्भवति, सन्तानश्च ज्ञानानामनादिः कार्यकारणप्रवाह इति चेन्न ज्ञानव्यतिरिक्तस्यैकस्याक्षणिकस्य परमार्थसत्तयाऽभ्युपगम्यमाने नाम-

---

१. अयं भाव वर्तमानज्ञानक्षणः कर्म बध्नन् न प्राग् बध्नीयात् असतो बन्धायोगात् न वा सह, सह भाविनोरसव्येतरगोविषाणयोरिव तदसंभवात् नापि पश्चात्, उत्पादानन्तरं निरन्वय ध्वंसेन द्वितीयादिक्षणपर्यासंभवेन तदनुपपत्तेरिति ॥ २. ननु मा भून् एकैकस्य ज्ञानक्षणस्य बन्धो रागद्युत्पादो वा, तत्सन्तानस्य तु तस्य सन्ततमनुवर्तमानस्यासौ स्यादिति शङ्कते नन्विति ॥

न्तरेणात्मनोऽभ्युपगतत्वेन तस्यैव बन्धमोक्षयोरुपपादितत्वात्, न च नित्यस्याविकार्यतया तदनुपपत्तिरिति वाच्यम् एकान्तनित्यताया निरासेन परिणामिनित्यस्यैवास्माभिरङ्गीकारात्। तस्मादात्माभाव इति रिक्तं वचः। यद्यस्माभिरपि सन्तानस्य संवृतिसत्त्वयैवाभ्युपेयते तर्हि सन्तानिनां ज्ञानक्षणानामेव वस्तुसत्त्वं तेषाञ्चानेकत्वक्षणिकत्वाभ्यामेकस्यैव बन्धमोक्षयोरनुपपत्त्याऽन्यस्य बन्धोऽन्यस्य मोक्ष इति स्यात्, तथाचानुगतस्यैकस्याभावेन मोक्षप्रवृत्तिर्न स्यात्, एवं सन्तानिभ्यस्सन्तानस्याभिन्नत्वेऽपि पूर्वोक्तदोष एव। नवा सन्तानस्यानागतानुत्पादलक्षणमोक्षस्सगच्छते, ज्ञानक्षणस्य ज्ञानक्षणान्तरजननस्वभावत्वाश्चेति॥

एवं स्वरूपतो मोक्षमभिधाय तत्त्वभेदपर्यायैर्व्याख्या कार्येति नियममनुसरन् तद्भेदान् प्रदर्शयितुकामः सिद्धान्ते सिद्धानां सत्पदप्ररूपणादिभिर्निरूपणदर्शनेन स्वयमपि तथैव विदधातुं सिद्धानवतारयति—

**तद्वान् मुक्तः॥**

तद्वानिति। कृत्स्नकर्मक्षयप्रयुक्तस्वस्वरूपावस्थानपर्यायवान्मुक्त इत्यर्थः। तेन पर्यायपर्यायिणोः कथञ्चिदभेदात्सत्पदप्ररूपणादिभिस्सिद्धभेदे वाच्ये तदभिन्नमोक्षात्मकपर्यायस्याऽपि भेदः प्रज्ञापित एवेति भावः॥

तत्र मुक्ताः कतिविधा इत्यत्राह—

**सोऽनुयोगद्वारैस्सिद्धान्तप्रसिद्धैस्सत्पदप्ररूपणादिभिर्नवभिर्निरूपणादुपचारेण नवविधः॥**

स इति। मुक्त इत्यर्थ। अनुयोगद्वारैरिति, विधिनिषेधाभ्यामर्थप्ररूपणारूपैर्व्याख्याप्रकारैरित्यर्थः। सिद्धेषु परस्परं वस्तुतो वैलक्षण्याभावेन कथंनवविधत्वमित्याशंकायामाहोपचारेणेति। नवभिः प्रकारैर्विचार्यमाणत्वादेव नवविधत्वं तेषां न तु वस्तुतो नवविधत्वमिति भावः॥

तत्राद्यां सत्पदप्ररूपणामाह—

**गत्यादिमार्गणाद्वारेषु सिद्धसत्ताया अनुमानेनागमेन वा निरूपणं सत्पदप्ररूपणा॥**

गत्यादीति। सत्ताभिधायकं पद सत्पदं तस्य प्ररूपणा सत्पदप्ररूपणा, विद्यमानार्थाभिधायिपदस्य तत्त्वकथनमिति भावः, असत्यप्यर्थे बाह्ये शशविषाणादिपदप्रयोगात् बाह्यार्थे

सत्यपि घटपदप्रयोगदर्शनान्मोक्षशब्दः सिद्धशब्दो वा घटपदवद् विद्यमानार्थाभिधायको वा शशशृङ्गवदविद्यमानार्थाभिधायको वेत्याशङ्कायामाह सिद्धसत्ताया इत्यादि । मोक्षादिशब्दस्य विद्यमानार्थाभिधायकत्वमाप्तोपदेशात, असमस्तपदत्वहेतोरनुमानाद्वा निरूपणमित्यर्थः, अनुमानप्रयोगश्च मोक्षशब्दस्सिद्धशब्दो वा विद्यमानार्थाभिधायी, असमस्तत्वे सति पदत्वाद्घटादिपदवदिति । शशशृङ्गादिपदे व्यभिचारवारणाय विशेषणम् । अनर्थकवर्णसमुदाये व्यभिचारवारणाय विशेष्यम् । अत्र पदत्वं न सुप्तिङन्तत्वरूपं, द्योतकेषु निपातेषु तादृशपदत्वसत्त्वेन साध्याभावाद्व्यभिचारापत्तेः । किन्तु स्वार्थप्रत्यायने शक्तिमत्पदान्तरघटितवर्णान्तरापेक्षणरहितं परस्परस्वघटितवर्णसहकारिवर्णसङ्घातरूपं तदेव चासमस्तं पदं, राजपुरुष इत्यादिसमस्ते पदत्वव्यवहारस्तु सुप्तिङन्तत्वात्, न तूक्तलक्षणतः, स्वार्थप्रत्यायने समस्तपदसमुदाये शक्त्यभावात् । यदि चैकदेशसमुदाययोः कथञ्चित्तादात्म्येन तत्रापि स्वार्थप्रत्यायनशक्तिमत्त्वं वर्ततेऽन्यथाऽर्थवत्त्वाभावे नामसंज्ञाऽप्रवृत्तौ विभक्त्यनुपपत्तिस्स्यादिति विभाव्यते तदापि न तस्य पदत्वं, पदान्तरघटितवर्णान्तरसापेक्षत्वात् । न च पदलक्षणे पदस्य घटितत्वेनात्माश्रयापत्तिरिति वाच्यम् । पदलक्षणे सुप्तिङन्तरूपस्य पदस्यैवान्तर्गतत्वात् । अत एव हि घटादिशब्दानां पदत्वमन्यथा घटधातूत्तरस्याप्रत्ययस्य कर्त्रर्थकत्वेन शक्तिमत्त्वात्पदत्वप्राप्तौ पदान्तरघटितवर्णान्तरापेक्षत्वेन पदत्वं न स्यात्, तथा चेदृशं पदत्वं न शशशृंगादिशब्देषु वर्त्तते पदान्तरघटितवर्णान्तरापेक्षत्वात्, अर्थवत्त्व पुनरस्त्येव, अन्यथा नामसंज्ञाऽप्राप्त्या विभक्त्यनुत्पत्तिप्रसङ्गः स्यात्, एवञ्च मोक्षशब्दस्य योऽयं विद्यमानोऽर्थस्स एव कृत्स्नकर्मक्षयरूपो मोक्ष इति निश्चीयते । यद्यपि मोक्षशब्दस्य विमुक्तिरूपस्य कारागारान्मोक्षो जात इत्यादि प्रतीत्या प्रसिद्धिरस्ति तथापि सर्वबन्धक्षयस्यैव तत्पदस्य मुख्यार्थतया तस्य सिद्धिर्विवक्षिता, उक्तप्रतीतौ तु यत्किञ्चिद्बन्धविमुक्तिवाचकत्वं मोक्षपदस्य लाक्षणिकं, असति प्रतिबन्धके शब्दार्थसङ्कोचस्यान्याय्यत्वात् । अतो न सिद्धसाधनतापत्तिः । तथा च तादृशपर्यायवतां सिद्धानामपि विद्यमानत्वं सिद्धमेव, पर्यायमात्रस्य साधिकरणत्वादिति मन्वानो गत्यादिचतुर्दशमार्गणासु ते क सन्तीत्याशंकायां मनुजादिगत्यादावेव तेषां सिद्धिरिति ज्ञापनाय यन्निरूपणं सैव सत्पदप्ररूपणेति दर्शयति गत्यादीत्यनेन वाक्येन । तथा च सिद्धसत्ताया अनुमानेनागमेन वा गत्यादिमार्गणाद्वारेषु सिद्धसत्ताया आगमेन निरूपणं सत्पदप्ररूपणेति योजना कार्या, प्रथमयोजनाया भावस्तु प्रदर्शित एव, द्वितीययोजनाया भावमाख्यातु गत्यादिमार्गणा विभागेन स्वरूपेण च दर्शयति—

**तत्र गतीन्द्रियकाययोगवेदकषायज्ञानसंयमदर्शनलेश्याभव्यसम्यक्त्वसंज्ञ्याहारकरूपाश्चतुर्दश मूलभूता मार्गणाः ॥**

तत्रेति । गतीति, गम्यते प्राप्यते स्वकर्मरजसा समाकृष्टैर्जन्तुभिरिति गतिः, तत्तन्नामकर्मोदयान्नारकत्वादिपर्यायपरिणतिस्तद्विपाकवेद्यकर्मप्रकृतिरपि, कारणे कार्योपचारात् । ननु सर्वेऽपि पर्याया जीवेन प्राप्यन्त इति सर्वेषामपि गतित्वप्रसङ्गो नैव, यतो विशेषेण व्युत्पादिता अपि शब्दा रूढितो गोशब्दवत्प्रतिनियतमेवार्थं विषयीकुर्वन्तीत्यदोषः । तथा च नारकत्वादिरेवात्र शास्त्रीयरूढ्या गतिशब्दवाच्यो न ग्रामादिगमनक्रिया, नापि यानादिक्रियेतिभाव । इन्द्रियेति । इदि परमैश्वर्ये इति धातोरिन्दनादिन्द्रो जीव , आवरणाभावे सर्वविषयोपलब्धिभोगलक्षणपरमैश्वर्ययोगात्, तस्य लिङ्ग–चिह्नमविनाभाविलिङ्गसत्तासूचनात्, इन्द्रियविषयोपलम्भाद्धि ज्ञापकत्वसिद्धिस्तत्सिद्धावुपयोगलक्षणो जीव इति जीवत्वसिद्धिरिति । इन्द्रेण दृष्टं सृष्टं जुष्टं दत्तमिति वेन्द्रियम् । आत्मना दृष्ट्वा स्वविषये नियोजनात्, आत्मकृतशुभाशुभकर्मणा चक्षुरादीना सर्जनात् । इन्द्रियद्वारेणास्य विज्ञानोत्पादात्, विषयग्रहणायात्मना विषयेभ्यः समर्पणाच्च । अत्र यज्जीवलिङ्गं तत्सर्वमिन्द्रियमिति न नियमः परन्तु यदिन्द्रियं तत्तथाविधमिति, यथा ये वृक्षास्त आम्रा इति न नियमः किन्तु य आम्रास्ते वृक्षा इति । इन्द्रियविशेषचर्चा अग्रे करिष्यते । कायेति, चीयते उपचयं नीयते यथायोगमौदारिकादिवर्गणागणैर्यस्स कायः, योगेति, युज्यते इति योगो मन आदिर्धावनवल्गनादिक्रियासु वीर्यान्तरायक्षयोपशमजन्यपर्यायेण व्यापार्यमाणत्वात् तत्तत्क्रियास्ववलम्बनरूपत्वाद्वीर्यशक्तिस्थामादिपदवाच्यसामर्थ्यविशेषो योगः । वेदेति, अङ्गोपाङ्गनिर्माणादिनामकर्मोदयजन्यशरीरवृत्त्याकारविशेषो वेदः । कषायेति कृषन्ति विलिखन्ति कर्मक्षेत्र सुखदुःखफलयोग्यं कुर्वन्तीति कषाया औणादिक आयप्रत्ययो निपातनाच्च ऋकारस्याकारः । कलुषयन्ति शुद्धस्वभावं सन्त जीव कर्ममलिन कुर्वन्तीति कषाया निपातनात्कलुषशब्दस्य कषायादेशः । कष्यन्ते बाध्यन्ते जीवा अनेनेति कषं कर्म भवो वा तस्यऽऽयो लाभ एषा यतस्ते कषायाः मोहनीयकर्मपुद्गलोदयसम्पाद्यजीवपरिणामविशेषा. क्रोधादयः । ज्ञानेति ज्ञातिर्ज्ञान, ज्ञायते वस्तु परिच्छिद्यतेऽनेनेति ज्ञानं, यथास्थितार्थपरिच्छेदनं, यद्वा ज्ञातिर्ज्ञानमावरणक्षयाद्याविर्भूत आत्मपर्यायविशेषः, सामान्यविशेषात्मके वस्तुनि विशेषांशग्रहणप्रवणः, ज्ञायतेऽनेनास्माद्वा ज्ञानं तदावरणस्य क्षयः क्षयोपशमो वा । संयमेति, संयमनं संयमः, सावद्ययोगात्सम्यगुपरमणम्, संयम्यते नियम्यते आत्मा पापव्यापारसम्भारादनेनेति संयम शोभना यमाः प्राणातिपातानृतभाषणादत्तादानाब्रह्मपरिग्रहविरमणलक्षणा यस्मिन्निति संयमश्चारित्रम् । दर्शनेति, दृष्टिर्दर्शन सामान्यविशेषात्मवस्तुवृत्तिसामान्यविषयकबोधः, अनाकारात्मको बोधो वा, दृश्यतेऽनेन वा दर्शनं दर्शनावरणक्षयः क्षयोपशमो वा । लेश्येति । लिश्यते प्राणी कर्मणा यया सा लेश्या, कर्मबन्धस्थितिविधात्री, कृष्णादिद्रव्यसाचिव्यादात्मनः

परिणामविशेषः । भव्येति, मुक्तियोग्यो भवतीति भव्यः परमपदयोग्यतावान्, विवक्षितपर्यायेण भविष्यतीति वा भव्यः, अनादिपारिणामिकभव्यभावयोगी । सम्यक्त्वेति, सम्यक्शब्दः प्रशंसार्थोऽविरुद्धार्थो वा सम्यगित्यस्य भावः सम्यक्त्वं प्रशस्तो मोक्षाविरोधी वा प्रशमसंवेगादिलक्षण आत्मधर्मस्तत्त्वार्थश्रद्धानं वा मिथ्यात्वमोहनीयक्षयोपशमादिजन्यम् । संज्ञीति, संज्ञा भूतभवद्भाविभावस्वभावपर्यालोचनं सा विद्यते यस्य स संज्ञी, विशिष्टस्मरणादिरूपमनोविज्ञानसहितेन्द्रियपञ्चकसमन्वितः प्राणी, संज्ञा देवगुरुधर्मपरिज्ञानं सा विद्यते यस्य स संज्ञीति वा । आहारकेति, आहरणमाहारः, ओजोलोमप्रक्षेपरूपः, तमाहारयतीत्याहारकः । मूलभूता इति, उत्तरभेदा अग्रे वक्ष्यन्त इति भावः, मार्गणा इति, मार्ग्यन्ते आभिरिति मार्गणाः, पर्यालोचनाहेतुभूता अन्वयिधर्माः, पदार्थान्वेषणस्थानानि चेत्यर्थः ॥

अथोत्तरमार्गणा आचष्टे—

## नरकतिर्यङ्मनुष्यदेवभेदेन चतस्रो गतिमार्गणाः ॥

**नरकेति** । नरकगतितिर्यग्गतिमनुष्यगतिदेवगतिभेदेनेत्यर्थः । नरान् कायन्ति शब्दयन्ति—योग्यतानतिक्रमेण जन्तूनाकारयन्ति स्वस्वस्थान इति नरकाः पापकर्मणां यातनास्थानानि तत्र गतिस्तद्योग्यपर्यायविशेषो नारकत्वरूपः, नामस्थापनाद्रव्यक्षेत्रकालभावभेदान्नरकपदनिक्षेपाष्षोढा, तत्र नामस्थापने प्रसिद्धे, आगमतो नोआगमतश्च द्रव्यनरको द्विधा, आगमतोऽनुपयुक्तो ज्ञाता, नोआगमतो ज्ञशरीरभव्यशरीरव्यतिरिक्ता इहैव भवे तिर्यग्भवे केचनाशुभकारित्वादशुभास्सत्त्वाः कालकसौकरिकादयः । अथवा यानि कानिचिदशुभानि स्थानानि चारकादीनि याश्च नरकप्रतिरूपा वेदनास्तास्सर्वा अपि द्रव्यनरकतयाभिधीयन्ते, यद्वा कर्मद्रव्यनोकर्मद्रव्यभेदाद्द्रव्यनरको द्वेधा, तत्र नरकवेद्यानि यानि बद्धानि कर्माणि तानि चैकभविकस्य बद्धायुष्कस्याऽभिमुखनामगोत्रस्य चाश्रयेण द्रव्यनरकरूपाणि भवन्ति । नोकर्मद्रव्यनरकास्तु इहैव येऽशुभा रूपरसगन्धशब्दस्पर्शास्ते । क्षेत्रनरकस्तु नरकावकाशकालमहाकालरौरवमहारौरवप्रतिष्ठानाभिधानादिनरकाणां चतुरशीतिलक्षसंख्यानां विशिष्टो भूभागः, कालनरकस्तु यत्र यावती स्थितिः । भावनरकाश्च ये जीवा नरकायुष्कमनुभवन्ति ते, तथा नरकप्रायोग्यकर्मोदयः । एतद्द्वितयमपि भावनरकत्वेनाभिधीयत इति । तिरोऽञ्चन्ति गच्छन्तीति तिर्यञ्चो व्युत्पत्तिनिमित्तमेतत् प्रवृत्तिनिमित्तं तु तिर्यग्गतिनाम । तिर्यङ्नामकर्मोदयनिष्पादितिर्यक्त्वलक्षणपर्यायविशेषस्तिर्यग्गतिः, मनुजगतिनामकर्मोदयसमापादितमनुष्यत्व-

लक्षणपर्यायविशेषो मनुजगतिः, देवगतिनामकर्मोदयप्रभवदेवत्वलक्षणपर्यायविशेषो देवगतिरित्येवं गतिमार्गणोत्तरभेदाश्चत्वार इति भावः ॥

इन्द्रियमार्गणोत्तरभेदानाह—

**एकद्वित्रिचतुःपञ्चेन्द्रियभेदेन पञ्चेन्द्रियमार्गणाः ॥**

एकेति । तत्रेन्द्रियाणि स्पर्शनरसनघ्राणचक्षुश्श्रोत्राणि, द्रव्यभावभेदेन तानि द्विविधानि, निर्वृत्त्युपकरणभेदेन द्रव्येन्द्रियमपि द्विविधम्, भावेन्द्रियमपि लब्ध्युपयोगभेदेन द्विविधम्, निर्वृत्तिर्नाम प्रतिविशिष्टसंस्थानविशेषः, सापि बाह्याभ्यन्तरभेदेन द्विधा, बाह्या पर्पटिकादिरूपा सा च विचित्रा न प्रतिरूपनियतरूपतया वक्तुं शक्यते, आभ्यन्तरनिर्वृत्तिस्तु सर्वेषामपि समाना कदम्बपुष्पाद्याकारा, स्पर्शनेन्द्रियस्य तु बाह्याभ्यन्तरभेदो नास्ति । उपकरणं शक्तिविशेष आभ्यन्तरनिर्वृत्तिनिष्ठः कथञ्चिदर्थान्तरभूतः, कथञ्चिदभेदाच्च द्रव्यादिना तस्य विघातसम्भवः । लब्धिस्तत्तदिन्द्रियविषयतस्तत्तदिन्द्रियावरणक्षयोपशम, शेषेन्द्रियाणि लब्धिप्राप्तावेव भवन्ति, श्रोत्रादीन्द्रियस्य स्वस्वविषये शब्दादौ परिच्छेद्यव्यापार उपयोगः, स चैकस्मिन् काले एकेनैव केनापीन्द्रियेण भवति, तस्मादुपयोगमाश्रित्य सर्वेऽपि जीवा एकेन्द्रियाः, एकेन्द्रियद्वीन्द्रियादिव्यपदेशस्तु निर्वृत्त्युपकरणलब्धीन्द्रियाणि प्रतीत्य, एवं लब्धीन्द्रियमाश्रित्य सर्वे पृथिव्यादयोऽपि जीवा पञ्चेन्द्रिया बकुलचम्पकतिलकविरहकादीना वनस्पतिविशेषाणां रसनघ्राणचक्षुःश्रोत्रलक्षणेन्द्रियसम्बन्ध्युपलम्भदर्शनेन तदावरणक्षयोपशमसम्भवानुमानात्, दृश्यते हि शृङ्गारितकामिनीवदनार्पितचारुमदिरारागगण्डूषेण बकुलस्य, तिलकस्य कामिनीकटाक्षविक्षेपेण, विरहकस्य पञ्चमोद्गारश्रवणेन पुष्पपल्लवादिसम्भव. । बाह्येन्द्रियापेक्षया तु एकेन्द्रियादिव्यवहारः । न च बकुलादीनामेकैको रसनादीन्द्रियोपलम्भ यथोक्तः कथ सर्वविषयोपलम्भसम्भव इति वाच्यम्, मुख्यतया तत्सम्भवेऽपि गौणवृत्त्या शेषेन्द्रियोपलम्भसम्भवात्, शृंगारितस्वरूपतरुणीगण्डूषार्पणात् तस्याश्च तनुलतास्पर्शाधररसचन्दनादिगन्धशोभनरूपमधुरोल्लापलक्षणाना पञ्चानामपीन्द्रियविषयाणां सम्भवादिति । द्रव्येन्द्रियापेक्षया त्वेकेन्द्रियमार्गणा द्वीन्द्रियमार्गणा त्रीन्द्रियमार्गणा चतुरिन्द्रियमार्गणा पञ्चेन्द्रियमार्गणेति इन्द्रियमार्गणा. पञ्चविधा इति भावः ॥

अथ कायमार्गणाभेदमाह—

**पृथिव्यप्तेजोवायुवनस्पतित्रसभेदेन षट् कायमार्गणाः ॥**

पृथिवीति । पृथिवीकायाप्कायतेजस्कायवायुकायवनस्पतिकायत्रसकायरूपाः षडित्यर्थः । पृथिव्येव कायो यस्य सः पृथिवीकाय, स द्विविधस्सूक्ष्मबादरभेदात्, तत्र

सूक्ष्मत्वं बादरत्वञ्च सूक्ष्मबादरनामकर्मोदयापेक्षं, सूक्ष्माःसकललोकव्यापिनःसमुद्गकपर्याप्तप्रक्षिप्तगन्धावयववत्, प्रतिनियतस्थानवर्त्तिनो बादराः, सूक्ष्मपृथिवीकायिकाः पर्याप्तापर्याप्तभेदेन द्विविधाः, पर्याप्तिर्नाम पुद्गलोपचयजश्शक्तिविशेषः, तत्प्रभेदास्स्वरूपाणि च पूर्वतो विज्ञेयानि, तत्रैकेन्द्रियाणां चतस्रो विकलेन्द्रियाणां पञ्च सञ्ज्ञिनां षडिति बोध्याः, लब्ध्या करणेन च स्वयोग्यपर्याप्तिपूर्णताभाजस्सूक्ष्मपृथिवीकायिकाः पर्याप्तसूक्ष्मपृथिवीकायिकाः, लब्ध्या करणेन वा स्वयोग्यपर्याप्तिपूर्णताविकलास्तेऽपर्याप्तसूक्ष्मपृथिवीकायिकाः, येऽपर्याप्तका एव सन्तो म्रियन्ते ते लब्ध्यपर्याप्तकाः, ये पुनश्शरीरेन्द्रियादीनि न तावन्निर्वर्त्तयन्ति, अथ चावश्यं निर्वर्त्तयिष्यन्ति ते करणापर्याप्ताः, बादरपृथिवीकायिका अपि श्लक्ष्णखरभेदतो द्विविधाः, श्लक्ष्णा चूर्णितलोष्टकल्पा मृदुपृथिवी, तदात्मकजीवा अप्युपचारेण श्लक्ष्णबादरपृथिवीकायिका उच्यन्ते ते च कृष्णनीललोहितहारिद्रशुक्लपाण्डुपानकमृत्तिकाभेदेन सप्तविधाः। देशविशेषे धूलिरूपा सती पाण्डु इति प्रसिद्धा मृत्तिका पाण्डुमृत्तिका, जीवोऽप्युपचारेण तादृशः, नद्यादिपूरप्लाविते देशे पूरेऽपगते भूमौ श्लक्ष्णमृदुरूपो यो जलमलापरपर्यायः पङ्कस्सा पानकमृत्तिका, उपचारात्तद्युक्तो जीवोऽपि तथा। खरबादरपृथिवीकायिकास्तु अनेकविधा अपि मुख्यतया शर्करावालुकोपलादिभेदेन चत्वारिंशद्विधाश्शास्त्रे प्रोक्तास्ते तत एवाऽवगन्तव्याः। सङ्क्षेपतस्तु पर्याप्तापर्याप्तभेदेन द्विविधास्ते, साकल्येन पर्याप्तिभिर्विशिष्टवर्णादीन् याऽसम्प्राप्ता अपर्याप्ता, उच्छ्वासपर्याप्त्यपर्याप्त्या मृतत्वेन स्पष्टतरवर्णादिविभागाप्राप्तेस्तद्विपरीतास्तु पर्याप्ताः॥ आपः कायो येषां तेऽप्कायाः, तेऽपि सूक्ष्मबादरभेदेन द्विविधाः प्रत्येकञ्च पर्याप्तापर्याप्तभेदतो द्विविधाः। बादराप्कायिकाः करकशीतोष्णक्षारक्षत्रकट्वम्ललवणवरुणकालोदपुष्करक्षीरघृतेक्षुरसोदादयः। तेजःकायो येषां ते तेजस्कायाः, तेऽपि पूर्ववत् सूक्ष्मबादरपर्याप्तापर्याप्तभेदेन चतुर्विधाः। शुद्धाग्निज्वालाङ्गारविद्युदुल्कामुर्मुरालातनिर्घातसङ्घर्षसमुत्थसूर्यकान्तमणिनिस्सृतार्चिरग्निप्रभृतिभेदतो बादरतेजस्काया भवन्ति। वायु कायो येषान्ते वायुकायिकास्तेऽपि पूर्ववच्चतुर्धा। प्राचीनावाचीनोदीचीनदक्षिणोर्ध्वाधस्तिर्यग्विदिगनवस्थितोत्कलिकामण्डलिकागुञ्जाझञ्झासंवर्त्तकघनतनुशुद्धवातवातोत्कलिकावातसंवर्त्तकभेदेन बादरवायुकायिका विज्ञेयाः। वनस्पतिः कायो येषान्ते वनस्पतिकायाः, सूक्ष्मबादरभेदभिन्नाः, पर्याप्तापर्याप्तभिन्नास्सूक्ष्मास्सर्वलोकापन्ना अचक्षुर्ग्राह्या अनेकाकाराश्च। बादरास्समासतो द्विविधा प्रत्येकसाधारणभेदात्, पत्रपुष्पफलमूलस्कन्धादीन् प्रति प्रत्येकं जीवो येषान्ते प्रत्येकजीवाः, साधारणास्तु परस्परानुविद्धानन्तजीवसङ्घातरूपशरीरावस्थानास्तत्र प्रत्येकशरीरा वृक्षगुच्छगुल्मलतावल्लीपर्वकतृणवलयहरितौषधिजलरुहकुहणेति द्वादशविधाः प्रत्येकजीवाः। सर्वेऽप्येते वनस्पतिजीवास्समासतस्षोढा भवन्ति, अप-

बीजमूलबीजपर्वबीजस्कन्धबीजबीजरुहसम्मूर्च्छनजभेदात् । अग्रबीजाः कुरण्टादयः, मूलबीजा उत्पलादयः, पर्वबीजा इक्ष्वादयः, स्कन्धबीजाः सल्लक्यादयः, बीजरुहाश्शाल्यादय, सम्मूर्छनजास्तृणादयः । सर्वोऽपि वनस्पतिकायो द्विविधः पर्याप्तापर्याप्तभेदादिति । त्रसा द्विविधा, गतित्रसा उदारत्रसाश्चेति, तेजोवायवो गतित्रसाः सञ्चलनधर्मत्वात् परन्तु ते नात्र विवक्षिताः, त्रसनामकर्मोदयप्रभवानामेव विवक्षितत्वात् । ते चोदारत्रसा एव, उक्तञ्च तत्त्वार्थे "तेजोवायू द्वीन्द्रियादयश्च त्रसा" इति । तेजोवाय्वोः क्रियातस्त्रसत्वं, द्वीन्द्रियादीनां लब्धित इति भावो भाष्यटीकाकृद्भिराविष्कृतः, उदारा द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियपञ्चेन्द्रिया, व्यक्तश्वासोच्छ्वासादिप्राणयोगात्, उदारा अपि पर्याप्तापर्याप्तभेदेन द्विविधाः, कृमिशङ्खादयो द्वीन्द्रियाः कुन्थुपिपीलिकादयस्त्रीन्द्रियाः, भ्रमरमक्षिकादयश्चतुरिन्द्रियाः, नारकतिर्यङ्मनुष्यदेवाः पञ्चेन्द्रियास्सर्वे त्रसा एव न त्वेकेन्द्रिया इव त्रसास्स्थावराश्च । तत्र नरकावासेषु भवा नारकाः । तिर्यञ्चो गवादयो जलचरस्थलचरखेचरभेदभिन्नाः । सम्मूर्च्छिमा गर्भजाश्चेति मनुष्या द्विविधाः, कर्मभूम्यकर्मभूम्यन्तरद्वीपेषु ये मनुष्या गर्भव्युत्क्रान्तास्ते गर्भजाः, एषां पुरीषमूत्रश्लेष्मसिंघाणवान्तपित्तशोणितशुक्रमृतशरीरपूयस्त्रीपुंसयोगशुक्रपुद्गलविच्युतिनगरनिर्धमननिखिलापवित्रस्थानेषु ये सम्मूर्च्छितास्ते सम्मूर्च्छिमाः । एतेऽपर्याप्ता एव । सम्मूर्च्छिमभिन्ना मनुजास्तु पर्याप्ता अपर्याप्ता अपि । देवास्तु चतुर्निकायाः चतुर्विधोत्पत्तिस्थानत्वात् व्यन्तरज्योतिष्कवैमानिकभवनवासिभेदात् विवेचिता एते पूर्वमेव तेऽपि पर्याप्तापर्याप्तभेदभिन्ना इति दिक् ॥

योगमार्गणाभेदमाह—

**मनोवाक्कायास्तिस्रो योगमार्गणाः ॥**

**मन इति ।** मनःप्रायोग्याणि द्रव्याण्यात्मप्रदेशैः काययोगेनादाय मनस्त्वेन परिणमितानि वस्तुचिन्ताप्रवर्त्तकानि च मनांसि तैस्सहकारिकारणभूतैस्सहितो जीववीर्यविशेषो मनोयोगः । सत्यादिभेदतस्स चतुर्विधः । भाषापुद्गलग्रहणोत्तर भाषापरिणाममापन्नाः पुद्गला वागित्युच्यते, तत्सहकारिकारणको योगो जीवशक्तिविशेषो वाग्योगः, सोऽपि पूर्ववदेव चतुर्विधः । केवल कायावष्टम्भजन्यसामर्थ्यविशेषः काययोग । स चौदारिकादिभेदेन सप्तविधः । अवान्तरभेदानां स्वरूपाण्यन्यत्र पूर्वं वा द्रष्टव्यानि ॥

अथ वेदमार्गणाभेदमाचष्टे—

**पुंस्त्रीनपुंसकभेदेन तिस्रो वेदमार्गणाः ॥**

पुमिति । त्रयोऽपि वेदा द्रव्यभावभेदेन द्विविधाः । पुरुषस्य स्त्र्यभिलाषो भाववेदो निर्माणाङ्गोपाङ्गादिनामकर्मजन्यः पुरुषस्य श्मश्रुकूर्चशिश्नादिविशिष्टो द्रव्यपुरुषवेदः, स्त्रियः स्तनयोनिनिर्लोमसुखादिविशिष्टाकारो द्रव्यस्त्रीवेदः, एतदुभयविलक्षणाकारो द्रव्यनपुंसकवेदः ॥

कषायमार्गणाभेदमभिधत्ते—

## क्रोधमानमायालोभरूपाश्चतस्रः कषायमार्गणाः ॥

क्रोधेति । चतुःप्रतिष्ठितः क्रोधः, यथाहि स्वयमाचरितमैहिकमामुष्मिकं प्रत्यपायमवबुध्य यदा कश्चिदात्मन एवोपरि क्रुध्यति तदा स क्रोध आत्मप्रतिष्ठितः । यदा पर उदीरयत्याक्रोशादिना कोपं तदा किल तद्विषये क्रोध उपजायते इति स परप्रतिष्ठितः । यदा कश्चित्तथाविधापराधादात्मपरविषयक्रोधमाधत्ते स उभयाश्रितः, यदा तु स्वयं दुश्चरणमाक्रोशादिकञ्च कारणं विना केवलक्रोधवेदनीयादुपजायते स हि नात्मप्रतिष्ठितः, स्वयं दुश्चरणानाचरणेनात्मविषयत्वाभावात्, न परप्रतिष्ठितः परस्यापि निरपराधित्वात्, अत एव नोभयप्रतिष्ठितः, अतोऽप्रतिष्ठित इति, एवं मानादयोऽपि । अनन्तानुबन्ध्यादिभेदाः पूर्वमेवोक्ताः, तथा आभोगनिर्वर्तितानाभोगनिर्वर्तितोपशान्तानुपशान्तभेदतोऽपि ते चतुर्धा भवन्ति, यदा परस्यापराधं सम्यगवबुध्य कोपकारणञ्च व्यवहारतः पुष्टमवलम्ब्य नान्यथाऽस्य शिक्षोपजायत इत्याभोग्यकोपञ्च विधत्ते तदा स कोप आभोगनिर्वर्तितः । यदा त्वेवमेव तथाविधमुहूर्तवशाद्गुणदोषविचारणाशून्यः परवशीभूय कोपं कुरुते तदा स कोपोऽनाभोगनिर्वर्तितः, अनुदयावस्थ उपशान्तो निर्निमित्तमुदयावस्थोऽनुपशान्तः । अनन्तानुबन्धिक्रोधादयः सम्यग्दर्शनसहभाविक्षमादिरूपोपशमादिचरणलवप्रतिबन्धिनः, चारित्रमोहनीयत्वात्, न चोपशमादिभिरेव चारित्री, अल्पत्वान्नैककार्षापणो न धनपतिः किन्तु महता मूलगुणादिरूपेण चारित्री मतः सर्वथा सक्षितम्, अत एव त्रिविधं दर्शनमोहनीयं पञ्चविंशतिविधं चारित्रमोहनीयम् । न च चारित्रावारकस्य सम्यक्त्वावारकत्वानुपपत्तिस्तथा च सप्तविधं दर्शनमोहनीयमेकविंशतिविधञ्च चारित्रमोहनीयमिति वाच्यम्, अनन्तानुबन्धिभिरेव सम्यक्त्वे आवृते मिथ्यात्वस्य वैयर्थ्यापत्तेः, आवृतस्याप्यावरणेऽनवस्थानात्, तस्मान्यथा कषायाणां केवलज्ञानावारकत्वेऽपि कषायक्षय. केवलज्ञानकारणतयोच्यते तस्मिन् सत्येव तस्य भावात्, तथानन्तानुबन्धिपुद्गलेषु न मिथ्यात्वं क्षयोपशममुपयाति तदभावाच न सम्य-

१. पुलाको निरन्तरं भवन् जघन्यतो-न्तर्मुहूर्तमुत्कर्षतोऽप्यन्तर्मुहूर्तमेव ... जघन्येनैकसमय । उत्कर्षेण च ... पृथक्त्वं ..., ... जघन्य ... समय ... ॥

क्त्वमिति सम्यक्त्वसहचार्युपशमादिगुणावारकत्वमनन्तानुबन्धिना, सम्यग्दर्शनमोहनीयस्य क्वचित्सप्तविधत्वकथनन्तु सम्यक्त्वसहचारिगुणेषु[१] सम्यक्त्वोपचारात् । देशविरत्यावारका अप्रत्याख्यानाः, सर्वविरतिघातिनः प्रत्याख्यानाः, सञ्ज्वलना यथाख्यातचारित्रावारकाः ॥

सम्प्रति ज्ञानमार्गणाभेदमाह—

**मतिश्रुतावधिमनःपर्यवकेवलमत्यज्ञानश्रुताज्ञानविभङ्गज्ञानभेदादष्टौ ज्ञानमार्गणाः। मिथ्यादृष्टीनां मतिश्रुतावधयः क्रमेण मत्यज्ञानश्रुताज्ञानविभङ्गज्ञानान्युच्यन्ते । अत्र पञ्चविधत्वेऽपि ज्ञानानामन्वेषणाप्रस्तावे आद्यत्रयविपरीतानामपि मत्यज्ञानादीनां ज्ञानत्वेन ग्रहणादष्टविधत्वं ज्ञानमार्गणाया बोध्यम् । मनःपर्यवकेवलयोस्तु वैपरीत्याभाव एव । अग्रे संयमादिष्वप्येवमेव वैपरीत्येन मार्गणा विज्ञेयाः ॥**

मतीति । ज्ञायन्ते परिच्छिद्यन्ते अर्था अनेनास्मिन्नस्माद्वेति ज्ञानं, ज्ञानदर्शनावरणयोः क्षयः क्षयोपशमो वा, ज्ञातिर्वा ज्ञानं, आवरणद्वयक्षयाद्याविर्भूत आत्मपर्यायविशेषः, विशेषांशग्राहको ज्ञानपञ्चकाज्ञानत्रयरूपः । ननु सकलमपीदं ज्ञानं ज्ञप्त्येकस्वभावं ज्ञप्त्येकस्वभावत्वस्य सर्वत्राविशेषेण किं कृतोऽयं पञ्चधाऽष्टधा वा भेदः, न च वार्त्तमानिकं वस्तु मतेः, त्रिकालविषयः परिणामो ध्वनिगोचरः श्रुतस्य, रूपिद्रव्याण्यवधेः, मनोद्रव्याणि मनःपर्यवस्य, समस्तपर्यायान्वितं सर्वं वस्तु विषयः केवलस्येति ज्ञेयभेदस्तत्कृतो ज्ञानभेद इति वाच्यं केवलज्ञानस्य बहुभेदत्वापत्तेः, वार्त्तमानिकादिवस्तूनां तत्राऽपि ज्ञेयत्वादन्यथा तदविषयत्वे तस्य केवलिनोऽसर्वज्ञत्वापत्तिप्रसङ्गः, न च यादृशी प्रतिपत्तिर्मत्यादिज्ञानस्य न तादृशी श्रुतादिज्ञानस्येति प्रतिपत्तिप्रकारभेदाद्भेद इति वाच्यम्, एकस्मिन्नपि ज्ञाने तत्तद्देशकालपुरुषस्वरूपभेदेनानन्तभेदप्रसक्तेः प्रतिपत्तिप्रकारस्यानन्त्यात् । न चावारकाणां मतिज्ञानावरणादीनां भेदाद्भेद इति वाच्यम्, ज्ञानस्यैकत्वे आवारकाणां पञ्चधात्वानुपपत्तेः, आवार्यापेक्षं ह्यावरकं, आवार्यञ्च ज्ञानं ज्ञप्तिरूपत्वादेकमतः आवारकं कथं पञ्चधा भवेत् । न च स्वभावादेव पञ्चधात्वं स्वभावे च न पर्यनुयोगः[३] इति वाच्यम्, भगवतस्सर्वज्ञत्वहानिप्रसङ्गात्, ज्ञानस्यात्मधर्मत्वेन मत्यादीनां स्वाभाविकत्वेन च क्षीणावरणस्यापि तद्भावप्रसक्त्याऽस्मदादिवत्तस्यासर्वज्ञत्वं स्यात्, यदि केवलज्ञानभावतस्समस्तवस्तुपरिच्छेदान्नास-

---

१ शमसंवेगनिर्वेदानुकम्पास्तिक्येषु ॥ २ मत्यादिज्ञानविषयतास्य तेनाग्रहणादिति भावः ॥
३ नहि कोऽप्येवं पर्यनुयुक्तः कथं घट एव जलाहरणं करोति न पट इतीति भावः ॥

र्वज्ञत्वमित्युच्यते तदापि केवलोपयोगविरहकाले मतिज्ञानोपयोगसम्भवेन देशतः परिच्छेदेन तदा तस्यासर्वज्ञत्वं बलादापतत्येव। न च तस्य तदुपयोग एव न भविष्यतीति वाच्यम्, आत्मनः स्वभावत्वेन तस्यापि क्रमेणोपयोगस्य निवारयितुमशक्यत्वात्, केवलज्ञानानन्तरं केवलदर्शनोपयोगवत्, ततः केवलज्ञानोपयोगकाले सर्वज्ञत्वं मत्यादिज्ञानोपयोगकालेऽसर्वज्ञत्वमापद्यते, न चैतदिष्टं, तस्माज्ज्ञानं असकलसंज्ञितं सकलसंज्ञितमिति द्विभेदमेव, अवग्रहज्ञानादारभ्य यावदुत्कर्षप्राप्तपरमावधिज्ञानं तावत्सकलमप्येकं, तच्चासकलसंज्ञितमशेषवस्तुविषयत्वाभावात्, अपरञ्च केवलिनस्तच्च सकलसंज्ञितमिति चेदुच्यते, ज्ञानानां ज्ञप्त्येकस्वभावत्वं सामान्यतो वा विशेषतो वा भवताऽभ्युपगम्यते? नाद्यस्सिद्धसाध्यतया तस्य बाधकत्वायोगात् बोधरूपतयाऽस्माभिरपि सकलज्ञानस्याप्येकत्वाभ्युपगमात्, नापि द्वितीयोऽसिद्धत्वात्, स्वसंवेदनप्रत्यक्षेण प्रतिप्राणि ज्ञानस्योत्कर्षापकर्षदर्शनाद्विशेषत एकत्वानुपलम्भात्। न चोत्कर्षापकर्षमात्रभेददर्शनेन यदि ज्ञानस्य भेदस्तर्हि प्रतिप्राणि देशकालापेक्षयोत्कर्षापकर्षयोरनेकविधत्वेन ज्ञानस्यानेकविधत्वमेव प्राप्तं न तु पञ्चविधत्वमिति वाच्यम्, परिस्थूलनिमित्तभेदतः पञ्चधात्वस्य प्रतिपादनात्। तथाहि सकलघातिक्षयो निमित्तं केवलज्ञानस्य, मनःपर्यायज्ञानस्य त्वमर्षौषध्यादिलब्ध्युपेतस्य प्रमादलेशेनाप्यकलङ्कितस्य विशिष्टाध्यवसायानुगतोऽप्रमादः, अवधिज्ञानस्य पुनस्तथाविधानिन्द्रियरूपिद्रव्यसाक्षादवगमननिबन्धनः क्षयोपशमविशेषः, मतिश्रुतयोस्तु लक्षणभेद इति। ज्ञेयभेदमात्रतो ज्ञानस्य भेदानभ्युपगमान्न तत्पक्षोक्तदोषः, एकेनाप्यवग्रहादिना बहुविधवस्तुग्रहणोपलम्भात्। नापि प्रतिपत्तिप्रकारभेदकृतो दोषस्सम्भवति देशकालाद्यपेक्षया ज्ञानानामानन्त्येऽपि परिस्थूलनिमित्तभेदेन व्यवस्थापितज्ञानपञ्चकेभ्योऽनतिरिक्तत्वात् तज्जातीयत्वानतिक्रमणात्। परिस्थूलनिमित्तभेदमधिकृत्य ज्ञानानां भेदव्यवस्थापनाय नावरणभेदप्रयुक्तदोषस्यावकाश इति। न चैवं व्यवस्थापिता ज्ञानभेदा ज्ञानस्यात्मभूता अनात्मभूता वा, आत्मभूतत्वे क्षीणावरणेऽपि तद्भावप्रसङ्गः, अनात्मभूतत्वे न ते पारमार्थिका, ततः कथमावार्यापेक्षो वास्तव आवारकभेद इति वाच्यम्, वस्तुतत्त्वापरिज्ञानात्। इह हि सकलघनपटलविनिर्मुक्तशारददिनमणिरिव समन्ततस्समस्तवस्तुस्तोमप्रकाशनैकस्वभावो जीवः, तस्य च तथाभूतस्वभावः केवलज्ञानमिति व्यपदिश्यते। स च यद्यपि सर्वघातिना केवलज्ञानावरणेनाव्रियते तथापि तस्यानन्ततमो भागो नित्योद्घाटित एव। ततस्तस्य केवलज्ञानावरणावृतस्य घनपटलाच्छादितस्येव सूर्यस्य यो मन्दप्रकाशस्सोऽपान्तरालावस्थितमतिज्ञानाद्यावरणक्षयोपशमभेदसम्पादितं नानात्वं भजते मतिज्ञानावरणक्षयोपशमजनितो मन्दप्रकाशो मतिज्ञानं, श्रुतज्ञानावरणक्षयोपशमजनितस्स श्रुतज्ञानमित्यादिरूपेण। ननु आत्मस्वभावभूता मत्यादयो

भेदाः, ते च प्रवचनोपदर्शितपरिस्थूलनिमित्तभेदतः पञ्चसङ्ख्याः, तदपेक्षमावारकमपि पञ्चधेति न विरुद्ध्यते । न चैवमात्मस्वभावभूतत्वे क्षीणावरणस्यापि तद्भावप्रसङ्गः, यत एते मतिज्ञानावरणादिक्षयोपशमरूपोपाधिसम्पादितसत्ताकास्ततः कथं ते तथारूपक्षयोपशमाभावे भवितुमर्हन्ति, नहि सूर्यस्य घनपटलावृतस्य मन्दः प्रकाशः कटकुड्याद्यावरणविवरभेदोपाधिसम्पादितस्सकलघनपटलकटकुड्याद्यावरणापगमे सूर्यस्य ते तथारूपा मन्दप्रकाशभेदा भवन्ति । यथा वा जन्मादयो भावा जीवस्यात्मभूता अपि कर्मोपाधिसम्पादितसत्ताकत्वात्तदभावे न सन्ति तद्वन्मत्यादयो भेदा जीवस्यात्मभूता अपि मतिज्ञानावरणादिक्षयोपशमसापेक्षत्वात्तदभावे केवलिनो न भवन्ति ततो नासर्वज्ञत्वदोषः । यदपि मतिज्ञानादिविपयस्य केवलज्ञानाविपयत्वेऽसर्वज्ञत्वापत्तिरुक्ता सापि न सम्भवति, तद्विपयत्वेन तस्याग्रहेऽपि केवलज्ञानेन तद्ग्रहणात्, मत्यादिज्ञानमात्रनिरूपितत्वेन ज्ञेयताया केवलज्ञानस्याभावेऽपि न तावताऽसर्वज्ञत्वापत्ति, अल्पास्पष्टज्ञानाभानमात्रेण सर्वज्ञत्वाक्षतेः, कापर्दिकमात्रधनाभाववतो महार्द्धिकस्य निर्धनित्वाभाववदिति दिक् ॥ मत्यादिज्ञानलक्षणादीन्यग्रे वक्ष्यन्ते ॥ ननु किं सर्वेषामेव जीवाना ज्ञानानि मत्यादीनि भवन्तीत्यत्राह मिथ्यादृष्टीनामिति । मिथ्यादृष्टीनां मतिज्ञान श्रुतज्ञानमवधिज्ञानञ्च मत्यज्ञानं श्रुताज्ञान विभङ्गज्ञानमित्युच्यते विपर्ययत्वात्, प्रमाणाभासत्वेन तेषा ज्ञानान्यज्ञानानि, दर्शनमोहनीयोदयप्रयुक्तमिथ्यादर्शनपरिणामेन सह वृत्तित्वान्मतिश्रुतावधयोऽज्ञानत्व भजन्ते । ननु यथार्थपरिच्छेदित्व ज्ञानत्वमयथार्थपरिच्छेदित्वमज्ञानत्व तदुभय च मिथोविरोधि, शीतोष्णवत् तत्कथमेकस्मिन्नेव मतिज्ञानादौ तदुभयसम्भवः, नैवमाधारदोषात्, दृश्यते हि कटुकालाबूभाजने निहितं दुग्धं स्वगुणं परित्यजति तथा मत्यादीन्यपि मिथ्यादृष्टिभाजनगतानि दुष्यन्ति पारिणामिकशक्तिविशेषात्, न च रूपादिविपयोपलब्धिव्यभिचाराभावात्तेषा विपर्ययाभावः, यथैव हि मतिज्ञानेन सम्यग्दृष्टयो रूपादीनुपलभन्ते तथैव मिथ्यादृष्टयोऽपि मतिज्ञानेन, यथैव घटादिषु रूपादीन् श्रुतेन निश्चिन्वन्त्युपदिशन्ति च परेभ्यस्सम्यग्दृष्टयस्तथा मिथ्यादृष्टयोऽपि श्रुतज्ञानेन, यथैवावधिना रूपिणोऽर्थानवगच्छन्ति तथैव विभङ्गेनापीति वाच्यम् । विद्यमानाविद्यमानार्थयोर्यथावदवबोधाभावेन तादृशोपलब्धेर्यादृच्छिकत्वात्, उन्मत्तोपलब्धिवत् । उन्मत्तो हि दोषोदयात्कदाचिल्लोष्टं सुवर्णमिति सुवर्णं लोष्टमिति जानाति कदाचिच्च लोष्ट लोष्टमिति सुवर्णं सुवर्णमिति च, तथैव मिथ्यादर्शनोदयात् वस्तुनोऽनेकान्तात्मकस्यैकान्तात्मकत्वं कर्तृरहितं जगत्सकर्तृकञ्च जानात्यतो यथार्थबोधाभावेन कदाचित्तस्योपलब्धेर्यथार्थरूपादिविपयकत्वेऽपि अज्ञानमेवेति भावः । एवन्तर्ह्यष्टविधत्व ज्ञानानामत्र कथमुक्तमित्यत्राहात्रेति मार्गणाप्रकरण इत्यर्थः । पञ्चविधत्वेऽपि ज्ञानानामिति । शब्दनयमते सर्वजीवाना चेतनास्वभावत्वात् ज्ञस्वभावत्वाच्च न कश्चिन्मिथ्यादृष्टिरज्ञो वा जीवो विद्यते,

अत एव मत्यज्ञानादयो विपर्यया न सन्ति तस्मात्पञ्चविधत्वमेव ज्ञानानां तन्मतेनेति भावः । नैगमादिनयेन तु मत्यज्ञानादीनामप्यर्थपरिच्छेदकत्वेन ज्ञानत्वात्तन्मताश्रयेणात्र ज्ञानानामष्टविधत्वमुक्तमित्याशयेनाहान्वेषणाप्रस्ताव इति । आद्यत्रयेति मतिश्रुतावधीत्यर्थः । ज्ञानत्वेन ग्रहणादिति, अर्थपरिच्छेदित्वादिति भावः । ननु ज्ञानादिषु किमर्थमज्ञानादिविपरीतग्रहणमिति चेदुच्यते चतुर्दशस्वपि मार्गणास्थानेषु प्रत्येकं सर्वसांसारिकसत्त्वसंग्रहार्थमिती त्याशयेन बोध्यमित्युक्तम् । मनःपर्यवकेवलयोर्विपरीतताऽस्ति नवेत्यत्राह मन इति । निर्मूलतो मिथ्यात्वस्य क्षयेण केवलस्य क्षयोपशमोपशमाभ्याञ्च मनःपर्यवस्य जायमानत्वादिति भावः । विपरीतानामपि मार्गणासु ग्रहणमन्यत्राप्यतिदिशति अग्र इति वक्ष्यमाणासु मार्गणास्वित्यर्थः, कासु मार्गणास्वित्यत्राह संयमादिष्वपीति, आदिना भव्यसम्यक्त्वाहारकाणां ग्रहणम् । एवमेवेति, ज्ञानमार्गणायामुक्तप्रकारेणैवेत्यर्थः, वैपरीत्येनेति, तत्तद्विप रीतघटिता इत्यर्थः ॥

अथ चारित्रमार्गणाभेदमाचष्टे—

**सामायिकछेदोपस्थापनपरिहारविशुद्धिसूक्ष्मसम्परायथाख्यातदेशविरत्यविरतिरूपास्सप्त चारित्रमार्गणाः ॥**

सामायिकेति । निरूपितानि पूर्वमेवैतानि पञ्च चारित्राणि लक्षणभेदद्वारैः । देशविरतिस्तु सावद्ययोगस्यैकादिव्रतविषये स्थूलसावद्ययोगादौ विरतिविशिष्टं चारित्रम् । पञ्चाणुव्रतानि त्रीणि गुणव्रतानि चत्वारि शिक्षापदव्रतानीति द्वादशप्रकारा देशविरतस्य भवन्ति, एषां विस्तरस्तु अन्यत्र विलोकनीयः । चारित्रविपरीताऽविरतिर्मार्गणोपयोगित्वात्संगृहीता ॥

दर्शनमार्गणाभेदमाह—

**चक्षुरचक्षुरवधिकेवलभेदेन चतस्रो दर्शनमार्गणाः ॥**

चक्षुरिति । दर्शनावरणक्षयोपशमादिजं सामान्यमात्रग्रहणं दर्शनं । इन्द्रियावरणक्षयोपशमाद्द्रव्येन्द्रियानुपघाताच्च चक्षुर्दर्शनलब्धिमतो जीवस्य घटादिषु चाक्षुषं दर्शनं चक्षुर्दर्शनम् । सामान्यविषयत्वेऽपि चास्य घटादिविशेषाभिधानं तत्सामान्यविशेषयोः कथंचिद्भेदादेवान्तेन विशेषेभ्यो व्यतिरिक्तस्य सामान्यस्याग्रहणख्यापनार्थम् । ' निर्विशेषं विशेषाणां ग्रहो दर्शनमुच्यते ' इत्यभिधानात् । चक्षुर्वर्जशेषेन्द्रियचतुष्टयं मनश्चाचक्षुरुच्यते, अचक्षुर्दर्शनमिन्द्रियावरणक्षयोपशमाद्द्रव्येन्द्रियानुपघाताचाचक्षुर्दर्शनलब्धिमतो जीवस्य विषय

सश्लिष्टतासम्बन्धेन भवति । एतादृशसम्बन्धाभावादेव जायमानस्याचक्षुर्दर्शनस्य पृथगुक्तिः, इतरेन्द्रियाणां प्राप्यकारित्वात् । मनसस्त्वप्राप्यकारित्वेऽपि प्राप्यकारीन्द्रियवर्गस्य तदनुसरणीयस्य बहुत्वादचक्षुर्दर्शनान्तर्गतं तद्बोद्धव्यम् । अवधिदर्शनावरणक्षयोपशमसमुद्भूतावधिदर्शनलब्धिमतो जीवस्यावधिदर्शनं सर्वरूपिद्रव्येषु भवति, न पुनः सर्वपर्यायेषु शास्त्रेऽवधेरुत्कृष्टतोऽप्येकवस्तुगतसंख्येयासंख्येयान्यतरपर्यायविषयत्वस्यैवोक्तत्वात् । जघन्यतस्तु रूपरसगन्धस्पर्शलक्षणाश्चत्वारः पर्यायास्तस्य विषयाः । ननु पर्याया विशेषा उच्यन्ते न च दर्शनं विशेषविषयं भवितुमर्हति ज्ञानस्यैव तद्विषयत्वात्, तत्कथमवधिदर्शनविषयाः पर्याया भवितुमर्हन्तीति चेत्सत्यं, केवलं पर्यायैरपि घटशरावोदञ्चनादिभिर्मृदादिसामान्यमेव तथाविशिष्यते पुनस्ते नैकान्तेन व्यतिरिच्यन्ते, अतो मुख्यतस्सामान्यं गुणीभूतास्तु विशेषा अप्यस्य विषयीभवन्तीति । केवलदर्शनिनस्तदावरणक्षयाविर्भूततल्लब्धिमतो जीवस्य सर्वद्रव्येषु मूर्त्तामूर्त्तेषु सर्वपर्यायेषु च सकलदृश्यविषयत्वेन परिपूर्णात्मकं केवलदर्शनं भवति । मनःपर्यवज्ञानन्तु तथाविधक्षयोपशमपाटवात् सर्वदा विशेषानेव गृह्णदुत्पद्यते न सामान्यम्, अतस्तद्दर्शनं नोक्तम् ॥

सम्प्रति लेश्यामार्गणाभेदमाख्याति—

**कृष्णनीलकापोततेजःपद्मशुक्लभेदेन षड् लेश्यामार्गणाः ॥**

कृष्णेति । लिश्यते प्राणी कर्मणा यया सा लेश्या, कृष्णादिद्रव्यसहकारबलेनात्मनः परिणामविशेषः । अत्र विशेषतो यद्वक्तव्यं तत्पूर्वमेवादर्शितम् ॥

लेश्यानां स्वरूपाण्यादर्शयितुमुपक्रमते—

**अल्पफलाय फलिन आमूलं विनाशकरणाध्यवसायः कृष्णलेश्या । यथा फलग्रहणार्थं वृक्षच्छेदाध्यवसायः ॥**

अल्पेति । भावलेश्या द्विधा विशुद्धाविशुद्धभेदात्, अकलुषद्रव्यसम्पर्कजन्यात्मपरिणामो विशुद्धलेश्या । कलुषद्रव्यसम्पर्कजन्यात्मपरिणामोऽविशुद्धलेश्या । विशुद्धा कषायाणां क्षयेणोपशमेन च जायत इति द्विधा, अविशुद्धापि रागविषया द्वेषविषया चेति द्विधा, तेजःपद्मशुक्ला विशुद्धलेश्याः कृष्णनीलकापोता अविशुद्धलेश्याः । तेजआदीनां विशुद्धलेश्यात्वमेकान्तविशुद्धिमाश्रित्योक्तं तेन तेजःपद्मशुक्लानां क्षायोपशमिकत्वेऽपि न क्षतिः । आसां लक्षणानि तु तत्तद्द्रव्यसान्निध्यजनिताध्यवसाया एव । मूले तु सङ्क्लेशविशोधिपरिणामप्रदर्शन-

द्वारा तत्स्वरूपाणि प्रदर्शितानि । पञ्चाश्रवप्रमत्तो मनोगुप्त्यादिरहितः पृथ्वीकायादिषु तदुपमर्दकत्वादेरविरतः तीव्रभावद्यव्यापारपरिणतो गुणदोषपर्यालोचनारहितोऽत्यन्तमैहिकामुष्मिकापायशङ्काविकलो नृशंसोऽनिगृहीतेन्द्रियो जीवः कृष्णलेश्यायामेव परिणमेदिति भावः। सङ्क्लेशमेवोदाहरणेनाविष्करोति यथेति ॥

नीललेश्या स्वरूपयति—

**अल्पप्रयोजनाय तदंशच्छेदनाध्यवसायो नीललेश्या । यथा फलाय शाखाच्छेदाध्यवसायः ॥**

अल्पेति । कृष्णलेश्यापेक्षयाल्प विशुद्धिमुत्तरलेश्यापेक्षया च सक्लेशं सूचयति तदंशच्छेदनाध्यवसाय इति । ईर्ष्यामर्षातपोऽविद्यामायानिर्लज्जताविषयाभिकाङ्क्षाप्रद्वेषयुतः प्रमत्तो रसलोलुप सुखगवेषकः प्राण्युपमर्देनेनाविरतः साहसिको जीवो नीललेश्यायामेव परिणमेतीति भावः । तत्रानुरूप दृष्टान्तमाह यथेति ॥

कापोतलेश्या स्वरूपयति—

**अल्पफलार्थं तदंशांशच्छेदनाध्यवसायः कापोतलेश्या । यथा तदर्थं प्रतिशाखाच्छेदाध्यवसायः ॥**

अल्पफलार्थमिति । अत्रापि विशुद्ध्यविशुद्धी पूर्ववत् । वचसा वक्र क्रियया वक्रसमाचारो मनसा निकृतिमाननृजुकः स्वदोषप्रच्छादकश्छली मिथ्यादृष्टिरनार्य उत्प्रासकदुष्टवादी चौरः परसम्पदाऽसहनो लुब्धः कापोतलेश्याया परिणमेतीति भावः । तत्र दृष्टान्तमाह यथेति ॥

तेजोलेश्या स्वरूपयति—

**अल्पफलार्थमंशांशापेक्षया न्यूनांशच्छेदनाध्यवसायः तेजोलेश्या । यथा फलग्रहणाय स्तबकच्छेदनाध्यवसायः ॥**

---

१. लक्षणन्तु पञ्चाश्रवप्रमत्तत्वादिरेव इतरेषां भावकृष्णलेश्यासद्भावस्योपदर्शकत्वात् यो हि यत्सद्भाव एव भवति स तस्य लक्षण यथौष्ण्यमग्ने । अस्या जघन्या स्थितिर्मुहूर्त्तार्धम्, अन्तर्मुहूर्त्ताधिकानि त्रयस्त्रिंशत्सागरोपमाणि स्थितिरुत्कृष्टा भवति । सप्तमनारकापेक्षयेयं बोध्या ॥ २ स्थितिश्चास्या जघन्या मुहूर्त्तार्धम् उत्कर्षेण पल्योपमासङ्ख्येयभागाधिकानि दशसागरोपमाणि धूम्रप्रभोपरितनप्रस्तरापेक्षयेयम् ॥ ३ स्थितिर्जघन्या मुहूर्त्तार्धम् पल्योपमासङ्ख्येयभागाधिकानि त्रीणि सागरोपमाण्युत्कृष्टा वालुकाप्रभोपरितनप्रस्तरनारकापेक्षया ॥

अल्पेति । कायमनोवाग्भिरनुत्सिक्तोऽचपलोऽमायी अकुतूहलः विनीतविनयः दान्तस्स्वाध्यायादिव्यापारवान् विहितशास्त्रोपचारः अभिरुचितधर्मानुष्ठानोऽङ्गीकृतव्रतादिनिर्वाहकः पापभीरुर्हितैषकः परोपकारचेता हिंसाद्यनाश्रवस्तेजोलेश्यायां परिणमेत् । दृष्टान्तमाह यथेति ॥

पद्मलेश्यामाह—

**ईषत्क्लेशप्रदानेन फलग्रहणाध्यवसायः पद्मलेश्या । यथा वृक्षात्फलमात्रवियोजनाध्यवसायः ॥**

ईषदिति । अतीवाल्पक्रोधमानमायालोभः प्रशान्तचित्तो दान्तः स्वाध्यायादिप्रवृत्तो विहितशास्त्रोपचारः प्रतनुभाषक उपशान्तो वशीकृताक्षः पद्मलेश्यायां परिणमेत् । दृष्टान्तमाह यथेति ॥

शुक्लेश्यामाह—

**इतरक्लेशाकरणतः फलग्रहणाध्यवसायश्शुक्लेश्या । यथा भूपतितफलग्रहणाध्यवसायः ॥**

इतरेति । प्रशान्तचित्तो दान्तात्मा धर्मशुक्लध्यानध्यायी समितो गुप्तस्सरागो वीतरागो वा जितेन्द्रियश्शुक्लेश्यायां परिणमेत् । दृष्टान्तमाह यथेति । इह शुभलेश्यासु केषाञ्चिद्विशेषणानां पुनरुपादानेऽपि लेश्यान्तरविषयत्वादपौनरुक्त्यम् । पूर्वपूर्वापेक्षयोत्तरोत्तरस्य विशुद्धितः प्रकृष्टत्वञ्च भावनीयम् । विशिष्टलेश्यापेक्षयैव कारणविधानान्न देवादिभिर्व्यभिचारः । सर्वासामेव द्रव्यलेश्यानां अनन्तप्रदेशात्मकत्वं, असङ्ख्यप्रदेशावगाढत्वञ्च विज्ञेयम् । आद्यास्तिस्रोऽप्रशस्तवर्णगन्धरसोपेता अप्रशस्ताध्यवसायहेतवः सङ्क्लिष्टार्त्तरौद्रध्यानानुगताध्यवसायस्थानहेतवः, उत्तरास्तिस्रः प्रशस्तवर्णगन्धरसोपेताः प्रशस्ताध्यवसायहेतवोऽसङ्क्लिष्टधर्मशुक्लध्यानानुगताध्यवसायहेतवश्च ॥

---

१. जघन्या स्थितिर्मुहूर्त्तार्धम्, उत्कृष्टा तु पल्योपमासङ्ख्येयभागाधिके द्वे सागरोपमे । ईशानापेक्षयेयं बोध्या ॥ २. मुहूर्त्तार्धं जघन्या स्थिति, उत्कृष्टा तु मुहूर्त्ताधिकानि दशसागरोपमाणि ब्रह्मदेवलोकापेक्षयेयम् ॥ ३. मुहूर्त्तार्धं जघन्या स्थिति त्रयस्त्रिंशत्सागरोपमाणि मुहूर्त्ताधिकान्युत्कृष्टा अनुत्तरापेक्षयेयम् ॥ ४. अनन्तप्रदेशव्यतिरेकेण स्कन्धस्य जीवग्रहणयोग्यत्वाभावादिति भाव ॥ ५. अनन्तानामपि वर्गणानामाधारभूताकाशप्रदेशा असंख्येया एव, सकलस्यापि लोकस्य प्रदेशानामसङ्ख्यातत्वादिति भाव ॥

अथ भव्यमार्गणाभेदमाह—

**भव्याभव्यभेदेन द्विविधा भव्यमार्गणाः। तत्र भव्यसिद्धिगमनयोग्यस्तद्विपरीतोऽभव्यः॥**

भव्येति। प्रतिपक्षतयाऽत्राभव्यस्यापि ग्रहणम्। अनादिपारिणामिकभव्यत्वाभव्यत्वयोगाज्जीवो भव्योऽभव्यश्च भवति। ननु भव्यत्वमभव्यत्वं वा जीवे कथमवगम्यत इति चेदुच्यते सिद्धिगमनयोग्योऽहं नवेति संशय एव तत्साधकः, स च संशयोऽभव्यस्य न कदाचिदपि भवति। तथा चायं भव्यसिद्धिगमनयोग्यत्वप्रकारकसंशयान्यथानुपपत्तेरित्यनुमानमेव मानम्। मोक्षप्रवृत्तियोग्यतावच्छेदकतया च भव्यत्वं सिद्ध्यति, तत्र योग्यतागमकस्संशय एव। संसार्येकस्वभावत्वे च कदाचिदपि कस्यचिदपि मोक्षार्थं प्रवृत्तिरेव न स्यात्। न च मोक्षप्रवृत्तियोग्यतावच्छेदकत्वं शमादिमत्त्वस्यैवेति वाच्यम्, शमादेर्मोक्षप्रवृत्त्युत्तरकालीनत्वात्, शमादेरपि कार्यतया तत्र भव्यत्वस्यैव कारणतावच्छेदकत्वप्रसङ्गे मोक्षप्रवृत्तियोग्यताया एवावच्छेदकत्वस्यौचित्याच्च। तथा च भव्यत्वमभव्यत्वञ्च परोक्षज्ञानिनामस्मादृशामनुमानगम्यं प्रत्यक्षज्ञानिनाञ्च प्रत्यक्षं तथाऽनादिसिद्धम्। ननु भव्यत्वमभव्यत्वञ्च न नारकत्वादिवत्कर्मकृतं किन्तु चेतनत्वादिवत्स्वाभाविकमुच्यते तथा सति भव्यत्वमविनाशि स्यात्, जीवत्ववत् स्वाभाविकत्वात्, न चैतदिष्टं, तत्सत्त्वे निर्वाणाभावात्, सिद्धो न भव्यो नाप्यभव्य इति वचनादिति चेन्न, प्रागभावस्यानादिस्वभावत्वेऽपि घटोत्पत्तौ विनाशदर्शनात्। एवं भव्यत्वस्यापि सम्यग्दर्शनज्ञानचारित्रोपायतो नाशसम्भवे क्षत्यभावात्। न च प्रागभावस्याभावरूपतयाऽवस्तुत्वमिति न तस्योदाहरणत्वं युक्तमिति वाच्यम्, तस्य घटानुत्पत्तिविशिष्टतत्कारणभूतानादिकालप्रवृत्तपुद्गलसंघातरूपत्वेन भावत्वात्। न चैवं सति स्तोकस्तोकाकृष्यमाणधान्यस्य धान्यपूर्णकोष्ठागारस्य कदाचित्समुच्छेद इव षण्मासषण्मासपर्यन्ते भव्यस्यैकस्यावश्यं सिद्धिगमनात् क्रमेणापचीयमानस्य सर्वस्यापि भव्यराशेः कदाचिदुच्छेदप्रसङ्ग इति वाच्यम्, अनन्तत्वाद्भव्यराशेरनागतकालाकाशवत्। इह यद्बृहदनन्तकेनानन्तकं तत्स्तोकस्तोकतयाऽपचीयमानमपि नोच्छिद्यते, यथा प्रतिसमयं वर्त्तमानतापत्त्याऽपचीयमानोऽप्यनागतकालसमयराशिः प्रतिसमयं बुद्ध्या प्रदेशापहारेणापचीयमानस्सर्वनभःप्रदेशराशिर्वा तथा भव्यराशिरपि। यस्माच्चातीतानागतकालौ तुल्यावेवं[1] यश्चातीतेनानन्तेनापि कालेनैक एव निगोदानन्ततमो भागोऽद्यापि भव्यानां सिद्धः, एष्यतापि कालेन तावन्मात्र एव भव्यानन्तभागस्सिद्धिं गच्छन् युक्तो न हीनाधिकः, भविष्यतोऽपि कालस्याती-

१. सर्वकालीनापेक्षयाऽत्र तुल्यत्वमुक्तं नतु विवक्षितकालापेक्षयैवेति भावः॥

ततुल्यत्वात् ततो न सर्वभव्यानामुच्छेदो युक्तः सर्वेणापि कालेन तदनन्तभागस्यैव सिद्धिगमनसम्भवस्योपदर्शितत्वादित्येतत्सर्वमभिप्रेत्योक्तं तत्रेति ॥

अथ सम्यक्त्वमार्गणाभेदमाचष्टे—

**औपशमिकक्षायोपशमिकक्षायिकसास्वादनवेदकमिथ्यात्वरूपेण षड् सम्यक्त्वमार्गणाः ॥**

औपशमिकेति । उपाधिभेदाविवक्षया सम्यक्त्वमेकविधम्, सम्यक्त्वञ्चाज्ञानसंशयविपर्ययनिरासेनेदमेव तत्त्वमिति निश्चयपूर्विका जिनोदितजीवादिपदार्थेष्वभिप्रीतिः । उपाधिभेदात्तु द्विविधं त्रिविधं चतुर्विधं पञ्चविधं दशविधं । तत्र द्विविधं द्रव्यतो भावतो वा, निश्चयेन व्यवहारेण वा, पौद्गलिकापौद्गलिकभेदेन वा, नैसर्गिकाधिगमिकभेदतो वा । कारकरोचकदीपकभेदेन क्षायिकौपशमिकक्षायोपशमिकभेदेन वा त्रिविधं, औपशमिकक्षायिकक्षायोपशमिकसास्वादनभेदेन चतुर्विधं, औपशमिकक्षायिकक्षायोपशमिकसास्वादनवेदकभेदेन पञ्चविधम्, इदमेव च प्रत्येकं निसर्गाधिगमभेदेन दशविधं विज्ञेयम् । द्विविधन्तु पूर्वमादर्शितम् । त्रिविधमुच्यते, कारकं सूत्रोक्ताज्ञाशुद्धा क्रिया, तस्याः परगतसम्यक्त्वस्योत्पादकत्वेन सम्यक्त्वं, तादृशक्रियावच्छिन्नं वा सम्यक्त्वं कारकसम्यक्त्वमेतच्च विशुद्धचारित्रिणां भवति । यत्सम्यक्त्वं सदनुष्ठानं रोचयत्येव केवलं न पुनः कारयति तद्रोचकं यथा श्रेणिकादीनाम् । स्वयं मिथ्यादृष्टिरभव्यो वा धर्मकथया परेभ्यो जीवादिपदार्थान् दीपयति तद्दीपकं, ननु स्वयं मिथ्यादृष्टिरथ च तस्य सम्यक्त्वं कथमुच्यते विरोधात्, मैवम्, मिथ्यादृष्टेरपि सतस्तस्य यो व्यापारविशेषस्स खलु प्रतिपत्तॄणां सम्यक्त्वस्य कारणमतः कारणे कार्योपचारादायुर्घृतमितिवत् सम्यक्त्वमित्युच्यते । अथ चतुर्विधं, मिथ्यात्वमोहनीयस्य कर्मणो यो विपाकप्रदेशरूपतया द्विविधस्याप्युदयस्य भस्मच्छन्नाग्निवद्विष्कम्भणमुपशमस्तस्मादौपशमिकं सम्यक्त्वं भवति, तच्चोपशमश्रेणिमनुप्रविष्टस्य जन्तोरनन्तानुबन्धिषु दर्शनत्रिके चोपशमं नीते भवति, तथा प्रथमतोऽनादिमिथ्यादृष्टेस्सतो जीवस्य योऽसौ सम्यक्त्वलाभस्तस्मिन् वौपशमिकं सम्यक्त्वं भवति । अनन्तानुबन्धिकषायक्षयानन्तरं मिथ्यात्वमिश्रसम्यक्त्वलक्षणत्रिविधदर्शनमोहनीयकर्मण आत्यन्ति-

---

१. विशोधनविशुद्धिकृता मिथ्यात्वपुद्गला एव द्रव्यतः सम्यक्त्वं भावतस्तु तदुपष्टम्भोपजनितो जीवस्य जिनोक्ततत्त्वरुचिपरिणामः, देशकालसंहननानुरूपं यथाशक्ति शुनिवृत्त—यथावत्संयमानुष्ठानरूपं सम्यक्त्वं नैश्चयिकम् । सम्यक्त्वहेतुसहितः उपशमादिलिङ्गगम्यश्शुभात्मपरिणामो व्यावहारिकसम्यक्त्वम् । क्षायोपशमिकं पौद्गलिकसम्यक्त्वं क्षायिकमौपशमिकञ्चापौद्गलिकमिति भावः ॥

कक्षयात्क्षायिकं सम्यक्त्वं भवति, तथोदीर्णस्य मिथ्यात्वमोहनीयकर्मणः क्षयादनुदीर्णस्य चोपशमात्सम्यक्त्वरूपतापत्तिलक्षणाद्विष्कम्भितोदयस्वरूपाच्च क्षायोपशमिकं सम्यक्त्वं भवति । पुनरनन्तानुबन्धिकषायोदयेनौपशमिकसम्यक्त्वाच्च्यवमानस्य मिथ्यात्वमद्याप्यप्राप्नुवतोऽन्तरे जघन्यतस्समयप्रमाणमुत्कृष्टतष्षडावलिकाः सास्वादनसम्यक्त्वं भवति । वेदकसम्यक्त्वेन पूर्वोक्तानि चत्वारि गृहीत्वा सम्यक्त्वस्य पञ्चविधत्वमपि । क्षपकश्रेणिं प्रतिपन्नस्यानन्तानुबन्धिकषायचतुष्टयं क्षपयित्वा मिथ्यात्वमिश्रपुञ्जेषु सर्वथा क्षपितेषु सम्यक्त्वपुञ्जमप्युदीर्यानुभवेन निर्जरयतो निष्ठितोदीरणीयस्य चरमग्रासेऽवतिष्ठमानेऽद्यापि सम्यक्त्वपुद्गलानां कियतामपि वेद्यमानत्वाद्वेदकं सम्यक्त्वमुपजायते । नन्वेवं सति क्षायोपशमिकेनास्य को विशेषः, सम्यक्त्वपुञ्जपुद्गलानुभवस्योभयत्रापि समानत्वात्, सत्यं किन्त्वेतदशेषोदितपुद्गलानुभूतिमतः प्रोक्तं, इतरत्तूदितानुदितपुद्गलस्यैतन्मात्रकृतो विशेषः, परमार्थतस्तु क्षायोपशमिकमेवेदम्, चरमग्रासशेषाणां पुद्गलानां क्षयाच्चरमग्रासवर्त्तिनान्तु मिथ्यात्वभावापगमलक्षणस्योपशमस्य सद्भावादिति । पुञ्जत्रये च तस्मिन् अशुद्धस्य पुञ्जस्योदयान्मिथ्यात्वं जीवस्य भवत्यकृतपुञ्जत्रयस्य वा, तस्य च सम्यक्त्वप्रतिपक्षितयात्र ग्रहणं मार्गणोपयोगित्वादिति ॥

सञ्ज्ञिमार्गणाभेदं विभजते—

**संज्ञ्यसंज्ञिभेदेन द्विधा संज्ञिमार्गणा । समनस्कास्संज्ञिनो मनोहीना असंज्ञिनः ॥**

**संज्ञीति** । सञ्ज्ञा दीर्घकालोपदेशिकी हेतुवादोपदेशिकी दृष्टिवादोपदेशिकी चेति त्रिविधा । तत्रैतत्करोम्यहमेतत्कृतं मया करिष्याम्येतदहमित्यादित्रैकालिकवस्तुविषया सञ्ज्ञा यो धारयति स सञ्ज्ञी, स च गर्भजस्तिर्यङ्मनुष्यो वा देवो नारकश्च मनःपर्याप्तियुक्तः । तद्विपरीतोऽसञ्ज्ञी तथाविधत्रिकालविषयविमर्शशून्यः, स च सम्मूर्च्छिमपञ्चेन्द्रियविकलेन्द्रियादिरित्याशयेनाह समनस्का इति । ये पुनरिष्टानिष्टवस्तुषु सञ्चिन्त्य सञ्चिन्त्य स्वदेहपरिपालनहेतोरिष्टेषु वर्त्तन्तेऽनिष्टेभ्यस्तु निवर्त्तन्ते प्रायेण साम्प्रतकाल एव, नातीतानागतकालयो, ते हेतुवादोपदेशिकीसञ्ज्ञया सञ्ज्ञिनो द्वीन्द्रियादयस्तद्विपरीता असञ्ज्ञिनः पृथिव्यादयः, द्वीन्द्रियादेरपि प्रतिनियतेष्टानिष्टप्रवृत्तिनिवृत्तिदर्शनेन वार्त्तमानिकमानसिकपर्यालोचनवत्त्वात्, पृथिव्यादयस्तु घर्माद्यभितापेऽपि तन्निरा-

१. दीर्घकालोपदेशिकीमित्यर्थः इह सर्वत्र च सञ्ज्ञित्वासञ्ज्ञित्वव्यवहार एतत्सञ्ज्ञापेक्षयैव भवतीति विज्ञेयम् ॥
२. हेतुवादोपदेशेनाल्पमनोऽभिरमम्पन्नस्यापि सञ्ज्ञित्वेनाभ्युपगमादिति भावः ॥

करणाय प्रवृत्तिनिवृत्तिरहिता एव । दृष्टिवादोपदेशेन तु क्षायोपशमिके ज्ञाने वर्त्तमानस्सम्यग्दृष्टिरेव सञ्ज्ञी सम्यग्ज्ञानयुक्तत्वात्, मिथ्यादृष्टिः पुनरसञ्ज्ञी सम्यग्ज्ञानसञ्ज्ञारहितत्वादिति ॥

आहारकमार्गणाभेदमाचष्टे—

**आहारकानाहारकभेदेन द्विविधाऽऽहारकमार्गणा । आहारकरणशीला आहारकास्तद्भिन्ना अनाहारकाः ॥**

आहारकेति । आहरणमाहारो ग्रहणमभ्यवहारो वा, स चौजोलोमप्रक्षेपरूपेण त्रिविधः । यावदौदारिकं शरीरं न निष्पद्यते तावत्तैजससहितेन कार्मणेन यदाहारयति स ओजआहारस्तेनाहारकास्सर्वेऽप्यपर्याप्तकाः । तत्र प्रथमोत्पत्तौ जीवः पूर्वशरीरपरित्यागे विग्रहेणाऽविग्रहेण वोत्पत्तिदेशे तैजससहितेन कार्मणेन तप्तस्नेहपतितापूपकवत्तत्प्रदेशस्थानाद्पुद्गलानादत्ते तदुत्तरकालमपि यावदपर्याप्तकावस्था स ओज आहारः । शरीरपर्याप्त्युत्तरकाल बाह्यया त्वचा लोमभिराहारो लोमाहारः[२], इन्द्रियादिभिः पर्याप्तिभिः पर्याप्ता. केषाञ्चिन्मतेन शरीरपर्याप्तका वा लोमाहारिणो भवन्ति । प्रक्षेपेण कवलादेराहारः प्रक्षेपाहारः, स च वेदनीयोदयेन चतुर्भिस्स्थानैराहारसञ्ज्ञायाद्भवति । पर्याप्तका यदैव प्रक्षेपं कुर्वन्ति तदैव प्रक्षेपाहारा नान्यदा, लोमाहारता तु वाय्वादिस्पर्शात्सर्वदैव, स च लोमाहारोऽर्वाग्दृष्टिमता न दृष्टिपथमवतरति प्रायशः प्रतिसमयवर्त्ती च । प्रक्षेपाहारस्तूपलभ्यते प्रायस्स च नियत कालीयः देवकुरूत्तरकुरुप्रभवा अष्टमभक्ताहारा , सङ्ख्येयवर्षायुषामनियतकालीयः प्रक्षेपाहारः । एकेन्द्रियाणां देवनारकाणाञ्च नास्ति प्रक्षेपः, पर्याप्त्युत्तरकाल स्पर्शेन्द्रियेणैवाऽऽहरणाल्लोमाहारः, द्वीन्द्रियादीना तिर्यङ्मनुष्याणाञ्च प्रक्षेपाहारस्तमन्तरेण कायस्थितेरेवाभावात् । अन्ये तु यो जिह्वेन्द्रियेण स्थूलशरीरे प्रक्षिप्यते स प्रक्षेपाहारः, यस्तु घ्राणदर्शनश्रवणैरुपलभ्यते धातुभावेन परिणमति स ओज आहारः, यः पुनस्स्पर्शेन्द्रियेणैवोपलभ्यते धातुभावेन प्रयाति स लोमाहार इति वदन्ति । तदेतदाहाऽऽहारकरणशीला इति त्रिविधान्यतमाहारकरणशीला इत्यर्थः । अथानाहारकानाह तद्भिन्ना इति त्रिविधाहारिभिन्ना इत्यर्थः । विग्रहगतौ वक्रगतिमापन्ना वक्रद्वये त्रिसमयोत्पत्तावेकस्मिन् समये, वक्रत्रये चतुस्समयोत्पत्तिके मध्यवर्त्तिनोर्द्वयोस्समययोर्वक्रचतुष्टये पञ्चसमयोत्पत्तिके मध्यवर्त्तिषु त्रिषु समयेषु, केवलिनस्समुद्घा-

---

१ क्षायिकज्ञाने वर्त्तमानोऽपि दृष्टिवादोपदेशेन न सञ्ज्ञी, अतीतार्थस्मरणस्यानागतचिन्तायाश्च केवलिन्यभावात्, तज्ज्ञानस्य सर्वदा सर्वार्थावभासकत्वादिति भाव ॥ २ तत्र स्पर्शेन्द्रियेणोष्मादिना तप्तच्छायया शीतवायुनोदकेन च प्रीयते प्राणी गर्भस्थोऽपि पर्याप्त्युत्तरकाल लोमाहार एवेति ॥ ३. तत्र देवाना मनसा परिकल्पितास्शुभा पुद्गलास्सर्वेणैव कायेन परिणमन्ति, नारकाणान्त्वशुभा इति विज्ञेयम् ॥

तावस्थायां तृतीयचतुर्थपञ्चमसमयेषु शैलेश्यवस्थायाञ्च ह्रस्वपञ्चाक्षरोद्गिरणकालमात्रं, सिद्धाश्च सदैवानाहारका इति भावः ॥

इत्येवं चतुर्दशमूलमार्गणोत्तरभेदानाख्यायाऽऽसु सिद्धसत्ता केति निरूपयति—

**तत्र नरगतिपञ्चेन्द्रियजातित्रसकायभव्यसंज्ञियथाख्यातक्षायिकानाहारककेवलज्ञानकेवलदर्शनेषु मोक्षो न शेषेषु ॥**

तत्रेति । चतुर्दशमार्गणावान्तरभेदमधिकृत्येत्यर्थः । नरगतीति, अनन्तरपश्चात्कृतनयमधिकृत्य नरगतौ मुक्तिः प्राप्यते न शेषासु गतिषु, पाश्चात्यमेकान्तरं गतिविशेषमधिकृत्य पुनस्सामान्यतश्चतसृभ्योऽपि गतिभ्य आगतस्सिद्ध्यति । सिद्धप्रस्तावात्सिद्ध इत्यनुक्त्वा मोक्षपदग्रहणं कर्मक्षयसिद्धैरिहाधिकारस्तेषामेव मोक्षपर्यायेणानन्यत्वादिति सूचनाय, तेन कर्मशिल्पविद्यामन्त्रयोगागमार्थयात्राभिप्रायतप·सिद्धानां व्युदासः । अनन्तरैकान्तरपश्चात्कृतौ नयौ नैगमसङ्ग्रहव्यवहाररूपौ सकलार्थग्राहित्वात्, वर्त्तमानकालार्थग्राहकर्जुसूत्रशब्दसमभिरूढैवम्भूतनयरूपप्रत्युत्पन्नभावापेक्षया तु सिद्धस्सिद्धगतौ सिद्ध्यति । पञ्चेन्द्रियजातीति, अनन्तरपश्चात्कृतजात्यपेक्षयेदम्, नर एव सन्यतः सिद्ध्यत्यत एव पञ्चेन्द्रियजातावेवेति भावः, एकान्तरितपश्चात्कृतजात्यपेक्षया त्वन्यतमस्या जातौ प्रत्युत्पन्नभावापेक्षया च नैकस्यामपीन्द्रियमार्गणायां सर्वथा शरीरपरित्यागेनैव सिद्धत्वपर्यायोत्पत्तेरिति भावः। त्रसकायेति, अत्रापि पूर्ववदेव भाव्यम्। भव्येति, अनन्तरैकान्तरितपश्चात्कृतनयापेक्षयेदम्, भव्यानामेव सिद्धिर्बोध्याऽभव्यानान्तु कथमपि सिद्ध्यभावात्, प्रत्युत्पन्ननयापेक्षया तु सिद्धो न भव्यो नाप्यभव्य इति । सञ्ज्ञीति, पूर्ववदेव । यथाख्यातेति, अनन्तरपश्चात्कृतनयापेक्षयेदम्, एकान्तरपश्चात्कृतनयापेक्षया केचित्सामायिकसूक्ष्मसम्परायययथाख्यातचारित्रिण·, केचित्सामायिकच्छेदोपस्थापनसूक्ष्मसम्परायययथाख्यातचारित्रिणः केचित्सामायिकपरिहारविशुद्धिकसूक्ष्मसम्परायययथाख्यातचारित्रिणः केचित्तु सामायिकछेदोपस्थापनीयपरिहारविशुद्धिकसूक्ष्मसम्परायययथाख्यातचारित्रिणः, तीर्थकृतस्तु सामायिकसूक्ष्मसम्परायययथाख्यातचारित्रिण एव । प्रत्युत्पन्ननयापेक्षया सिद्धो न चारित्री नाप्यचारित्रीति । क्षायिकेति, क्षायिक द्विविध शुद्धमशुद्धञ्च, तत्र क्षायिकी

---

१. अष्टविधकर्मदहनानन्तर सिद्धस्यैव सतस्सिद्धत्वमुपजायते नासिद्धस्य, तदात्मनो हि स्वाभाविक सत्सिद्धत्वमनादिकर्मावृतं तदावरणविगमेनाविर्भवत्येव न पुनरसदुपजायते न ह्यसत खरविषाणादेर्जन्म भवति सिद्धस्य सिद्धत्व सद्भावरूपमुपजायते न तु प्रदीपनिर्वाणकल्पमभावरूपमिति भाव ॥ २. यस्य हि सिद्धिर्भाविनी स भव्य उच्यते, सिद्धस्य तु न सा भाविनी साक्षात्सञ्जातत्वात्, ततोऽसौ न भव्यो नाप्यभव्य इति भाव ॥

शुद्धाऽपायसद्द्रव्यरहिता भवस्थकेवलिनां सिद्धानाञ्च शुद्धजीवस्वभावरूपा सम्यग्दृष्टिः साद्यपर्यवसाना, अशुद्धा चापायसहचारिणी श्रेणिकादेरिव सम्यग्दृष्टिः सादिसपर्यवसाना, प्रत्युत्पन्ननयापेक्षयाऽशुद्धे क्षायिके न सिद्धसम्भवः, अनन्तरपश्चात्कृतनयापेक्षयाप्येवमेव । एकान्तरनयापेक्षया तु अशुद्धक्षायिकादावपि । अनाहारकेति, प्रत्युत्पन्ननयापेक्षयेदम्, केवलज्ञानकेवलदर्शनेति । प्रत्युत्पन्ननयापेक्षयाऽनन्तरपश्चात्कृतनयापेक्षया तु द्वाभ्यां त्रिभिश्चतुर्भिरपि ज्ञानैरेवमेकान्तरितेऽपि बोध्यम् । न शेषेष्विति, योगवेदकषायलेश्यास्वित्यर्थः । यथासम्भवं प्रत्युत्पन्नानन्तरपश्चात्कृतनयापेक्षयैव मुक्तिरिति ॥

अथ द्रव्यप्रमाणद्वारमाह—

**सिद्धजीवसंख्यानिरूपणं द्रव्यप्रमाणम् । तच्च सिद्धजीवानामनन्तत्वं बोध्यम् ॥**

सिद्धेति । सिद्धानां जीवद्रव्याणां या संख्या परिगणनात्मिका तस्या निरूपणमित्यर्थः । संख्यामाह तच्चेति द्रव्यप्रमाणञ्चेत्यर्थः, अनन्तत्वमिति, आगमप्रसिद्धानन्तसंख्याप्रमितत्वमित्यर्थः । नवविधेऽनन्ते मध्यमयुक्तानन्तसंज्ञोपलक्षिताया पञ्चमानन्तसंख्याया न कदाचन व्यभिचारित्वमिति भावः । तथा सर्वजीवानामनन्तभागेऽनन्तगुणा अभव्येभ्य इत्यपि बोध्यम् ॥

सम्प्रति क्षेत्रचिन्तायामाह—

**चतुर्दशरज्जुप्रमितस्य लोकस्य कियद्भागे सिद्धस्थानमिति विचारः क्षेत्रद्वारम् । लोकस्यासंख्येयभागे सिद्धशिलोर्ध्वं सिद्धस्थानं, असंख्येयाकाशप्रदेशप्रमाणं सिद्धानां क्षेत्रावगाहो ज्ञेयः ॥**

चतुर्दशेति । निर्णीतसंख्यानामेषां निवासे विप्रतिपत्तिर्जायते कियन्तमाकाशमेते व्याप्नुवन्ति कियद्भागञ्च नेत्यतस्तन्निरूपणार्थं क्षेत्रद्वारमिति भावः । धर्माधर्मपरिच्छिन्नो जीवाजीवाधारक्षेत्रं लोकः, तन्मानं चतुर्दशरज्जुः, उत्तरयति लोकस्येति, सिद्धशिलाया ऊर्ध्वं लोकस्यासंख्येयभागे समस्तास्सिद्धा एको वाऽऽश्रितः, असंख्येयाकाशेति । एकसिद्धजीवापेक्षया सर्वसिद्धजीवापेक्षया वेदम् । एकस्यापि जीवस्यासंख्येयप्रदेशत्वादसंख्येयभाग एवावगाहः, सर्वावगाहचिन्तायां बृहत्तमोऽसंख्येयभागः, एकावगाहे तु लघुतम इति विशेषः, सिद्धानां बाहल्यमानमङ्गीकृत्योत्कर्षतः क्रोशषड्भागेऽवगाहना, दैर्घ्यपृथुत्वाभ्यान्तु पञ्चचत्वारिंशद्योजनलक्षप्रमाणं सिद्धावगाहक्षेत्रं, तस्य वृत्तसंस्थानत्वात् । एकावगाहस्य तु यस्य

यावत्प्रमाणं शरीरं तस्य त्रिभागोना तावत्येवावगाहनेति कथमसङ्ख्यातत्वमिति चेन्न तन्न, असंख्यातराशेरसंख्यातभेदभिन्नत्वेनाविरोधात् ॥

स्पर्शनाद्वारं प्ररूपयति—

**सिद्धात्मनोऽवगाहनाकाशपरिमाणतस्स्पर्शना कियतीति विचारस्स्पर्शनाप्ररूपणा । अवगाहनातस्तेषामधिका स्पर्शना भवति ॥**

सिद्धेति । सिद्धस्य स्वावगाढाकाशप्रदेशैस्स्पर्शना किं न्यूनाऽधिका तुल्या वेति प्ररूपणमिति भावः । अभिव्याप्तिलक्षणाऽवगाहना, स्पर्शना तु सम्बन्धमात्ररूपेति विशेषः । अधिकत्वमेवेत्यभिप्रायेणाहावगाहनात इति, यथैकप्रदेशावगाढस्य परमाणोस्सप्तप्रदेशा स्पर्शना तथैव यावति क्षेत्रे एकस्सर्वे वाऽवगाढास्तावतः क्षेत्रस्य येऽनन्तरास्सर्वदिग्प्रदेशास्ते तैस्स्पृश्यन्त इति स्पर्शनाधिकेति भावः ॥

अथ कालद्वारं वक्ति—

**सिद्धावस्थानं कियत्कालमिति विचारः कालद्वारम् । व्यक्त्यपेक्षया साद्यनन्तो जातिमाश्रित्यानाद्यनन्तः स्यात् ॥**

सिद्धावस्थानमिति । स्थितिमतोऽवधिपरिच्छेदार्थं जीवैस्सिद्धत्वं कियन्तं कालं धार्यत इति प्रश्ने विचारः कालद्वारमित्यर्थः । उत्तरयति व्यक्त्यपेक्षयेति, एकजीवापेक्षयेत्यर्थः, यदा स सिद्धतां गतस्तदा तस्य सिद्धत्वमुपजातमिति सादित्वं, ततस्तस्य प्रलयाभावाच्चापर्यवसितत्वमिति भावः । जातिमाश्रित्येति, सर्वसिद्धापेक्षयेत्यर्थोऽनाद्यनन्त इति, सिद्धशून्यकालाभावादिति भावः ॥

अन्तरद्वारमाख्याति—

**परित्यक्तस्य पुनः परिग्रहणावान्तरकालविचारोऽन्तरप्ररूपणा । सिद्धानां प्रतिपाताभावादन्तरं नास्तीति ध्येयम् ॥**

परित्यक्तस्येति । कस्यचित्पर्यायस्य कारणान्तरवशादयभावे सति पुनर्निमित्तान्तरसंयोगात्तस्यैवाविर्भावो दृश्यते, प्रकृतेऽपि सिद्धत्वपर्यायस्य न्यग्भावे सति पुनस्तत्प्राप्तिः कियत्कालानन्तरं भवतीति संशये यो विचारस्सोऽन्तरप्ररूपणेत्यर्थः । उत्तरमाचष्टे सिद्धानामिति, आवरणकारणानां सर्वथाऽसम्भवादिति भावः ॥

अथ भागद्वारमाह—

**संसार्यात्मसंख्यापेक्षया कियद्भागे सिद्धा इति विचारो भागद्वारम् । अनन्तानन्तसंसारिजीवापेक्षया अनन्ता अपि सिद्धास्तदनन्तभागे भवन्ति ॥**

संसारीति । *ससारिजीवराश्यपेक्षया सिद्धाः कस्मिन् भागे वर्त्तन्त इति विचारो भागद्वारमित्यर्थ* । उत्तरयति अनन्तेति । जीवसख्या मध्यमानन्तानन्तसङ्ख्याष्टमानन्तप्रमाणा, तदपेक्षया सिद्धानामनन्तत्वेऽपि अनन्ततमे भागेऽवतिष्ठन्ते ते, तेषा पञ्चमानन्तसख्याप्रमितत्वादिति भावः ॥

सम्प्रति भावद्वारमाख्यातु भावानाह—

**औपशमिकक्षायिकक्षायोपशमिकौदयिकपारिणामिकभेदेन पञ्च भावाः । कर्मणामुपशमेनौपशमिकः, क्षयेण क्षायिकः, क्षयोपशमाभ्यां क्षायोपशमिकः, उदयेनौदयिकः, स्वभावावस्थानेन च पारिणामिको ज्ञेयः । एषु सिद्धाः कतमस्मिन् भावे वर्त्तन्त इति विचारो भावद्वारम् । तेषां ज्ञानदर्शने क्षायिके जीवत्वञ्च पारिणामिकमिति भावद्वयं स्यात् ॥**

औपशमिकेति । तान् स्वरूपयति कर्मणामिति, कर्मणामनुद्भूतस्ववीर्यता उपशमस्तेन निर्वृत्तो भाव औपशमिकः, स द्विविधः औपशमिकसम्यक्त्वचारित्रभेदात्, दर्शनचारित्रमोहनीयोपशमजन्यावेतौ भेदौ । क्षयेणेति, कर्मणामत्यन्तोच्छेदेन निर्वृत्तः क्षायिको भाव इत्यर्थः, ज्ञानदर्शनदानलाभभोगोपभोगवीर्यसम्यक्त्वचारित्रभेदेन नवविध, केवलज्ञानदर्शनावरणीयान्तरायपञ्चकदर्शनचारित्रमोहनीयक्षयजन्या एते भावाः । क्षयोपशमाभ्यामिति । कर्मणामेकदेशक्षयेणैकदेशोपशमनाच्च जातः क्षायोपशमिक , ज्ञानचतुष्काज्ञानत्रयदर्शनत्रिकलब्धिपञ्चकसम्यक्त्वचारित्रसयमासयमरूपेणाष्टादशविध , तत्तत्कर्मणा क्षयोपशमजन्य. । उदयेनेति, द्रव्यादिनिमित्तककर्मफलप्राप्तिरूपोदयफलको भाव औदयिकः, गतिचतुष्टयकषायचतुष्कवेदत्रयमिथ्यादर्शनाज्ञानासयतासिद्धत्वलेश्याषट्कभेदेनैकविंशतिविधस्तत्कर्मोदयजः । द्रव्यात्मलाभमात्रहेतुकः परिणाम स एव तेन वा निर्वृत्तः पारिणामिक, जीवत्वभव्यत्वाभव्यत्वादयः । द्वारार्थमाहैष्विति प्रोक्तेषु भावेष्वित्यर्थः । क्षायिके ज्ञानदर्शनादौ पारिणामिके जीवत्वे नतु भव्यत्वादौ तन्निषेधात् सिद्धाना वृत्तिरित्यभिप्रायेणोत्तरयति तेषामिति भावद्वयमिति क्षायिकपारिणामिकरूपभावद्वयमित्यर्थः ॥

अधुनाऽल्पबहुत्वद्वारमाह—

**कतमस्मिन् वेदे सिद्धा अल्पाः कतमस्मिंश्च बहव इति विचारोऽल्पबहुत्वद्वारम्। नपुंसके स्तोकाः स्त्रीपुरुषयोः क्रमतः संख्येयगुणा विज्ञेयाः॥**

कतमस्मिन्निति। पुंस्त्रीनपुंसकभेदभिन्ने वेदे कुत्राल्पाः कुत्र वा बहव इत्याशङ्काया यो विचारस्तदल्पबहुत्वद्वारमित्यर्थः, यद्यपि सिद्धाना पूर्वमवेदत्वमुक्त तथा चाय विचारो न सम्भवति तथाप्यव्यवहितपूर्वनयापेक्षयाऽय विचारो बोध्यः। उत्तरयति नपुंसक इति नपुंसके सर्वस्तोकाः, स्त्रीवेदे सख्येयगुणास्तेभ्योऽपि पुरुषसिद्धास्सख्येयगुणा इत्यर्थः। पुरुषाणामष्टशत स्त्रीणा विंशतिर्दश नपुंसकानाम्, इदञ्च ये पुरुषेभ्य उद्धृताः पुरुषा एव जायन्ते तेषामष्टशत बोध्यम्, ये च पुरुषेभ्य उद्धृताः स्त्रियो नपुसका वा जायन्ते ये च स्त्रीभ्य उद्धृताः पुरुषा नपुसका वा जायन्ते ये तु नपुसकेभ्यः उद्धृता नपुसकाः पुरुषास्स्त्रियो वा जायन्तेऽष्टस्वेतेषु भङ्गेषु प्रत्येकं दश दश भवन्तीति भाव॰। अत्र पुनस्ते सिद्धा अव्यवहितपूर्वपर्यायनयावलम्बनेन क्षेत्रकालगतिलिङ्गतीर्थचारित्रबुद्धज्ञानावगाहान्तर-सख्याल्पबहुत्वैर्विचार्यन्ते, तत्र तीर्थलिङ्गबुद्धद्वाराण्याश्रित्य मूलकृदेवानुपदं विवेचयति शेषा-पेक्षया तूच्यते क्षेत्रतस्सार्धद्वितीयद्वीपसमुद्रद्वयलक्षणे मनुष्यक्षेत्रे तिर्यग्लोके सिद्धत्व लभते जन्मसहरणापेक्षया, अधोलोकेऽधोलौकिकेषु ग्रामेषु, ऊर्ध्वलोके तु पाण्डुकवनादौ, तीर्थकृतः पुन॰ पञ्चदशसु कर्मभूमिषु न शेषासु, व्याघातासम्भवादिति। कालतः—उत्सर्पिण्या जन्माङ्गीकृत्य द्वितीयतृतीयचतुर्थारकेषु, सिद्धिगमनन्तु तृतीयचतुर्थयोरेव अवसर्पि-ण्यान्तु तृतीयचतुर्थपञ्चमारकेषु सिद्ध्यति, केवल चतुर्थे जातः पञ्चमे सिद्ध्यति, न तु पञ्चमे जातः पञ्चमे सिद्ध्यति तत्र जातस्य सर्वथा सिद्ध्यनर्हत्वात्, व्याघातापेक्षया तु त्रिष्वप्युत्सर्पिण्यादिषु सिद्ध्यति। तीर्थकृता पुनरवसर्पिण्यामुत्सर्पिण्याञ्च जन्म सिद्धि-गमनं च सुषमदुष्षमादुष्षमसुषमारूपयोरेवारकयोर्वेदितव्यम्। गतितः- मनुष्यगतावेव न शेषासु प्रोक्तमेवेद मूले। व्यवहितप्राक्तनपर्यायनयाङ्गीकारेण तु सामान्यतश्चतसृभ्योऽपि गतिभ्य.। चारित्रद्वारमाश्रित्य पूर्वमेवोक्तम्। ज्ञानद्वारापेक्षयापि तथैव। अवगाहनातः— उत्कर्षेण पञ्चविंशत्यधिकपञ्चधनुश्शतप्रमाणायामवगाहनाया सिद्ध्यन्ति, यथा मरुदेवीका-

---

१ तत्रापि निर्व्याघातेन पञ्चदशसु कर्मभूमिषु व्याघातेन समुद्रनदीवर्षधरपर्वतादिष्वपि विज्ञेयम्॥

२ यथा भगवान् ऋषभस्वामी सुषमदुष्षमारकपर्यन्त समुद्रपादि एकोननवतिपक्षेषु शेषेषु सिद्धिमगमत्, वर्धमानस्वामी तु भगवान् दुष्षमसुषमारकपर्यन्तेषु एकोननवतिपक्षेषु शेषेषु सिद्धिसौधमध्यमध्यास्तेति॥ उत्सर्पिण्या चतुर्विंशतितमस्तीर्थकरस्सुषमदुष्षमायामेकोननवतिपक्षेषु व्यतिक्रान्तेषु जन्मासादयति एकोननवतिपक्षाधिकचतुरशीतिपूर्वलक्षातिक्रमे च सिद्ध्यतीति॥ –

लवर्तिनः, मरुदेव्यामपि यथोक्तप्रमाणावगाहना द्रष्टव्या, जघन्येन द्विहस्तप्रमाणायाम्, यथा वा मनककूर्मसुतादीनाम् । तीर्थकृतान्तु जघन्यावगाहना सप्तहस्तप्रमाणा महावीरवत् । उत्कृष्टा पञ्चधनुश्शतमाना नाभेयवत्, शेषास्त्वजघन्योत्कृष्टाः । अन्तरतः—जघन्यत एकसमयः, उत्कृष्टतः षण्मासाः, निरन्तरञ्च जघन्यतो द्वौ समयौ, उत्कृष्टतोऽष्टौ समयाः, सङ्ख्यातः—जघन्यत एकस्मिन् समये एकस्सिद्ध्यति, उत्कर्षेणाष्टाधिकं शतम् । तथा चास्मिन् भरतक्षेत्रेऽस्यामवसर्पिण्यां भगवतो नाभेयस्य निर्वाणसमये श्रूयतेऽष्टोत्तरशतमेकसमयेन सिद्धम् । अल्पबहुत्वतः—युगपत् द्वित्र्यादिकाः सिद्धाः स्तोका एकका: सिद्धाः सङ्ख्येयगुणा इति सङ्क्षेपतः प्रदर्शितानि द्वाराणि, विस्तरतस्तु सिद्धप्राभृतादौ द्रष्टव्यानि ॥

अथ तीर्थलिङ्गबुद्धद्वाराणि मनसि कृत्य पुनः प्रकारान्तरेण सिद्धानाह—

**सिद्धा अपि जीनाजिनतीर्थातीर्थगृहिलिङ्गान्यलिङ्गस्वलिङ्गस्त्रीलिङ्गपुरुषलिङ्गनपुंसकलिङ्गप्रत्येकबुद्धस्वयम्बुद्धबुद्धबोधितैकानेकसिद्धभेदेन पञ्चदशविधाः ॥**

**सिद्धा इति ।** अयम्भावः, सिद्धानामयं भेदो न वास्तविकः कृत्स्नकर्मक्षयस्य केवलज्ञानादीनाञ्च सर्वत्राविशेषात् किन्तु सिद्धत्वप्राप्तिपूर्वकालीनभवावस्थामाश्रित्य वाच्यः । तत्राप्येते नासङ्कीर्णाः, जिनाजिनरूपे, तीर्थातीर्थरूपे, एकानेकरूपे वा भेदद्वये, गृहिलिङ्गान्यलिङ्गस्वलिङ्गरूपे स्त्रीलिङ्गपुरुषलिङ्गनपुंसकलिङ्गरूपे, प्रत्येकबुद्धस्वयम्बुद्धबुद्धबोधितरूपे वा भेदत्रये शेषभेदानामन्तर्भावात्, किन्तु विशेषपरिज्ञानार्थमेव ग्रन्थारम्भ इति ॥

अथ जिनाजिनसिद्धानाह—

**अनुभूततीर्थकरनामविपाकोदयजन्यसमृद्ध्यो मुक्ता जिनसिद्धाः । यथा ऋषभादयः, अननुभूततीर्थकरनामविपाकोदयजन्यसमृद्ध्यो मुक्ता अजिनसिद्धाः । यथा पुण्डरीकगणधरादयः ॥**

---

१ नाभिकुलकरपत्नी मरुदेवी नाभेश्च शरीरप्रमाणं पञ्चधनुःशतानि पञ्चविंशत्यधिकानि यावदासीत्, तत्पत्नीत्वेऽपि तस्याः प्रमाणतस्तदपेक्षया किञ्चिन्न्यूनत्वमेवेति सम्प्रदायः कियता न्यूनाधिक्येऽपि समत्वातिदेशानामागमे दर्शनेनाबाधकत्वात् । अथवा तस्याः हस्तिस्कन्धाधिरूढायास्सिद्धत्वात् हस्तिस्कन्धाधिरूढानाञ्च सङ्कुचिताङ्गत्वेन नोक्तावगाहनाया विरोधः उक्तञ्च 'अहवा सङ्कोयओ सिद्धा' इति ॥
२. अत्रेदं बोध्यम् सिद्धकेवलज्ञानं हि द्विविधं अनन्तरसिद्धकेवलज्ञानं परम्परसिद्धकेवलज्ञानञ्चेति । सिद्धत्वप्रथमसमये वर्त्तमानस्य केवलज्ञानमाद्यं, विवक्षितसिद्धत्वप्रथमसमयाद् द्वितीयादिषु समयेषु अनन्तामद्धां यावद्वर्तमानानां केवलज्ञानं द्वितीयम् । तत्रानन्तरसिद्धकेवलज्ञानं पञ्चदशविधं तच्च सिद्धत्वप्राप्त्यव्यवहितपूर्वकालीनभवावस्थामाश्रित्य सिद्धाः पञ्चदशविधाः प्रोक्ताः । परम्परसिद्धकेवलज्ञानन्त्वनेकविधं, तच्चाप्रथमसमयसिद्धद्विसमयसिद्धत्रिसमयसिद्धचतुस्समयसिद्धादिभेदतो भाव्यमिति ॥

**अनुभूतेति** स्पष्टम् । अजिनसिद्धानाह अननुभूतेति । स्पष्टम् ॥

तीर्थातीर्थसिद्धानाह—

**प्रवर्त्तिते तीर्थे मुक्तास्तीर्थसिद्धाः । यथा गणधारिणः । अर्वाक् तीर्थस्थापनाया एव मुक्ता अतीर्थसिद्धाः । यथा मरुदेवा ॥**

**प्रवर्त्तित** इति । संसारापारवारानिधिस्तीर्यतेऽनेनेति तीर्थं प्रवचनं परमगुरुप्रणीतं यथावस्थितसकलजीवाजीवादिपदार्थप्ररूपकम्, तच्च न निराधारं भवितुमर्हतीति कृत्वा सङ्घः प्रथमगणधरो वा तदिति वेदितव्यं, तस्मिन्नुत्पन्ने ये सिद्धास्ते तीर्थसिद्धा इत्यर्थः । निदर्शनमाह यथेति । अतीर्थसिद्धानाहार्वागिति । तीर्थस्याभावोऽतीर्थं, अभावश्चात्रानुत्पादो व्यवच्छेदो वा विवक्षितः । तस्मिन् सति ये सिद्धास्तेऽतीर्थसिद्धाः । तत्र तीर्थस्यानुत्पादे सिद्धानां निदर्शनमाह—यथेति । नहि मरुदेव्यादिसिद्धिगमनकाले तीर्थमुत्पन्नमासीत् किन्तु केवलज्ञानावाप्तिं प्रभोर्निशम्य पुत्रवियोगेन रुदती पटलावृतनेत्रा ता वारणस्कन्ध आरोप्य वन्दनार्थं प्रचलिते भरते दूरादेव दिव्यनिध्वानं निशम्य प्रहृष्टान्तरङ्गा हर्षाश्रुणा दूरीकृतचक्षुरावरणा विभुवैभवं दृष्ट्वाऽचिन्तयत् पुत्रस्नेहेन मया नेत्रे गततेजस्के कृते, नानेन किमपि सन्दिष्टमिति, पुत्रस्नेहं विधूय विरक्ता घातिकर्मक्षयोदितकेवलज्ञाना वारणस्कन्ध एव सा सिद्धिमुपयाताऽवस्तीर्थसंस्थापनपूर्वं मुक्तिगमनादतीर्थसिद्धेति भावः ।

अथैतेषां सत्पदप्ररूपणां द्रव्यकालान्तराण्याश्रित्य परम्परयाल्पबहुत्वस्य विचारे क्रियमाणे तीर्थकरतीर्थे तीर्थकरीतीर्थेऽतीर्थे च सिद्ध्यन्त्येते, युगपदेकसमयेनोत्कर्षतस्तीर्थकृतश्चत्वारस्सिद्ध्यन्ति, अष्टशतमतीर्थकृतां विंशतिस्त्रीणां द्वे तीर्थकर्यौ । तीर्थकरतीर्थे तीर्थकरीतीर्थे वाऽतीर्थकरसिद्धा उत्कृष्टतोऽष्टौ समयान् तीर्थकरास्तीर्थकर्यश्च द्वौ द्वौ समयौ निरन्तरं सिद्ध्यन्ति । तीर्थकृतः पूर्वसहस्रपृथक्त्वमुत्कर्षतोऽन्तरं, तीर्थकरीणामनन्तः कालः, अतीर्थकराणां साधिकं वर्षं नोतीर्थसिद्धानां सङ्ख्येयानि वर्षसहस्राणि नोतीर्थसिद्धाः प्रत्येकबुद्धाः । जघन्यतस्सर्वत्रापि समयः । सर्वस्तोकाः तीर्थकरीसिद्धाः, ततस्तीर्थकरीतीर्थे प्रत्येकबुद्धसिद्धास्सङ्ख्येयगुणाः, तेभ्योऽपि तीर्थकरीतीर्थेऽतीर्थकरीसिद्धाः सङ्ख्येयगुणाः, तेभ्योऽपि तीर्थकरीतीर्थेऽतीर्थकरसिद्धास्सङ्ख्येयगुणाः, तेभ्यस्तीर्थकरसिद्धा अनन्तगुणाः, तेभ्योऽपि तीर्थकरतीर्थे प्रत्येकबुद्धसिद्धा सङ्ख्येयगुणाः, तेभ्योऽपि तीर्थकरतीर्थे साध्वीसिद्धा सङ्ख्येयगुणाः, तेभ्योऽपि तीर्थकरतीर्थेऽतीर्थकरसिद्धाः सङ्ख्येयगुणा इति ॥

१. तीर्थस्य व्यवच्छेदश्च चन्द्रप्रभस्वामिसुविधिस्वाम्यपान्तराले तत्र ये जातिस्मरणादिनाऽपवर्गमवाप्य सिद्धास्ते तीर्थव्यवच्छेदसिद्धा इत्यपि बोध्यम् ।

अथ गृहिलिङ्गसिद्धानाह—

**पूर्वभवाऽऽसेवितसर्वविरतिसामर्थ्यजन्यकेवलज्ञाना ज्ञानप्राप्त्यूर्ध्वं बहुलायुषोऽभावाद्गृहस्थावस्थायामेवान्तर्मुहूर्त्ताभ्यन्तरे मुक्ता गृहिलिङ्गसिद्धाः । यथा भरतचक्रीत्युच्यते ॥**

पूर्वभवेति । लिङ्गं त्रिविधं पुंस्त्रीनपुंसकभेदात्, अथवा द्विविधं द्रव्यभावभेदात् । तत्र द्रव्यलिङ्गं त्रिविधं गृहिलिङ्गमन्यलिङ्गं स्वलिङ्गञ्चेति, एतत्सर्वापेक्षया क्रमेण विचार्यते तत्र प्रथमं गृहिलिङ्गं वक्ति पूर्वेत्यादिना । गृहिणा लिङ्गं दीर्घकेशकच्छबन्धादि गृहिलिङ्गम् । भावलिङ्गं श्रुतज्ञानक्षायिकसम्यक्त्वचरणानि तेषु च वर्त्तमाननयचिन्तया किञ्चिदनुवर्तते किञ्चिन्निवर्त्तते क्षायिकसम्यक्त्वमनुवर्त्तते श्रुतचरणे तु निवर्त्तेते न तद्विना कस्यचित्सिद्धत्वमित्यभिप्रेत्याव्यवहितप्राग्जन्मनि तदृदर्शनेऽपि तत्पूर्वजन्मापेक्षया द्रव्यचारित्रसत्त्वमेतज्जन्मनि च ज्ञानसत्त्वं सूचयन्नत्र गृहिलिङ्गसिद्धत्वं व्याख्यत् । दृष्टान्तमाह यथेति । केवलज्ञानोत्पत्त्यपेक्षया निदर्शनमिदं, उत्पन्नकेवलानामवश्य मोक्षनियमात् । अन्यथा केवलप्राप्त्यनन्तर देवार्पितसाधुद्रव्यलिङ्गस्य धारणपूर्वक विहरणेन भव्यप्रतिबोधस्य शास्त्रे श्रुतस्य विरोधापत्तेः, अत एवोन्यत इत्युक्तम् । अत्र निरुपचरितनिदर्शनं तु मरुदेवीप्रभृतयः ॥

अन्यलिङ्गसिद्धानाह—

**भवान्तराऽऽसेवितसर्वविरतिजन्यकेवलज्ञाना अल्पायुष्कास्सन्तस्तापसादिलिङ्गेनान्तर्मुहूर्त्तान्तरे मुक्ता अन्यलिङ्गसिद्धाः । यथा वल्कलचीरी ॥**

भवान्तरेति । आदिना भौतपरिव्राजकादितीर्थान्तरीयलिङ्गं ग्राह्यम् । स्पष्टं । दृष्टान्तमाह यथेति । प्रसन्नचन्द्रर्षेर्भ्राताऽयं स्वपितुस्समीपे वसन् वृक्षत्वगादिपरिवसनो गुणनिष्पन्नाभिधान. पितुस्तुम्बीं प्रतिलेखयमाना कदाचित्समीक्ष्य समुत्पन्नजातिस्मृतिः पूर्वभवासेवितसर्वविरतिमहिम्नाऽत्र समधिगतकेवलज्ञानो मुक्तिं तल्लिङ्ग एव प्रपन्न इति तस्यान्यलिङ्गसिद्धत्वं, भावापेक्षया स्वलिङ्गसिद्धत्वञ्च विज्ञेयम् ॥

स्वलिङ्गसिद्धानाह—

**रत्नत्रयवन्तो रजोहरणादिलिङ्गेन युक्ता मुक्तास्स्वलिङ्गसिद्धाः । यथा साधवः ॥**

रत्नत्रयेति । स्पष्टम् । निदर्शनमाह यथेति । शास्त्रोदितमूलोत्तरगुणयुक्ता न तद्गुणरहिताः केवलं भिक्षाचरा इति भावः । तत्र गृहिलिङ्गे एकसमय उत्कृष्टतश्चत्वारः अन्यलिङ्गे दश, स्वलिङ्गेऽष्टशतं सिद्ध्यन्ति। निरन्तरञ्च स्वलिङ्गेऽष्टौ समयाः अन्यलिङ्गे चत्वारस्समयाः, गृहिलिङ्गे द्वौ समयौ । अन्तरन्तु सर्वेष्वपि जघन्यत एकस्समयः, उत्कर्षेणान्यलिङ्गे गृहिलिङ्गे च प्रत्येकं सङ्ख्येयानि वर्षसहस्राणि, स्वलिङ्गे साधिकं वर्षम् । गृहिलिङ्गसिद्धास्सर्वस्तोकाः तेभ्योऽप्यन्यलिङ्गसिद्धा असङ्ख्येयगुणाः, तेभ्योऽपि स्वलिङ्गसिद्धा असंख्येयगुणा इति ॥

अथ स्त्रीलिङ्गसिद्धानाचष्टे—

**सम्यग्दर्शनादिमहिम्ना स्त्रीशरीरान्मुक्तास्स्त्रीलिङ्गसिद्धाः । यथा चन्दनाप्रभृतयः । रत्नत्रयेण पुरुषशरीरान्मुक्ताः पुरुषलिङ्गसिद्धाः । यथा गौतमगणधरादयः । कृत्स्नकर्मक्षयान्नपुंसकशरीरान्मुक्ता नपुंसकलिङ्गसिद्धाः । यथा गाङ्गेयः ॥**

सम्यगिति । अत्र स्त्रीलिङ्गादिकं शरीरनिर्वृत्तिरूपं न तु वेदो नेपथ्यं वा, वेदसत्त्वे सिद्धत्वाभावात् । स्पष्टं मूलं, निदर्शनमाह यथेति । पुरुषलिङ्गसिद्धानाह रत्नत्रयेणेति स्पष्टम् । दृष्टान्तमाह–यथेति । नपुंसकलिङ्गसिद्धानाह कृत्स्नेति स्पष्टम्, निदर्शनमाह यथेति ॥

१. मूले सम्यग्दर्शनादिमहिम्नेति पदेन स्त्रीणामपि प्रवचनार्थाभिरुचिः पञ्चावश्यककालिकोत्कालिकादिभेदभिन्नं श्रुतं सप्तदशविधसंयमस्याकलङ्कतया धारणं दुर्धरब्रह्मचर्यपालनं मासक्षपणादितपोऽनुष्ठानञ्च वर्तत इति सूचितम् । न च स्त्रीणां रत्नत्रयसम्भवेऽपि न तत्सम्भवमात्रं मुक्तिप्रापकं, किन्तु प्रकर्षप्राप्तमन्यथा दीक्षानन्तरमेव सर्वेषां मुक्तिपदप्राप्तिप्रसक्तेः, तत्प्रकर्षश्च स्त्रीणामसम्भवीति वाच्यम्, तासां तत्प्रकर्षासम्भवग्राहकप्रमाणाभावात् । न च स्वभावत एव स्त्रीत्वेन रत्नत्रयप्रकर्षो विरुद्ध्यते, आतपेन छायेवेति वाच्यम्, अदृष्टेन सह विरोधावधारणासम्भवात्, यस्मादनन्तरं मोक्षपदप्राप्तिस्स हि रत्नत्रयप्रकर्षः, स चायोग्यवस्थाचरमसमये, अयोग्यवस्था चास्मादृशामप्रत्यक्षेति । न च सर्वोत्कृष्टपदप्राप्तिस्सर्वोत्कृष्टाध्यवसायेन भवति, सर्वोत्कृष्टञ्च दुःखस्थानं सुखस्थानञ्च, सर्वोत्कृष्टदुःखस्थाने सप्तमनरकपृथिव्यां स्त्रीणां गमनं निषिद्धं शास्त्रे, तासां तथाविधाध्यवसायविरहात् अत एव चानुमीयते तासामुत्कृष्टाध्यवसायविरहात्सर्वोत्कृष्टसुखस्थानं निर्वाणं नास्तीति वाच्यम्, स्त्रीणां निःश्रेयसं प्रति सर्वोत्कृष्टमनोवीर्यपरिणत्यभावनिश्चायकप्रमाणाभावात्, नहि भूमिकर्षणादिकं कर्तुमशक्नुवतश्शास्त्रावगाहनेऽपि सामर्थ्याभावो निश्चेतुं पार्यते, प्रत्यक्षविरोधात् । न च सम्मूर्च्छिमादिषूभयमपि प्रति सर्वोत्कृष्टमनोवीर्यपरिणत्यभावो दृष्ट इत्यत्रापि तथानुमीयत इति वाच्यम्, बहिर्व्याप्तिमात्रेण हेतोर्गमकत्वाभावात्, अन्तर्व्याप्त्या हि गमकः, सा च प्रतिबन्धबलात्सिद्ध्यति न चात्र सोऽस्ति, सप्तमपृथिवीगमनस्य निर्वाणगमनहेतुत्वाभावात्, चरमशरीरिणा सप्तमपृथिवीगमनमन्तरेणैव निर्वाणगमनाच्च, सम्मूर्च्छिमादीनान्तु भवस्वाभाव्यादेव यथावत्सम्यग्दर्शनादिप्रतिपत्त्यसम्भवेन निर्वाणगमनाभावः । भुजपरिसर्पपक्षिचतुष्पदोरगाणां यथाक्रममधो यावद् द्वितीयतृतीयचतुर्थपञ्चमपृथिवीगमनेऽप्यूर्ध्वं सर्वेषामुत्कर्षतो यावत्सहस्रारं गमनात् नाधोगतिविषये मनोवीर्यपरिणतिवैषम्ये ऊर्ध्वगतावपि तद्वैषम्यमनुमातुं शक्यत इति ॥

प्रत्येकबुद्धसिद्धानाचष्टे—

**एकनिमित्तमात्रदर्शनजन्यवैराग्यास्तत्कालसम्प्राप्तरत्नत्रया मुक्ताः प्रत्येकबुद्धसिद्धाः । यथा करकण्डुद्विमुखनमिराजर्षिप्रभृतयः ॥**

एकेति । ये बाह्यप्रत्ययमपेक्ष्य बुद्ध्यन्ते ते प्रत्येकबुद्धास्तथाभूतास्सन्तो ये सिद्धास्ते प्रत्येकबुद्धसिद्धा इति भाव , निदर्शनमाह यथेति । बाह्यवृषभान्प्रित्ययसापेक्षा करकण्ड्वादीना बोधि । एषा जघन्यत उपधिर्द्विविध उत्कर्षेण नवविध प्रावरणवर्जं , तथा पूर्वाधीतं श्रुतं नियमतो भवति, तच्च जघन्यत एकादशाङ्गानि, उत्कृष्टतः किञ्चिन्न्यूनानि दशपूर्वाणि, लिङ्ग तेभ्य कदाचिद्देवता प्रयच्छति कदाचिच्च लिङ्गरहिता अपि भवन्ति ॥

स्वयम्बुद्धसिद्धानाह—

**निमित्तदर्शनमन्तरा बोधप्राप्तिपूर्वक केवलिनो मुक्तास्स्वयम्बुद्ध सिद्धाः । यथा कपिलादयः ॥**

निमित्तेति । स्वयम्बुद्धा बाह्यप्रत्ययमन्तरेण स्वयमेव निजजातिस्मरणादिना बुद्धा , ते च तीर्थकरास्तीर्थकरव्यतिरिक्ताश्च, एषामुपधिर्द्वादशविध एव पात्रादिक । पूर्वाधीत श्रुतञ्च भवति न वा, यदि भवति ततो लिङ्गं देवता वा प्रयच्छति, गुरुसन्निधिं गत्वा वा प्रतिपद्यन्ते, यदि चैकाकिनो विहरणसमर्था इच्छा च तेषा तथारूपा जायते तत एकाकिनो विहरन्ति, अन्यथा गच्छवासेऽवतिष्ठन्ते । अथ पूर्वाधीत श्रुत न भवति तर्हि नियमाद्गुरुसन्निधिं गत्वा लिङ्ग प्रतिपद्यन्ते गच्छञ्चावश्य न मुञ्चन्ति, एतत्सर्वं तीर्थकरव्यतिरिक्ताना बोध्यम् , दृष्टान्तमाह यथेति ॥

बुद्धबोधितसिद्धानाह—

**उपदेशजन्यप्रतिबोधा अवाप्तरत्नत्रया मुक्ता बुद्धबोधितसिद्धाः । यथा जम्बूस्वामिप्रभृतयः ॥**

उपदेशेति । बुद्धैराचार्यादिभिर्बोधितास्सन्तो ये सिद्धास्ते बुद्धबोधितसिद्धा इति भाव दृष्टान्त दर्शयति यथेति ॥

एकसिद्धानाह—

**इतरानवाप्तमुक्तिकैकसमयावाप्तमुक्तिका एकसिद्धाः । यथा श्रीमहावीर**

**स्वामिनः । एकस्मिन् समयेऽनेकैस्सह मुक्ता अनेकसिद्धाः । यथा ऋषभदेवाद्याः ॥ इति मोक्षतत्त्वनिरूपणम् ॥**

इतरेति । एकस्मिन्नेकस्मिन् समये एकका एव सन्तो ये सिद्धास्त एकसिद्धा इत्यर्थः, निदर्शनमाह यथेति । अनेकसिद्धानाह एकस्मिन्निति । एकस्मिन् समयेऽनेके सिद्धा अनेकसिद्धा इत्यर्थः । दृष्टान्तमाह—यथेति । मोक्षतत्त्वं निगमयति इतीति ॥

मुक्त्युपायभूतां सम्यक्श्रद्धां निगमयति—

**सम्यक्श्रद्धा यथाशास्त्रं सविभागा सलक्षणा ।**
**संक्षेपेण समाख्याता स्यान्मोदाय विपश्चिताम् ॥**

सम्यक्श्रद्धेति, प्रशंसार्थे सम्यगिति निपातस्तत्त्वञ्च श्रद्धायां यथावस्थितार्थपरिच्छेदित्वं परापेक्षामन्तरोपजायमानत्वं वा, अथवा समञ्चति सर्वान् द्रव्यपर्यायान् व्याप्नोतीति सम्यक् द्रव्यपर्यायनयद्वयापेक्षया जीवादयोऽर्थास्तत्र यदा दृष्टिः प्रवर्त्तते तदा रुचिरूपां श्रद्धामञ्चति अतः सम्यक्, सा चासौ श्रद्धा च सम्यक्श्रद्धा अविपरीतार्थग्राहिणी रुचिरित्यर्थः । समाख्यातेत्यमेतनेनान्वयः । कथं समाख्यातेत्यत्राह सविभागा सलक्षणेति लक्षणविभागाभ्यां निरूपितेति भावः । निरूपणेऽस्मिन् श्रोतृजनग्राह्यतासम्पादनाय प्रामाणिकत्वमस्याविष्करोति, यथाशास्त्रमिति । शास्त्रमनुसृत्यैव प्रोक्ता न तु कल्पनयेति भावः । ग्रन्थस्यास्य प्रणयने हेतुं दर्शयति संक्षेपेणेति । आगमानामतिविस्तृतत्वेन व्युत्पन्नकल्पानां सुगमतया आगमार्थबोधार्थमयं प्रयास इति भावः । यदिदं प्ररूपणं शास्त्रानुसारित्वात्सङ्ग्रहरूपत्वाच्च विपश्चितां विवेचनाचतुराणां परित्यक्तमनोमालिन्यानां मोदायानन्दाय भवेदेवेत्याशयमाह स्यान्मोदाय विपश्चितामिति ॥

इति तपोगच्छनभोमणिश्रीमद्विजयानन्दसूरीश्वरपट्टालङ्कारश्रीमद्विजयकमलसूरीश्वरचरणनलिनविन्यस्तभक्तिभरेण तत्पट्टधरेण विजयलब्धिसूरिणा विनिर्मितस्य तत्त्वन्यायविभाकरस्य स्वोपज्ञायां न्यायप्रकाश व्याख्यायां मोक्षनिरूपणनामा दशमः किरणः समाप्तः समाप्तोऽयं सम्यक्श्रद्धाख्यः प्रथमो भागः ॥



१. उत्कृष्टतोऽष्टोत्तरशतसङ्ख्या वेदितव्या ॥



सटीके

# तत्त्वन्यायविभाकरे

प्रथमो भागः समाप्तः ।

ॐ

# अथ द्वितीयो भागः

## प्रथमः किरणः

अथावसरप्राप्तं सम्यग्ज्ञानं विभजते—

**मतिश्रुतावधिमनःपर्यवकेवलानि ज्ञानानि ॥**

**मतीति।** मतिज्ञानं श्रुतज्ञानमवधिज्ञानं मनःपर्यवज्ञानं केवलज्ञानमित्यर्थः। ज्ञानानीति-बहुवचनमेकैकस्मिन् ज्ञानताख्यापनाय। ज्ञानं चात्मनस्स्वपरावभासकोऽसाधारणो गुणः कथञ्चिदभिन्नः कथञ्चिद्भिन्नश्च। स चाम्बुधरपटलपरिमुक्तस्य दिनमणेरिवापास्तसमस्तावरणस्य जीवस्य स्वभावभूतः केवलज्ञानव्यपदेशभाग्भवति। सकलघातिकेवलज्ञानावरणेन कार्त्स्न्येन ज्ञानस्यावरणासम्भवात् तदानीं योऽयं मन्दप्रकाशः स केवलज्ञानावरणावृतस्य भवति तस्यैव भेदा मत्यादयश्चत्वारः। तादृशे मन्दप्रकाशे केवलज्ञानावरणस्यैव हेतुत्वं, स्पष्टप्रकाश-प्रतिबन्धकस्यापि तस्य तत्र हेतुत्वात्, दृष्टश्चोत्कटेऽभ्राद्यावरणे स्पष्टप्रकाशप्रतिबन्धकत्वं मन्दप्रकाशजनकत्वञ्च। अत एव न मतिज्ञानावरणक्षयादिना मतिज्ञानाद्युत्पादनप्रसङ्गः। सोऽयं ज्ञानस्वभाव केवलज्ञानावरणेनावृतोऽपि अनन्ततमभागावशिष्टोऽनावृत एव सामान्यत एकोऽपि अनन्तपर्यायकिर्मीरितमूर्त्तिर्मन्दप्रकाशनामधेयो भवति। स चापान्तरालावस्थितमतिज्ञानाद्यावरणक्षयोपशमसम्पादितं नानात्वं भजते, घनपटलाच्छन्नरवेर्मन्दप्रकाश इवान्तरालस्थकटकुट्याद्यावरणविवरप्रवेशात्। न च केवलज्ञानावरणेन बलीयसाऽऽवरीतुमशक्यस्यानन्ततमभागस्य दुर्बलेन मतिज्ञानावरणादिना नावरणसम्भव इति वाच्यम्, कर्मणस्स्वा-वार्यावारकतायां सर्वघातिरसस्पर्धकोदयस्यैव बलत्वात्तस्य च मतिज्ञानावरणादिप्रकृतिष्वप्य-विशिष्टत्वात्। तथा च सर्वघातिरसस्पर्धकजन्मतिज्ञानावरणादिक्षयोपशमजनितं मतिश्रुताव-धिमनःपर्यवभेदाच्चतुर्विधं क्षायोपशमिकं ज्ञानं पञ्चमञ्च क्षायिकं केवलज्ञानमिति पञ्च प्रकारा

---

१. जीवेन ज्ञानस्यात्यन्तभेदेऽन्यज्ञानेनान्यस्य विषयपरिच्छेदाभाववत् स्वात्मनोऽपि तत्र स्याद्भिन्नता-विशेषात्। न च समवायेन यत्रैव ज्ञानं समवेतं तत्रैव भवति विषयपरिच्छेद इति वाच्यम्, समवाय-स्यैकत्वेन नित्यत्वेन च सर्वत्राविशेषात्। सर्वथा चाभेदे गुणप्रध्वंसेन गुणिनोऽपि ध्वंसोत्पत्त्यादिप्रसङ्गात् ज्ञानाविनाभावत्वादपि किमपि गुणं पश्यन् किमिव पताका किमिव बलाकेत्येव प्रतिनियतगुणिविषयक-संशयो न स्यादिति भावः ॥

ज्ञानस्येति भाव । मतिश्रुतयोस्स्वाम्येकत्वान्नानाजीवापेक्षया द्वयोस्सार्वदिकत्वादेकजीवापेक्षया चोभयोरपि निरन्तरसातिरेकषट्षष्टिसागरोपमस्थितिकत्वादिन्द्रियमनसोस्स्वस्वावरणक्षयोपशमस्य च तुल्यत्वात् सर्वद्रव्यादिविपयकत्वात्परोक्षत्वान्मतिश्रुतसत्त्व एव चावध्यादीनां प्राप्यमाणत्वाच्च तयो प्रथममुपादानं, तत्रापि श्रुतस्य मतिपूर्वकत्वात् इन्द्रियानिन्द्रियनिमित्तकस्य सर्वस्यैव मतिज्ञानत्वात्परोपदेशत्वागमवचनत्वरूपविशिष्टतामादायैव श्रुतस्य पार्थक्यवर्णनेन मतिविशेषत्वात्प्राधान्येन मतेरुपन्यासस्ततश्श्रुतस्य। ततो मतिश्रुताभ्यां नानाजीवापेक्षयैकजीवापेक्षया च कालसाधर्म्यान्मतिश्रुतयोर्मिथ्यात्वोदयेऽज्ञानवदवधेरपि तथात्वात्स्वामिसाधर्म्यात्कस्यचित्त्रयाणाममीषा युगपल्लाभसम्भवेन लाभसाधर्म्याच्च ततोऽवधेरुपन्यासः, अवधिमनःपर्यवयो श्छद्मस्थेनाप्यमानत्वात्पुद्गलमात्रविषयकत्वात्क्षायोपशमिकभाववृत्तित्वात् प्रत्यक्षत्वादिसाम्याच्च ततो मनःपर्यवस्योपन्यासः, उत्तमत्वाद्विशिष्टचारित्रस्वामिकत्वादपरज्ञानावसानलाभाच्चान्ते केवलज्ञानस्योपन्यासो बोध्यः ॥

एतान्येव पञ्च प्रमाणानीत्याह—

## एतान्येव प्रमाणानि ॥

**एतान्येवेति** । मत्यादिज्ञानान्येवेत्यर्थः, प्रमाणानि हेयोपादेयवस्तुतिरस्कारस्वीकारक्षमाणीत्यर्थ[१], तथा च यत प्रमाणानि हेयोपादेयवस्तुतिरस्कारस्वीकारक्षमाणि अतो ज्ञानान्येव प्रमाणानि न सन्निकर्षाद्यज्ञानरूपाणि, एवञ्च प्रमाणं ज्ञानमेव हेयोपादेयवस्तुतिरस्कारस्वीकारक्षमत्वाद्यत्तु न ज्ञान न तद्धेयोपादेयवस्तुतिरस्कारस्वीकारसमर्थं यथा घटादि, हेयाना तिरस्कारायोपादेयाना ग्रहणाय च प्रामाणिकैः प्रमाणानामेव प्रार्थ्यमानत्वान्न साधनासिद्धि[२], तच्च न सन्निकर्षादिक भवितुमर्हति, घटादेरचेतनरूपस्य स्वार्थव्यवसिति प्रति यथा साधकतमत्वाभावान्न प्रमाणत्वं तथा सन्निकर्षादेरपि, प्रयोगश्च सन्निकर्षादिर्न प्रमाणव्यवहार्थः स्वार्थनिश्चयासाधकतमत्वाद् यन्नैवं तन्नैव यथा घटादिरिति न च

---

१. मतिज्ञानस्यैवाऽऽभिनिबोधिकज्ञानमिति नामान्तरम्, अभिमुख योग्यदेशावस्थित नियतमर्थमिन्द्रियमनोद्वारेणात्मा येन परिणामविशेषेणावबुध्यते स परिणामविशेषो ज्ञानापरपर्याय आभिनिबोधिकम्। तद् द्विविध श्रुतनिश्रितमश्रुतनिश्रितञ्चेति । शास्त्रपरिकर्मितमतेरुत्पादकाले शास्त्रार्थपर्यालोचनमनपेक्ष्यैव यदुपजायते मतिज्ञान तच्छ्रुतनिश्रितमवग्रहादि। सर्वथा शास्त्रसस्पर्शरहितस्य तथातथाविधक्षयोपशमभावत एवमेव यथावस्थितवस्तुसस्पर्शि मतिज्ञान यदुपजायत तदश्रुतनिश्रित, औत्पातिकीवैनयिकीकर्मजापारिणामिकीभेदभिन्नमिति ॥ २ मतिश्रुते अप्राप्यावध्यादीनामप्राप्यमाणत्वादिति भाव ॥ ३ पूर्वमवग्रहादिमतिज्ञानप्रवृत्तिं विना श्रुतप्रवृत्तेरभावादिति भाव ॥ ४. अतीतानागतवर्त्तमानानि शेषज्ञेयस्वरूपावभासित्वादुत्तमत्वमिति भाव ॥

हेतोरसिद्धता, अचेतनत्वेन घटादेरिव स्वव्यवसितावकरणत्वस्य सिद्धत्वात्, स्वनिश्रितावकरणत्वादेव च कुम्भादेरिव परव्यवसितावकरणत्वम् । न च यथा काष्ठच्छेदादिकं फलं कुठारादिकरणजन्यं तथैवार्थव्यवसितेरपि सन्निकर्ष एव करणं न प्रमाता करणं कर्तृत्वान्न प्रमेयं कर्मत्वान्न वा ज्ञानं कार्यत्वादिति वाच्यम्, सन्निकर्षस्य करणत्वानुपपत्तेः, तद्भिन्नस्य भावेन्द्रियविशेषस्यैव करणत्वात् न च परव्यवसित्यकारणत्वसाधकस्वव्यवसित्यकरणत्वरूपहेतोः प्रदीपे व्यभिचारः, स्वनिश्रितावकरणस्यापि तस्य घटादिनिश्रितौ करणत्वात् प्रतीयते हि प्रदीपेन पन्थानं पश्याम इत्यादौ करणत्वमिति वाच्यम्, प्रदीपस्य चक्षुर्मनोरूपमुख्यकारणसहकारितयैव पदार्थपरिच्छेदे करणत्वेन मुख्यतया करणत्वासम्भवात्, उपचारतः करणत्वे च व्यभिचाराभावात्तस्योपचारतः पदार्थपरिच्छेदकत्ववत्स्वपरिच्छेदेऽपि करणत्वात् । न च चक्षुरादौ व्यभिचारः, भावेन्द्रियोपकरणभूतद्रव्येन्द्रियस्य चक्षुरादेरुपचारेण करणत्वात् लब्धेरपि उपयोगात्मकमुख्यकरणकारणत्वेनोपचरितमेव कारणत्वमिति दिक् ॥

ननु किं तत्प्रमाणमित्यत्राह—

## यथार्थनिर्णयः प्रमाणम् ॥

**यथार्थेति** । अत्रार्थपदेन ज्ञानं घटादिर्विषयश्च विवक्षितः, यथावस्थितत्वेनार्थो निर्णीयतेऽनेनेति यथार्थनिर्णयः, यथावस्थितस्वपररूपार्थपरिच्छेदकं ज्ञानमित्यर्थः, लक्षणञ्च यथावस्थितार्थपरिच्छेदकज्ञानत्वं, लक्ष्यञ्च प्रमाणम् । यद्यपि प्रमाणशब्दस्य सर्वकारकैर्भावेन च व्युत्पत्तिर्भवति तथा च प्रमेणाऽऽत्मार्थज्ञानार्थक्रियाकारणकलापक्षयोपशमक्रियारूपाः प्रमाणशब्दवाच्या भवन्ति तथापीह परीक्षाक्षमत्वेन ज्ञानमेवाधिक्रियते, इतरेषां परीक्षाया ज्ञानपूर्वकत्वात् । येन चार्थं परिच्छिद्यार्थक्रियासमर्थार्थप्रार्थनया प्रमातारः प्रवर्त्तन्ते तदेव ज्ञानमिहात्मना सह धर्मिधर्मयोऽभिन्नमपि प्रमीयतेऽनेनेति व्युत्पत्त्या धर्मरूपतया व्यतिरिक्तं प्रमाणमुच्यते । तत्र विप्रतिपन्नान् तीर्थान्तरीयान् प्रति प्रमाणोद्देशेन लक्षणं विधेयम्, यद्भवतामस्माकञ्च प्रमाणतया प्रसिद्धं तद्यथावस्थितार्थपरिच्छेदकं ज्ञानमिति । यदाऽव्युत्पन्नमतीन् प्रति लक्षणं तदा प्रतिप्राणि यस्य कस्यचिद्यथार्थनिर्णयस्य प्रसिद्धत्वेन योऽयं भवतां यथार्थनिर्णयः प्रसिद्धस्तत्प्रमाणमिति बुद्ध्यतामिति प्रमाणं विधेयम् । प्रमाणप्रमेयापलापिनः प्रत्युभयं विधेयम्, स्वदर्शनश्रद्धालून् प्रति त्वनुवाद्यमिति । एव-

१. अत्रानुमाने गाम्प्रकर्षादिना स्वानध्यवसायाभावकारणमचेतनत्वाद्घटादिवदिति ॥ २. प्रयोग मभिधानेऽन्यत्र परनिश्चयाभावकारण स्वानिश्चितत्वात् घटादिवदिति ॥ यथार्थनिश्चय मभिकर्षस्य साधकतम तयात्वको न च यौन ॥ ३. दम्पाधादशनेभ्यश्च । ४. पर्यायनयदेशेनेत्यर्थः ।

मेव सर्वत्र लक्ष्यलक्षणभावोऽवसेयः । यथावस्थितार्थपरिच्छेदे च ज्ञानमेव साधकतमं न तु सन्निकर्षादि, साधकतमन्तु यत्र प्रमात्रा व्यापारिते सत्यवश्यं कार्यस्योत्पत्तिस्तदभावेऽनुत्पत्तिरेव तत्र तत्[१], यथा कुठारश्छेदने । न च तथा सन्निकर्षादि, नभसि नयनसन्निकर्षसम्भवेऽपि प्रमानुत्पत्तेः, तदभावेऽपि प्रातिभप्रत्यक्षाणामार्षसंवेदनविशेषाणाञ्च समुद्भवात् । न च नभसि रूपाभावान्न प्रमोत्पत्तिरिति वाच्यम्, रूपस्य प्रत्यक्षानुपपत्तिप्रसङ्गात् नहि तत्र रूपमस्ति । न च तदाधारभूते द्रव्ये रूपान्तरमस्तीत्यतो नानुपपत्तिरिति वाच्यम्, त्वयैकत्र व्याप्यवृत्तिसजातीयगुणद्वयानङ्गीकारात्[२] । न चावयवरूपमवयविरूपोपलब्धौ कारणमिति वाच्यम्, त्र्यणुकनिष्ठरूपप्रत्यक्षानुपपत्तेः, द्व्यणुकरूपस्यानुपलम्भेन सहकारित्वासम्भवादिति ॥ निर्णयत्वमात्रोक्तौ निर्विकल्पकप्रत्यक्षस्य बौद्धैः प्रामाण्यतयोक्तस्य प्रमाणत्वापत्तिरतो यथार्थनिर्णयत्वमुक्तं, अर्थनिर्णयत्वमात्रस्य विपर्ययानध्यवसायादौ गतत्वेन तद्वारणाय यथेति, अत एव चानन्तधर्मात्मकवस्तुनिष्ठैकधर्मविषयकज्ञानस्यापि व्युदासोऽनन्तधर्मात्मकवस्तुनिष्ठानन्तधर्मविषयकज्ञानस्यैव यथार्थनिर्णयरूपत्वात्[३] । निर्णयशब्देन च संशयव्युदासः । समग्रेण चार्थोपलब्धिहेतुत्वानधिगतार्थगन्तृत्वादीनां परोक्तलक्षणानां व्युदासः । अर्थोपलब्धिं प्रति परम्परया हेतुत्वेऽञ्जनादीनां प्रमाणत्वापत्तेः, अनन्तरभूतेन्द्रियस्यैव हेतुत्व उपयोगात्मकेन्द्रियातिरिक्तस्येन्द्रियस्य प्रमाणत्वासम्भवात्, व्यवधानात् । प्रत्यभिज्ञादावनधिगतार्थगन्तृत्वस्याभावेन प्रमाणत्वानुपपत्तेस्तस्याधिगतार्थगन्तृत्वादिति तात्पर्यम् ॥

तत्र वादिनां भेदे विप्रतिपत्तेस्संख्यानियममाह—

## तद्द्विविधं पारमार्थिकप्रत्यक्षं परोक्षञ्चेति ॥

तदिति । प्रमाणमित्यर्थः । सर्वस्य वाक्यस्य सावधारणत्वात्प्रमाणं द्विविधमेव, न त्वेकविधं प्रत्यक्षात्मकमेव चार्वाकवत् । स्वेष्टस्यानुमानमन्तरा साधयितुमशक्यत्वात्, वचनसङ्केतग्रहादिकं विना परं प्रति बोधयितुमशक्यत्वाच्चापरोदितानामनुमानादीनां सम्भवत्प्रमाण-

---

१. फलायोगव्यवच्छिन्नं कारणं करणमिति भावः । २. यथा घटस्य प्रत्यक्षे जननीये विषयातिरिक्तं रूपं कारणमपेक्षितं तथा रूपस्य प्रत्यक्षे जननीये विषयातिरिक्तं रूपमपेक्षणीयं स्यात्तथा च घटे रूपप्रत्यक्षे रूपान्तरसत्त्वाभ्युपगमस्त्वया कर्त्तुं न शक्यते एकस्मिन् द्रव्ये व्याप्यवृत्तेस्सजातीयस्य गुणद्वयस्यानभ्युपगमेन तव सिद्धान्तव्याघात इति भावः, तैरव्याप्यवृत्तिसंयोगद्वयाद्यभ्युपगमेन व्याप्यवृत्तीत्युक्तं, स्वाधिकरणावृत्तित्वाभावकत्वं तदर्थः । नास्ति हि रूपाधिकरणे रूपाभावः । घटे व्याप्यवृत्तिरूपरसयोरभ्युपगमात्सजातीयेति तत्त्वञ्च गुणत्वव्याप्यजात्या, तथा च रूपरसयोस्तथा साजात्याभावान्न क्षतिः ॥ ३. निर्णयत्वं हि निश्चयत्वं संशयभिन्नज्ञानत्वं वा, तच्च बौद्धाभ्युपगते निर्विकल्पके प्रकारतादिरहिते वर्त्तत इति भवत्यतिव्याप्तिरतो यथार्थनिर्णयत्वमुक्तं, यथा च प्रकारतादिविशिष्टमिदं न निष्प्रकारके निर्विकल्पकेऽस्तीति भावः । नन्वर्थनिर्णयत्वमात्रोक्तावपि तद्वारणसम्भवाद्यथेति पदं निरर्थकमित्याशङ्क्याहार्थनिर्णयत्वमात्रस्येति । तथा च यद्वस्तु येनैव प्रकारेण वर्त्तते तेनैव प्रकारेण तन्निश्चयो यथार्थनिर्णयः, तेन न्यूनप्रकारकत्वे विपरीतप्रकारकत्वे वा न प्रमाणत्वमिति भावः ॥

त्वानां परोक्ष एवान्तर्भावान्न त्रिचतुरादिरूपम् । तत्रानुमानागमौ परोक्षेऽन्तर्गतौ, उपमानं प्रत्यभिज्ञानात्मके परोक्षभेदे अर्थापत्तिरप्यनुमाने, अनुपलब्धेरप्यभावग्राहिकायास्सांव्यवहारिकप्रत्यक्षेऽन्तर्भाव इति भावः । ननु 'से किं तं पमाणे ? पमाणे चउव्विहे पण्णत्ते । तं जहा, पच्चक्खे, अणुमाणे, ओवमे, आगमे जहा अणुओगदारे तहा णेयव्वं पमाणं " इत्यागमे प्रमाणस्य चतुर्विधत्वेनोक्तत्वाद् द्वैविध्ये विरोध इति चेत्सत्यं, अनुमानोपमानागमानां परोक्षेऽन्तर्भावेणात्र द्वैविध्यस्योक्तत्वात् । उक्तञ्चागमेऽपि "तं समासओ दुविहं पण्णत्तं, तं जहा पच्चक्खं च परोक्खं च " इति ॥ द्वैविध्यं नामग्राहमाह पारमार्थिकेति । एतच्च विशेषणमुपचरितव्यावहारिकप्रत्यक्षस्य वस्तुतः परोक्षस्य व्युदासाय । इन्द्रियानिन्द्रियादिबाह्यसामग्रीसापेक्षस्य सांव्यवहारिकप्रत्यक्षस्य धूमादग्निज्ञानवद्वस्तुगत्या परोक्षत्वात् । अश्नुते व्याप्नोत्यर्थानित्यक्ष आत्मा, तम्प्रति साक्षाद् यद्वर्त्तते ज्ञानं तत्प्रत्यक्षं निश्चयतोऽवधिमनःपर्यवकेवलानि, तेषामेव साक्षादर्थपरिच्छेदकत्वेन जीवं प्रति साक्षाद्वर्त्तमानत्वात् । अक्षमिन्द्रियं प्रतिगतमिति विग्रहे प्रत्यक्षशब्दस्य यदिन्द्रियमाश्रित्योत्पद्यते तदर्थसाक्षात्कारिज्ञानमर्थः, एतच्चाध्यादावव्याप्तं तस्मादक्षाश्रितत्वं गमनक्रियाया इव गोशब्दस्य व्युत्पत्तिनिमित्तमेव वाच्यम्, प्रवृत्तिनिमित्तं तु गतिक्रियोपलक्षित गोत्वमिवाक्षाश्रितत्वोपलक्षितसाक्षाद्ग्राह्यग्राहकज्ञानविशेष एव, तच्च प्रवृत्तिनिमित्तं गतिक्रियादिशून्येऽपि गवादिपिण्डविशेष इवाक्षाश्रितत्वशून्येऽप्यवध्यादावस्त्येवेति न कोऽपि दोषः । पारमार्थिकञ्च तत्प्रत्यक्षञ्च पारमार्थिकप्रत्यक्षम्, ननु यदिन्द्रियद्वारेण प्रवर्त्तत आत्मनि ज्ञानं तत्प्रत्यक्षं, न चेन्द्रियव्यापारव्यवहितत्वादात्मना साक्षान्नोपलब्धमिति वाच्यम्, इन्द्रियाणामुपलब्धिं प्रति करणतया व्यवधायकत्वासम्भवात्, न खलु देवदत्तो हस्तेन भुञ्जानो हस्तव्यापारव्यवहितत्वान्न साक्षाद्भोक्तेति व्यपदेष्टुं शक्यमिति चेन्नैवम्, आत्मना चक्षुरादिसाद्गुण्यापेक्षणात्, यदा हि चक्षुरसद्गुणं भवति तदा बाह्यमर्थं स्पष्टं यथावस्थितञ्चोपलभते यदा तु तिमिराशुभ्रमणनौयानपित्तादिसंक्षोभदेशदवीयस्त्वाद्यापादितविभ्रमं भवति तदा विपरीतं संशयितं वोपलभते तथा चावश्यमात्माऽर्थोपलब्धौ पराधीनः । तथा चक्षुरादिनोपदर्शितेऽपि बाह्येऽर्थे यदि संशयमधिरूढो भवति तदा चक्षुरादिसाद्गुण्यमेव प्रतीत्य निश्चयं विदधाति, यथा न मे चक्षुस्तिमिराद्युपप्लुतं ततोऽयमर्थस्समीचीन इति, तस्माच्चक्षुरादिसाद्गुण्यावधारणतो वस्तुयाथात्म्यावधारणाद्वस्तुतस्तत्परोक्षमिति

१ न चानभ्यासदशामापन्नस्यैव वस्तुयाथात्म्यावधारणमिन्द्रियसाद्गुण्यावधारणपूर्वकं भवतु न त्वभ्यासदशापन्नस्य तदन्तरेणापि प्रकृष्टाभ्यासबलात् साक्षात्स्वार्थबोधादतस्तस्येन्द्रियार्थेन ज्ञानं प्रत्यक्षं स्यादिति वाच्यम्, तत्रापीन्द्रियसाद्गुण्यसापेक्षत्वस्य दुर्वारत्वात्, अभ्यासप्रकर्षेणतत्रेन्द्रियसाद्गुण्यस्य झटित्येव निश्चयात् कालसौक्ष्म्यात्तदनुपलम्भे । अवायमात्र ज्ञानमीहापूर्वकं, तत्रेहा विचारणा विचारश्चेन्द्रियसाद्गुण्यगमद्भूतवस्तुधर्मोऽपि न हीन्द्रिये वस्तुनि वा सम्यगविचारिते सति यज्ज्ञानं तत्समीचीनं भवतीति ।

भाव । परोक्षमिति, आत्मापेक्षया पुद्गलमयत्वेन द्रव्येन्द्रियमनोरूपेभ्य परेभ्य. अक्षस्य जीवस्य यद्वर्त्तते तत्परोक्ष मतिश्रुतरूपम् । पुद्गलनिचयनिष्पन्नानि हि द्रव्येन्द्रियमनासि जीवस्य परभूतान्यतस्तेभ्यो यन्मतिश्रुतलक्षण ज्ञान धूमादेरग्न्यादिज्ञानवत्परनिमित्तत्वात्परोक्ष, किञ्चेन्द्रियमनोनिमित्त ज्ञान परोक्ष तत्र सशयविपर्ययानध्यवसायसम्भवात्, इन्द्रियमनोनिमित्तकासिद्धानैकान्तिकविरुद्धानुमानवत, तत्र निश्चयसम्भवाद्धूमादेर्वह्न्यनुमानवत, यत्तु प्रत्यक्ष तत्र न सशयादयो निश्चयश्च सम्भवति यथावध्यादिषु, न चावध्यादिषु निश्चयसभवाद्व्यभिचार इति वाच्यम् । सकेतस्मरणादिपूर्वकत्वे सतीति विशेषणात्, न चावध्यादीना मनोनिमित्तकत्वात्परोक्षता स्यादिति वाच्यम्, मन पर्याप्त्याऽपर्याप्ताना मनुष्यदेवादीनामवधिज्ञानश्रवणेन तेषा मनोनिमित्तकत्वाभावादिति ॥

तत्र पञ्चविधज्ञानमध्ये किं वा पारमार्थिकप्रत्यक्ष किं वा परोक्षमिति शकायामाह—

**तत्रावधिमन.पर्यवकेवलानि पारमार्थिकप्रत्यक्षाणि । मतिश्रुते परोक्षे । परोक्षमपि सांव्यवहारिकप्रत्यक्षस्मरणप्रत्यभिज्ञातर्कानुमानागमभेदात् षड्विधम् ॥**

तत्रेति, स्पष्टम् । परोक्षस्य प्रकारान्तरेण भेदमाह परोक्षमपीति । अपिशब्द पुनरर्थे, मतिश्रुतभेदेन द्विविधमपि परोक्ष पुनस्साव्यवहारिकप्रत्यक्षादिभेदेन षड्विधमिति भाव । समीचीनो बाधारहितो व्यवहार प्रवृत्तिनिवृत्तिलक्षणस्सव्यवहार, तत्र भव स एव वा प्रयोजनमस्येति साव्यवहारिक तच्च तत्प्रत्यक्षञ्च साव्यवहारिकप्रत्यक्षमिति विग्रह । बाह्येन्द्रियादिसामग्रीसापेक्षत्वाद्वस्तुतः परोक्षमेवेति परोक्षमध्ये परिगणितमेतत् । अनुमानादिभ्योऽतिरेकेण नियतवर्णार्थाकाराणा प्रतिभासनाच्चानुमानादितो भेदेनोत्कीर्त्तनम् । सामान्यतो हि स्पष्टत्व प्रत्यक्षस्य लक्षणं तच्चानुमानाद्याधिक्येन विशेषप्रकाशनं, एतदपेक्षया च पारमार्थिकप्रत्यक्षस्येवास्यापि प्रत्यक्षत्वम्, गाढान्धकारे मलिनवस्तुसवेदनमपि सस्थानमात्रे स्पष्टत्वेन प्रत्यक्षमेव । न च स्मृतिप्रत्यभिज्ञादिस्वरूपसवेदने परोक्षरूपे प्रत्यक्षलक्षणस्यातिव्याप्तिरिति वाच्यम्, स्मृतिप्रत्यभिज्ञानादिस्वरूपसवेदनस्य परोक्षत्वासम्भवात्, क्षायोपशमिकसवेदनाना स्वरूपसवेदनस्यानिन्द्रियप्रधानतयोत्पत्तेरनिन्द्रियाध्यक्षव्यपदेशसिद्धे, बहिरर्थग्रहणापेक्षया च विज्ञानाना परोक्षत्वव्यपदेशेन सर्वज्ञानाना स्वरूपे स्पष्टप्रतिभासत्वात्प्रत्यक्षत्वमेवेति ॥

अधुना पारमार्थिकप्रत्यक्ष लक्षयति—

**अव्यवहितात्मद्रव्यमात्रसमुत्पन्नं ज्ञानं पारमार्थिकप्रत्यक्षम् । तद्द्विविधं सकलं विकलञ्च ॥**

अव्यवहितेति । स्वोत्पत्तौ सांव्यवहारिकप्रत्यक्षादिकमिन्द्रियानिन्द्रियादिव्यवहितात्मद्रव्यमाश्रित्य जायते, पारमार्थिकप्रत्यक्षन्तु न तथा, किन्तु ज्ञानदर्शनावरणक्षयोपशमात् तत्क्षयाद्वेन्द्रियानिन्द्रियद्वारनिरपेक्षमात्मद्रव्यमेवाव्यवहितमाश्रित्य समुन्मिषतीत्यतोऽव्यवहितात्मद्रव्यमात्रसमुत्पन्नत्वे सति ज्ञानत्वं तल्लक्षणं, भवगुणसम्यक्त्वादीनामपेक्षणेऽपि तेषां द्रव्यत्वाभावान्नावध्यादावव्याप्तिरिति भावः । तद्विभजते तदिति पारमार्थिकप्रत्यक्षमित्यर्थः । सकलमिति सर्वद्रव्यपर्यायविषयकत्वात्सकलमित्यर्थः, विकलमिति, कतिपयद्रव्यपर्यायविषयकत्वाद्विकलमित्यर्थः ॥

किन्तत्र सकलं ज्ञानमित्यत्र दृष्टान्तमाह—

**कृत्स्नावरणक्षयात्केवलं ज्ञानं सकलम् ॥**

कृत्स्नेति, कृत्स्नावरणक्षयः समस्तघातिकर्मवियोगः स चान्तरङ्गबहिरङ्गसामग्रीजन्यः । अन्तरङ्गसामग्री सम्यग्दर्शनादिरूपा, बहिरङ्गा तु जिनकालिकमनुष्यभवादिरूपा, तथा चान्तरङ्गबहिरङ्गसामग्रीप्रसूतसकलावरणक्षयाद्यत्केवलज्ञानमुदेति तत्प्रतिबन्धस्य कस्यचिदभावेन सकलविषयकत्वात्सकलं पारमार्थिकप्रत्यक्षमिति भावः । अत्र कृत्स्नावरणक्षयादित्युक्त्याऽव्यवहितोत्तरक्षणे केवलज्ञानोत्पत्तिः प्रकाशिता व्यवहारनयेन, आवरणस्य क्षयसमये क्षीयमाणत्वात् क्षीयमाणस्य चाक्षीणत्वात् क्रियाकालनिष्ठाकालयोर्भेदात् तयोरभेदे च क्रियावैयर्थ्यप्रसङ्गात् क्रियाकालेऽपि कार्यस्य सत्त्वात्समकालभाविनोश्च सव्येतरगोविषाणयोरिव क्रियाकार्ययोः कार्यकारणभावायोगादिति । निश्चयनयेन तु क्षीयमाणावरणसमय एव केवलज्ञानोत्पत्तिः क्रियाकालनिष्ठाकालयोर्भेदे क्रियाविरहेऽपि कार्योत्पत्त्यभ्युपगमापत्त्या क्रियारम्भकालात्पूर्वमपि कार्योत्पत्तिप्रसङ्गात् क्रियाकालेऽप्यावरणक्षयाभावे पश्चादपि पूर्वकालवत्तदभावप्रसङ्गः स्यादक्रियत्वात् । अक्रियस्य तदभ्युपगमे क्रियान्वितसमयेऽपि क्रियाया वैयर्थ्यापत्तेः क्रियाविरहितसमयवत् । तस्मात्क्रियाकालनिष्ठाकालयोरेकत्वं प्रतिबन्धकाभावादेव चावरणस्य क्षीयमाणतासमये निष्ठा न विरुद्धेति ॥

अथ केवलज्ञानस्य लक्षणमाचष्टे—

---

१. अन्यस्मिन् क्षणे क्रिया, अन्यस्मिंश्च कार्योत्पत्तिरिति भेद इत्यर्थः । २. एवं आवरणक्षीयमाणकाले क्रियाया अभावे आवरणक्षयो न स्यादेव क्रियां विना तत्राऽऽवरणस्य हेत्वभावात्, आवरणक्षीयमाणकाले च तद्धेतुक्रियाया अभ्युपगमे क्रियाकालनिष्ठाकालयोरेकसमयत्वसिद्धमिति भावम् ॥

## अशेषद्रव्यपर्यायविषयकसाक्षात्कारः केवलम् ॥

अशेषेति । अशेषाणि यानि द्रव्याणि पर्यायाश्च तद्विषयकः साक्षात्कार इत्यर्थः, मुख्यतया निखिलधर्मप्रकारकत्वे सति निखिलधर्मिविषयकज्ञानमिति भाव, तत्त्वं केवलज्ञानस्य लक्षणम्, केवलदर्शनेऽतिव्याप्तिवारणाय सत्यन्तम् । पर्यायवाद्यभिमतप्रतीत्यसमुत्पादरूपसन्तानविषयकनिखिलधर्मप्रकारकज्ञानेऽतिव्याप्तिवारणाय विशेष्यम् । प्रमेयवदिति ज्ञानस्य प्रमेयत्वेन निखिलधर्मप्रकारकज्ञानस्य वारणाय सामान्यधर्मानवच्छिन्नत्वं निखिलधर्मे विशेषणीयम् । तत्र प्रमाणञ्च ज्ञानत्वमत्यन्तोत्कर्षवद्वृत्ति, अत्यन्तापकर्षवद्वृत्तित्वात्परिमाणत्ववदित्यनुमानम् । न चेदमप्रयोजकं, ज्ञानतारतम्यस्य सर्वानुभवसिद्धत्वेन तद्विश्रान्तेरत्यन्तापकर्षोत्कर्षाभ्यां विनाऽसम्भवात् । न चेन्द्रियाश्रयज्ञानस्यैव तारतम्यदर्शनेन तत्रैवात्यन्तप्रकर्ष. प्रसक्त इति वाच्यम्, अतीन्द्रियेऽपि मनोज्ञाने, शास्त्रार्थावधारणरूपे शास्त्रभावनापकर्षजन्ये शास्त्रातिक्रान्तविषयेऽतीन्द्रियविषयसामर्थ्ययोगप्रवृत्तिसाधनेऽध्यात्मशास्त्रप्रसिद्धप्रातिभनामधेये च तरतमभावदर्शनात् । न च भावनाजन्यमेव प्रातिभवत्केवलज्ञान प्राप्त, तथा चाप्रमाण स्यात् कामातुरस्य सर्वदा कामिनीं भावयतो व्यवहितकामिनीसाक्षात्कारवदिति वाच्यम्, अप्रामाण्ये भावनाजन्यत्वस्याप्रयोजकत्वात्, बाधितविषयत्वस्यैव प्रयोजकत्वात्, भावनानपेक्षेऽपि शुक्तिरजतादिभ्रमे बाधादेवाप्रामाण्यस्वीकारात् प्रकृते च विषयबाधाभावात् । न च व्यवहितकामिनीविभ्रमादौ दोषत्वेन भावनाया क्लृप्तत्वात्तज्जन्यत्वेनास्याप्यप्रामाण्य, बाधितविषयत्ववद्दोषजन्यत्वस्यापि भ्रमत्वप्रयोजकत्वादिति वाच्यम्, भावनाया क्वचिद्दोषत्वेऽपि सर्वत्र दोषत्वानिश्चयात्, अन्यथा शंखपीतत्वभ्रमकारणीभूतस्य पीतद्रव्यस्य स्वविषयज्ञानेऽप्यप्रामाण्यप्रयोजकत्व स्यादिति न किञ्चिदेतत् । क्वचिदेव कश्चिद्दोष इत्येवाङ्गीकारात् विषयबाधेनैव दोषजन्यत्वकल्पनाच । दुष्टकारणजन्यस्याप्यनुमानादेर्विषयाबाधेन प्राम ण्याभ्युपगमात् । न च परोक्षज्ञानजन्यभावनाया अपरोक्षज्ञानजनकत्वासम्भव न हि व वह्न्यनुमितिज्ञान सहस्रकृत्व आवृत्तमपि वह्निसाक्षात्काराय कल्पत इति वाच्यम्, तज्जन्यप्रकृष्टाऽऽवरणक्षयादेव केवलज्ञानोत्पत्तिरिति सिद्धान्तादिति सक्षेप. ॥

नन्वावरणक्षयात्केवलज्ञानोत्पत्तिरित्यसङ्गतं, तथाहि किमिदमावरणं, शरीर देशकाला दिक वा, नाद्यस्तत्सत्त्वेऽप्यर्थोपलम्भात्, न द्वितीयो देशकालयोरमूर्त्तत्वात्, परमाण्वादेश्च सूक्ष्मस्वभावत्वात्, । न च मूलकीलकोदकादेर्लोकप्रसिद्धमेव भूम्याद्यावरणत्वमिति वाच्यम्, अतिशयसमृद्धिशालिनापि योगिनेदृशस्यावरणादेरभावस्य कर्त्तुमशक्यत्वात् । न चान्यत्किञ्चिदावरण प्रसिद्धमित्याशङ्कायामाह—

विद्वान् विक्रम[२४]सूरिराड् गणपतिर्निर्ग्रन्थ आसीत्ततः,
योगिश्रीनरसिंह[२५]सूरिरिनप्रभो जज्ञेऽथ विज्ञेश्वरः ॥ १६ ॥

श्रीनागह्रदतीर्थरक्षणकृते नग्नाटजेता क्षणात्,
तत्पट्टेशसमुद्र[२६]सूरिनृपतिः सञ्ज्ञाततत्त्वोऽभवत् ।
सञ्ज्ञातो हरिभद्रसूरिसचयाः श्रीमान[२७]देवस्ततः,
आसीच्छ्रीविबुध[२८]प्रभो यतिपतिः प्राज्ञप्रकाण्डस्ततः ॥ १७ ॥

भव्यानन्ददसूरितल्लजजयानन्द[२९]स्ततो जातवान्,
भक्ताम्भोजरवी रविप्र[३०]भगुरुः संख्यावतामग्रणीः ।
सूरीशोऽजनि शुद्धकीर्तिकयशोदेवो[३१] बभूवाँस्ततः,
प्रद्युम्नस्मयहृत्ततः समजनि प्रद्युम्न[३२]सूरीश्वरः ॥ १८ ॥

येनाकार्युपधानवाच्यरुचिरग्रन्थो मुदे ज्ञानिनां,
उत्पेदे स ततस्तपोधनवरः श्रीमान[३३]देवः प्रभुः ।
जज्ञे श्रीविमलादिचन्द्र[३४]सुगुरुः सत्स्वर्णसिद्धिस्ततः,
जेता गोपगिरीशकोविदमणेर्वादाङ्कणे शास्त्रवित् ॥ १९ ॥

वेदाङ्काङ्कमिते समं सुमनुजैः श्रीवैक्रमाब्दे गते,
श्रीलोद्योतन[३५]सूरिराड् प्रविहरन् पूर्वावनीतः सुधीः ।
आगात्सोऽर्बुदमुख्यशैलसविधे टेलीवटद्रोरधः,
लग्नेऽच्छे स्वपदेऽष्टसूरिवृषभान् प्रातिष्ठिपत्पावनः ॥ २० ॥

सन्मौक्तिकाच्छो वटसंज्ञगच्छः, ततो जगत्यां सुगुणैकगुच्छः ।
अपप्रथद्व्यासतमोऽपहारी, यथाऽन्तरिक्षे सवितुः प्रकाशः ॥ २१ ॥

श्रीसर्व[३६]देवो नतसर्वदेवः, प्रशस्यशिष्यैः कृतपादसेवः ।
प्रख्यातकीर्तिः प्रथमोऽत्र सूरिः, जज्ञेऽथ तत्पट्टसरःसरोजम् ॥ २२ ॥

रूपश्रीविरुदं प्रजेशसविधात्प्रासं स्ववैदुष्यतः,
येन श्रीयुतदेव[३७]सूरिनृपतिर्जातः स विज्ञस्ततः ।
तत्पट्टेऽजनि सूरिशेखरवरः श्रीसर्व[३८]देवः पुनः,
सद्विद्याललनाविलाससदनं चारित्रिचूडामणिः ॥ २३ ॥

ततो यशोभद्रकनेमिचन्द्रौ तत्पट्टभद्रासनमुख्यराजौ ।
जातौ मुनी संयमशौर्यभाजौ, द्वौ कोविदौ सूरिवरौ सतीर्थ्यौ ॥ २४ ॥

अतात्यजीद् यो विकृतीः समग्राः, अपात्सदा काञ्जिकनीरमेकम् ।
सोऽभूत्ततः श्रीमुनिचन्द्रसूरिः तत्पट्टशाली शमवीचिमाली ॥ २५ ॥

आचार्यवर्याजितदेववादि-श्रीदेवसूरिप्रमुखा अभूवन् ।
प्राज्ञा विनेया विनयप्रशस्याः, शिष्येषु धुर्या मुनिचन्द्रसूरेः ॥ २६ ॥

तत्रादिमाच्छ्रीजयसिंहसूरिः, कुशाग्रबुद्ध्या जितदेवसूरिः ।
जज्ञे मुनीशः कविचक्रवर्ती, दिगन्तरालप्रथितातिकीर्तिः ॥ २७ ॥

सोमप्रभाचार्यवरः शतार्थी, पूर्वो द्वितीयो मणिरत्नसूरिः ।
उभौ च तस्याभवतां विनेयौ, प्रतीक्ष्यपादौ जितवादिवादौ ॥ २८ ॥

सानुग्रहप्रचरणप्रथितोदयो यः, स्वःसानुमानिव बभौ मणिरत्नपट्टे ।
चारित्ररत्नखनिमान् गुणधातुपूर्णः, कल्याणराजिजटिलः सुरसेव्यपादः ॥ २९ ॥

श्रीमज्जगच्चन्द्रमुनीन्द्रमुख्यः, तत्त्वज्ञराट् चान्द्रकुलाब्धिचन्द्रः ।
चन्द्रातिसौम्याकृतिकस्तपस्वी, स सूरिवर्यस्तनुताच्छिवं वः ॥ ३० ॥

सुदुस्तपा धीरवरेण याव-ज्जीवं मुदा येन तपस्विना सः ।
आचाम्लरम्या विदधे तपस्या, प्रशंसनीयो न कथं सुधीभिः ॥ ३१ ॥

यो द्वादशाब्दे विगते सुराज्ञः, श्रीराणकात्सत्तमजैत्रसिंहात् ।
आघाटसंज्ञे नगरेऽभिरामे, प्रापत्सुरम्यं बिरुदं तपेति ॥ ३२ ॥

बाणाष्टवक्षोरुहचन्द्रसह्वये, वर्षे सुधान्यादिकमन्निकर्षे ।
विस्तीर्णतेजा भुवि पप्रथेऽय, तपेति गच्छः सुखदस्ततोऽच्छः ॥३३॥

सदालिजुष्टः सुमनोऽतिरम्यः, फलेग्रहिः शिष्यलतावितान ।
पर्वाधिशाली सुरगच्छवत्सः, तपेति गच्छः स्म चकास्ति नित्यम् ॥३४॥

अनन्यसाधारणचिच्चरित्रः, शैथिल्यमुक्तश्चरणप्रवृत्तौ ।
यस्य द्वितीया वटगच्छसंज्ञा, बिभर्ति केषां न स पूज्यभावम् ॥ ३५ ॥

स्फारस्फुरत्सवरवीचिराजि-र्मर्यादितो भव्यरमानिमित्तम् ।
अस्ताघमूलो मुनिरत्नपूर्णः, शश्वद्बभात्सागरवत्स गच्छः ॥ ३६ ॥

देवेन्द्रसूरिविजयादिमचन्द्रसूरी, शिष्योत्तमौ कुमतसन्तमसांशुमन्तौ ।
विद्याविशारदवरौ श्रमणौ समास्तां, तत्पट्टनाकनडवातनयौ मुनीन्द्रौ ॥ ३७ ॥

विद्यानन्दगणिर्विचक्षणमणिर्देवेन्द्रसूरीशितुः,
पूर्वोऽन्यो मुनिधर्मघोषगणपो ह्येतौ विनेयावुभौ ।
सेनान्यौ जिनशासनक्षितिपतेः पुण्याङ्घ्रिबाहूपमौ,
जातो तत्पदमौलिमौलिमणिभृत्-श्रीधर्मघोषः क्षमी ॥ ३८ ॥

समुद्राधिष्ठाता जलनिधितरङ्गावलिमिषात्,
डुढौके रत्नादीननिमिषवरो यस्य सविधे ।
स्वपक्षान्यस्त्रीभिः प्रवचनवचोभञ्जनकृते,
गले केशव्यूहः कुमतिभिरकारि स्वबलतः ॥ ३९ ॥

तदा विद्याद्रङ्गे विदितकपटो यो मुनिवरो,
भृशं तस्तम्भैतास्तदनु सदयः सङ्घवचनात् ।
वधूना निर्बन्धाल्लघु समभुचच्चातिशयभृत्,
समग्रन्थीच्छ्रव्या जयवृषभसंज्ञादिकविताः ॥ ४० ॥

भिषज्यते कर्मरुजापहारे, सम्राज्यते सूरिसमूहमध्ये ।
धर्मोपदेशे जलमुच्यते यः, ओजायते पण्डितमण्डलेषु ॥ ४१ ॥

कश्चिद्योगिशठोऽवसद्वरनरे द्रङ्गे विशालाभिधे,
साधून्भापयते स्म सौधबलतो जैनान्समभ्यागतान् ।
भूम्यां संविहरन्हरन्कलितमः कुर्वञ्जनस्योद्धृतिं,
श्रीसूरीश्वरधर्मघोषविभुस्तत्राजगामैकदा ॥ ४२ ॥

ईर्ष्याज्वालाज्वलितहृदयोऽहङ्कृतिग्रस्तबुद्धिः,
ज्ञात्वा योगी प्रति मुनिवरान् भापनायाददर्शत् ।
भीष्मान्दन्तान्ककचविषमान्दर्शयित्वा कफोणिं,
जग्मुर्भीताः स्वगुरुसविधे साधवः प्रोचुराशु ॥ ४३ ॥

प्रावोचद्गुरुराट् मुनींस्तदयो मा भैष्ट यूयं मनाग्,
युष्मद्रक्षणदक्षशक्तिसमितो वेवेद्मि यावत्तदा ।

श्रुत्वा भीतिकरान्बहिश्च वसतेर्हीकृन्दुराहिस्वरान्,
नानोपद्रवभीतसाधुनिकरो द्राकान्दिशीकोऽभवत् ॥ ४४ ॥

ज्ञात्वा यावदिमां प्रवृत्तिमृषिराट्-श्रीधर्मघोषो गुरुः,
प्राक्सज्जीकृतकुम्भके निजकरं दत्त्वा पटाच्छादिते ।
निर्भीकः प्रजजाप तावदुदिता सर्वाङ्गगाभिव्यथा,
धूर्ते योगिनि सेवकानथ तदा योगी जगाद स्रिये ॥ ४५ ॥

योगी स्वीयं निलसितमिदं व्याकुलो द्रागहार्षीत्,
गत्वाऽऽक्रन्दन् श्रमणवसतौ वक्त्रदत्ताङ्गुलिः सः ।
भ्रान्त्याऽवोचद् यदिह विहितं क्षम्यतां सर्वमेतत्,
कुर्वे नातः प्रति मुनिवरान् क्लेशकृन्नीचकृत्यम् ॥ ४६ ॥

लीनं व्यधात्तं गुरुधर्मघोषः, स्वकीयपादाम्बुजयोस्तदानीम्,
ततः प्रवृद्धिर्जिनशासनस्य, कामं बभूवाघविनाशनस्य ॥ ४७ ॥

यत्राखिलादिप्रवरस्तुतीर्थः, प्रादीदभत्काव्यकलाविदग्धः ।
सोमप्रभाचार्यवरो बभूवान्, तत्पादसेवानलिनीद्विरेफः ॥ ४८ ॥

आसीत्सूरिवरेण्यसोमतिलकस्तत्पट्टलक्ष्मीधरः,
सत्संवेगतरङ्गसङ्गविशदीभूतक्रियाज्ञानभृत् ।
यस्याद्यो गणिचन्द्रशेखरतपस्व्यन्यो जयानन्दकः,
प्रान्त्यः श्रीगुरुदेवसुन्दरवरः शिष्यत्रयी प्राजनि ॥ ४९ ॥

श्रीसूरीश्वरदेवसुन्दरशमी प्राभ्यस्तयोगोऽभवत्,
सम्प्राप्ताखिलमन्त्रतन्त्रविभवः तत्पट्टरोचिष्पतिः ।
मृण्यालानलसर्वसाध्यसहरो नैमित्तिकेष्वग्रणीः,
हर्ता स्थावरजङ्गमाखिलविषस्याच्यों नृपामात्यकैः ॥ ५० ॥

यः पञ्चभिः पण्डितशिष्यमुख्यैः, शिलीमुखैः काम इव व्यभात्तैः ।
ज्ञानादिमः सागरसूरिरायः, आसीत्कृतावश्यककावचूरिः ॥ ५१ ॥

विश्वश्रीधरपुस्तकादिरचना-सौन्दर्यनैपुण्यभाग्,
सूरिश्रीकुलमण्डनाह्वगुरुराट् जज्ञे द्वितीयस्ततः ।

आसीच्छ्रीगुणरत्नसूरिसुगणो वैराग्यरङ्गाश्रितः,
श्रीवैयाकरणाग्रणीर्गणिगणे वर्यस्तृतीयस्ततः ॥ ५२ ॥

आचार्याग्रिमसोमसुन्दरगणिर्जातश्चतुर्थस्ततः,
दृष्ट्वा केचन निन्दका मुनिपतेर्यस्य क्रियापात्रताम् ।
तद्धाताय, सहस्रमानवगणं पाखण्डिनो मानुषाः,
प्रैषुः श्रीगुरवश्च यत्र शयितास्तत्रागतोऽयं गणः ॥ ५३ ॥

रात्रौ चन्द्रमसः प्रकाशपतने धर्मध्वजेनादितः,
पार्श्वं सद्विधिना प्रमार्ज्य गुरुराट् प्रोद्वर्तयन्वीक्षितः ।
तेनोचे लघुजन्तुरक्षणकरो वध्यः कथं पापकै-
रस्माभिः खलु निन्द्यवृत्तिनिपुणैः कारुण्यवारांनिधिः ॥ ५४ ॥

ततो गणोऽयं गुरुपादनम्रः, अस्मान्क्षमस्वेति जगाद सूरिम् ।
गतो गणः स स्वगृहं क्षमित्वा, तत्र प्रभावः प्रससार सूरेः ॥ ५५ ॥

श्रीसाधुरत्नगणपोऽजनि पञ्चमोऽत्र, श्रीसोमसुन्दरगणिः समसाधुमध्ये ।
कल्याणिकाभिधसुकाव्यविधानदक्षः, तत्पट्टशेषभुजगाग्रमणिर्बभूव ॥ ५६ ॥

सिंहासनाशोकसरोवरार्घ-भ्रमाब्जभेरीमुरजादिबन्धैः ।
त्रिंशत्सुबन्धै रमणीयभागां, चित्राक्षरद्व्यक्षरपञ्चवर्गाम् ॥ ५७ ॥

तां त्रिदशतरङ्गिणी-नामधेयां सुपत्रिकाम् ।
योऽष्टोत्तरशतैर्हस्तै-र्दीर्घां प्रैषीद्गुरुं प्रति ॥ ५८ ॥ युग्मम् ॥

प्रापद्बालसरस्वतीति विरुदं यो दक्षिणे राष्ट्रके,
बाल्ये श्लोकसहस्रकं नवनवं कण्ठे चकारानिशम् ।
स्तोत्रं संतिकरं नृणां सुखकरं प्रादीदभत्सुन्दरं,
आसीच्छ्रीमुनिसुन्दराभिधगुरुस्तत्पट्टधौरेयकः ॥ ५९ ॥

श्रीरत्नशेखरविशारदवर्यधुर्यः, सूरीशशेखरसमो नयभङ्गविज्ञः ।
श्राद्धप्रतिक्रमणसूत्रसुवृत्तिकर्ता, तत्पट्टशेखरवरः समभूत्ततोऽसौ ॥ ६० ॥

श्रीलक्ष्मीसागरः सूरिर्जज्ञे तत्पट्टमण्डनः ।
अभूच्छ्रीसुमतिः साधुः तत्पट्टाब्धिविधूपमः ॥ ६१ ॥

दाक्षिण्यदाक्ष्यमुनितादिगुणालिपुष्टाः, तत्पट्टचैत्यशिखराग्रसुवर्णकुम्भाः ।
ये जैनशासननभःकिरणेशितारः, दीक्षां ददुर्हरगिरिप्रमुखार्पिनंणाम् ॥६२॥

स्वाचारमार्गं मुमुचुर्न धन्याः, ये ते वसन्तः श्लथसाधुमध्ये ।
गच्छप्रभूतप्रभुताविशिष्टाः, हेमादिमाः श्रीविमलौ अभूवन्॥६३॥युग्मम्॥

आनन्दसूरिर्विमलान्तिमोऽभूत्, तत्पट्टदीव्यन्मणिहारनाथः ।
समुद्धरन् साधुपथं श्लथं यः, तपस्विनिर्ग्रन्थसमाजराजः ॥ ६४ ॥

प्रभावयञ्जैनमिदं सुशासनं, समर्थयन्नागमतत्त्वगूढताम् ।
प्रचारयन्देशनया स्वधर्मकं, प्रवर्धयन्निश्वतले यशोलताम् ॥ ६५ ॥

तत्पट्टभद्रासनराजतेजाः, आप्तोक्तिवेत्ता जयिदानसूरिः ।
हतप्रमादो जितवादिवादो, महाप्रतापी समभून्मुनीन्द्रः ॥६६॥ युग्मम् ॥

वैराग्यरत्नप्रभवावनीभृद्, वैदग्ध्यचूतस्य वसन्तमासः ।
सौभाग्यसौजन्यविहारभूमिः, क्रियाङ्गनाक्रीडनकान्तकुञ्जः ॥ ६७ ॥

तत्पट्टपद्माकरराजहंसः, कृपाक्षिकाज्ञानतमिस्रहंसः ।
कारुण्यसिन्धुः शमराजसौधः, श्रीहीरसूरिर्नतसूरिरासीत् ॥ ६८ ॥

स्याद्वादसिद्धान्तमबाध्यमेनं, प्रमाणयन्युक्तिततिप्रयुक्तम् ।
समन्वयन्भिन्नमतानि विद्वान्, स्वकीयसिद्धान्तसुचारुदृष्ट्या ॥ ६९ ॥

मध्येसभं भाति यदीयवाणी, पानीयवत्कर्ममलं हरन्ती ।
औदार्यगाम्भीर्यमयी सुचार्वी, माधुर्यधुर्या शुचितां वहन्ती ॥ ७० ॥

हिंसापराऽश्रीमदकब्बरादीन्, नृपाननेकान्यवनेषु मुख्यान् ।
दयामयाँस्तान्विदधज्जगत्यां, व्याख्यानधाराधरधारया यः ॥ ७१ ॥

श्रीसेनसूरिप्रमुखैः स्वशिष्यैः, विद्याश्रतसः समुपेयिवद्भिः ।
वज्रीव देवैः समुपास्यमानः, जगद्गुरुर्जङ्गमकल्पशाखी ॥ ७२ ॥

समागतान्वादिगजान्सुमज्ञान्, वादस्थले सिंह इवाधिगर्जन् ।
स हीरसूरिर्जिनशासनस्य, पुस्फोर जित्वा विजयध्वजं तान् ॥ ७३ ॥

श्रीसेनसूरिः शमिसेनताभाक्, तत्पट्टचूडामणितांधरोऽभूत् ।
वादे विजेता वदवादिवृन्दम्, श्रीजैनसच्छासनदण्डनाथः ॥ ७४ ॥

रूपेण कामतुल्यो यो, वृत्त्या कामविनाशनः ।
स जीयात्सेनसूरीशः, पादाभ्यां लोकपावनः ॥ ७५ ॥

यस्मै जहाङ्गिरनृपेण सगौरवेण, सन्मण्डपाचलचये बिरुदं प्रदत्तम् ।
दीव्यज्जहाङ्गिरमहासुतपेति सोऽभूत्, तत्पट्टहाटकघटो गणिदेवसूरिः ॥७६॥

तत्पट्टसूरोऽजनि सिंहसूरिः, दुर्वादिदन्तावलसिंहरूपः ।
तदन्तिपत्सत्यगणिर्बभूव, क्रियाप्रियाश्लेषसुखोपभोक्ता ॥ ७७ ॥

न्यायाचार्ययशःसतीर्थ्यविनयोपाध्यायसाहाय्यतः,
शैथिल्यं स्वगणे समीक्ष्य विदधौ कार्मैः क्रियोद्धारकम् ।
सत्यं नाम चकार सत्यमिति यः स्वीयं तपस्वी ततः,
गच्छं स्वच्छममुं तपेति निदध-ज्जीयात्स सत्यश्रियम् ॥ ७८ ॥

तच्छिष्यकर्पूरगणिस्ततोऽभूत्, क्रियैककर्पूरसुगन्धपूर्णः ।
क्षमागणीशः समभूत्ततः सः, तदीयशिष्ये वरतां दधानः ॥ ७९ ॥

प्रतिष्ठिता सप्तशती च येन, तीर्थङ्करस्य प्रतिमा मनोज्ञा ।
तत्पादवासी जिननामकोऽभूत्, षड्जीवरक्षाकरणप्रवीणः ॥८०॥ युग्मम् ॥

श्रीमानभूदुत्तमनामधेयः, तच्छिष्यवर्यो गणिपूत्तमोऽसौ ।
पन्यासपद्मार्ह्यजयो गणीशः, ततोऽभवद् गौर्जरकाव्यकारी ॥ ८१ ॥

पद्मद्रहेति प्रथितोरुकीर्त्तिः, वहानिपूर्वां सह ढुण्ढकैर्यः ।
कुर्वन्विवादं विजयं तदापत्, क्रियाभिकाङ्क्षी सततं विहारी ॥ ८२ ॥

तच्छिष्य आसीद्गणिरूपनामा, ततोऽभवत्कीर्तिगणिः सुकीर्तिः ।
पन्न्यासकस्तूरगणिस्ततोऽभूत्, बिभ्रत्क्रियाचिन्मृगनाभिगन्धम् ॥८३॥

सप्तर्षिभिर्मणिर्मणिभिः प्रयुतो यथार्क्षं, दीव्यच्चपाः सद्भूतादिविनेयवर्यैः ।
तत्पट्टमौलिमुकुटोऽप्रतिबद्धचारी, संवेगरङ्गकलितः शमितेन्द्रियोऽभूत् ॥८४॥

अद्यापि वर्वर्ति तदीयशिष्यः श्रीसिद्धिसूरिः स्वपरागमज्ञः ।
घोरां तपस्यां तपति स्म वृद्धः, विनेयवर्यैः परिपेव्यमाणः ॥ ८५ ॥

ततोऽभवद्बुद्धिगणिर्मनीषी, विलोकय शास्त्रे प्रतिमाविधानम् ।
विहाय यो ढुण्ढककापथं सः, जग्राह संवेगपथं विधिज्ञम् ॥ ८६ ॥

चञ्चत्पञ्चनदे पराक्रमपदे राजन्यवंशेऽन्वये,
'रूपाम्बाजठरे गणेशभवने ग्रामे लहेराभिधे ।
द्व्यङ्काष्टाब्जमितेऽब्दके जनिरभूद्येषां शुभे वैक्रमे,
हिंसोच्छित्तिकृतेऽत्र भारततले सद्धर्मरक्षाकृते ॥ ८७ ॥

व्योमाब्जाङ्कविभावरीपतिमिते संवत्सरे वैक्रमे,
दीक्षां ढुण्ढकवर्त्मनः प्रजगृहुर्वैराङ्गिका ये मुदा ।
पश्चाच्छास्त्रविलोकनाध्ययनतः टीकानिरुक्त्युक्तितः
वन्द्येति प्रतिमा जिनस्य शिवदा ज्ञातं च यैर्व्याकृतेः ॥ ८८ ॥

सत्यान्वेषणचञ्चुभिः प्रति मुनीन्प्रोक्तं तदन्यांश्च यैः,
केचित्सत्प्रविचार्य तन्मुनिवराः सत्यार्थसङ्ग्राहकाः ।
आबद्धास्यपटाः बुधा निरगमन् सत्यप्रचाराय वै,
शास्त्रोक्तः प्रतिमानमस्कृतिविधिः सर्वत्र तैर्घोषितः ॥ ८९ ॥

मूर्त्यर्चाप्रवणान्व्यधुर्गृहिजनान्कैवल्यकाङ्क्षावतः,
धर्मार्थं जिनभक्तये प्रतिपुरं कष्टं सहन्ते स्म ये ।
आजग्मुर्गुरुबुद्धिसाधुसविधे संवेगरङ्गोज्ज्वलाः,
सत्संवेगपथस्य ते प्रजगृहुर्दीक्षां तदानीं विधेः ॥ ९० ॥

अहम्मदाबादमहानगर्यां, आनन्दरोमाञ्चितपूर्जनायाम् ।
आनन्दपूर्वा विजयान्तिमास्ते, प्रापप्रथन्भूमितले महान्तः ॥९१॥

येभ्यः सूरिपदं ददौ प्रमदतः सम्भूय सङ्घोऽखिलः,
विद्वद्भ्यो रुचिरे महोत्सववरे श्रीपादलिप्ते पुरे ।
पाञ्चालोद्धृतिकारिणोऽजनिषत श्रीजैनसैद्धान्तिकाः,
न्यायाम्भोनिधिसूरिवर्यविजयानन्दाभिधानाश्च ते ॥ ९२ ॥

विद्याभृङ्गीललनसदनं शासनप्रेमकन्दः,
जैनाजैनोपकृतिविकसच्चारुकाङ्क्षामरन्दः ।
श्रीसूरीशस्मरणकरणव्यग्रताकर्णिकावान्,
प्रादुर्भूतः कमलविजयैस्तत्सुपट्टाम्बुजातः ॥ ९३ ॥

ईलाख्यदुर्गोपरि शान्तिचैत्यं, भवार्चभव्याङ्गिकृतातिशैत्यम् ।
जीर्णं समीक्ष्योद्धरति स रुच्यं, जिनेशभक्तः कमलाख्यसूरिः ॥ ९४ ॥

पापर्द्धिहिंसादिपराङ्नरेशान्, नैकाँस्तदन्यान्पुरुपान्नृशंसान् ।
जीमूतगम्भीरवचःप्रवाहात्, प्राबोधयच्छ्रीकमलाह्वसूरिः ॥ ९५ ॥

पन्यासदानमुनिलब्धिसुधीवरेण्यौ, पट्टे स्वके कमलसूरिवरो न्यधात्तौ ।
सङ्घाग्रहात्स्वपदयोग्यतया महर्षिः, छायापुरौ महपुरःसरतः प्रमोदात् ॥ ९६ ॥

महाव्रती भूतिवतिप्रतीतः, शिवान्वितो दग्धमनोजराजः ।
श्रीलब्धिसूरिः समभूद्गणेन्द्रः तदीयपट्टाचलराड्गिरीशः ॥ ९७ ॥

तर्के सूक्ष्मे धिषणधिषणा पोस्फुरीति प्रतीक्ष्णा,
येषां कृत्स्नागमगनयने लक्षणे दक्षशिक्षा ।
जैनाजैनप्रवचनवचःपाटवं पूर्णताभाग्,
ज्योतिःशास्त्रे वरनिपुणता कोविदैरप्यगम्ये ॥ ९८ ॥

श्रव्यं काव्यं प्रसृमरगुण चारुमन्दर्भगर्भं,
श्रुत्वा लोकैः कविकुलकिरीटेत्युपाधिः प्रदत्तः ।
येभ्यः पूज्यक्रमणकमला लब्धिसूरीशितारः,
ते पायासुर्भविककृपिकान्देशनावारिदानात् ॥ ९९ ॥

मूलत्राणप्रदेशे दुरधिगमतमे कष्टकोटिं सहित्वा,
प्राणिप्रत्राणमध्या मधुमधुरगिरा देशनागाङ्गनीरम् ।
भुञ्जानान् सन्निहत्य द्विजपशुसमजं काश्यपं हिंस्रलोकान्,
चक्रुस्तान्पाययित्वा पलघसिरहितान् लब्धिसूरीश्वरास्ते ॥ १०० ॥

श्रीलब्धिसूरिर्वटपद्रपूर्यां, जित्वा मुकुन्दाश्रमवादिवर्यम् ।
वादाक्षवाटे जिनशासनेऽस्मिन्, जेतेतिकीर्तिं विमराश्चकार ॥ १०१ ॥

तत्त्वन्यायसुमावलीविलसितं स्याद्वादकुञ्जाश्रितं,
भङ्गीवल्लिनयागराजिजटिलं न्यायप्रकाशाख्यया ।
गुञ्जल्लक्षणभृङ्गसङ्घघटितं जात्याङ्कितं व्याख्यया,
तत्त्वन्यायविभाकरोपवनकं, सच्छन्दलालित्यभृत् ॥ १०२ ॥

नव्यप्राच्यसुनीतिरीतिसरणिं प्रालम्ब्य नियामता,
यद्येनाऽरचि मालिकेन महता कारुण्यपुण्याब्धिना ।
तत्त्वाकाङ्क्षिविलासिखेलनकृते व्याख्यानवाचस्पतिः,
जीयाद्भूमितले स निर्मलयशाः श्रीलब्धिसूरीश्वरः ॥ १०३ ॥
॥ युग्मम् ॥

वर्षे व्यङ्कनवौषधीपतिमिते तीर्थे वरे स्तम्भने,
तत्त्वन्यायविभाकरं सुललितं ग्रन्थं समारब्धवान् ।
ईलादुर्गपुरे समाप्तिमकरोत् तस्यैकसत्पद्धतेः,
सद्बुद्ध्यार्थकमूलसूत्ररचनात् श्रीलब्धिसूरीश्वरः ॥ १०४ ॥

बाणाङ्काङ्कमृगाङ्कवत्सरमिते श्रीवैक्रमे तत्र वै,
व्याख्यामारभते स तस्य महतीं न्यायप्रकाशाभिधाम् ।
गुर्वर्थी फलवर्धिनामनगरे व्याख्यां समापत्सुधीः,
सप्ताङ्काङ्कसुधामरीचिशरदि श्रीलब्धिसूरीश्वरः ॥ १०५ ॥

तच्छिष्यो भुवनादिनामविजयो-पाध्यायमुख्योऽभवत्,
तच्छिष्येण मया प्रशस्तिशतकं भद्रङ्करेणारचि ।
योऽत्राज्ञानवशात्प्रविस्मृतिवशाद् दुष्टप्रयोगः कृतः,
तं संशोध्य विवेकहंसनिदुरैर्वाच्यं हि तद्धीधनैः ॥ १०६ ॥



सटीकस्य तत्त्वन्यायविभाकरस्य -

# शुद्धाशुद्धपत्रिका



| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् | पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|---|---|---|
| ६ | १० | णमार्थो | णामर्थो | २४ | १० | भूयेत | भवेत् |
| ७ | ६ | सुखार्थे | सुखार्थे | २४ | १७ | नात्म्यैक्ये | नात्मैक्ये |
| ८ | २१ | स्मामाधिक- | स्समानाधि- | २६ | १३ | पद्य | पद्य |
| | | रण्या | करणा | २६ | २३ | पद्य | पद्य |
| ८ | २३ | भेपजे | भेषजेन | २७ | १६ | त्युकूल | त्यनुकूल |
| १० | ३ | पौद्गलिकं | पौद्गलिकं | २७ | १९ | यवत्वं | यत्वं |
| १० | १४ | भिलापा, सा | भिलापः, स | २९ | ६ | पुद्गलो | पुद्गलो |
| १० | १६ | रिमकाया | रमकस्या- | २९ | ७ | निमित्तक | निमित्त |
| | | अभिलापाया | भिलापस्य | ३० | ९ | पुद्गला | पुद्गला |
| ११ | ४ | चरितत्वे | चरितत्वे | ३० | १२ | पुद्गल | पुद्गल |
| १४ | ९ | जातीयत्त्वे | जातीयत्वे | ३० | २२ | पुद्गला | पुद्गला |
| १५ | ७ | अनागरवा | अनागतस्या | ३० | २३ | पुद्गला | पुद्गला |
| १६ | २ | परमाणवपीति | परमाणावपीति | ३० | २७ | निर्वत्तन | निर्वर्तन |
| १६ | १६ | त्रिसृणा | त्रिसृणा | ३० | २८ | चक्षुश्रोत्राणां | चक्षुश्श्रोत्राणां |
| १७ | २७ | ज्ञानारणी | ज्ञानावरणी | ३१ | १३ | पुद्गलोपच | पुद्गलोपच |
| १८ | २६ | किया | क्रिया | ३१ | १६ | क्षायोप | क्षायोप |
| १९ | १ | इदानी | इदानी | ३२ | १ | पुद्गला | पुद्गला |
| २० | १० | पुद्गल | पुद्गल | ३२ | १० | स्ततः | स्ततः |
| २० | ११ | पुद्गल | पुद्गल | ३३ | २२ | रुपेय | पेय |
| २२ | २४ | मिद्ध | मिद्ध | ३४ | ४ | रमन | रमने |
| २४ | १० | भाविनां | भाविनः | ३९ | १७ | प्रदेशा येषान्ते | प्रदेशा |
| २४ | १० | दीनानें | दीनें | ३९ | १९ | निरवयत्वेन | निरवयवत्वेन |

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४३ | १९ | निवृत्तौ | निर्वृत्तौ |
| ४४ | ७ | द्यत्वे | द्यत्वेन |
| ४८ | २ | क्लेदः | क्लिन्नं |
| ४८ | ६ | धेयत्त्वा | धेयत्वा |
| ४८ | २६ | तदाह | तमाह |
| ५१ | १९ | स्यान्नित्य- मनित्यश्च | स्यान्नित्योऽनित्यश्च |
| ५३ | १८ | मपराणां | मपरेषां |
| ५९ | २ | पर्यार्या | पर्योया |
| ६० | ८ | पूर्व्या | पूर्व्याः |
| ६० | २४ | प्रवृति | प्रवृत्ति |
| ६१ | १५ | जघन्य | जघन्या |
| ६५ | २१ | मित्यार्थः | मित्यर्थः |
| ७१ | ६ | प्रयोजक | प्रयोजकं |
| ७१ | ७ | लक्षणार्थे | लक्षणार्थः |
| ७१ | २२ | तेन प्रत्येकं | तेन |
| ७४ | २६ | युपं यदा | युर्यदा |
| ७५ | २ | युपं बध्नाति | युर्बध्नाति |
| ७५ | २० | चक्रधरत्वादी | चक्रधरादी |
| ७७ | १० | त्रिका | त्रिक |
| ७७ | १४ | द्रष्टव्यमिति | द्रष्टव्य इति |
| ७८ | ३ | प्रयोजकत्वे | प्रयोजकत्वे सति |
| ७८ | १६ | पर्याय | पर्याये |
| ८३ | ९ | समवाधा | समवधा |
| ८६ | १ | चक्षुर्त्तानादीनि | चक्षुर्दर्शनादीनि |
| ८९ | २३ | निवृत्तिः | निर्वृत्तिः |
| ९४ | ४ | चत्वारो | चत्वारस्सप्त |
| ९८ | ११ | लापेव | लाप इव |

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ९८ | ११ | लापा | लापो |
| ९८ | १८ | लापावत् | लापवत् |
| ९८ | १८ | लापा | लापः |
| ९८ | २५ | लापावत् | लापवत् |
| ९८ | २५ | लापा | लापः |
| १०० | १० | रसन | रसने |
| १०३ | १२ | विधा | विधाः |
| १०३ | २१ | निवृत्त | निर्वृत्त |
| १०३ | २६ | लापा | लापः |
| १०४ | १० | मुदिष्ट | मुद्दिष्ट |
| १०८ | १६ | प्रभा | प्रधा |
| ११० | २२ | परिग्रह | परिग्रह |
| ११३ | २३ | क्रियेत्यर्थः | क्रियेत्यर्थः |
| ११५ | १५ | विशेष | विशेषण |
| १२५ | ७ | भेद | भेदं |
| १२८ | ५ | प्रविष्टस्य | प्रविष्टः |
| १३५ | २४ | वस्तु | वास्तु |
| १३६ | १८ | विध्याना | विध्यापना |
| १३७ | १ | प्रतिनियतदिवसा | प्रतिदिवसा |
| १४२ | २४ | मुद्दे | मुद्दु |
| १४४ | १८ | राद्रक | राद्रेक |
| १४७ | १६ | लक्षणम् | लक्षकः |
| १४७ | २० | लक्षणं | लक्षकं |
| १४९ | ६ | गुणपेक्ष | गुणापेक्ष |
| १५० | २४ | विशुद्दय | विशुद्ध्य |
| १५३ | २ | नोत्किर्यते | नोत्कीर्यते |
| १५३ | २ | उत्कीरणं | उत्किरणं |
| १५८ | २१ | निरपन्दो | निःस्पन्दो |

| पृष्ठ | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १६५ | १६ | मुँहूर्त्तिकाः | मौंहूर्त्तिकाः |
| १६५ | १९ | शेपायुः | शेपायूः |
| १६५ | २० | मन्थना | मन्थाना |
| १६७ | २ | समयाश्चान्य | समयाश्च |
| १६७ | ९ | भूतास्समि-त्यादयः | भूतान् समि-त्यादीन् |
| १६९ | ९ | स्यापत्र | स्याप्यत्र |
| १७२ | ५ | सन्तप्तोऽपि | सन्तापेऽपि |
| १७२ | २८ | न्यज्ञ्या | न्यज्वा |
| १७४ | ४ | सदुष्टाना | दुष्टाना |
| १७५ | १२ | फूलोपर्गे | कूलोपसर्गे |
| १७६ | ९ | विभावयता | विभावयतः |
| १७६ | २० | ताऽऽद्रियेत | तामाद्रियेत |
| १८१ | ९ | व्यदेश | व्यपदेश . |
| १८२ | ७ | तीर्थान्तर-संक्रामतो | तीर्थान्तरं संक्रामतो |
| १८४ | १२ | प्युशम | प्युपशम |
| १८७ | १५ | .पाषिति | पा इति |
| १९० | १२ | रूप | रूपे |
| १९१ | ८ | संयम | संयत |
| १९५ | ४ | त्रिशदादि | त्रिशादि |
| १९८ | २४ | आद्य | आद्या |
| २०२ | १ | द्वादर् | द्वादर |
| २०२ | १६ | दलिकं | दलिकस्य |
| २०३ | ८ | छेदो | छेदोपस्थापनीयः छेदो |
| २१६ | २ | तीर्थे | तीर्थे |
| २१८ | १ | णीयम् | णीयः |

| पृष्ठ | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २१८ | १ | मांसश्च | मांसञ्च |
| २१८ | १ | त्याज्य एव | त्याज्यमेव |
| २२४ | ७ | त्कर्षाश्च | त्कर्षश्च |
| २२४ | २१ | कानशा | कानाशा |
| २३० | ९ | दुखं | दुःखं |
| २३१ | १ | ध्यायायति | ध्यायति |
| २३२ | २२ | विद्याभिति | विद्यामिति |
| २३६ | ७ | सम्बन्ध | स बन्ध |
| २३६ | १९ | त्पुद्गलैः | त्पुद्गलैः |
| २३९ | ३ | इत्यर्थे | इत्यर्थः |
| २४२ | ७ | काय | क्काय |
| २४२ | २२ | तेदव | तदेवं |
| २४३ | १६ | व्यापारा | व्यापाराः |
| २४३ | २७ | तावेयो | तयोरेवो |
| २४५ | १ | त्यर्थः | त्यर्थः |
| २४५ | १७ | मित्येव | मित्येवं |
| २४६ | २४ | निर्वर्त्तना | निवर्त्तना |
| २४८ | २ | परिणमति | परिणमते |
| २५२ | २४ | द्विधाः | द्विधा |
| २५८ | २ | भेदास्तेषाम् | भेदास्तासाम् |
| २५८ | २३ | सामग्रीस | सामग्री |
| २५९ | ३ | वरणमा | वरणे आ |
| २६० | २४ | विशुद्धया | विशुद्धया |
| २६३ | ६ | विधोदयो | विध उदयो |
| २६५ | ४ | कारोपयुक्तस्य | कारोपयोगयुक्तस्य |
| २७१ | ६ | शब्दे | शब्दे |
| २८२ | ९ | भेदा | भेदो |
| २८२ | १५ | जीवा | जीवाः |

| पृष्ठ | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २८५ | १ | पुरुषस्य रूप-भिलापो | पुरुषादेः रूपाद्यभिलापो |
| २८६ | २२ | ह्यावरकं | ह्यावारकं |
| २८८ | १० | ज्ञेयताया | ज्ञेयताया |
| २८८ | १९ | दुष्यन्ति | दुःष्यन्ति |
| २९३ | २ | मार्गणाः | मार्गणा |
| ३०२ | १० | जीना, | जिना |
| ३१० | २१ | यन्नैवं तन्नैवं | यदेवं तदेवं |
| ३१६ | ११ | पकर्षे | प्रकर्षे |
| ३२६ | १९ | शमादिति | शमेति |
| ३२६ | २१ | शमादित्यर्थ. | शमेत्यर्थः |
| ३३० | ८ | सत्त्वस्या | सत्त्वस्य |
| ३३३ | १९ | व्यभिचारात् | व्याप्त्यसिद्धेः |
| ३३६ | १७ | भापमाणो | भाष्यमाणो |
| ३४९ | २० | चेष्टान | चेष्टाना, |
| ३५३ | १५ | ह्रसनो | ह्रसतो |
| ३५६ | २४ | दृष्टान्तान्याह | दृष्टान्तानाह |
| ३६२ | १० | कतया | कया |
| ३६७ | २१ | कृतिको | कृत्तिको |
| ३६९ | १ | बह्वयादिधर्मे | बह्वयादिर्धर्मे |
| ३७६ | ९ | अत्र | तत्र |
| ३८१ | १६ | नुलब्धि | नुपलब्धि |
| ३९१ | १७ | नादौ | नान्ते |
| ३९२ | २६ | गुणशब्दः | गुणत्वशब्दः |
| ४०४ | २६ | अन्वयव्यति | अव्यति |
| ४३० | ३ | वोत्पत्ति | वोत्पत्ते |
| ४७६ | ३ | प्युचार | प्युपचार |
| ४८० | २० | द्रव्यार्थिकाः | द्रव्यार्थिकनयाः |

| पृष्ठ | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४८० | २० | पर्यायार्थिकाः | पर्यायार्थिकनय |
| ४८५ | ५ | प्रायतोऽनेकधा | प्रायतो |
| ४८५ | ११ | वक्रभिप्रायेण | वक्त्रभिप्रायेण |
| ४८९ | १४ | कल्पतात् | कल्पनात् |
| ४९१ | ७ | कुम्भः | कुम्भं |
| ४९४ | २१ | वासो | वासौ |
| ४९५ | १३ | नामापि | नामपि |
| ४९७ | २० | भूमिकत्वा-सङ्ग्रहा | भूमिकत्वा-त्सङ्ग्रहा |
| ५०० | १ | शब्दानयभास | शब्दनयाभास |
| ५०३ | ६ | वर्त्तमानपि | वर्त्तमानमपि |
| ५०३ | ९ | त्ततत्तन्ना | त्तत्तन्ना |
| ५३४ | १० | याधिकान्नृपति | याधिकान्नृपति |
| ५३६ | २६ | रुत्त्व | रुत्तय |
| ५४४ | १३ | शैक्षकश्चाह | शैक्षकश्चाह |
| ५४८ | १७ | यकीडा | तत्कीडा |
| ५५८ | २० | सम्यधेन | सम्बन्धेन |
| ५६० | १० | प्रवाहो | प्रवाहः |
| ५६१ | १९ | हेतया | हैतया |
| ५६२ | ६ | तेनः | तेन |
| ५६५ | १३ | दक एवो | दकमेवो |
| ५६५ | १४ | मिते | मितो |
| ५७४ | २६ | एवभूताः | एवम्भूताः |
| ५७७ | ३ | दरभ्य | दारभ्य |
| ५७७ | ५ | क्रौंच | क्रौंच |
| ५७९ | १ | नय | नया |
| ५७९ | १ | न्यादिति | न्यायादिति |
| ५७९ | ३ | नक्षत्रेण | नक्षत्रेण चन्द्राः |

| पृष्ठ | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५८२ | १ | नान्तरं | नानन्तरं |
| ५८३ | ३ | रज्जु | रज्जू |
| ५८८ | ९ | वैति | वेति |
| ५८९ | १० | ह्नीन्दि | ह्नीन्द्रि |
| ५८९ | २१ | विधेयम् | विधेया |
| ५९० | ५ | उद्धदा | उद्धाद |
| ५९० | ८ | अरुणा | अरुणोदया |
| ५९० | १० | व्यते | व्यन्ते |
| ५९० | १४ | रचना | रचनायाः |
| ५९२ | ८ | उक्षि | विशिष्टभावाश्च उक्षि |
| ५९२ | १७ | त्राणां | त्रिणां |
| ५९२ | १७ | त्रिगस्तान्नि | त्रिणो नि |
| ५९३ | ३ | त्वागमा | दागमा |
| ५९३ | ७ | मता | मत्ता |
| ५९३ | १५ | कादीनां | कार्ना |
| ५९५ | ३ | वर्त्तना | वर्त्तन |
| ५९५ | १५ | षकुश | षकुशोऽ |
| ५९७ | ४ | अविनय | विनय |
| ५९९ | ७ | सन्नन्तर | सन्नान्तर |
| ५९९ | १९ | पाप्ते | प्राप्ते |
| ६०० | १४ | कम | क्रम |
| ६०० | १८ | निरोधशै | निरोधश्शै |



# हमारे आर्थिक साहाय्यकों की सूची।



## देनेवाले सज्जनों के शुभ नाम



### फलौदी ( मारवाड )

| रुपये | नाम |
|---|---|
| ३२७) | तपागच्छ श्री संघ ( वि. सं. १९९७ के चातुर्मास में हुई ज्ञान की आमदनी से ) |
| ३००) | श्रीमान् शेठ जमनालालजी सपतलालजी छाजेड. |
| १२१) | श्रीमान् शेठ माणेकचन्दजी अमरचन्दजी कोचर. |
| ७५) | श्रीमान् शेठ लालचन्दजी मीलापचन्दजी ढड्ढा |
| ७५) | श्रीमान् शेठ कीसनलालजी सपतलालजी लूणावत. |
| ७५) | श्रीमान् शेठ भभूतमलजी कानुगा. |
| ४५) | श्रीमान् शेठ पद्मचन्दजी सपतलालजी कोचर. |
| ४५) | श्रीमान् शेठ कवरलालजी कानुगा. |
| ४५) | श्रीमान् शेठ पुनमचन्दजी उदयराजजी कानुगा. |
| ३०) | श्रीमान् शेठ लखमीलालजी मीश्रीलालजी वैद. |
| ३०) | श्रीमान् शेठ नेमीचन्दजी वैद. |
| ३०) | श्रीमान् शेठ सपतलालजी गुलाबचन्दजी कोचर. |
| २१) | श्रीमान् शेठ लक्ष्मीलालजी मीश्रीलालजी कोचर |
| २१) | श्रीमान् शेठ नवनीधमलजी कोचर. |
| २१) | श्रीमान् शेठ सपतलालजी वैद. |
| १५) | श्रीमान् शेठ मगनमलजी कानमलजी कोचर. |

१५) श्रीमान् शेठ अगरचन्दजी लुकड

१५) श्रीमान् शेठ अमरचन्दजी वैद.

१५) श्रीमान् शेठ जेठमलजी कानुगा.

१५) श्रीमान् शेठ जुगराजजी नाहर.

१५) श्रीमान् शेठ सुगनचंदजी कोचर.

---

## बीकानेर ( राजपूताना )

३८५) जैन श्वेताम्बर श्री संघ, ह. श्रीमान् मोतीलालजी वैद.
( वि. सं. १९९८ के चातुर्मास में हुई ज्ञान की आमदनी से )

३००) श्रीमान् बाबु नथमलजी सपतलालजी रामपुरीया.

१००) श्रीमान् बाबु भवरलालजी रामपुरीया.

३०) सतीबाई का उपाश्रय ( ज्ञान की आमदनी से )

३०) श्रीमान् अभयराजजी नाहटा.

---

## बगडी ( मारवाड )

६७) जैन श्वेताम्बर श्री संघ.

---

## साणंद ( गुजरात )

७५) विजयआणसुर नानागच्छ, ह. माणेकचन्द केशवजी

---

## ईडर ( महीकांठा )

७५) जैन श्वेताम्बर श्री संघ ह. शेठ आणदजी मगळजी की पेढी

---

## जूना डीसा ( गुजरात )

३०) जैन धर्मशाला का संघ, ह. न्यालचंद गोडीदास.

---

# श्री लब्धिसूरीश्वरजैनग्रन्थमालाप्रकाशितग्रन्थसूची ।



| | | | | |
|---|---|---|---|---|
| १ | जैनव्रतविधिसंग्रहः | ... | ... | ०-८-० |
| २ | हीरप्रश्नोत्तराणि ... | ... | ... | ०-१२-० |
| ३ | श्रीपालचरितम् ... | ... | ... | ........ |
| ४ | तत्त्वन्यायविभाकरः ( मूलम् ) | | ... | ०-८-० |
| ५ | पंचसूत्रम् सटीकम् | | . | ..... |
| ६ | हरिश्चन्द्रकथानकम् | ... | ... | ........ |
| ७ | वैराग्यरसमंजरी | ... | ... | ........ |
| ८ | चैत्यवन्दनचतुर्विंशतिः | ... | ... | ०-२-० |
| ९ | कविकुलकिरीट | . | ... | ०-८-० |
| १० | मूर्तिमंडन ( गुजराती ) | ... | ... | ०-४-० |
| ११ | मूर्तिमंडन ( हिन्दी ) | ... | ... | ........ |
| १२ | आरंभसिद्धिः सटीका | ... | . | २-०-० |
| १३ | तत्त्वन्यायविभाकरः ( स्वोपज्ञवृत्तियुतः ) | | | ५-०-० |
| १४ | सद्भावनाप्रकाश ( हिन्दी ) | | . | ..... ... |

